

सर्वतन्त्रस्वतन्त्र

श्रीनागेशभट्टविरचिता

# वैयाकरणसिद्धान्तलघुमञ्जूषा ।

( स्फोटवादान्ता )

पं० सभापतिशर्मोपाध्यायकृत-

रत्नप्रभाव्याख्यासंवलिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आदर्श संस्कृत ग्रन्थमालायाः प्रथमं पुष्पम् ।

मुमुक्षु भवन वेद वेदांग विद्यालय
ग्रन्थालय
आगत क्रमांक ... 902 ...
दिनांक ...

पद-वाक्य-प्रमाणपारावारीण श्रीनागेशभट्ट-
विरचिता

# वैयाकरण सिद्धान्त लघुमञ्जूषा

( स्फोटवादान्ता )

बलियामण्डलान्तर्गतोदईछपराग्रामाभिजन बड़की सेरिया-
ग्रामनिवासि काशीस्थविरलाविद्यालयप्रधानाध्यापक-
व्याकरणाचार्य पं० सभापतिशर्मोपाध्याय-
विरचितया
रत्नप्रभाव्याख्यया टिप्पण्या च संवलिता ।

---

गाजीपुर मण्डलान्तर्गत-
जखनियांपत्रालयक रामपुर बलभद्रग्रामनिवासि-
पं० गिरिजाप्रसादशर्मपाण्डेयेन
प्रकाशिता ।

---

गणपति कृष्ण गुर्जर द्वारा
श्री लक्ष्मीनारायण मुद्रणालय, जतनबर, काशी, इत्यत्र मुद्रिता ।

वि० सं० १९८६

(अस्य पुनर्मुद्रणादिविषये सर्वेऽधिकाराः टीकाकृता स्वायत्तीकृताः)

प्रथमम् संस्करणम् ] [ मूल्यम् ३॥)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# Vaiyākarana-Siddhānta-Laghu-Manjushā

OF

## NĀGESHABHATTA

UP TO THE END OF SPHOTA VĀDA

*WITH THE COMMENTARY RATNAPRABHĀ AND NOTES*

BY

**PT. SABHĀPATI SHARMĀ UPĀDHYĀYA**

*VYĀKARANĀCHARYA*

PRADHĀNĀDHYĀPAKA, BIRLA VIDYALAYA.
KASHI

---

PUBLISHED BY

PT. GIRIJA PRASĀD SHARMĀ PĀNDEYA

RAMPUR BALBHADRA, P. O. JAKHANIAN, GHAZIPUR

1929

*All rights reserved by the author*

*First Edition* ] [ *Price Rs. 3/8*

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# प्रकाशकस्य निवेदनम्



अतिचिरन्तनी खल्वियं संस्कृतभाषा। भारतवर्षस्यास्य प्राचीन इतिहासोऽस्यामेव निबद्धो वर्तते। प्राचीनैर्ऋषिभिः पण्डितैश्चास्यामेव भाषायाम् ईदृशानि ग्रन्थरत्नानि विरचितानि यैः भारतवर्षस्य गौरवं चिरस्थायि सम्पन्नम्। शब्दानां संख्याप्यन्यभाषाऽपेक्षयाऽस्यामत्यधिका वर्तते, येन सर्वोऽपि मनोगतो भावकलापः सारल्येन व्यक्तो भवति। संस्कृतभाषायाः व्याकरणेन सह जगतः कस्या अपि भाषायाः व्याकरणस्य समता नैव वर्तते।

अयं तावन् महाशोकविषयः यदेवम्भूताया अप्यस्या भाषायाः बहूनि ग्रन्थरत्नानि बहुशोऽन्विष्यमाणान्यपि नोपलभ्यन्ते। उपलब्धान्यपि कतिपयैः प्रकाशकैः भ्रष्टीकृतानि। कस्यापि पुस्तकस्य पत्रेषु शोभनेष्वप्यङ्कनमतीव भ्रष्टम्, अङ्कने सुन्दरेऽपि पत्राणि न शोभनानि, काकतालीयन्यायेन पत्राङ्कनयोः सौन्दर्ये कथञ्चित् सुरक्षितेऽपि शुद्धिपत्रं पिण्डं न मुञ्चति। ततोऽपि-गण्डस्योपरि पिटकं संवृत्तं-मूल्यं तु व्ययापेक्षया द्विगुणं त्रिगुणमेव वा स्थाप्यते।

मे मनसि बहुदिवसेभ्योऽयं विचारः सञ्चरन्नासीद् यत्, यदि कोऽपि महानुभावः इमान् दोषान् दूरीकृत्य आदर्शभूतान् संस्कृतग्रन्थान् प्रकाशयेत्तर्हि संस्कृतभाषाभाषिणाम् महानुपकारः कृतो भवेत्। परन्तु न कोऽप्यस्यां दिशि दृष्टिं न्यदधात्। अन्ततो गत्वा मयैव निश्चितम् यत्, 'आदर्श-संस्कृत-ग्रन्थ-माला' नाम्ना एका सुलभा, सुबोधा, शोभना च संस्कृतग्रन्थावली प्रकाशमानेया। मित्रैरपि प्रोत्साहितोऽभूवम्। ततश्चास्य कार्यस्य प्रारम्भे इदं ग्रन्थरत्नं भवतां पुरतः समुपस्थापये।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्य ग्रन्थस्य महत्ताविषये यद् वक्तव्यं तद् भूमिकायामेव भवतां दृष्टिपथमायास्यति। मया त्विदानीं किमपि स्वमत्यनुसारेणैवोपन्यस्यते—

व्याकरणस्य दर्शनत्वेन परिगणनं माधवाचार्यादिभिः सर्वदर्शनसंग्रहादिषु कृतमेव। शङ्करभगवत्पादैरपि शारीरकभाष्ये वैयाकरणाभिमतस्फोटवादविषयिणी चर्चा प्रवर्तिता। ततोऽपि प्राचीनतरेण भगवतोपवर्षेणाऽपि वादोऽयम् साडम्बरं निरस्तः। अभियुक्तत्वेन सर्वेषामेव सम्मतेन महावैयाकरणेन भर्तृहरिणा वाक्यपदीयनामकं प्रबन्धं विरचय्य स्पष्टमेवास्य दर्शनशास्त्रता वादिनां पुरतः समर्थिता। एषां सर्वेषामपि ज्येष्ठो भगवान् पतञ्जलिः स्पष्टमेव शब्दानुशासनस्य चतुर्वर्गफलप्रदत्वमङ्गीकुर्वाणः दर्शनत्वमस्याभिमन्यते। एवं महतोऽस्य व्याकरणदर्शनस्य सिद्धान्तरत्नानाम् रत्निका वैयाकरण-सिद्धान्त-लघु-मञ्जूषा यदि पद-वाक्य-प्रमाणपारावारीणैः श्रीनागेशभट्टैः न व्यरचयिष्यत तर्ह्यतिप्रत्नमपीदं दर्शनं विप्लुतमेवाभविष्यत्।

सा चेयं मञ्जूषा गम्भीरोत्तानलेखशैलीकत्वात् प्रगाढ़मतीनां विदुषाम् मनो मोदयन्त्यपि साधारणविदुषाम् छात्राणाञ्च नातिसुग्रहेत्याकलय्य कतिपयानामेतद्व्याख्यानां चातिसंक्षिप्तत्वाद् दुर्बोधत्वाच्च तेषां कृतेऽनुपयोगित्वं विचार्य्य पण्डितवर्यैः व्याकरणाचार्य्य श्री सभापतिशर्मोपाध्यायैः सर्वोपयोगिनीयं रत्नप्रभा व्याख्या निर्माय प्रकाशनायास्मभ्यं प्रदत्ता। सम्भावयामि च—काशिकराजकीयसंस्कृतपाठशालीयपरिक्षादित्सूनामन्येषां चानया टीकया महानुपकारो भविष्यति। तत्त्वजिज्ञासूनां कृतेऽपि च सम्यक् संशोधिता रत्नप्रभाप्रोद्भासिता चेयं वैयाकरणसिद्धान्तलघुमञ्जूषा प्राचीनसिद्धान्तरत्नसमर्पणेन मनोमोदकरी भवेदिति।

अत एव महत्त्वमस्याः संभावयन् आदर्शसंस्कृतग्रन्थमालायाः प्रथमंपुष्पत्वेनैनां समादाय भवतां पुरतः समुपस्थितः, उत्साहप्रदानेना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुग्राह्यश्चास्मि । आवश्यकसुविधानामभावेन शीघ्रतायाश्च हेतोः सम्यक् संशोधितेऽपि पुस्तकेऽस्मिन्ननेकास्त्रुटयः सम्भवेयुः । तदर्थं बुद्धिमतः पाठकान्, विदुषः, समालोचकांश्च समभ्यर्थये यत्ताभिरस्मान् संसूच्य द्वितीयसंस्करणे ता दूरीकर्तुम् सहायत्वम् स्वीकुर्वन्त्विति ।

पुस्तकस्यास्य मूल्यं रुप्यकत्रयमात्रमेव प्रथमं निर्धारितमासीत्, परन्तु पश्चात् पुस्तकाकारस्य परिवर्द्धितत्वेन प्रसह्य मूल्ये अर्द्धरूप्यकमात्रा वृद्धिः संजाता । तदर्थमपि भवद्भिः क्षन्तव्योऽस्मि ।

पुस्तकस्यास्य लेखनसंशोधनादिकार्याणि विधाय यैरस्मत्सुहृद्भिः पण्डितवर्यैः श्री चन्द्रशेखर मिश्र, ( व्या० आ० बिरलाविद्यालयाध्यापकः ) श्री दामोदर पाण्डेय, ( काशीविद्यापीठाध्यापकः ) श्री बालकृष्णशर्मपञ्चोली ( व्या० शा० ) महोदयैः सुमहत् साहाय्यमाचरितम्, तदर्थं तेभ्यः शतशो धन्यवादान् वितरामीति—

ग्राम—रामपुर बलभद्र
पो० आ०—जखनियां
जि०—ग़ाज़ीपुर
रथयात्रा—आषाढशुक्ल २ चन्द्रवार,
सं० १९८६.

विदुषामनुचरः—
गिरिजाप्रसाद शर्मा पाण्डेयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# FOREWORD.

THE FOLLOWING pages embody a new commentary, called Ratnaprabhā on Laghumañjūṣā, the famous work of Nāges'a Bhaṭṭa, dealing with the philosophy of the Grammatical School. The commentary is from the pen of Pandit Sabhāpati Upādhyāya and is purported to have been written with the aim of meeting the requirements of the Sanskrit students. It is, therefore, free from unnecessary prolixity and verbiage which generally characterise learned commentaries interested in initiating new systems of thought.

The Laghumañjūṣā* claims to represent the outlook of the Vaiyākaraṇas on the order of Reality. How far this claim is vindicated by its contents is a question which can only be decided on careful analysis and comparison. But it appears to me that as a modern work its eclectic character often comes into prominence and its departure from the line of thought associated with the name of Bhartṛihari and his predecessors in the field is sometimes clear. Orthodoxy demands that any work which is affiliated to the philosophy of Sanskrit Grammar should be ultimately based upon the Vyākaraṇa Āgama to which the Vākyapadīya refers. This Āgama was evidently an aspect of the vast S'aiva culture which in the subsequent age revived in different forms in different parts of the country. A close study of the S'aiva Āgama, even in the form in which it survives to us e. g. in the Schools of Kashmir in the north and of the Siddhantins in the south, is, therefore, essential for a proper valuation of the work of Bhartṛihari.

To Nāges'a Bhaṭṭa credit is undoubtedly due for awa-

* Two other redactions of this book, a longer and a shorter one, are in existence, viz. Bṛihanmañjūṣā and the Paramalaghumañjūṣā. There is a copy of the former work, probably in the hand of the author himself, in the Library of the Government Sanskrit College, Benares. As for the latter work, which had been current till recently, it is difficult to say if the redaction was done by the author himself.

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

kening a fresh interest in the study of the Vākyapadīya, at a time when all interest in the subject had practically disappeared. Nāges'a was a versatile scholar and in his days was considered as an authority in ancient S'āstra. His commentary on Kaiyaṭa's Mahābhāṣya-pradīpa and his dialectical tracts on Sanskrit Grammar viz. S'abdendu S'ekhara and Paribhāṣendu s'ekhara, were master productions and had won for him high renown from all quarters. And it was thoroughly merited. When a man of his reputation and intellectual calibre took upon himself the task of reclaiming the well-nigh forgotten system of the philosophy of Vyākaraṇa, based upon the teachings of Patañjali and Bhartṛihari, the subject could not but draw the attention of scholars But there is no denying the fact that the interest created was short-lived and far from extensive. In course of time, however, the study of S'ekhara grew in popularity and caused every other study to fall into the back-ground. The study of the Mahābhāṣya as well as the philosophical study of Grammar in general suffered a long set-back in consequence. It is only recently that attempts are again being made to give these subjects the importance which really attaches to them. Any effort which is calculated to popularise the study of these neglected works and to render intelligible and easy the texts is highly welcome and deserves to be encouraged.

Pandit Sabhāpatiji's commentary on the Laghumañjūṣā has also the same end in view, viz. to bring the work within easy reach of students by liberating the text from mis-readings which have crept in through age-long neglect and by substituting simple explanations in place of the more erudite lucubrations of professional commentators. It is a virgin attempt and has obvious shortcomings, but it cannot but commend itself to one's admiration as a noble attempt in the right direction.

*Government Sanskrit College,*
*Benares.*

GOPINATH KAVIRAJ,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भूमिका

इह — प्रवाहाविच्छेदेन प्रवर्तमानेऽतिभयावहत्रिविधतापग्राहास्यग्रसितनिखिलप्राणिसमीप्सितसुखे, संसारचक्रे, धृतजनुषां जनिजक्लेशनिवहाक्रान्ताशान्तस्वान्तानां सर्वेषामेव त्रिविधदुःखात्यन्तिकनिवृत्ति-निर्वृत्तिसम्प्राप्तिविषयिणी प्रवृत्तिरुपजायते। तत्र तादृशदुःखनिवृत्ति-निर्वृत्ती च तत्तत्कारण-ध्वंसतत्तत्कारणोपलब्धिसाध्ये। कारणजिज्ञासायाश्च—तज्ज्ञापकशास्त्रशरणकरणमेव श्रेयस्करमित्यतिरोहितं प्रेक्षावताम्। तदुद्दिष्टसरण्यवगतिश्च—वाक्यार्थबोधालम्बनापेक्षा। तदवगमश्च—वाक्यानां सुप्तिङन्तचयादिरूपत्वाद् व्याकरणज्ञानाधीनः।

तच्च व्याकरणम्—व्याकरणमुपक्रम्य "नियतकालाश्च स्मृतयो भवन्ति" इति भाष्यप्रामाण्यात्, अद्यत्वे पाणिनीयमेवेत्यतो बहुभिर्विद्वद्वरेण्यैस्तदेवोपजीव्यानेकशो ग्रन्था विरचिताः। ते च प्रायः पदसाधुत्वासाधुत्वमुद्दिश्यैव भाष्यकारोक्तिमनुसृत्य प्रमाणपरम्पराऽसदुक्तिनिरासपूर्वकं स्वस्वसिद्धान्तानुसारेण व्यवस्थापिताः। लोके प्रायः श्रुतिपथमागतैरपि शब्दैः शाब्दबोधादर्शनादन्वयव्यतिरेकाभ्यां तत्तत्पदनिष्ठवृत्तिज्ञानस्य कारणत्वमवसीयते। सा च वृत्तिः कीदृशी, केषु केषु पदेषु, कियदर्थनिरूपिता, कस्य पदार्थस्य केन सम्बन्धेन कुत्रान्वयः, इत्यादिविचारजातमवतार्य तार्किकादिसूरिमूर्धन्यैः स्वस्वकृतान्तसरण्या बहवो ग्रन्था निर्मिताः।

परन्तु शाब्दिकानां निकाये वाक्यपदीं विहाय न केऽपि तादृशा ग्रन्थाः पूर्वमासन्। शब्दशास्त्रज्ञानाभिमानशालिनां तत्रभवतां वैयाकरणानां हृदयोद्वेगकारिणीं शब्दशास्त्रविहारिणीं तद्विषयिणीं न्यूनतामसहमानैः सर्वशास्त्रनिष्णातान्तःकरणैरपि व्याकरणैकप्राणैः श्रीमद्भट्टोजिदीक्षितैः शब्दकौस्तुभः कौस्तुभ इव वैयाकरणसिद्धान्तप्रकाशकोऽतिविस्तृतो ग्रन्थो निरमायि, तदाश्रयेणैव तैरेव काल्पनिकप्रकृतिप्रत्ययादीनां शक्तिनिरूपिका, शाब्दबोधप्रकारप्रकाशिका, इतरमतोक्तापसिद्धान्तनिरासिका, 'कारिकावली' च विरचिता। तामेव कारिकावलीं सिद्धान्तावलीमिवोपजीव्य काल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनुसरता तत्र विद्वद्वरेण कोण्डभट्टेन टीकारूपेण तार्किकादिप्रणाल्या सुवर्णभूषणमिव 'भूषण'नामको निबन्धो निबद्धः ।

ततश्च—नानोपपत्तिसम्पत्तिनिरस्तसमस्तपरापसिद्धान्तदूषणे भूषणेऽप्यविवेचितानां मनुष्योचितभ्रमदोषवशादपसिद्धान्तभूतानामपि सिद्धान्तत्वेनोपवर्णितानां पदार्थानां दोषसम्मार्जनपूर्वकं विशुद्धस्वरूपप्रदर्शनाय, वेदाङ्गत्वं बिभ्रतोऽपि व्याकरणस्य तिरोहितां दर्शनशास्त्रपदवीम्, वाक्यपदीयाद्युपपादितदिशा शाब्दिकानामितरेषाञ्च दार्शनिकानां दृष्टिपथमानेतुम्, महताऽऽडम्बरेणाभिमतमतमण्डनाय समुद्घाटितानामप्रतिमप्रतिभोद्बोधकतर्कशालितार्किकादिदर्शनाभिमानमानसैर्दार्शनिकप्रवरैरतिशयसंशयोच्छेदितर्ककर्कशकल्पनयाऽतात्त्विकतत्त्वानामपि तत्त्वतया समर्थितानां सिद्धान्तानामसत्स्वरूपं निराकर्तुम्, पारमार्थिकरूपनिरूपणेन विद्वत्समाजमुपकर्तुञ्च, सर्वतन्त्रस्वतन्त्रैः, महीयसीम् 'महामहोपाध्याय' पदवीमधिगतैः, श्रीमद्भिर्नागेशभट्टैर्व्याकरणतत्त्वावमर्शिकाम्, सूक्ष्मापूर्वचारुविचारपाटवसम्पादिकाम्, समासतो निखिलदर्शनसिद्धान्तावभासिकाम्, 'वैयाकरणसिद्धान्तलघुमञ्जूषाम्' रत्नमञ्जूषामिवोपकारकारिणीं निर्मायात्यन्तं शाब्दिककुलमुपकृतम् । यतो ह्येतदध्ययनप्राप्तप्रतिभाप्रकाशप्रज्वलितधिषणैः शब्दशास्त्रनिष्णातमानसैर्मनीषिभिरपि प्रतिवादिनो दार्शनिकान् पराजित्य विजयकौतुकमातायत्तामिति ।

यद्यप्येतन्निर्मिता विलक्षणमेधाप्रतिभाऽवभासकाः प्रगाढपाण्डित्यसम्पादकाः शब्देन्दुशेखरादयो † बहवो ग्रन्था निखिलविद्वन्मनीषागोचराः सन्ति । तथाऽप्येतेषु मञ्जूषैव दार्शनिकविचारप्रणाल्या दार्शनिकतां बिभर्ति ।

---

† श्रीमन्नागेशभट्टप्रणीतग्रन्थाः—

| | |
|---|---|
| १—भाष्यप्रदीपोद्योतः । | ७—परमलघुमञ्जूषा । |
| २—बृहच्छब्देन्दुशेखरः । | ८—परमार्थसारविवरणम् । |
| ३—परिभाषेन्दुशेखरः । | ९—काव्यप्रकाशोद्योतः । |
| ४—प्रायश्चित्तेन्दुशेखरः । | १०—रसगङ्गाधरमर्मप्रकाशः । |
| ५—बृहन्मञ्जूषा । | ११—त्रिंशच्छ्लोकी (आशौचनिर्णयः) । |
| ६—लघुमञ्जूषा । | १२—योगसूत्रवृत्तिः । |

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्याञ्च–मञ्जूषायां के के विषयाः प्राधान्येन निरूपिताः, इति तु विषयसूचीत एवावसेयाः। यद्यप्यत्र शक्तिनिर्णयान्तभागस्था एव विषयाः सूच्यां सूचिताः, तथाऽपि तावद्दर्शनेनैव 'स्थालीपुलाक' न्यायेन ग्रन्थस्यास्य गौरवं नाविदितं भवेन्मतिमताम्। एवञ्चास्यां मञ्जूषायां परतन्त्रेषूपवर्णितानां सिद्धान्तानामपसिद्धान्तत्वं प्रदर्श्य यथा सिद्धान्तभूताः पदार्था व्यवस्थापिताः, यथा चान्यत्राविवेचितानां गाम्भीर्यपूर्णा विवेचना विहिता, तथा कियतो विषयानुपक्रम्य प्रेक्षावताम्प्रेक्षाविषयतामुपनयामः—

प्रथमं तावत् पदार्थविचारशैलीमनुसरद्भिस्तर्कादितन्त्रनिपुणैः 'अर्थविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकेश्वरेच्छारूपा, तादृशेच्छीयविशेष्यतारूपा वा शक्तिरिति नानाविधाः पक्षा अवलम्बिताः, तत्र चेच्छायाः, विशेष्यताया वा सम्बन्धत्वस्य काप्यदर्शनाद् बोधात्प्राक् तादृशसम्बन्धस्यासिद्धतया कार्य्याव्यवहितप्राक्क्षणावच्छेदेन स्थितस्यैव सम्बन्धस्य कारणताऽवच्छेदकतया पूर्वोक्तरूपायाः शक्तेः सम्बन्धत्वं वक्तुमशक्यमित्यादिदूषणग्रहग्रस्तत्वान्निरस्य तेषां शक्तिलक्षणम्, श्रीनागेशभट्टैः 'वाच्यवाचकभावापरपर्य्यायाऽखण्डसम्बन्धरूपा' शक्तिर्व्यवस्थापिता।

एवम्–शब्दशक्त्या बोध्योऽप्यर्थो बुद्धिस्थ एव न तु बाह्यः, "मतुप्"–सूत्रे "न सत्तां पदार्थो व्यभिचरति" इति भाष्यात् सत्ताविशिष्टघटादीनामेव घटादिप्रातिपदिकार्थतया 'अस्ति' 'नास्ति' इत्यादिप्रयोगानापत्तेः, गतार्थत्वात्, सत्तया विरोधाच्च। किञ्च, 'शशशृङ्गं नास्ति' 'बन्ध्यापुत्रो नास्ति' इत्यादिवाक्यजन्यबोधे भ्रमत्वस्य सर्वानुभवविरुद्धतया प्रातिपदिकत्वाय

---

| | |
|---|---|
| १३—सापिण्ड्यनिर्णयः। | १७—सप्तशतीटीका। |
| १४—रसमञ्जरीटीका। | १८—साङ्ख्यसूत्रवृत्तिः। |
| १५—वृत्तिसङ्ग्रहः। | १९—शृङ्गवेरपुराधीशरामनाम्ना प्रकाशिता वाल्मीकिरामायणतिलकाख्या व्याख्या। |
| १६—वेदान्तसूत्रवृत्तिः। | |

यत्तु–केचित्–शब्दरत्नोऽपि श्रीनागेशभट्टेनैव विरचितः, शब्देन्दुशेखरादिग्रन्थानुपूर्व्या बहुश उपलम्भात्, व्याख्यानसाम्याच्चेति, तन्न, गुरुशिष्ययोरुक्तौ तादृशसाम्यस्य बहुत्र दर्शनात्, तदीयग्रन्थापेक्षया शब्दरत्नस्यातिशयितगाम्भीर्य्यपूर्णलेखात्, हरिदीक्षितकृतत्वे बाधायोगाच्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बौद्धार्थस्वीकार आवश्यकः। अत एव 'बुद्धिसिद्धं तु तदसत्' (न्या० द० अध्या० ४ आह्नि० १ सू० ५०) इति गौतमोक्तिः सङ्गच्छते। इत्यादिरीत्या बौद्धार्थत्वं साधितम्।

एवम्-अद्वैतमतवादिभिः 'परत्र पूर्वदृष्टावभासोऽध्यासः' इत्यध्यासस्वरूपं निरूप्य तदतिरिक्ताऽविद्या साधिता। तत्राध्यास एवाविद्या, "तमेतमेवं लक्षणं पण्डिता अविद्या' इति ब्रुवते" इति भाष्यादध्यासविषयकप्रश्नोत्तरवदविद्याविषयकप्रश्नोत्तरानुपलब्धेश्चेत्यादिहेतुभिरविद्याया अध्यासरूपत्वं सिद्धान्तितम्। एवमविद्याया अजन्यत्वम्, विनाशित्वञ्च स्वीकृतमद्वैतमतवादिभिः। तच्च नोपपद्यते, "एकेन विज्ञातेन सर्वं विज्ञातं भवति" इति प्रतिज्ञाभङ्गप्रसङ्गात्, ब्रह्मातिरिक्तस्याजन्यत्वासम्भवात्, वियदादीनामजन्यत्वे "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" (वे० द० अध्या० २ पा० ३ सू० ६) इति सूत्रेण प्रतिज्ञाभङ्गापादनाच्च। "अजामेकाम्" इत्यादिश्रुतेरविद्याया अनादित्वबोधकत्वपरतैव।

यत्तु-"अनिर्वचनीयं सदसद्विलक्षणम्" इति तदपि न, तादृशपदार्थाप्रसिद्धेः, किन्तु, उभयरूपमेव। तत्र सत्त्वमारोपितम्, असत्त्वन्तु वास्तविकमिति न विरोधः। इत्येवंरूपेण तदभिमताऽनिर्वचनीयख्यातिरपि निरस्ता।

नव्यतार्किकसम्मता 'ज्ञानलक्षणप्रत्यासत्तिः' अप्ययुक्तैव, अविद्यमानस्य प्रत्यासत्तित्वासम्भवात्। ज्ञानविषयत्वस्य तत्त्वे, विषयताया ज्ञानविषयोभयरूपत्वमते ज्ञाननाशे तस्यास्तत्त्वासम्भवात्।

अनुव्यवसायस्य ज्ञानग्राहकत्वमप्यसङ्गतम्, ज्ञाने सति 'जानामि न वा' इति संशयाननुभवात्, 'घटं जानामि' इतिवत् 'ज्ञानं जानामि' इत्यनुभवाभावात्, अनवस्थापाताच्च। किन्तु ज्ञानस्य स्वतःप्रकाशत्वमेव, इति सिद्धान्तः।

संयोगस्य हि नैयायिकमते 'सम्बन्धत्वम्' प्रसिद्धम्, तदपि न, सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वात्, संयोगस्य च स्वतःपदार्थत्वात्। सम्बन्धस्य सांसर्गिकविषयतया पदाबोध्यत्वमेव, केवलं षष्ठ्यादिविभक्त्या, वाक्येन वा बोध्यत्वम्, इति संयोगस्य सम्बन्धत्वमसङ्गतम्।

एवम्-तार्किकैः-द्रव्यगुणकर्मस्वेव जातिः स्वीकृता, साऽपि सत्तारूपा, गोत्वादिनानारूपा चेति। अत्रोच्यते-"सामान्यं विशेष इति बुद्ध्यपेक्षम्"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति कणादवचनात्, "समानप्रसवात्मिका जातिः" इतिगौतमवचनाच्चानुगतप्रतीतेरेव जातिसाधकत्वाज्जातेरैक्यसर्ववृत्तित्वे एव समुचिते । एकैव जातिः गवादिप्रतिनियतव्यञ्जकव्यञ्जिता तत्तज्जात्यवच्छिन्नकार्यसाधिका भवतीत्यपि व्यवस्थापितमत्र ।

स्फोटस्वरूपं तु समासतोऽस्माभिर्ग्रन्थान्ते स्फोटमीमांसायामुपवर्णितम्, तत एव तदवसेयम् ।

एवमन्ये पदार्थाः ये शास्त्रान्तरे प्रसिद्धाः प्रमाणविरुद्धाः स्ववासनाकल्पितास्ते मञ्जूषाकारैर्नानायुक्तिभिर्निराकृताः, इति मञ्जूषापर्य्यालोचनयैवावगन्तव्यम् ।

विज्ञानसुधानिधिभूतस्यास्य ग्रन्थस्य यद्यपि 'कला' 'कुञ्जिका' इति टीकाद्वयं समुपलभ्यते, तथाऽपि दर्शनान्तरीयविषयाणां बाहुल्येन सन्निविष्टतया तद्द्वयमप्येतस्मिन् ग्रन्थाम्बुधौ संनिवेशितानि सिद्धान्तरत्नान्युद्धाट्य यथावद्दर्शयितुं नालम् । तथाऽद्यावधि मुद्रणे चास्य मूलपाठभेदहेतुना कृताधिकप्रयासैरपि प्रकाशकैर्नैं तादृशं शुद्धसंस्करणं नेत्रपथमवतारितम्, येनोच्छिन्नपाठतया दूयमानमानसानामध्यापकानां जिज्ञासावतामन्तेवासिनाञ्च खिन्नहृदये संतोषोऽभ्युपपद्येत, इत्यादितोऽपि सदुत्साहसम्पन्नहृदयैर्विद्वद्वर्गैर्बहुभिः छात्रैश्च बहुधा प्रोत्साहितेन मया गभीरायाः सिद्धान्तरत्नार्णवभूतायाश्चास्या मञ्जूषायाः सिद्धान्तरत्नानि स्वशक्त्यनुसारेण निष्कास्योपहाररूपेण स्वनिर्मितया 'रत्नप्रभा' नाम्न्या व्याख्ययोपस्थापयितुं प्रयत्यते । आशास्यते च यदेतदुद्धाटितमञ्जूषारत्नप्रभया व्याख्यया सिद्धान्तज्ञाने आवरकतमःसन्ततेरणुमात्रमपि प्रतिबन्धकत्वं न भवेदिति । अत्रत्यनिवेशितविषयाणां निरूपणप्रस्तावे येषां ग्रन्थानां प्रामाण्येनोल्लेखो विद्यते, तत्रत्यास्ते ते विषयाः सम्यगुद्धाट्य सरलतया सर्वेषां जिज्ञासूनां सुखावगमाय पूर्णतया वर्णिताः सन्ति, तत्तद्ग्रन्थेषु ते ते विषयाः कुत्र स्थले वर्णिताः सन्तीत्यभिज्ञानाय तत्तत्स्थानमप्यङ्कितमत्र ।

महामहिमशाली, निखिलशास्त्रतत्त्वज्ञतागुणैकमाली, माननीयोऽयं नागेशभट्टः कदा कुत्र, कस्मिन् कुले च समजनि, केन प्रकारेण, क वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सकलां कलामासादितवान् । कालवशात् कदाऽस्तंगतवान्, इत्यादि-वृत्तान्तं सामग्र्यभावान्न सम्यक् सप्रमाणमवगम्यते ।

किमपरं एवमेव प्राचीनानां तत्रभवतां प्रखरप्रसिद्धिमुपगतानामपि भारतीयमहापुरुषाणां जीवनचरितानि नावाप्यन्ते, आश्चर्यमिदम्—यद् विविधविद्याविलासोल्लसितबुद्धिविभवशालिनाम्, अखिलवस्तुविषयक त्रिकालज्ञानतिग्मांशुकरसमुत्सारितसकलजनताऽन्तःस्थिततमसां पूज्यवराणां महर्षीणां समुपलभ्यमानेऽपि तादृशमहत्त्वसूचके कतिचिद् ग्रन्थे तन्निर्माणसमयावबोधककारणकलापो नोपलभ्यते, तेन साम्प्रतिकानां भौतिकविज्ञानबलशालिनां पाश्चात्यानां हृदये तेषां पुरातत्त्वविषये सन्देहाङ्कुरः समुत्पन्नो भवति ।

मन्यामहे यत्तस्मिन्काले ग्रन्थकाराणां एतादृशी जन्मादिज्ञानसूचकलेखनप्रणाली नाभिमताऽसीदिति ।

अन्यदपि मौहम्मदकुलाक्रान्ताकुले लोके भारतवर्षस्यापि दौर्भाग्यवशादनेके रत्नभूता ग्रन्था विनष्टाः, एवं विनाशमुपगतेऽपि भारतीयसाहित्ये तदवाप्त्यनुपायजनितक्लेशकीलितानामस्माकं कृते तदन्वेषणपरायणानां कियन्मात्रं सफलीभूतानां पाश्चात्यानां छत्रच्छायायां साहित्योपलब्धिविषये महानुपकाराङ्कुरः प्रादुरभूत् । येषां श्लाघनीययत्नोपलब्धशिलालेखादिना, तत्तत्सामयिकराजमूर्तिचिह्नचिह्नितानां मुद्राणामवाप्त्या च भारतीयसाहित्यस्य प्राचीनत्वं सर्वैरेवाङ्गीकृतम्, अतस्ते धन्यवादार्हाः ।

विद्वत्कुलमौलिमुकुटमणिरयं नागेशः कतमदेशालङ्कारभूत इति तु सन्दिग्धमेव, जन्मसमयस्तु 'काव्यमाला'ग्रन्थमालायां मुद्रितरसगङ्गाधरस्य भूमिकायां म० म० पं० दुर्गाप्रसादेन १६८८ ईशवीयवत्सरतः १७२८ ईशवीयपर्यन्तं जयपुरमण्डलशासकेन सवाईमहाराजजयसिंहेन स्वकीयेऽश्वमेधयज्ञे १७१४ ईशवीये समारब्धे नागेशभट्टः समाहूतः । 'क्षेत्रसंन्यासग्रहणकारणान्नोपस्थातुं शक्यते' इति तन्निमन्त्रणं प्रत्याख्यातवान्, इति लिखितम्, तदनुसारेण सप्तदशशताब्द्यामासीदिति प्रतीयते । नागेशभट्टस्य पिता तु 'शिवभट्ट'नामकः, एवं माता 'सतीदेवी' आसीदिति स्वग्रन्थे एव बहुत्र लिखितम् । जन्मतः षोडशाब्दावस्थापर्यन्तं काश्यामितस्ततः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भ्राम्यन्नेवासीत्। कदाचिद् विद्वत्सभायामकस्माद् गत्वा तत्रासनमधिष्ठितः, ततश्च तत्रत्यैर्विद्वद्भिर्भर्त्सितः, सार्द्धचन्द्रं निष्कासितश्च।

इत्थमपमानितः परं निर्वेदमापन्नः सर्वातिशायिनीं विद्यामभीप्सुरहमपि नातिमहता कालेन सर्वान् विजेष्ये, इत्युच्चैः प्रतिज्ञाय तपस्तप्तुं विजने गतः, तत्र च विमुक्ताहारो वागीश्वरीध्यानपरायणः कतिपयैरेव दिवसैर्वागीश्वरीवरप्रसादाल्लब्धसकलशास्त्रतत्त्वविमर्शबुद्धिको विद्वज्जनमूर्धन्यः समभवदिति किंवदन्ती श्रूयते। 'शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः' इत्यादिस्वकीयलेखेनैवायं तत्रत्यराजपण्डित आसीदिति ज्ञायते।

नागेशभट्टस्य सन्ततिर्नासीदिति तु मञ्जूषाऽन्ते "शब्देन्दुशेखरं पुत्रं मञ्जूषाञ्चैव कन्यकाम्।" इत्यादितदुक्त्या प्रतीयते। यद्यप्ययं नागेशभट्टः वागीश्वरीप्रसादादेव अधिगतसकलविद्यस्तथाऽपि गुरुसम्प्रदायलब्धैव विद्या श्रेयस्करीत्यनुसन्धाय पण्डितप्रवरहरिदीक्षिताद् व्याकरणम्, 'पं० रामराम'भट्टान्न्यायशास्त्रञ्चाधीत्य निखिलतन्त्रतत्त्वज्ञतामवाप।

स्फोटायनऋषि-भाष्याद्यभिमतस्फोटोपपत्तिकरीं मञ्जूषां विधाय सकलविद्वन्मण्डलमूर्धन्यताञ्चावाप्तवान्। मञ्जूषापर्यालोचनयोपलभ्यते प्रायः सर्वेषु शास्त्रेष्वस्य प्रगाढपाण्डित्यमासीदिति।

अस्या मञ्जूषायाष्टीकासप्तकं समुद्दिष्टम्, आफ्रेट ( Aphret ) महोदयेन। तत्र दुर्बलाचार्य्येण निर्मितैका, कृष्णमित्रेण निर्मिताऽपरेति भ्रम एव, दुर्बलाचार्य्यस्यैव कृष्णमित्रेत्यपरं नाम। तत्रापि रामनाथविरचितं बृहन्मञ्जूषाटिप्पणम्, वैद्यनाथभट्टविरचितं बृहन्मञ्जूषाविवरणञ्च गुरुमञ्जूषाया एव व्याख्याभूतम्। ननु गुरुमञ्जूषा क्वाप्यनुपलम्भान्नास्त्येवेति चेत्, न, मञ्जूषाया निपातार्थनिर्णयान्ते 'इत्यन्यत्र विस्तरः' इति प्रतीकमादाय 'गुरुमञ्जूषाऽऽदावित्यर्थः' इति कलाकारोक्तेः, व्यञ्जनानिरूपणान्ते 'अन्यत्रेति' प्रतीके 'गुरुमञ्जूषाऽऽदावित्यर्थः' इति कलोक्तेश्च। तथाच पूर्वोक्तगौराङ्गमहोदयकथितासु टीकासु टीकाचतुष्टयमेवावशिष्टम्। तत्रापि कलाकुञ्जिके, एव मुद्रिते। तयोरपि कुञ्जिका कियतांशेन विहीनैव, इति परीक्ष्यछात्राणामुपयुक्तये शीघ्रतावशात् स्फोटान्तभागस्यैव 'रत्नप्रभा' प्रकाश्यते। अवशिष्टभागस्य तु सत्यवसरे प्रकाशिष्यत इत्याशास्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्याः संशोधने प्राचीनानां चतुर्णां पुस्तकानामुपयोगो विहितः। तत्र च लोकप्रसिद्धानां सकलशास्त्रनिष्णातान्तःकरणानां संन्यासिप्रवराणां श्रीरामनिरञ्जनस्वामिनां स्वहस्तेन संशोधितमेकं पुस्तकमुपहृत्य अनल्पोपकारो विहितः केनचित्सुहृदा।

काशीस्थराजकीयप्रधानसंस्कृतपाठशालाऽध्यक्षैः (Principal, Government Sanskrit College, Benares) एम० ए० पदालङ्कृतैः संस्कृतसाहित्यनिष्णातैः श्रीमन्माननीयगोपीनाथकविराजमहोदयैः स्वकीयं बहुमूल्यं समयं व्ययीकृत्यैतद्ग्रन्थ'भूमिका'लेखनप्रयासो यो हि विहितस्तदर्थं तेभ्यो बहुकृतज्ञतां प्रकाशयामः।

यद्यपि मदीयान्तेवासिभिरुच्चकक्षाप्रविष्टैः सर्वैरेवात्र लेखनादिना साहाय्यं विहितं ते सर्वेऽप्याशीर्वादार्हाः। तथाऽपि तत्र विरलाविद्यालयाध्यापको व्याकरणाचार्य्यः पं० चन्द्रशेखरमिश्रः, व्याकरणशास्त्री, काव्यतीर्थः, वेदान्ताद्यनेकविषयाभिज्ञः, काशीस्थविद्यापीठाध्यापकः पं० दामोदरशर्म्मपाण्डेयः, व्याकरणशास्त्री पञ्चोल्युपनामकः पं० बालकृष्णशर्म्मा, एतेऽतीवोपकृतवन्त इत्यनेकाशिषो वितरामः। तथाऽस्याः प्रकाशकः पं० गिरिजाप्रसादशर्मपाण्डेयः सर्वतो भावेनेमां सौष्ठवशालिनीमल्पीयसा मूल्येन सर्वजनसुलभां सम्पाद्य प्रकाशतां नीतवानतो धन्यवादैस्तमपि सम्भावयामः।

छात्राणामध्यापने निरन्तरामसक्तस्य मे समयाल्पत्वान्मुद्रणदोषात्, भ्रान्तेर्वा यास्त्रुटयोऽत्र सम्भवेयुस्ताः परिशोध्य सूचयन्तु सुधिय इति निवेदयते—

विरलाविद्यालय
लालघाट, बनारस सिटी।
श्रा. शु. ५ सं. १९८६

भवदीय—
सभापतिशर्मोपाध्यायः
विरलाविद्यालय—
प्रधानाध्यापकः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# वैयाकरणसिद्धान्तलघुमञ्जूषाया

## विषयानुक्रमणिका ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# संकेतानां विवरणम् ।



अमरको० का० वनौप० व० = अमरकोशः–काण्डम्–वनौषधिवर्गः ।

अम० शत० = अमरुशतकम् ।

आ० गि० = आनन्दगिरिः ।

आप० गृ० सू० खं० सू० = आपस्तम्बगृह्य-सूत्रम्-खण्डम्-सूत्रम् ।

आश्व० गृ० सू० खं० सू० = आश्वलायना-गृह्यसूत्रम्-खण्डम्-सूत्रम् ।

ईशोप० = ईशोपनिषत् ।

ऐत० उप० = ऐतरेयोपनिषत् ।

कठोप० = कठोपनिषत् ।

काव्यप्रका० उल्ला० कारि० = काव्यप्रकाशः-उल्लासः-कारिका ।

किरातार्जु० = किरातार्जुनीयम् ।

केनोप० = केनोपनिषत् ।

कौषित० उप० = कौषीतक्युपनिषत् ।

खं० खा० प्र० परि० = खण्डनखण्डखाद्यम्-प्रथमपरिच्छेदः ।

गौड० कारि० = गौड़पादकारिका ।

चर० सं० शारी० स्था० = चरकसंहिता-शारीरकस्थानम् ।

छान्दो० उप० = छान्दोग्योपनिषत् ।

ज्यौ० वेदा० कारि० = ज्यौतिषवेदाङ्गकारिका ।

तैत्ति० उप० = तैत्तिरीयोपनिषत् ।

नृसिं० पु० अध्या० श्लो० = नृसिंहपुराणम्-अध्यायः-श्लोकः ।

नृसिं० पूर्वता० = नृसिंहपूर्वतापिन्युपनिषत् ।

नृ० उप० = नृसिंहोत्तरतापिन्युपनिषत् ।

नैघ० अ० पा० ख० = नैघण्टुक-अध्यायः-पादः खण्डम् ।

न्या० कुसु० प्र० स्त० कारि० = न्यायकुसुमा-ञ्जलिः-प्रथमस्तवकः-कारिका ।

न्या० भा० = न्यायभाष्यम् ।

न्या० वा० तात्प० टी० = न्यायवार्तिकतात्पर्य-टीका ।

न्या० सू० = न्यायसूत्रम् ।

प० सा० = परमार्थसारः ।

पस्पशाह्नि० = पस्पशाह्निकम् ।

पा० सू० = पाणिनीयसूत्रम् ।

पातञ्ज० द० = पातञ्जलदर्शनम् ।

प्रपञ्चसा० तं० पट० श्लो० = प्रपञ्चसारतन्त्रम्-पटलम्-श्लोकः ।

बृह० सं० = बृहत्संहिता ।

बृह० उप० = बृहदारण्यकोपनिषत् ।

ब्रह्मविद्योप० = ब्रह्मविद्योपनिषत् ।

ब्रह्माण्ड० उप० = ब्रह्माण्डोपनिषत् ।

भगवद्गी० = भगवद्गीता ।

भाम० अध्या० भा० = भामती-अध्यायः-भाष्यम् ।

मनु० स्मृ० = मनुस्मृतिः ।

महाभा० = महाभारतम् ।

महाभा० = महाभाष्यम् ।

माण्डू० उप० = माण्डूक्योपनिषत् ।

मा० सू० = माहेश्वरसूत्रम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मीमां० द० = मीमांसादर्शनम् ।

मीमां० द० शाब० भा० = मीमांसादर्शनम्-शाबरभाष्यम् ।

मी० सू० = मीमांसासूत्रम् ।

मुण्ड० उप० = मुण्डकोपनिषत् ।

मुक्ता०उपमा० खं० = मुक्तावली-उपमानखंडम् ।

मू० = मूलम् ।

यो० द० समा० पा० सू० = योगदर्शनम्-समाधिः-पादः-सूत्रम् ।

यो० वा० = योगवासिष्ठम् ।

रत्न० = रत्नप्रभा ।

वाक्यप० कां० समुद्दे० कारि० = वाक्यपदीयम्-काण्डम्-समुद्देशः-कारिका ।

वात्स्या० भा० = वात्स्यायनभाष्यम् ।

वि० पु० = विष्णुपुराणम् ।

वेदा० कल्पत० = वेदान्तकल्पतरुः ।

वे० सू० = वेदान्तसूत्रम् ।

वृत्त० रत्ना० = वृत्तरत्नाकरः ।

शंखस्मृ० अध्या० श्लो० = शंखस्मृतिः-अध्यायः-श्लोकः ।

शारी० भा० = शारीरिकभाष्यम् ।

शिशु० व० = शिशुपालवधः ।

शु० य० प्राति० अ० सू० = शुक्लयजुर्वेदः-प्रातिशाख्यम्-अध्यायः-सूत्रम् ।

श्रीमद्भा० पु० = श्रीमद्भागवतपुराणम् ।

श्लो० वाक्याधि० श्लो० = श्लोकवार्तिकम्-वाक्याधिकरणम्-श्लोकः ।

श्वेता० उप० = श्वेताश्वतरोपनिषत् ।

संगी० रत्ना० = संगीतरत्नाकरः ।

साहि० दर्प० परि० कारि० = साहित्यदर्पणः परिच्छेदः-कारिका ।

सुश्रुत० सं० सूत्रस्था० = सुश्रुतसंहिता सूत्रस्थानम् ।

। = पूर्णविरामः ।

' = अर्धविरामः ।

" " = अन्योक्तेरानुपूर्वीपरिचायकः ।

' ' = अर्थस्वरूपपरिचायकः ।

= = समानार्थसूचकः ।

— = वक्तव्यसूचकः ।

समस्तपदमध्ये—एवं रेखा द्वन्द्वबोधिका ।

यत्र ........ ईदृशः सङ्केतस्तत्र तत्तद्-ग्रन्थस्य कियदंशं परित्यज्योल्लिखितम्, इति बोद्धव्यम् ।

मूले—( ) एतच्चिह्नान्तर्गतान्यक्षराणि पाठान्तरत्वेनावगन्तव्यानि ।

मूले, टीकायाश्चार्थबोधसौकर्य्याय क्वचित्संहिताया अविवक्षया सन्धेरभावो ज्ञेयः ।

श्रीः

परमात्मने नमः ।

# वैयाकरणसिद्धान्तलघुमञ्जूषा



मू०—नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः ।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥१॥

तत्र वाक्यस्फोटो मुख्यो लोके तस्यैवार्थबोधकत्वात्तेनैवार्थसमाप्तेश्च, तदुक्तं न्यायभाष्यकृता "पदसमूहो वाक्यमर्थसमाप्तौ" २।१।५५। इति। अत्र पदशब्देन सुबन्तं तिङन्तश्च, तेन तत्समूह इत्यर्थः। समाप्तावित्यस्य समर्थमिति शेषः ।

वाक्यस्फोटस्य मुख्यत्वनिरूपणम्

(रत्नप्रभा)—नत्वेशं करुणापूर्णं शब्दब्रह्मेति विश्रुतम् ।
यज्ज्ञात्वा नेहते किञ्चिज्जीवः पूर्णमनोरथः ॥१॥
मञ्जूषागूढसिद्धान्तप्रत्नरत्नप्रकाशिकाम् ।
रत्नप्रभाऽभिधां व्याख्यां वितनोति सभापतिः ॥२॥

प्रेक्षावत्प्रवृत्तये प्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयत्वरूपमनुबन्धचतुष्टयं प्रदर्शयन्नागेशभट्टः सदाचारानुमितश्रुतिमूलकं "मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युः" इति महाभाष्योक्तिसिद्धान्तसिद्धश्च मङ्गलं व्याख्याताध्येतॄणामनुषङ्गतो मङ्गलाय विघ्नविघाताय च ग्रन्थघटकीकरोति ॐनागेशेति—नन्वात्मनाम गुरोर्नामेति निषेधस्य जागरूकत्वान्नागेशेत्ययुक्तमितिचेन्न तन्निषेधस्य वैखरीवाग्विषयकत्वात् । वैखरीविषयेऽपि रामो द्विर्नाभिभाषत इत्यादिप्रयोगदर्शने तु "मनुरब्रवीत्" "इति शातातपोऽब्रवीत्" "कर्माण्यपि जैमिनिः—फलार्थत्वात्" ३।१।४ मी॰ सू॰ इत्याद्युक्तेर्वक्तव्यार्थविषयकप्रतिज्ञाघटकत्वेन नाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संकीर्तने दोषाभावकल्पनाद्सदर्थनामपदार्थयोर्यत्र साक्षात्तादात्म्यं यथा रामोऽहं ब्रवीमीति तत्रैव तद्विषयकत्वकल्पनाद्वाऽत्र नामोच्चारणे दोषाभावो बोध्यः । *साम्बेति—अम्बया जगज्जनन्या स्वजनन्या वा सहितम् । शिवं महेश्वरं शिवभट्टपितरं वा । साहित्यार्थकस्य निरूपकांशे नित्यसाकाङ्क्षार्थकपदसमभिव्याहारे साहित्यानुयोगिन एव निरूपकत्वे त्वम्बया पितृजनन्येत्यर्थो बोध्यो मातुर्मृतत्वेन तयैव पालितत्वात् । *लघुरिति—लघुत्वञ्च शब्दाल्पत्वेन । *सिद्धान्तेति—इदमित्थञ्चेति ज्ञानविषयीभूतमर्थजातं सिद्धं तस्यान्तः संस्थितिरप्रामाण्यज्ञानानास्कन्दिततद्विषयकज्ञानानुकूलो व्यापारः तदुक्तं वात्स्यायनेन "सिद्धस्य संस्थितिरित्थम्भावव्यवस्था" इति । वस्तुतस्तु नात्र षष्ठीतत्पुरुषः सिद्धान्तपदार्थस्य व्यापारभिन्नत्वात् । किन्तु बहुव्रीहिः, तथा च सिद्धः प्रमाणैर्निश्चितोऽन्त उक्तरूपा व्यवस्था येषामर्थानामित्यर्थो बोध्यः । अत एव प्रथमाध्याये द्वितीयसूत्रव्याख्यानावसरे "अस्त्वयमित्यनुज्ञायमानोऽर्थः सिद्धान्तः" इति वात्स्यायनोक्तिः संगच्छते । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायमनुसृत्य ग्रन्थनिर्माणे कीर्त्युपकारयोः प्रयोजनत्वं वाच्यम् । तच्च लोककर्तृकाध्ययनप्रवृत्त्यधीनम् । प्रवृत्तिं प्रति च बलवदनिष्टाननुबन्धीष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकञ्च ज्ञानं हेतुः । उक्तं च ज्ञानं विषयसम्बन्धाधिकारिप्रयोजनरूपानुबन्धचतुष्टयसाध्यम् इत्यनुबन्धमाह—वैयाकरणसिद्धान्तेत्यादिना । अनुबन्धत्वञ्च प्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयत्वम्, यत्तु प्रवृत्तिजनकज्ञानविषयत्वमिति तन्न ग्रन्थादौ तदलेखनेऽपि तत्त्वभावापत्तेः । मन्मते तु प्रवृत्तिप्रयोजकज्ञानस्य तज्ज्ञानसाध्यत्वेन तत्प्रदर्शनस्यावश्यकत्वम् । तेषाञ्चानुबन्धानामिदमा विषयस्य, अस्मदाऽधिकारिणः, इष्टपदेन प्रयोजनस्य, साध्यशब्देन साध्यसाधनभावसम्बन्धस्य बोधनादिदं मदिष्टसाधनमिति ज्ञानीयविषयताऽऽत्तैव । एवमेव कृतिसाध्यत्वप्रकारकज्ञानविषयताऽपि बोध्या । यत्तु तत्र तत्र वाच्यवाचकभावसम्बन्धस्यानुबन्धत्वमुक्तं तच्चिन्त्यं तज्ज्ञानस्य प्रवृत्तिप्रयोजकज्ञानाजनकत्वात् । प्रकृते प्रवृत्त्युद्देश्यस्यैव विषयत्वेन वैयाकरणसिद्धान्तज्ञानं मे जायतामितीच्छया प्रवृत्तिदर्शनाद् वैयाकरणसिद्धान्तज्ञानं विषयः । ज्ञानस्य विषयद्वारैव प्रवृत्तिप्रयोजकज्ञानजनकत्वेन ज्ञानगतानुबन्धत्वस्य तत्रारोपे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु सिद्धान्तानामपि विषयत्वं सुवचम् । वस्तुतस्तु प्रवृत्त्युद्देश्यस्यान्येच्छाऽनधीनेच्छाविषयत्वेन प्रयोजनपरत्वादुद्देश्यस्य विषयत्वं दुर्वचम् । उद्देश्यस्य प्रयोजनत्वादेव "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति प्रवादः संगच्छते । एवञ्च ग्रन्थप्रयोज्याप्रामाण्यज्ञानानास्कन्दितज्ञानविषयस्यैवानुबन्धीभूतविषयत्वसत्त्वाद् वैयाकरणसिद्धान्तानामेव विषयत्वं बोध्यम् । एवञ्च वैयाकरणसिद्धान्ता विषया इति शेखरोऽपि संगच्छते । सम्बन्धश्च साध्यसाधनभावः । अधिकारी ग्रन्थप्रतिपाद्यार्थविषयकज्ञानधारणशक्तः । प्रयोजनञ्च भाष्योक्तं वेदरक्षोहादिरूपं द्रष्टव्यम् । विषयमात्रप्रदर्शनेनेतरेषामाक्षेपान्न न्यूनता । यद्वा सिद्धान्तज्ञानं प्रयोजनम् । न च तस्याध्ययनरूपत्वेन कौमुदीप्रणयनप्रयोजनत्वम् अध्ययनस्य ज्ञानजनककण्ठताल्वाद्यभिघातरूपत्वेन ज्ञानत्वासम्भवात् । वस्तुतस्तु शब्दब्रह्मज्ञानं व्याकरणस्य मुख्यं प्रयोजनम् । तत्रेति निर्धारणे सप्तमी, तथा च सिद्धान्तघटको वाक्यस्फोटो मुख्य इत्यर्थः । ❀बोधकत्वादिति — यद्यप्यान्तरस्फोटस्यैव वाचकत्वस्य सिद्धान्तयिष्यमाणतया वाह्यस्य पदसमूहरूपवाक्यस्य न वाचकत्वं तथापि तत्तादात्म्यापन्नत्वेन तस्यापि तत्त्वं बोध्यम् । ❀तेनैव — वाक्येनैव । ❀अर्थसमाप्तेरिति — वाक्यस्यैव निराकाङ्क्षार्थबोधकत्वेनार्थस्य पूर्णत्वान्निराकाङ्क्षत्वादिति यावत् । ❀न्यायभाष्यकृतेति—वात्स्यायनेनेत्यर्थः । ❀पदं सुवन्तमिति — एतेन प्रकृतिप्रत्ययघटितसमुदायस्य पचतीत्यादेर्वाक्यत्वमाधुनिकनैयायिकसम्मतं निरस्तम्, अर्थसमाप्तेरभावेन न्यायभाष्यविरोधात् वाक्यव्यवहारस्य निरूप्यनिरूपकभावापन्नविषयताप्रयोजकसुप्तिङन्तसमुदाय एव प्रसिद्धत्वाच्च । ननु प्रविश, पिण्डीमित्यादेस्तादृशार्थबोधकत्वेऽपि सुप्तिङन्तसमुदायत्वाभावाद् वाक्यत्वं न स्यादिति चेन्न इष्टापत्तेः, सुप्तिङन्तसमुदायार्थबोधकस्यैव वाक्यत्वेन तत्रापि तत्त्वस्य सत्त्वाच्च । ❀पदसमूह इति — यद्यप्येको निरवयवः स्फोटो वाक्यं, प्रतिभा वाक्यार्थ इति च सिद्धान्तस्तथाऽपि पदे प्रकृतिप्रत्ययादिकल्पनावद् वाक्येऽपि पदकल्पनामात्रमित्याश्रित्येदम् । तदुक्तं हरिणा :—

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ॥ इति

अत एव "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इत्युक्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र सुप् च तिङन्तञ्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तं तयोरेकशेषः तेन कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानां त्रयाणां रामेण शयितव्यम् , पचति भवति, चैत्रो गच्छतीत्यादीनामपि वाक्यत्वम् । एकतिङ् वाक्यमित्यादीनि तु कार्य्यविशेषविधानायैव परिभाषितानीति न तद्विरोधः । पदशब्देन पदत्वयोग्यस्य ग्रहणान्नानुकरणेऽव्याप्तिः । ननु शक्तं पदमिति मते प्रकृतिप्रत्ययादिसमूहस्यापि वाक्यत्वापत्तिरत आह—पदं सुबन्तं तिङन्तञ्चेति । तदुक्तं गौतमेन "ते विभक्त्यन्ताः पदम्" इति । *तेन — पदशब्देन सुबन्ततिङन्तग्रहणेन । *तत्समूहइति —सुबन्तसमूहः तिङन्तसमूहः सुबन्ततिङन्तसमूहश्चेत्यर्थः। † यत्तु मौनिश्लोकादितोऽपि बोधदर्शनात्पदस्य शाब्दबोधे न कारणत्वं किन्तूपस्थितेरेवेति तार्किकप्राञ्चः, तन्न "प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणम्"इति चिन्तामणिलक्षणेनैव प्रयोगहेतुभूतं यदर्थविषयकं यथार्थज्ञानं तज्जन्यतावच्छेदकावच्छिन्नार्थस्य ग्राहकेणेश्वरस्य प्रयोगहेतुभूतार्थतत्त्वज्ञानमादाय तन्निष्ठजनकतानिरूपितजन्यतामादाय मौनिनानुसन्धीयमानश्लोकस्यापि तादृशजन्यताश्रयत्वेनाव्याप्तेरभावात् तत्राप्यनुसन्धानाभिव्यङ्ग्यस्फोटात्मकशब्दस्य सत्त्वेनादोषाच्च । ननु पदसमूहो वाक्यमर्थसमाप्तावित्यनन्वितमत आह—*समर्थमिति। *शेष इति — तथा च पदसमूहरूपं वाक्यमर्थविषयकनिराकाङ्क्षबोधे शक्तमित्यर्थः। एतावदन्तेन वाक्यस्य निराकाङ्क्षबोधजनकत्वं समर्थितम् ।

मू०—तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवात्तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्य्याः । एतदेवाभिप्रेत्य "विभाषा सुपः"

वाक्यस्फोटबोधनार्थमेव प्रकृतिप्रत्यययोः कल्पितत्वम्

---

† यदा कदाचिद्येन केनचित्क्रमव्युत्क्रमोच्चारितानामेव तत्तत्पदानां मौनिनार्थक्रमेणानुसन्धीयमानानां मौनिश्लोकत्वम् । तत्र च मौनिशाब्दबोधस्य तादृशशब्दजन्यत्वाभावाच्छाब्दबुद्धित्वं न स्यादिति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

५।३।६८ इति सूत्रे कैयटः "अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात्" इत्याह । तत्तदवयवतत्तदर्थबोधनेन समुदायस्य समुदायार्थस्य च बोधने तात्पर्य्यमृषीणाम् । स्पष्टञ्चेदमर्थवत्सूत्रे भाष्यकैयटयोः । श्रुतिवाक्यादीनां बलाबलविचारकल्पनार्थश्च तत्कल्पनेति बोध्यम् ।

(रत्न०)—ननु वाक्यस्याखण्डत्वात् पदादिप्रतीतिर्भ्रम एवेत्याशङ्क्याह *तत्रेति—पूर्वोक्त इत्यर्थः । *सङ्केतेति—सङ्केतग्राह्यशक्तिग्रहासम्भवादित्यर्थः । *तदिति—वाक्येत्यर्थः । *कल्पनयेति—विषयाभावेऽपि तद्बोधकल्पना । वाक्ये पदानि पदे च प्रकृतिप्रत्ययभागं परिकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिता इत्यर्थः । अयम्भावः, घटमानयेत्यत्र घटसत्त्वे तदर्थबोधो जायते, तदभावे न जायत इति घटशब्दस्य सोऽर्थः, एवममूशब्दसत्त्वे कर्मत्वस्य भानं भवति, तदसत्त्वे न भवतीत्यमूशब्दस्य सोऽर्थ इत्येवं कल्पनयेति । न च तृजादीनां कर्तृवाचकत्वं न स्यात्, ण्वुलादिना कर्तृबोधेन व्यभिचारात् कार्य्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नस्यैव कारणत्वादिति वाच्यम् तृणारणिमणिन्यायेनैव तृजव्यवहितोत्तरजायमानकर्तृविषयकबोधं प्रति तृचः कारणत्वमित्येवंविधकार्य्यकारणभावस्वीकारेणान्वयव्यतिरेकयोर्व्यभिचाराभावात् । *कल्पिताभ्यामिति—प्रकृत्यादेः कल्पितत्वेनान्वयव्यतिरेकयोःकल्पितत्वम् । *तत्तदर्थविभागमिति—प्रकृतिप्रत्ययार्थविभागमित्यर्थः । *शास्त्रमात्रमिति—लोके बोधजनकतया वाक्यस्यैवोपयोगित्वेन प्रकृत्यादिकल्पना लाघवेन शास्त्रप्रक्रियामात्रोपयोगिनी । *एतदेवेति—शास्त्रप्रक्रियाविषयकत्वमेवेत्यर्थः । *विभाषेति—"विभाषा सुपो बहुच् पुरस्तात्तु" ५।३।६८ इति सूत्र इत्यर्थः । तत्र हि सुब्ग्रहणं किमर्थमिति प्रतीकमादाय सुबन्तस्य प्रियकुत्सनादिषु वर्तनादर्थलभ्यं सुबन्तत्वमिति प्रश्नाशयमुक्त्वा प्रातिपदिकान्माभूदिति भाष्यप्रतीके "अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात् प्रातिपदिकमपि स्वार्थोदिपञ्चके प्रवर्त्तमानं प्रियकुत्सनादिषु प्रवर्तत इति ततोऽपि प्रत्ययप्रसङ्गः" इत्युक्तम् । ननु वस्तुतः प्रकृतिप्रत्ययादीनामभावेऽपि तद्वर्णने मुनीनाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रामाण्यमत आह —*तत्तदिति — तत्तदवयवबोधनेन तत्तत्समुदायस्य तत्तदवयवार्थबोधनेन च तत्तत्समुदायार्थस्य च बोधन एव तात्पर्य्यान्ना-प्रामाण्यमिति भावः । न च तत्तादवयवेत्याद्यनुपपन्नमेकशेषापत्तेरिति वाच्यम् "सर्वस्य द्वे" ८।१।१ इत्यत्र द्विवचननिर्देशेनाप्रत्यस्तमिता-वयवभेदस्य समुदायस्य वीप्सायामादेशत्वेन स्थानद्विर्वचनपक्ष इव द्विःप्रयोगद्विर्वचनपक्षेऽपि कृतद्विर्वचनस्य समुदायस्यापि सुबन्ततदा-दितयाऽर्थशब्देन कर्मधारय एकशेषाप्रवृत्तेः सहविवक्षाया अभावात् । *भाष्यकैयटयोरिति — विशेष्यविशेषणभावरूपे संसर्गे वाक्यस्य शक्तिं स्वीकृत्य समासग्रहणस्य नियमार्थत्वं भाष्य उक्तम् । कैयटे "ध्वनिव्यङ्ग्यं नित्यं वाक्यं विशिष्टार्थस्य पदार्थसंसर्गरूपस्य वाचकम्" इत्युक्तमिति भावः । नन्ववयवद्वाराऽवयवार्थद्वारा समुदायस्य समुदायार्थस्य च बोधने मुनीनां तात्पर्य्यसत्त्वेऽवयवमात्रकल्पनेनापि लाघवेन वाक्यान्वाख्यानसिद्धिरित्य-वयवार्थकल्पना व्यर्थेत्यत आह । *श्रुतीति — श्रुत्यादीनामित्येव वक्तव्ये श्रुतिवाक्यादीनामित्युक्तिर्वाक्यस्फोटस्यैव मुख्यत्वद्योतनाय । यथा व्याकरणे "परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः" तथा मीमांसायां श्रुत्यर्थ-विचारे † "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य-

---

† निरपेक्षरवः श्रुतिः । यथा व्रीहीन् अवहन्तीत्यत्र क्रियाफलभागित्वरूपं कर्मत्वं बोधयन्ती द्वितीयारूपश्रुतिर्निरपेक्षैव व्रीहीणामवघातशेषत्वमभिधत्ते ।

अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम् । यथा बर्हिर्देवसदनं दामीत्यस्य लवनार्थ-प्रकाशकतया बर्हिर्लवने विनियोगः ।

परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्य्यवसितानि पदानि वाक्यम् । यथा "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" अत्र लिङ्गेन निर्वापे विनियुज्यमानस्य–अग्नये जुष्टं निर्वपामीति मन्त्रस्य सम्बन्धी यो भागः "देवस्य त्वा" इत्यादिस्तस्यैकवाक्यत्वबलेन निर्वाप एव विनियोगः । लब्धवाक्य-त्वानां पदानां कार्य्यान्तरापेक्षया वाक्यान्तरेण सम्बन्धे आकाङ्क्षापर्य्यवसन्नं प्रकरणम् । यथा समिधो यजतीत्यादेर्दर्शपूर्णमासकथम्भावाकाङ्क्षायां पठितत्वाच्छेषत्वम् ।

क्रमः स्थानमनेकस्याम्नातस्य सन्निधिविशेषाज्ञानम् । यथा दब्धि( घातक-मायुधम्) रसीत्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणे विहिताः । मन्त्रभागेऽपि क्रमेण मन्त्रत्रयं पठितं तत्राग्नेयाग्नीषोमीययोर्लिङ्गेनैव विनियोगसिद्धिः । दब्धिर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मर्थविप्रकर्षात्" इति नियमादुत्तरोत्तरस्य दुर्बलत्वं बोध्यते। अवयवार्था-कल्पने तदसिद्ध्या तत्कल्पनेति भावः। *बलाबलेति—"ऐन्द्र्या गार्ह-पत्यमुपतिष्ठते" अत्र श्रुत्या लभ्यमानं गार्हपत्योपस्थानं प्रबलम्। इन्द्रोपस्थानं त्विन्द्रो देवतास्या इति तद्धितानुसन्धानमूलकत्वाद् दुर्बलमित्यादिविचारे-त्यर्थः। वाक्यस्याखण्डत्वेऽखण्डार्थबोधकत्वे च बलाबलाधिकरणोच्छेद एव स्यादिति भावः।

मू०—तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययास्त-त्तदर्थवाचका इति तदर्थः। उपसर्गनिपातधात्वादिविभागोऽप्येवमेव काल्पनिकः। तस्यैवान्वाख्यानस्य लाघवेन निर्वाहाय स्थानिनो लादय आदेशास्तिबादयश्च कल्पिता एव। तेषामर्था अपि कल्पिता एव। तत्र स्थानिनामर्था ऋषिभिः कण्ठत उक्ताः। आदेशानाञ्च स्थान्यर्थाभिधानसमर्थस्यैवादेशतेतिन्यायेन ते। मुख्यं वाचकत्वन्तु तथा कल्पनया बोधिते तत्समुदायरूपे पदे वाक्ये वा लौकिकानां तत एव बोधात्।

एतदेवाभिप्रेत्य भूवादिसूत्रे १।३।१। भाष्ये भाववचनो धातुरिति लक्षणे "सति प्रत्यये भाववचनत्वं भाववचनाच्च प्रत्ययः" इत्यन्योन्याश्रयमाशङ्क्य "अनाश्रित्य भाववचनत्वं प्रत्ययो नित्य-त्वाच्छब्दानाम्" इत्युक्तम्। "पारमार्थिकं तु नाश्रीयते कल्पितं त्वाश्रीयत एव" इति कैयटः।

एवञ्च स्थानिनां वाचकत्वमादेशानां वेत्यादिविचारो निष्फल एव कल्पितवाचकत्वस्योभयत्रापि सत्त्वात्। व्याकरणभेदेन स्थानिनां भेदेऽपि न क्षतिः लिपीनां भेद इवेति दिक्।

(रत्न०)—ननु वाक्यस्फोटस्य वास्तविकत्वे वर्णस्फोट—पदस्फोट—

---

सीत्यत्र तु न हि लिङ्गादिरूपं विनियोजकं लभ्यते किन्तु यत्र देशे ब्राह्मणे उपांशु-यागविधानं तत्रैव देशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणे विनियोगः।

योगबलं समाख्या। हौत्रमौद्गात्रमित्यादौ होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यानि कर्माणि होत्रादिभिरनुष्ठेयानि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यस्फोट—वर्णजातिस्फोट—पदजातिस्फोट—वाक्यजातिस्फोटाखण्डपद-स्फोटाखण्डवाक्यस्फोटानामष्टानां वर्णनमसङ्गतमत आह—*तत्र शास्त्रेति। *वर्णस्फोट इति—अत्र वर्णपदं पदावयवपरं तदाह—प्रकृतिप्रत्यया इति। एवञ्च वर्णस्फोट इत्यस्य पदावयवस्फोट इत्यर्थः। स च वर्णरूपः प्रकृति-प्रत्ययादिरूपश्च। प्रकृतित्वञ्च प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वम्। प्रत्ययात्पूर्वं क्रियते या सा प्रकृतिरिति केचित् तन्न बहुपटुरित्यत्राव्याप्तेः। *एवमेवेति—शास्त्रप्रक्रियानिर्वाहार्थमेवेत्यर्थः। *तस्यैव—वाक्यस्फोट-स्यैव। *लाघवेनेति—लाघवमनायासेन प्रवृत्तिः, उपचारात्तु तत्साधनमपि लाघवम्। *निर्वाहायेति—अस्य शास्त्रप्रक्रियेत्यादिः। *कण्ठत इति—श्रावणप्रत्यक्षविषयतावच्छेदकावच्छिन्न—लः कर्मणि चेत्यादिरूपेणेत्यर्थः। *स्थान्यर्थेति—स्थानेऽन्तरतम इति परिभाषाबलादिति भावः। *ते—अर्थाः। अस्यादेशानामित्यत्रान्वयः। यद्यपि स्थान्यर्थाभिधानसमर्थस्यैवादेश-तेत्युक्त्या स्थानिन एव वास्तविकमर्थवत्त्वं प्रतीयते तथापि स्थानिनां लोके प्रयोगाभावादादेशानामेव तत्त्वम्। *तथेति—कल्पितान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययादिकल्पनयेत्यर्थः। *लक्षण इति—अस्य क्रियमाण इति शेषः। अयम्भावः "भूवादयो धातवः" १।३।१ इत्यस्यार्थनिरूपणावसरे "भुवं जायमानं क्रियारूपमर्थं येऽभिदधति ते धातुसंज्ञकाः" इत्यर्थमुपक्रम्य शिश्ये इत्यत्र दूषणमभिधाय "इतरेतराश्रयश्च भवति केतरेतराश्रयता प्रत्यये भाव-वचनत्वं भाववचनाच्च प्रत्ययः"। धातूद्देश्यकप्रत्ययविधायकशास्त्रव्यापारा-त्प्राक् शिश्ये इति समुदाय एव नास्ति कुतोऽन्वयव्यतिरेकाभ्यामर्थस्य प्रवि-भाग इति शिश्ये इत्यस्य प्रयोगसत्त्वेऽन्वयव्यतिरेकाभ्यां भाववचनत्वकल्प-नम्, भाववचनत्वे च धातुसंज्ञायां तदुद्देश्यकप्रत्यये शिश्ये इत्यस्य प्रयोग इत्यन्योऽन्याश्रय इत्याशङ्कायाम् "अनाश्रित्य भाववचनत्वं प्रत्ययो नित्यत्वा-च्छब्दानाम्" इत्युक्तम्। अत्र कैयटः "व्यवस्थिता एव पचत्यादयः समुदायाः संसृष्टार्थाभिधायिनः केवलमुत्प्रेक्ष्योत्प्रेक्ष्य प्रक्रियामर्थविभागः शब्दविभाग-श्चापोद्धीयते" इति। अत्रापोद्धीयत इत्यस्य कल्प्यत इत्यर्थः। ननु "अना-श्रित्य भाववचनत्वं प्रत्यय उत्पद्यते नित्यत्वाच्छब्दानाम्" इत्युक्तं भाष्ये। तच्चासङ्गतं शब्दनित्यत्वप्रत्ययोत्पत्त्योर्विरोधात् अतोऽनाश्रित्य भाववचनत्वं प्रत्यय इत्यस्य "पारमार्थिकं नाश्रीयते कल्पितं त्वाश्रीयत एव" इति कैयटे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नार्थोऽभिहित इत्याह—पारमार्थिकन्त्विति । ❀एवञ्चेति—मुख्यवाचकत्वस्य पदवाक्यस्फोटयोरेव सत्त्वे चेत्यर्थः। ❀इत्यादीति—आदिना प्रकृतेरर्थवत्त्वं प्रत्ययस्य वा, विकरणानां निरर्थकत्वं सार्थकत्वं वेत्यादेः संग्रहः। ❀निष्फल एवेति—ननु भवतीत्यादौ लरूपस्थानिनि ऐक्याल्लाघवात्स्थानिनां वाचकत्वं युक्तमत आह—❀व्याकरणभेदेनेति—तथा च स्थानिनामप्यनेकत्वाल्लाघवाभाव इति भावः। ❀लिपीनामिति—यथा लिपयो विनिगमनाविरहात् सर्वा एव शब्दविषयकसंस्कारोद्बोधनद्वारा शब्दोद्बोधकास्तथेत्यर्थः। तत्र तत्र कल्पितवाचकत्वस्यैव सत्त्वात् कल्पनाया अनियतत्वेन गौरवस्योभयत्र समत्वादिति भावः।

प्रमाणीभूतशब्दनिरूपणम्

मू०—तत्राप्तोपदेशरूपः शब्दः प्रमाणम्। "आप्तोनामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः सः" इति चरके पतञ्जलिः।

(रत्न०)—वाक्यात्मकशब्दस्य वाचकत्वं समासतो निरूप्य तत्र प्रामाण्यमुपपादयति—❀तत्रेति—वाक्येष्वित्यर्थः। निर्धारणे सप्तमी। ❀आप्तोपदेशेति—उपदिश्यतेऽसावुपदेश आप्तस्योपदेश आप्तोच्चारित इति यावत्। यद्वोपदेशनमुपदेशो भावे घञ् तथा चाप्तोपदेशेनाप्तोच्चारणेन रूप्यते ज्ञायत इत्याप्तोपदेशरूपस्तथा चाप्तकर्तृकव्यवहारग्राह्य इत्यर्थः। यद्वाऽऽप्तश्चासावुपदेशश्चाप्तोपदेशः, युक्तोपदेश इति यावत्। उपदेशे युक्तत्वञ्च यथार्थज्ञानजनकत्वम्। एवञ्च वेदस्यापौरुषेयत्वेऽपि न क्षतिराप्तकर्तृकोपदेशत्वाभावेऽप्याप्तत्वविशिष्टोपदेशत्वसत्त्वात्। ❀प्रमाणमिति—यथार्थज्ञानं प्रमा तत्करणं प्रमाणम्। एवञ्चान्यार्थकशब्दश्रवणेनान्यार्थबोधेऽपि प्रमाणत्वाभावः सिध्यति। आप्तलक्षणमाह—आप्त इति। नामेति वाक्यालङ्कारे। ❀कार्त्स्न्येनेति—अनेनांशिकनिश्चयो व्यावर्त्यते। निश्चयेत्युक्त्या भ्रमसंशययोर्निरासः। तथा च रागादिरहितत्वे सति सकलवस्तुविषयकानुभवप्रयोज्यनिश्चयवत्त्वमाप्तलक्षणं पर्य्यवसन्नम्। केचित्तु मौनिश्लोकादिनापि बोधात्पदज्ञानमेव करणं न तु पदमित्याहुस्तन्न वैयाकरणनय आन्तरस्फोटस्यैव वाचकत्वेन तत्रापि लिप्यभिव्यक्तस्फोटस्य सत्त्वात्। यत्तु पदार्थस्मृतेः करणत्वमुपेत्य पदस्याकरणत्वमाम-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्ति तदपि न व्यापारवत्कारणस्य करणत्वेन स्मृतौ व्यापाराभावेन करणत्वासम्भवात् । पदे तु पदार्थस्मरणमेव व्यापारः ।

ननु वेदस्यापौरुषेयत्वेनाप्तोपदेशत्वाभावात् प्रामाण्यानापत्तिरिति चेन्न-आप्त श्चासावुपदेशश्चेत्यर्थकाप्तोपदेशसत्त्वेनादोषात् । शब्द आप्तत्वाभावश्चोच्चारणकर्तृपुरुषरागादिदोषप्रयोज्यः । वेदस्यापौरुषेयत्व ईश्वरप्रणीतत्वे वाऽऽप्तत्वाभावप्रयोजकरागादेरभावेन आप्तत्वाक्षतिः । ननूक्ताप्तत्वस्यास्मदादिष्वभावेन व्यावहारिकशब्दानां प्रामाण्यानापत्तिरिति चेन्न संवादिप्रवृत्तिजनकवाक्यप्रयोक्तृत्वेन हेतुनाप्तत्वानुमानात् । तथा हि—अयं पुरुष आप्तत्ववान् यथार्थप्रवृत्तिजनकवाक्यप्रयोक्तृत्वात्, यन्नैवं तन्नैवमिति । ※रागादीति—राग इदं मदिष्टसाधनमिति ज्ञानरूपसङ्कल्पजन्यो धर्मविशेषः । द्वेषश्चेदं मदनिष्टसाधनमिति ज्ञानजन्यः सः । ※नान्यथेति—योऽन्यथावादी न स आप्त इत्यर्थः । अर्थतत्त्वज्ञानमाप्तिस्तद्विशिष्ट आप्त इति यावत् ।

मू०—तत्रागृहीतवृत्तिकस्य शाब्दबोधादर्शनात् "नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते" इति समर्थसूत्रभाष्याच्च तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः । यद्यपि गुड इत्युक्तेऽर्थप्रतीतौ तद्गतं मधुरत्वं गम्यते तथापि न तच्छब्दजप्रतीतिविषयः किन्तु मानान्तरजन्यप्रतीतिविषयः । यत्र तु गुडो मधुर इति वाक्यार्थे गुड इत्येकदेशः प्रयुज्यते तत्रापि मधुराभिन्नो गुड इत्येव बोधो न तु मधुरत्वप्रकारको गुडविशेष्यकः । ध्वनितं चेदम् "अन्नेन व्यञ्जनम्" २।१।३४ इति सूत्रे भाष्ये ।

शाब्दबोधे गृहीतवृत्तेर्हेतुत्वनिरूपणम्

(रत्न०)—ननु शब्दस्य प्रमाजनकत्वे सर्वैः सर्वेषां श्रोतॄणां बोधापत्तिरत आह—※तत्रेति—शब्दश्रोतॄणां मध्य इत्यर्थः । ※अगृहीतेति—शाब्दबोधं प्रति वृत्तिप्रयोज्योपस्थितेरन्वयव्यतिरेकाभ्यां कारणत्वमवगम्यते । तत्र वृत्तिः दाहं प्रति वह्न्यादिवन्न स्वरूपेण हेतुः सर्वेषां बोधापत्तेरितिज्ञानविषयीभूताया एव कारणत्वमित्याह—※अगृहीतशक्तिकस्येति—तत्तत्पदनिष्ठां वृत्तिमजानतः पुरुषस्य तत्तत्पदश्रवणेऽपि बोधादर्शनादित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु सर्वेषां शब्दश्रवणमात्रेण बोधवारणाय तत्तद्धर्मवद्विषयकशाब्दबोधं प्रति तत्तद्धर्मवन्निरूपितवृत्तिज्ञानस्य कारणत्वमस्तु यथा घटत्ववद्विषयकशाब्दबोधं प्रति घटत्ववन्निरूपितवृत्तिज्ञानस्य कारणत्वान्न घटपदात् पटादिबोधो नाप्यज्ञातवृत्तिकादित्याह —*नहीति — उक्तकार्यकारणभावस्वीकारे गुडत्वादिधर्मवद्गुडनिरूपितशक्तिज्ञानेन मधुरत्वादिप्रकारकबोधवारणाय प्रकारीभूतधर्मनिरूपितत्वमपि वृत्तेः स्वीकार्यमिति यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारक एव बोध इत्याह —*तद्धर्मावच्छिन्नेति— एवं च गुडपदेन गुडत्वप्रकारकबोधस्यैव दर्शनान्मधुरत्वाद्यनेकधर्मसत्त्वेऽपि गुडत्वप्रकारिकैव गुडपदे वृत्तिरिति न मधुरत्वादिप्रकारकबोध इति भावः । *वृत्तिविशिष्टेति — ज्ञाने वृत्तिवैशिष्ट्यञ्चाग्रे मूल एव वक्ष्यते । यद्यपि शाब्दबोधे वृत्तिज्ञानं पदज्ञानञ्च स्वातन्त्र्येण कारणमित्युक्तं नैयायिकैस्तथापि पृथक् कारणत्वस्वीकारे कार्य्यकारणभावद्वयकल्पनेन गौरवाल्लाघवेनोक्तम् —*वृत्तिविशिष्टेति — अयम्भावो वृत्तिज्ञानं व्यवहाराद्रुपदेशाच्च जायते — यथा प्रयोजक (आज्ञापक) वृद्धेन प्रयोज्य (आज्ञाप्य) वृद्धः उक्तः "घटमानय" इति तदनन्तरं घटमानयन्तं प्रयोज्यवृद्धं पश्यता बालेनानुमितमस्य(प्रयोज्यवृद्धस्य)चेष्टा घटानयनविषयकप्रवृत्तिजन्या चेष्टात्वान्मदीयचेष्टावदिति चेष्टाकारणीभूतां प्रवृत्तिमनुमायास्य प्रवृत्तिर्घटानयनं मत्कार्यमिति ज्ञानजन्या मदीयस्तन्यपानादिविषयकप्रवृत्तिवदिति प्रवृत्तिकारणं कार्य्यताज्ञानमनुमाय घटानयनकार्य्यताज्ञानं किञ्चित्कारणजन्यं कादाचित्कत्वाद् घटादिवदिति सामान्यरूपेण कारणमनुमीयते । ततोऽस्य कार्य्यताज्ञानं प्रयोजकवृद्धवाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वाद् यो यदन्वयव्यतिरेकानुविधायी स तज्जन्यो दण्डान्वयव्यतिरेकानुविधायी घटो यथा दण्डजन्यस्तथा घटमानयेति वाक्यान्वयव्यतिरेकानुविधायिकार्य्यताज्ञानं तद्वाक्यजन्यमिति वाक्यं कारणत्वेन निश्चीयते । ततश्च पटमानयेत्युक्ते पटानयनं दृश्यते न घटानयनमित्यन्वयव्यतिरेकाभ्यां पदमपि तत्तदर्थबोधे कारणमित्युक्तरीत्याऽनुमीयते । एवञ्च पदवाक्ययोस्तदर्थे ज्ञानरूपकार्य्येण कश्चन सम्बन्धो वाच्यः । कार्य्येणासम्बद्धात्कारणात्कार्यानुपपत्तेः । तथा च तत्र नैयायिकैरीश्वरेच्छारूपशक्तिरूपो मीमांसकैर्बोधजनकतावच्छेदकशक्तिरूपः प्राचीनवैयाकरणैर्बोधजनकता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽऽत्मकः सम्बन्धः स्वीक्रियते । मञ्जूषाकारश्च वक्ष्यमाणयुक्त्या तत्तन्म-
तस्यापसिद्धान्ततया वाच्यवाचकभाव एव शक्तिरिति मन्यते । स च
सम्बन्धो न हि यत्किञ्चिन्निष्ठवाच्यतानिरूपितवाचकतारूपः किन्त्वखण्डो
धर्मविशेषः । अन्यथा मतान्तराभिहितदोषापत्तिः । स्यादेतत् उक्तरीत्या
तत्तत्पदादिनिष्ठशक्तिज्ञानं जायते तेन च शक्तिविषयकः संस्कारो जन्यते ।
स च संस्कारः श्रावणप्रत्यक्षविषयीभूतपदरूपोद्बोधकवशादुद्बुद्धः सन्
स्वविषयकशक्तिविषयिणीं स्मृतिं जनयति । स्मरणात्मकज्ञानविषयीभूता च
शक्तिः पदार्थविषयकं ज्ञानं जनयति । तदेव ज्ञानं स्मृतिरूपस्थितिर्ज्ञाना-
न्तरं वाऽभिधीयते । उपस्थितिरूपज्ञानाच्छक्तिविषयकसंस्काराद् वाऽऽका-
ङ्क्षादिकारणान्तरसत्त्वे शाब्दबोधो जायते । तथा च यस्य यत्पदे वृत्ति-
ज्ञानं जातं तस्य तत्पदे वृत्तिः स्वविषयकसंस्कारद्वारा विषयतासम्बन्धेन
सम्बन्धितया वा वर्तत इति वृत्तिवैशिष्ट्यं ज्ञाने सुलभम् । ननु वृत्तिविषय-
कोद्बुद्धसंस्कारसमानाधिकरणवृत्त्याश्रयपदविषयकज्ञानस्यैव शाब्दबोधे
कारणत्वमस्तु वृत्तिवैशिष्ट्यनिवेशेनालमिति चेन्न कारणताऽवच्छेदक-
बाहुल्येन गौरवात् । सामानाधिकरण्यादीनां संसर्गविधया निवेशे तु
ज्ञानविधया कारणताऽनवच्छेदकतया लाघवमिति भावः । न च शाब्द-
बोधे न पदज्ञानं कारणं किन्तु वृत्तिप्रयोज्यपदज्ञानजन्यपदार्थोपस्थितिरेव
कारणमिति वाच्यं वृत्तिप्रयोज्यपदजन्यपदार्थोपस्थितित्वस्य कारणताऽवच्छे-
दकत्वापेक्षया स्वजन्यपदार्थोपस्थितिसम्बन्धेन पदज्ञानस्य कारणत्वे
पदज्ञानत्वस्य कारणताऽवच्छेदकत्वेन लाघवात् । ननु गुडपदेन मधुरत्व-
प्रकारकशाब्दबोधाभावे तद्रसज्ञानां रसनाद्रवत्वदर्शनेन तदनुपपत्तिरि-
त्याह—*यद्यपीति । *मानान्तरेति—गुडो मधुर ऐक्षवत्त्वाच्छर्करावदि-
त्यनुमानगम्यं मधुरत्वं न तु शब्दगम्यम् । नैयायिका ज्ञानरूपसन्निकर्षेण
आलङ्कारिका व्यञ्जनया मधुरत्वादिबोधमाहुः । ननु प्रविशेत्येतावन्मात्रेण
यथा गृहकर्मकप्रवेशस्य बोधस्तथा गुडो मधुर इति वाक्यार्थाभिप्रायेण
गुड इत्येकदेशप्रयोगे मधुरत्वप्रकारकगुडविशेष्यकशाब्दबोधो जायते स
न सिध्येदत आह—*मधुराभिन्न इति । अयम्भावो यथा नीलो घट इत्यत्र
घटनिष्ठविशेष्यतानिरूपिता प्रकारता नीले तदवच्छेदकता नीलत्वे तथा
वाक्यैकदेशस्थले गुडनिष्ठविशेष्यतानिरूपिता प्रकारता मधुरे प्रकारताऽवच्छे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दकता मधुरत्वे न तु मधुरत्वप्रकारको गुडविशेष्यको बोध इति। ननु तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति तत्प्रकारकतद्विशेष्यकवृत्तिविशिष्टज्ञानस्य हेतुत्वे आकाशपदेन शब्दाश्रय इत्याकारकबोधानापत्तिराकाशपदस्य स्वरूपत आकाश एव शक्तिस्वीकारेण शक्तिज्ञाने शब्दाश्रयत्वरूपस्याकाशत्वस्य प्रकारतयाऽप्रवेशादिति चेन्न शब्दाश्रयत्वप्रकारकाकाशविशेष्यकोपस्थितिं प्रति निरवच्छिन्नशब्दाश्रयविषयकशक्तिज्ञानस्यैव कारणत्वस्वीकारेणादोषाद् वैयाकरणनये आकाशत्वस्यापि जातित्वस्य वक्ष्यमाणतयाऽऽकाशत्वप्रकारकाकाशविशेष्यकशक्तेरेव स्वीकारेणादोषाच्च। ननु घटघटत्वे इत्यादि निर्विकल्पकबोधस्य प्रकारत्वविशेष्यत्वाद्यनिरूपकत्वे घटादिपदजन्यत्वानुपपत्तिरिति चेन्न तस्यातीन्द्रियतया पदाजन्यत्वस्येष्टत्वात्। ❀ध्वनितमिति—तत्र हि दध्योदन इत्यादौ सामर्थ्याभावमाशङ्क्य लोकव्यवहारात्प्रतीयमानार्थमादाय समाहितं तथा च तद्भाष्यस्य दध्नोपसिक्त इति वाक्येन यो बोधः स एव वाक्यैकदेशन्यायेन दधिशब्देन बोध इत्यत्रैव तात्पर्य्यम् इति वाक्यैकदेशस्थलेऽपि मधुरप्रकारकगुडविशेष्यक एव बोधो न तु मधुरत्वप्रकारकगुडविशेष्यकः।

मू०—विशेषणविशेष्यभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदाद्घटत्वविशिष्टघटबोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्ति वैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य स्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्। अतोनागृहीतवृत्तिकस्य बोधो नापि विस्मृतवृत्तिकस्य नापि तद्वाचकपदमजानतो नापि घटपदादाश्रयत्वेनोपस्थिताकाशस्य जनकतयोपस्थितचैत्रादेश्च बोधः। संस्काराजनकशक्तिग्रहसत्त्वे तेन शाब्दबोधजनने च न मानम्। संस्कारकल्पिका च वृत्तिस्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत्।

ननु तद्विषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानस्यैव हेतुत्वमस्तु किमिति कार्य्यदले विशेष्यविशेषणभावनिवेशनेत्याशङ्कायां तस्य फलमाह— ❀विशेषणेति। ❀व्यत्यासेनेति — घटपदं घटावच्छिन्नघटत्वे शक्तमित्येवंरूपेणेत्यर्थः। तद्धर्मावच्छिन्नेत्यस्य निवेशे तु नायं दोषो घटत्वावच्छिन्नविषयकशाब्दबोधं प्रति घटत्वावच्छिन्न-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निरूपितशक्तिज्ञानस्यैव कारणत्वेन प्रकृते तदभावात् । इदमुपलक्षणं घटपदं घटत्वावच्छिन्ने शक्तमिति शक्तिज्ञानसत्त्वेऽपि घटावच्छिन्नघटत्व-विषयकशाब्दबोधस्य, तद्विषयकशाब्दबुद्धित्वस्यैव कार्य्यताऽवच्छेदकत्वे-नोभयविधशाब्दबोधस्थले तस्य सत्त्वात् । नन्वेवं बुद्धिविशेषविषय-त्वावच्छिन्ने तदादीनां शक्तत्वात्तमानयेत्यादौ बुद्धिस्थमानयेति बोधापत्तिरि-ष्टस्य घटत्वादिप्रकारकबोधस्यासिद्धिश्च । न च तदादीनां बुद्धिविशेषविषय-त्वावच्छिन्ने शक्तिसत्त्वे मानाभावः परामर्शनिष्ठजनकतानिरूपितजन्यताव-ज्ज्ञानत्वमनुमितित्वमिति लक्षणे वह्निव्याप्यधूमवदर्थकतच्छब्दघटित 'स वह्निमान्' इति वाक्यजन्यबोधस्थले तच्छब्देन परामर्शोपस्थित्या शाब्दबो-धस्य विषयविधया परामर्शजन्यत्वेनानुमितिलक्षणातिव्याप्तिदानपरदीधिते-रेव प्रमाणत्वात् तथैव सर्वानुभवदर्शनाच्चेति वाच्यम् उक्तरूपावच्छिन्ने तदादीनां शक्त्या विशेषरूपेणोपस्थितेः शाब्दबोधस्य च स्वीकारेणादोषात् । न च द्रव्यादिपदादपि घटत्वादिरूपेण बोधापत्तिवारणाय येन रूपेण शक्तिग्रहस्तेनैव रूपेणोपस्थितिरितिसिद्धान्तभङ्गस्तादृशसिद्धान्तस्य तदा-द्यतिरिक्तपरत्वाद् बुद्धिविशेषविषयत्वोपलक्षितत्ताद्धर्मावच्छिन्ने शक्ति-स्वीकारेण घटत्वादिरूपेण बोधे बाधकाभावाच्च । न च नानार्थत्वापत्ति-र्नानाधर्मनिष्ठनानावच्छेदकतानिरूपितशक्तिनिरूपकताऽवच्छेदकैकधर्मवत्त्व-स्यैव नानार्थकत्वादिति वाच्यम् अननुगतनानाधर्मनिष्ठनानावच्छेदकता-निरूपितनिरूपकत्वावच्छेदकैकधर्मवत्त्वस्यैव नानार्थकत्वात् । प्रकृते च बुद्धिविशेषविषयत्वेनानुगतीकृतघटत्वाद्यवच्छिन्न एव शक्तिस्वीकारेणोक्त-नानार्थकत्वाभावः । एतेन तदादीनां नानार्थत्वमिष्टमेवेति दुर्बलोक्तिः परास्ता । *वृत्तिविषयकेति — अयं भावो यत्र पदस्य श्रावणप्रत्यक्षादिकं वृत्तेश्च स्मरणात्मकं ज्ञानं तत्र विषयतया वृत्तिज्ञानं पदज्ञानञ्च पदरूपे विषये वर्त्तते, उभयोरपि पदविषयकत्वादिति सामानाधिकरण्यं सुलभम् इति । *सामानाधिकरण्येति — घटपदे गृहीतवृत्तिकस्य कलशपदेन शाब्दबोधवारणाय पदरूपदेशमादाय सामानाधिकरण्यम् । नन्वेवमपि घटपदे गृहीतवृत्तिकस्य चैत्रादेस्तादृशसंस्कारसामानाधिकरण्यमादाया गृहीतवृत्तिकस्यापि मैत्रादेस्तादृशपदज्ञानेन शाब्दबोधापत्तिरिति चेन्न ज्ञाने वृत्तिवैशिष्ट्यस्य समवायेनापि दानेन चैत्रात्मनि वृत्तेर्मैत्रात्मनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदज्ञानस्य च सत्त्वे वैयधिकरण्येनादोषात् । अतः — उक्तकार्य्यकारण-भावात् । प्रथमसम्बन्धस्य फलमाह — ॐनागृहीतवृत्तिकस्य नापि विस्मृतवृत्तिकस्येति — उभयत्रापि उद्बुद्धसंस्काराभावात् । द्वितीयसम्बन्धस्य फलमाह — ॐनापि तद्वाचकपदेति — तत्र पदे विषयतया पदज्ञानासत्त्वात् । हस्तचेष्टादिनाऽप्यर्थज्ञानसम्भवादतिव्याप्तिवारणाय पदेत्युक्तिः । पदविषय-कत्वमात्रोक्तौ यत्किञ्चित्पदविषयकत्वमादायातिव्याप्तिवारणाय ॐस्वा-श्रयेति । स्वाश्रयविषयकत्वमात्रोक्तौ निरूपकतासम्बन्धेन स्वाश्रयार्थ-विषयकत्वमादाय पदाज्ञानेऽपि बोधवारणाय ॐपदेति । द्वितीयसम्बन्धे स्वाश्रयेति निवेशस्य फलं दर्शयति-नापि घटपदेत्यादिना । तत्र घटपदेना-काशस्य शब्दगुणत्वादेकसम्बन्धिज्ञानमपरसम्बन्धिज्ञानस्य स्मारकमिति विधयाऽऽकाशस्योपस्थितावपि घटपदे आकाशत्वावच्छिन्ननिरूपितवृत्त्या-श्रयत्वाभावादिति १† भावः ।

उक्तकार्य्यकारणभावादेवोच्चारणकर्तृत्वेन पदव्यञ्जकतयोपस्थित-चैत्रादेर्न शाब्दे भानमित्याह — ॐजनकतयेति । ननु यत्र वृत्तिज्ञानात्सं-स्कारो नोत्पन्नस्तत्र शाब्दबोधानापत्तिरतआह — ॐसंस्काराजनकेति — अस्य न मानमित्यत्रान्वयः । ननूपेक्षात्मकवृत्त्यनुभवानन्तरं संस्कारादर्शन-मेव मानमत आह — ॐशाब्दबोधेति — तत्र शाब्दबोधानुत्पत्तिरिष्टैवेति भावः । एतेन यत्र क्षणे वृत्तिज्ञानं तदव्यहितोत्तरक्षणे शाब्दबोधो न स्यात्त-दानीं संस्कारस्यानुत्पन्नत्वात् द्वितीयक्षणे संस्कारस्योत्पत्तेः सर्वसम्मतत्वा-दिति दूषणाभासोऽपि निरस्तः ।

ननु संस्कारस्यातीन्द्रियत्वेन तज्ज्ञानासम्भवः । ननु स्वर्गकामो यजे-तेति श्रुत्या स्वर्गं प्रति यागस्य करणत्वं बोध्यते, तच्च यागस्य व्यापार-

---

१† उक्तरीत्या वृत्तिविशिष्टज्ञानस्य कारणत्वकल्पनेनैवाकाशादेः शाब्दबोध-वारणसम्भवे तद्वारणाय शाब्दबुद्धिं प्रति वृत्तिज्ञानजन्योपस्थितिर्हेतुरित्यपास्तम् । किञ्च तत्प्रकारकतद्विशेष्यकतत्संसर्गकशाब्दबोधे तत्तत्समभिव्याहाररूपाकाङ्क्षाया-स्तत्र कारणत्वज्ञानस्य च हेतुत्वस्य नैयायिकसम्मतत्वेन तेनैवाकाशादिबोधवारणे पदार्थोपस्थितिकार्य्यकारणभावे वृत्तिजन्यत्वनिवेशस्य निष्फलत्वम् । किञ्च वृत्ति-ज्ञानांश उद्बुद्धसंस्कारादेव बोधानुभवादुपस्थितेः कारणत्वे न मानम् । किञ्च पदार्थोपस्थितित्वापेक्षया पदार्थविषयकत्वेन संस्कारस्यैव कारणत्वे लाघवम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषरूपतया नष्टत्वान्मरणानन्तरभाविस्वर्गं प्रति नोपपद्यत इति यागजन्योऽदृष्टविशेषो यथा कल्प्यते तथा प्रकृते कल्पकाभाव इत्यत आह—*संस्कारकल्पिकेति— वृत्तिविषयकस्मरणरूपकार्येण तद्विषयकसंस्काररूपकारणस्यानुमानमेव मानमिति भावः। यद्यपि संस्कारः स्वरूपतस्सन्नेव वह्न्यादिवत्कारणं न तु ज्ञातस्तथापि तत्कल्पिकेत्यस्य संस्कारे हेतुत्वकल्पिकेत्यर्थः। संस्कारे हेतुत्वानुमापकम् १‡ स्मृतिरूपकार्यदर्शनमेवेति भावः। नन्वेकवारं वृत्तिस्मृतौ स्मृतेः संस्कारनाशकतया संस्कारनाशात्तदनन्तरं घटादिपदात्पुनर्वृत्तिस्मरणानुपपत्तिरिति चेन्न तत्र स्मृतेरेव संस्कारजनकत्वान्मरणात् पूर्वकालभाविस्मृतेरेव संस्कारनाशकत्वाच्च। ननु तत्र वृत्तिस्मृतावेव किम्मानमत आह—*शाब्दबुद्धिरिति—वेति वा शब्दोहेतुत्वद्योतकचार्थे। तथा च शाब्दबोधरूपकार्येण हेतुना स्मृतिकल्पनं ततश्च संस्कारकल्पनमिति भावः।

सू०—सा च वृत्तिस्त्रिधा। शक्तिर्लक्षणा व्यञ्जना च। तत्र शक्तिः कः पदार्थ इति चेदस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारा, इदं पदमिममर्थं बोधयतु इत्याकारावेश्वरेच्छा। तस्याश्च यद्यपि विषयत्वलक्षणः सम्बन्धः पदेऽर्थे जन्यजनकभावे बोधे च तथापि तस्यां बोधनिष्ठजन्यतानिरूपकजन-

शक्तिनिरूपणम्

---

१‡ ननु स्मृतिं प्रत्यनुभवस्यैव कारणत्वमस्तु संस्कारश्च तज्जन्यत्वविशिष्टतज्जन्यजनकत्ववत्तद्व्यापाररूप इति न संस्कारानुत्पादकोपेक्षात्मकानुभवात् शाब्दबोधः। व्यापारस्यैव कारणत्वे तु भ्रमणादीनां कारणत्वेनोपपत्तौ दण्डादीनामपि कारणत्वं न स्यादिति चेन्न उपेक्षात्मकानुभवेन कार्य्यादर्शनादनुभवत्वेन कारणत्वस्य वक्तुमशक्यतया तद्व्यक्तित्वेनैव कारणत्वे गौरवाल्लाघवेन संस्कारस्यैव हेतुत्वात्। न च व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति सिद्धान्तविरोधादनुभवस्यैव कारणत्वेन भाव्यम् तादृशसिद्धान्तस्य निर्मूलत्वात्।

ननु पदज्ञानोद्बुद्धपदार्थविषयकसंस्कारस्यैव शाब्दबोधे कारणत्वस्य वक्ष्यमाणतया शाब्दबोधस्य स्मृतित्वापत्तिरिति चेन्न संस्कारस्यात्र वासनाविशेषरूपत्वेन नैयायिकप्रसिद्धस्मृतिहेतुभूतस्याग्रहणेनादोषात्। तथा च संस्कारत्वमात्रावच्छिन्नकारणतानिरूपितकार्यताशालिज्ञानस्यैव स्मृतित्वेन प्रकृते तदभावेन न स्मृतित्वापत्तिरिति भावः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृतावत्त्वेन विषयो वाचकः, तस्यां बोधविषयत्वेन विषयो वाच्य इति नातिप्रसङ्गः ।

यद्यपि प्रथमं शक्तिग्रहो वाक्य एव, तथापि आवापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदे शक्तिग्रह इति बोध्यम् । यद्वा 'तादृशबोधविषयको बोध एव सा' इति नैयायिकाः, तन्न, प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्त्या तस्य ज्ञानमनुमाय ज्ञानस्य चोपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वा असम्बद्धस्य कारणत्वानुपपत्तिज्ञानपूर्वकं कल्प्यमानस्य सम्बन्धस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वघटितस्य ग्रहीतुमशक्यत्वात् । एतेन 'बोधजनकत्वमेव पदपदार्थयोः सम्बन्धः' इत्यपास्तम् । विनिगमनाविरहेऽपीच्छाबोधयोरुभयोः शक्तित्वकल्पने गौरवाच्च । किञ्चैवम् 'इदमस्माद्भवतु' इतीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपप्लवः । किञ्च, प्रमाणानां जनकत्वतद्घटितसम्बन्धातिरिक्तसम्बन्धेनैव प्रमेयसम्बद्धानां ज्ञानजनकत्वदर्शनेन इह तयोः सम्बन्धत्वानौचित्यम्, अन्यथा 'धूमाद् वह्निज्ञानं जायताम्' इतीच्छाविषयत्वमेव तद्बोधजनकत्वमेव वा हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्त्युच्छेदः । किञ्च, इच्छायाः जनकत्वस्य वा उभयवृत्तित्वाभावः, इच्छाविषयबोधीयविषयतायामिच्छाऽऽश्रयतानियामकत्वाभावात् । "सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितः" इति "द्विष्ठः सम्बन्धः" इति च "विशिष्टबुद्धिनियामकः" इति चाभियुक्तव्यवहारात् । नहि तत्र 'विषय इच्छावान्' इत्यादिव्यवहारोऽस्ति । 'जनकता शक्तिः' इति पक्षे बोधजनकतायाः पदेऽर्थे च सत्त्वेऽपि तयोः परस्परं सम्बन्धस्य दुरुपपादत्वात्, ज्ञाने विषयस्य कर्तुश्च कारणत्वेऽपि तयोः परस्परं विशिष्टबुद्ध्यदर्शनात्, अर्थपदयोः सम्बन्धस्य दुरुपपादत्वात् ।

(रत्न०)–*त्रिधेति–ननु वृत्तित्वसामान्यमनुक्त्वा तद्विभजनमसङ्गतम्,



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वादिति चेत्, न, वृत्तिपदव्यवहार्य्यत्वस्या-र्थपदोभयनिरूपितसम्बन्धत्वरूपस्य वा वृत्तित्वस्य प्रसिद्धतया तदनुक्तेः। अत्र 'धा'प्रत्ययः प्रकारार्थकः। प्रकारश्च—सामान्यभेदको विशेषधर्मः। तथा च शक्तित्वम्, लक्षणात्वम्, व्यञ्जनात्वञ्चेति त्रयो विशेषधर्माः। तथा च धर्मत्रय†१वती वृत्तिरिति फलितम्। तार्किकाभिमतं शक्तिस्वरूपमाह—

❀ अस्माच्छब्दादिति — अत्र समीपवर्त्तिबोधकेनेदमोच्चारणकर्मीभूतं परामृश्यते, तस्याभेदेन (विशेष्यविशेषणभावेन)शब्देऽन्वयः। शब्दपदोत्तर-पञ्चम्या जन्यत्वमर्थः, 'तत्र' शब्दस्य निरूपितत्वसम्बन्धेनान्वयः। जन्यत्वस्य च बोद्धव्यपदघटक'बुध'धात्वर्थे बोधे स्वरूपसम्बन्धेना (आश्रयत्वसम्ब-न्धेन)—न्वयः। बोधस्य च निरूपितत्वसम्बन्धेन 'तव्य'प्रत्ययार्थविषय-तायामन्वयः। तस्याश्च स्वरूपसम्बन्धेनार्थेऽन्वयः। तथा च 'इदम †२ भिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावानर्थः' इत्यर्थविशेष्यि-केश्वरेच्छा शक्तिः सिद्धा। ननूक्तबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्व-

---

† १ इदञ्च वृत्तिस्वरूपप्रदर्शनमात्राभिप्रायेण, शक्तिलक्षणाज्ञानयोः कार्य्यकारण-भावस्यैकरूपत्वात्। तथाहि—पदप्रकारकार्थविशेष्यकज्ञानस्य शक्तित्वावच्छिन्ना शक्तिरूपसम्बन्धनिष्ठा या सांसर्गिकी विषयता तादृशविषयतानिरूपिता पदनिष्ठा या प्रकारता तन्निरूपिता या अर्थनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपकज्ञानत्वेनैक-रूपेणैव कारणतायाः सुवचत्वम्, शक्तिसम्बन्धेन शक्यसम्बन्धेन वा पदप्रकारक-ज्ञाने शक्तेः संसर्गत्वसत्त्वात्। तथाहि—'शक्तिसम्बन्धेन पदविशिष्टोऽर्थः' इत्या-कारकज्ञाने लक्षणास्थले 'शक्तिनिरूपकार्थसम्बन्धेन पदविशिष्टोऽर्थः' इति ज्ञाने च शक्तौ संसर्गताऽऽख्यविषयतायाः सत्त्वात्।

† २ अभेदसम्बन्धावच्छिन्नेदन्त्वावच्छिन्नप्रकारतानिरूपिता शब्दत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना शब्दत्वावच्छिन्ना निरूपितत्वसम्बन्धाव-च्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता जन्यत्वत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना जन्यत्वत्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता बोधत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना बोधत्वावच्छिन्ना निरूपितत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता विषयतात्वावच्छिन्ना या विशेष्यता तादृशविशेष्यत्वावच्छिन्ना विषयतात्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिताऽर्थत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यतानिरूपिकेश्वरेच्छा शक्तिरिति परिष्कृतं स्वरूपं फलति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रेच्छायाः शक्तित्वेऽर्थधर्मत्वापत्तिः शब्दधर्मत्वानापत्तिश्च शक्तेः स्यादत आह — ※इदं पदमिति — अत्रेदमर्थस्याभेदेनार्थेऽन्वयः । अर्थस्य च विषयत्वरूपामर्थे निष्ठत्वसम्बन्धेनान्वयः । विषयत्वस्य च निरूपकत्व-सम्बन्धेन 'बुध'धात्वर्थे बोधेऽन्वयः । बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूप आख्यातार्थेऽन्वयः । जनकत्वस्य च स्वरूपसम्बन्धेन पदेऽन्वयः तिङन्तस्थले प्रथमान्तार्थविशेष्यकबोधस्यैव नैयायिकैस्स्वीकृतत्वात् । तथाच 'इद †१ मर्थनिष्ठविषयतानिरूपकबोधनिष्ठजन्यतानिरूपितजनकतावत्पदम्' इति पदविशेष्यिकेश्वरेच्छा शक्तिः । एवम् 'एतत्पदजन्यो बोधः एतदर्थनिष्ठविषयतानिरूपको भवतु' इति बोधविशेष्यिका, तथा 'एतदर्थनिष्ठा विषयता एतत्पदजन्यबोधनिरूपिता भवतु' इति विषयताविशेष्यिका इति विनिगमनाविरहान्नानाविधेश्वरेच्छा शक्तिः । ※तस्याश्चेति—नन्वेवं विषयतासम्बन्धेनेच्छावत्त्वमेव वाचकत्वं वाच्यत्वं वा वाच्यम् । तस्य चेच्छाविषये पदेऽर्थे सम्बन्धे बोधे च सर्वत्र सत्वात् वाचकत्ववाच्यत्वयोर्व्यवस्थानुपपत्तिरित्यत आह — ※बोधनिष्ठेति — 'ईश्वरेच्छाविषयो यो बोधस्तन्निष्ठजन्यतानिरूपितजनकताख्यविषयताश्रयत्वसम्बन्धेनेच्छावत्त्वं वाचकत्वम्' 'इच्छीयबोधनिष्ठविषयितानिरूपितविषयतावत्त्व †२ सम्बन्धेनेच्छा-

---

† १ अभेदसम्बन्धावच्छिन्नेदन्त्वावच्छिन्ना या प्रकारता तन्निरूपितार्थत्वावच्छिन्ना या विशेष्यता तदवच्छिन्नार्थत्वावच्छिन्ना निष्ठत्वसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपिता विषयतात्वावच्छिन्ना या विशेष्यता तदवच्छिन्ना निरूपकत्वसम्बन्धावच्छिन्ना विषयतात्वावच्छिन्ना या प्रकारता तन्निरूपिता बोधत्वावच्छिन्ना या विशेष्यता तदवच्छिन्ना बोधत्वावच्छिन्ना निरूपितत्वसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपिता जनकतात्वावच्छिन्ना या विशेष्यता तदवच्छिन्ना जनकतात्वावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना या प्रकारता तन्निरूपिता पदत्वावच्छिन्ना या विशेष्यता तन्निरूपिका इच्छा इति पदविशेष्यकेच्छायाः परिष्कृतं स्वरूपम् ।

† २ ननु विषयतासम्बन्धस्याश्रयताया अनियामकतया 'घटो घटपदशक्यो न पटः' इत्यत्र शाब्दबोधानापत्तिः येन सम्बन्धेन यत्पदार्थवत्त्वं यत्र भासते तत्र 'नञ्' समभिव्याहारस्थले तत्सम्बन्धावच्छिन्नतत्पदार्थप्रतियोगिकाभाववत्त्वं प्रतीयत इति नियमेनाधारत्वानियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वनियमेन विषयतायाश्च प्रतियोगितावच्छेदकत्वासम्भवेन 'घटपदजन्यबोधीयविषयतावत्त्वसम्बन्धेनेश्वरेच्छावान्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्त्वं वाच्यत्वम्'इति व्यवस्था सूपपादेति भावः । ❀नातिप्रसङ्ग इति—न सम्बन्धादौ वाचकत्वलक्षणाऽतिव्याप्तिरित्यर्थः । ननु वाक्येष्वेव वृद्धव्यवहारदर्शनं न पदेषु इति तत्र शक्त्यसिद्धिरत आह—❀यद्यपीति—आवापः—निक्षेपः।उद्वापः=निष्काशनम्। यथा 'घटमानय''पटमानय'इत्यत्र घटस्य निक्षेपनिष्काशने । वैयाकरणनये वाक्यस्याखण्डत्वेन निक्षेपनिष्काशनासम्भवादाह—❀शास्त्रकृदिति—प्रक्रियानिर्वाहायावापोद्वापौ कल्पितौ ताभ्यां पदादिविभागोऽपि कल्पित एवेति भावः । यद्यपि तार्किकमते वाक्यं सखण्डमेव तथापि तन्मतेऽपि वाक्येनैवार्थसमाप्तेरुक्तत्वेन पदादिष्वर्थः कल्पित एवेति भावः । नन्वीश्वरेच्छैव शक्तिरित्यनुपपन्नम् 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याद्याकारकयोः कृतिज्ञानयोरपि विनिगमनाविरहेण शक्तित्वसम्भवादित्याह—❀यद्वेति—तेषामपि शक्तित्वमिष्टमेवेति भावः । ❀प्रयोज्येति—अयम्भावः—प्रयोजक(आज्ञापक)वृद्धेन 'घटमानय' इत्युक्ते घटमानयन्तं प्रयोज्य(आज्ञाप्य)वृद्धं पश्यता बालेनानुमीयते'अयं प्रयोजकवृद्धः 'घटानयनं मत्कार्यम्' इति ज्ञानवान् घटानयनविषयकचेष्टावत्वात्' । ततः 'प्रयोज्यवृद्धज्ञानम् 'घटमानय'इति वाक्यजन्यं तद्वाक्यश्रवणाव्यहितोत्तरमेव तत्प्रवृत्तेः' इत्यनुमानेन ज्ञानजनकत्वं वाक्ये निश्चीयते । तत आवापोद्वापाभ्यामन्वयव्यतिरेकेण पदादिष्वपि पदार्थविषयकबोधजनकत्वं निर्धार्यते । तच्च पदे वाक्ये वा बोधजनकत्वं बोधकारणीभूतपदवाक्ययोरर्थेन सह सम्बन्धाभावे नोपपद्यते विषयेण सह सम्बद्धानामेव प्रमाणानां चक्षुरादीनां ज्ञानोत्पादकत्वदर्शनात् । नहि घटेन सह सम्बन्धं विनैव चक्षुरादि ज्ञानं जनयति । तथा च कारणत्वान्यथाऽनुपपत्त्या कल्प्यमानः शक्तिरूपः कारणसम्बन्धः ज्ञानरूपकार्य्योत्पत्तेः प्रागेवापेक्ष्यते । तदानीं त्वदभिम-

---

घटः' 'उक्तसम्बन्धावच्छिन्नेच्छानिष्ठप्रतियोगिताकाभाववान् पटः' इति बोधस्य प्रतियोगितायामुक्तसंसर्गावच्छिन्नत्वस्यासम्भवेन वक्तुमशक्यत्वादिति चेन्न तादृशेच्छीयविशेष्यताया एव शक्तित्वस्वीकारात् , तत्र च स्वरूपसम्बन्धस्यैव प्रतियोगितावच्छेदकत्वात् । नन्वीश्वरेच्छायाः शक्तित्वे सन्मात्रविषयिण्या एकस्या एव तस्याः सर्वत्र सत्त्वेन सर्वपदस्य सर्वपदार्थत्वापत्तिः, न चेष्टापत्तिः घटपदस्य सर्वपदार्थकताया अनुभवविरुद्धत्वादिति चेन्न पूर्वोक्तनिरूप्यनिरूपकभावापन्नविशेष्यताख्यविषयतासम्बन्धेनेश्वरेच्छायास्तादृशविशेष्यतारूपाया वा शक्तेर्नियन्त्रितत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्येश्वरेच्छादिरूपसम्बन्धस्यासिद्धत्वेनासतश्च ज्ञातुमशक्यत्वेन ज्ञाताया एव शक्तेर्बोधकत्वेन तत्त्वासम्भव इति भावः । गृहीत्वेति—ज्ञात्वेत्यर्थः । ॐकल्प्यमानस्येति—शब्दनिष्ठबोधजनकत्वोपपत्तये कल्प्यमानस्येत्यर्थः । ॐस्वयमनुपपद्यमानत्वेनेति—स्वयमित्यस्य गृहीतपदार्थैकदेश—ज्ञानेऽन्वयः, तत्रैवानुपपद्यमानत्वेनेत्यस्याप्यन्वयः । एवञ्चात्मकर्तृकानुपपद्यमानत्वप्रकारकज्ञानविषयीभूतं यज्जनकत्वं तद्विषयकज्ञानस्याशक्यत्वादित्यर्थः । अयं भावः—शाब्दबोधात्प्राक् तत्कारणीभूतं शक्तिज्ञानमपेक्षितम् । बोधजनकत्वघटितस्यैव शक्तित्वे तु बोधजननात्प्राग् 'बोधजनकत्वाभाववदिदं पदम्' इति निश्चयसत्वेन तद्वत्ता ज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन बोधजनकत्वघटितेच्छात्मकस्य बोधजनकत्वरूपस्य वा शक्तिपदार्थस्य ज्ञानमसम्भव्येवेति । किञ्च पदनिष्ठशाब्दधीजनकताया अर्थबोधजनकत्वरूपशक्तेरवच्छेदकत्वं दुरुपपादम् आत्माश्रयेण स्वस्यैव स्वावच्छेदकत्वासम्भवात् । ॐएतेनेति—उक्तदूषणेनेत्यर्थः । ॐसम्बन्ध इति—अस्य शक्तिरिति शेषः । ॐअपास्तमिति—अनेन 'बोधजनकत्वं शक्तिः' इति वैयाकरणमतत्वेनानूद्य नव्यनैयायिकोक्तं तत्खण्डनं निरस्तं वैयाकरणानां तन्मताभावात् । ॐविनिगमनाविरहेणेति—ईश्वरेच्छाया ईश्वरज्ञानस्य वा शक्तित्वमित्यत्रैकतरपक्षपातियुक्तेरभाव इत्यर्थः । ननु जानाति, इच्छति ततो यतत इति क्रमदर्शनेन ज्ञानस्य शक्तित्वे प्राथम्यमेव विनिगमकम् । किञ्चाधुनिकसङ्केतस्येच्छात्मकस्यैव दर्शनेन तस्या एव तत्त्वमत आह—ॐकिञ्चैवमिति । ॐइदमस्मादिति—'दण्डाद् घटो जायताम्' इत्यादीच्छाविषयत्वमेव दण्डादौ घटादिकारणत्वं स्यात् । किञ्च "स्वर्गकामो यजेत" इति वाक्याच्छाब्दबोधानुपपत्तिः स्वर्गादिजनकत्वस्यैव यागादिनिष्ठकारणत्वस्य वाच्यतया स्वर्गप्राप्तेः पूर्वं स्वर्गजनकत्वेन ज्ञानाभावात् । ॐबहूपप्लव इति—अन्यत्रापीच्छातिरिक्तलोकप्रसिद्धस्य कारणत्वरूपधर्मस्य विलयापत्तिरित्यर्थः । तस्मादीश्वरेच्छा कारणत्वस्य नियामिकैव न तु तदवच्छेदिकेति भावः । ननु दण्डादौ शक्तिः स्वरूपसती कार्य्योत्पादिका, शब्दनिष्ठा तु ज्ञातैवेति वैलक्षण्यदर्शनात्तत्रातिरिक्त शक्तिस्वीकारे बाधकाभाव इत्यत आह—ॐकिञ्च प्रमाणानामिति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाकरणानां चक्षुरादीन्द्रियाणामित्यर्थः । ❀जनकत्वेति—जनकत्वम्, तद्घटितेच्छादिरूपो वा यः सम्बन्धत्वेनाभिमतस्तदतिरिक्तसंयोगादि-सम्बन्धेनैवेत्यर्थः । ❀प्रमेयेति—घटादिविषयेत्यर्थः । इह = शाब्द-बोधस्थले । तयोः = जनकत्वतद्घटितेच्छारूपयोः । अयम्भावः—यथा प्रत्यक्षस्थले संयोगसंयुक्तसमवायादिसन्निकर्षेण घटादिना सम्बद्धानामेव चक्षुरादीनां प्रत्यक्षप्रमाजनकत्वं न तु जनकत्वसम्बन्धेन जनकत्वघटिते-च्छारूपसम्बन्धेन वा, तथा शब्दस्यापि प्रमाणत्वेन तदतिरिक्तसम्बन्धे-नार्थेन सह सम्बद्धस्यैव शाब्दज्ञानजनकत्वमुचितमिति । अन्यथा = तथानङ्गीकारे । 'पर्वतो वह्निमान् धूमात्' इत्याद्यनुमितिस्थलेऽपि हेतुसा-ध्ययोः 'धूमज्ञानजन्यज्ञानविषयो वह्निर्भवतु' इतीच्छाविषयत्वेन वह्निविष-यकबोधजनकत्वरूपेण वा सम्बन्धेन निर्वाहे हेतुसाध्ययोर्नैयायिकाभिमत-व्याप्तिरूपसम्बन्धोच्छेदापत्तिरित्यर्थः । ननु नहि सम्बन्धान्तरकल्पन-मात्रेण साहचर्यनियमरूपव्याप्तेरुच्छेदः रजतत्वेन ज्ञाताया अपि शुक्तेरनुच्छेदादिति चेन्न व्याप्त्युच्छेदपदस्य व्याप्तिगतहेतुत्वोच्छेदार्थकत्व-परत्वेनादोषात् । तस्मात्पदपदार्थयोर्बोधजनकत्वं तद्घटितेच्छादिरूपश्च सम्बन्धो नोचित इति भावः । ननु विनापीच्छां घनगर्जितेन मेघानुमान-दर्शनादुक्तेच्छाविषयत्वस्यानुमानस्थले सम्बन्धत्वासम्भव इत्यत आह— ❀किञ्चेच्छाया इति — एतावता प्रबन्धेन च पदपदार्थयोर्जनकत्वतद्घटि-तेच्छातिरिक्तरूप एव सम्बन्ध इति निरूप्य तयोः सम्बन्धपदार्थत्वमेव खण्डयति—'किञ्चेच्छायाः' इत्यादिग्रन्थेन । ❀इच्छाया जनकत्वस्येति-यो हि विशिष्टबुद्धिनियामकः सन्नुभयस्मिन्नपि सम्बन्धिनि तिष्ठति यथा घटादिभूतलाद्योः संयोगादिः नात्र तथा, जनकत्वस्येच्छाविषयत्वस्य वा पदमात्रवृत्तित्वात् न सम्बन्धत्वमित्यर्थः । उभयवृत्तित्वाभावमेवदर्शयति—इच्छाविषयेत्यादिना । अयम्भावः—योह्याधाराधेयभावनियामकत्वेन दृष्ट स एव सम्बन्धः । प्रकृते चेच्छीयविषयताश्रयबोधनिष्ठजन्यतानिरूपित-जनकत्वाख्यविषयतासम्बन्धेन 'अयमर्थः अयं शब्दो वेच्छावान्' इति व्यव-हारादर्शनात् तस्याः सम्बन्धत्वासम्भवः । नन्वाश्रयतानियामकत्वाभावेऽपि सम्बन्धत्वे बाधकाभाव इति चेत्तत्राह—❀सम्बन्धो हीति — सम्बन्धि-भ्याम् = प्रतियोग्यनुयोगिभ्याम । उभयाश्रितः = प्रतियोग्यनुयोग्युभ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यनिष्ठः । *विशिष्टबुद्धीति — विशेष्यविशेषणसम्बन्धरूपविषयत्रितयावगाहिनी बुद्धिर्विशिष्टबुद्धिः । *अभियुक्तेति—आप्तेत्यर्थः । एतेन भ्रान्तस्य पूर्वोक्तविषयतासम्बन्धेन'इच्छावान्' इति व्यवहारदर्शनेऽपि न क्षतिः । तत्र "द्विष्ठः सम्बन्धः"इति हरेरुक्तिः अन्येत्वन्येषाम् । तथा च 'सम्बन्धिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टबुद्धिनियामकत्वं सम्बन्धत्वं' सिद्धम् । तत्राभेदे सम्बन्धत्ववारणाय—सम्बन्धिभिन्नत्वेति । केवलजनकत्वादेर्वारणाय—द्विष्ठेति । वृत्त्यनियामकविषयत्वादिनिरासाय—विशिष्टबुद्धीति । ननु तयोर्वृत्त्यनियामकत्व एव किम्मानमत आह—*न हीति । तत्र विषये—इच्छाविषयो यो बोधस्तद्विषये । विषय इति सप्तम्यन्तम् इति केचित् , प्रथमान्तत्वन्तूचितम् *इत्यादीति—आदिना ज्ञानवानित्यस्य सङ्ग्रहः । ननु शाब्दवदर्थस्यापि विषयविधया शाब्दबोधकारणत्वेन अस्त्युभयत्र बोधजनकत्वमत आह—*सत्त्वेऽपीति—घटादिजनकत्वस्य घटचक्रोभयनिष्ठत्वेऽपि न हि तयोः परस्परं जनकत्वसम्बन्धः सम्भवति । तयोः = पदपदार्थयोः । सम्बन्धस्य—जनकतारूपस्य । एतदेवाह—*ज्ञान इति—यद्यपि ज्ञानरूपकार्य्यं प्रति विषय-ज्ञानकर्त्रोरुभयोरपि कारणत्वं तथापि न हि जनकत्वसम्बन्धेन विषयविशिष्टः कर्त्ता, कर्तृविशिष्टो विषयो वेति विशिष्टबुद्धिः । एतेन बोधजनकत्वस्याश्रयतया पदे, निरूपकतयार्थेऽपि सत्त्वात् अस्तु सम्बन्धत्वमित्यपास्तं निरूपकताया वृत्त्यनियामकत्वात् ।

मू०—तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया । तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम् ।

वैयाकरणमतेन शक्तिनिरूपणम्

तच्च सङ्केतः । तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः तस्य सम्बन्धत्वाभावात् । भेदाभेदरूपस्य तस्य तत्त्वासम्भवात् । तद्घटकभेदस्याभेदस्य वा तत्त्वादर्शनात् । अभेदस्यापि तत्त्वं खण्डयिष्यते ।

(रत्न०)—*तस्मादिति—उक्तदूषणग्रस्तत्वादित्यर्थः । सम्बन्धान्तरम् —उक्तेच्छादिभिन्नम् । *वाच्यवाचकेति — वाच्यवाचकभावपदव्यवहार्य्येत्यर्थः । तत्र वाच्यवाचकत्वे न हि बोधजनकत्वबोधविषयत्वरूपे पूर्वोक्तदोषापत्तेः, किन्त्वखण्डोपाधिरूपपदार्थान्तरम् । स च वाच्यवाचकभावः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दार्थोभयनिष्ठ एव । ※तद्ग्राहकश्चेति — शक्तिज्ञापकश्चेत्यर्थः । अस्य तादात्म्यमित्यत्रान्वयः । एतेन तादात्म्यस्य शक्तिग्राहकत्वमेव न तु शक्तित्वमिति सूचितम् । ※अध्यासेति — 'अन्यस्मिन्नन्यधर्मावभासोऽध्यासः' यथा शुक्तौ रजतत्वावभासः । तन्मूलकं यथा इदंपदार्थरजतपदार्थयोस्तादात्म्यं तथा पदपदार्थयोरपि 'अयं घटः' इति तादात्म्यमध्यासमूलकमेव न तु वास्तविकम् । ननु सङ्केतमूलकमेव तादात्म्यमस्तु सङ्केतज्ञानानन्तरमेव तादात्म्यव्यवहारादिति चेन्न 'देवदत्तोऽयम्' इति तादात्म्यस्यैव सङ्केतत्वेन स्वस्य स्वमूलकत्वासम्भवात् तदाह — ※तच्चेति — तादात्म्यश्चेत्यर्थः । ※सङ्केत इति—'ननु अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याद्याकारकेच्छाद्यात्मकत्वेनैव सङ्केतस्य प्रसिद्धत्वात्तादात्म्यं सङ्केत इत्यसङ्गतमिति चेन्न शाब्दबोधोपपत्तये कल्प्यमानस्य सङ्केतस्य विनिगमनाविरहेण तादात्म्यरूपत्वस्यापि सम्भवात्, 'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः' इति भाष्यकृता स्वीकृतत्वाच्च । तथाच सङ्केतो द्विविधः भेदरूपोऽभेदरूपश्च । आद्यो नैयायिकाद्यभिमतः द्वितीयो वैयाकरणमात्राभिमतः । ननु तादात्म्यस्य शक्तिग्राहकत्वात् शक्तित्वानुपपत्तिरत आह—※तस्यापीति-तादात्म्यस्यापीत्यर्थः । शक्तिग्राहकत्वात् शक्तित्वारोपेण तद्व्यवहार इति भावः । ननु तादात्म्यमेव शक्तिरस्तु किम्भेदेनात आह ※तस्येति—तादात्म्यस्येत्यर्थः । ※सम्बन्धत्वाभावादिति — सम्बन्धविशेषस्यैव शक्तित्वेन तादात्म्ये सम्बन्धत्वाभावान्न शक्तित्वमिति भावः । सम्बन्धत्वाभावमुपपादयति — ※भेदाभेदेति — वास्तविकभेदविशिष्टारोपिताभेद एव तादात्म्यमिति भावः । तस्य = तादात्म्यस्य । सम्बन्धत्वाभावे हेतुमाह — ※तद्घटकस्येति । तादात्म्यघटकस्येत्यर्थः । तादात्म्यघटकभेदस्याभेदस्य वा सम्बन्धत्वं क्वापि न दृष्टमिति भावः । ननु भेदस्य सम्बन्धत्वाभावेऽपि 'नीलो घटः' इत्यादावभेदस्य सम्बन्धत्वदर्शनात् तदभावो वक्तुमशक्य इत्यत आह — ※अभेदस्यापीति – अपिना इच्छादेः संयोगस्य च संग्रहः । तत्त्वमिति—सम्बन्धत्वमित्यर्थः । ※खण्डयिष्यत इति — सम्बन्धपदार्थघटकसम्बन्धिभिन्नत्वाभावादिति भावः । तच्च खण्डनं सुबर्थनिर्णये १ † द्रष्टव्यम् ।

† १ तत्र हि "यत्तु भेदसमानाधिकरणाभेदरूपं तादात्म्यं सम्बन्धः । अभेदश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—तदुक्तं पातञ्जलभाष्ये—'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः, योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः' इति । इतरेतराध्यासो रूप्यतेऽनेनेति करणे घञ् । स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं दर्शितम् । किञ्च पाणिन्यादिस्मार्त्तसङ्केतस्यैव वाचकतानियामकत्वं नत्वाधुनिकस्येत्याद्यपि दर्शितम् ।

स्वोक्तौ पातञ्जलभाष्यसम्मतिः

एवञ्चाधुनिकसङ्केतस्थले द्वादशेऽह्नि क्रियमाणनामस्थले च लक्षणा । तत्र घटगोविन्दादिगुणाद्यारोपेण तन्मूलकतत्प्रवृत्तिनिमित्तारोपेण च बोधः ।

सम्बन्धश्च स्वशक्तसङ्केतविषयत्वम् । एतदर्थमेव सङ्केतोप-

---

व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदस्य भेदसमानाधिकरणोऽभाव एव नातिरिक्तः । एतेन भेदत्वावच्छिन्नाभावश्चेद् अप्रसिद्धिः । भेदप्रतियोगिकाभावश्चेद् द्वित्वादिना वह्न्यादौ नीलभेदस्य सत्त्वात् 'नीलो वह्निः' इत्यापद्येतेत्यपास्तम् तन्न तद्वृत्त्यसाधारणधर्मरूपार्थयौगिकेन तादात्म्यशब्देन शब्दमर्यादया तदर्थालाभात् । रूढिकल्पनायां गौरवमक्लृप्तकल्पना च । किञ्च भेदाभेदयोर्विरुद्धत्वान्नैकत्रस्थितिः । न चैकोऽध्यस्तः । तत्त्वं किं भेदस्य, तदभावस्य वा ? आद्ये अयमध्यासः ईश्वरस्य उत रजताध्यासवदाधुनिकस्य ? आद्ये सिद्धं तस्य व्यावहारिकत्वमिति न तयोर्वैषम्यम्, अन्त्ये व्यवहारनियामकत्वानापत्तिः । किञ्च भेदाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वेन रूपादौ तदध्यासे त्वत्सिद्धान्तभङ्गः । अतिरिक्तत्वे गौरवम् । किञ्चातिरिक्तत्वेऽपि तत्समनियत इति नाध्यासं विना निर्वाहः । अतिरिक्तोऽसमनियत इति चेदक्लृप्तकल्पनायामतिगौरवम् । क्वचित्तादात्म्यस्य सम्बन्धत्वं परमतवासनयोक्तम् । संयोगस्यापि न सम्बन्धत्वम् क्रियाकारकभावपूर्वकाधाराधेयभावमूलकस्यैव सम्बन्धत्वात् । संयोगो हि नाधाराधेयभावमूलकः विपरीतम् आधाराधेयभावस्यैव संयोगमूलकत्वम् । किञ्च संयोगो न सम्बन्धः सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वात् । संयोगस्य स्वतः पदार्थत्वात् सांसर्गिकविषयतया तस्याभानाच्च । सम्बन्धश्च षष्ठ्यादिभिरेवोच्यते। सम्बन्धः सर्वथा पदागम्यः। संयोगस्तु नैवम् । संयोगस्तु न षष्ठ्या उच्यते 'इमौसंयुक्तौ' इत्येव तत्र व्यवहारात् । अत एव मतुप्सूत्रे 'वृक्षवान् पर्वतः' इत्याद्यर्थं सप्तम्युपादानम् । 'भूतले घटः' इत्यादावपि अवच्छेद्यावच्छेदकभाव एव सम्बन्ध इत्यन्यत्र विस्तरः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगः । अत एव "तस्य भावः" (पा० सू० ५।१।११९) इति सूत्रे भाष्ये† 'डित्थादिषु प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावाद् भावप्रत्यान्तवृत्तिर्न प्राप्नोति डित्थत्वम्'इत्याशङ्क्य "प्राथमकल्पिकडित्थेन कृतां क्रियां गुणान् वा यः कश्चित्करोति स उच्यते 'डित्थत्वं त एतदेवं डित्थाः कुर्वन्ति' ।"

(रत्न०)—॰तदुक्तमिति — तादात्म्यस्याध्यासमूलकत्वमुक्तमित्यर्थः । ॰अध्यासरूप इति — नन्वनेनाध्यासरूपत्वमेव सङ्केतस्य लभ्यते न त्वध्यासमूलकत्वम्, तादात्म्यरूपत्वं वा तस्येति चेत्, न करणघञन्त'रूप'शब्देन अध्यासो रूपं बोधकं यस्येति बहुव्रीहिणाऽध्यासबोध्यत्वस्य लाभात् । वस्तुतस्तु कर्मघञन्त'रूप'शब्दस्याध्यासशब्देन तृतीयातत्पुरुषेऽभिप्रेतार्थलाभसम्भवान्नेदं युक्तम् । किञ्च करणे घञोऽगतिकगतिकत्वम् । तावताऽपि बहुव्रीहिं विनाऽभिमतार्थासिद्ध्याऽन्यपदार्थकत्वकल्पनायां गौरवमेव । ॰योऽयमिति—इदं वैयाकरणाभिमतसंकेतस्वरूपम् । "ओमित्येकाक्षरं ब्रह्म" (ब्रह्मविद्योप० ३) इत्यादिश्रुतिषु, "वृद्धिरादैच्" (पा० सू० १।१।१)इत्यादिव्याकरणे, "कम्बुग्रीवादिमान् घटः" इत्यादौ लोके, "अमरा निर्जराः"–(अमरको० १।१।७)इत्यादौ कोशे च सामानाधिकरण्येन निर्देशादप्यध्यासो लभ्यत इति भावः । न चैकाक्षरमित्यादेः स्ववाच्ये लक्षणा प्रमाणाभावात् । ॰स्मृत्यात्मक इति — स्मृतिविषय आत्मा स्वरूपं यस्येत्यर्थात् स्मृतिविषय इत्यर्थः । यद्वा स्मृतिः आत्मा यस्येत्यर्थः

---

† साम्प्रतं भाष्ये "डित्थादिषु तर्हि वर्त्यभावात् वृत्तिर्न प्राप्नोति । डित्थत्वं डित्थता, डाम्भिट्टता डाम्भिट्टत्वमिति । तत्रापि कश्चित् प्राथमकल्पिकः डित्थो डाम्भिट्टश्चेति । तेन कृतां क्रियां गुणं वा यः कश्चित् करोति स उच्यते डित्थत्वं त एतत् डाम्भिट्टत्वं त एतत् एवं डित्थाः कुर्वन्ति एवं डाम्भिट्टाः कुर्वन्ति । यः तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च तस्य वर्त्यभावात् वृत्तिर्न प्राप्नोति । नैष दोषः, यथैव तस्य काथञ्चित्कः प्रयोग एवं वृत्तिरपि भविष्यति । यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावः तदभिधाने । किमेतैस्त्रिभिर्भावग्रहणैः क्रियते । एकेन शब्दः द्वाभ्यामर्थः । यद्वा सर्वे शब्दाः स्वेनाऽर्थेन भवन्ति" इत्युपलभ्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषय (संकेत) विषयि (स्मृति) णोरभेदात् । 'स्मृत्यात्मकः' इति विशेषणस्य ज्ञातस्यैव सङ्केतस्य शक्तिबोधकत्वं न त्वज्ञातस्येति बोधरूपफलसत्त्वेऽप्य-न्यार्थपरतया व्याख्यानेन तस्य फलान्तरमप्याह—❀किञ्च पाणिन्यादीति। तथा च स्मृतिःपाणिन्यादिशास्त्रं तत्र आत्मा यस्येति व्युत्पत्त्या स्मृतिबोधित इत्यर्थः । तेन ऋषिपरिभाषितानामेव शक्तिनियामकत्वं न त्वाधुनिक-सङ्केतस्य अनियतत्वादिति सूचितम् । "जातिशब्दाः, गुणशब्दाः, क्रिया-शब्दा इति त्रयी शब्दानां प्रवृत्तिः" ( महाभा० मा० सू० २ ) इति पक्षे संज्ञामात्रस्य व्युत्पन्नत्वेन योगलभ्यार्थस्यारोपेणैव तत्र शक्तिर्न तु पाणि-न्यादिस्मृतिबोधिता तत्रेश्वरसङ्केताभावादित्याह—❀एवञ्चेति । पाणि-न्यादिस्मृतिबोधितसङ्केतस्यैव शक्तिनियामकत्वे चेत्यर्थः । ❀आधुनिक-सङ्केतेति—शास्त्राबोधित आधुनिकसङ्केतः संज्ञा शास्त्रबोधितः स 'नाम'पदेन व्यवह्रियत इति भेदः । तत्रसंज्ञास्थले, नामस्थले चोभयत्रेत्यर्थः । ❀घटगोविन्दादीति—यदा 'घट' इति कस्यचित्संज्ञा, 'गोविन्द'इति द्वाद-शेऽह्नि क्रियमाणं नाम, तदा तत्र मुख्य'घट''गोविन्द'गतगुणक्रियादीना-रोप्य तन्मूलकतयैव घटत्वगोविन्दत्वरूपप्रवृत्तिनिमित्तयोरारोपेण तत्प्रका-रतयैवाधुनिकघटगोविन्दयोर्बोधः । ननु शक्यसम्बद्धे एव पदार्थे लक्षणा प्रसिद्धा, प्रकृते मुख्यामुख्ययोः सम्बन्धाभावाल्लक्षणाऽनुपपत्तिरिति चेत्त-त्राह—❀सम्बन्धश्चेति । ❀स्वशक्तेति — स्वस्मिन् मुख्यार्थे शक्तं यद्गो-विन्दादिपदं तस्य यः सङ्केतस्तद्विषयत्वमस्त्येवामुख्यार्थस्येत्युक्तः सम्बन्धः सुलभः । ननु गङ्गादिपदैर्लक्षणया बोधे संकेतानुपयोगोऽत आह— ❀एतदर्थमेवेति—उक्तसम्बन्धसिद्धय एवेत्यर्थः । उक्तस्थले लक्षणायां मान-माह—❀अत एवेति — उक्तरीत्या तत्र लक्षणाऽङ्गीकारादेवेत्यर्थः । ❀प्रकृत्य-र्थेति—प्रकृतिजन्यप्रतीतिविशेष्यतया प्रतीयमानोऽर्थः प्रकृत्यर्थः । यदृ-च्छाशब्दस्थले च पुरुषेच्छाया एव निमित्ततया प्रकारीभूतस्यार्थगतस्य कस्यचिद्धर्मस्याभावेन प्रकृतिजन्यबोधीयप्रकारताऽऽश्रयार्थबोधकभावप्र-त्ययो न स्यादित्याह—❀भावप्रत्ययान्तवृत्तिरिति — भावप्रत्ययान्तवृत्तिर्डि-त्थत्वमिति न प्राप्नोतीत्यन्वयः। ❀प्राथमकल्पिकेति — युगानां सैका सप्ततिः कल्पशब्देनोच्यते । तत्र प्रथमकल्पे यो डित्थो मुख्यस्तद्गतगुणक्रियास-जातीयगुणक्रियाऽऽश्रयो यः स उच्यते 'डित्थत्वं त एतत्' । एवञ्च प्राथम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पिकडित्थगतगुणक्रियासदृशगुण † क्रिया एव भावप्रत्ययार्थः तदभिप्रायेणैव डित्थत्वादिशब्दप्रयोगदर्शनादिति फलति। तच्च डित्थशब्दस्य तादृशगुणविशिष्टे लक्षणामन्तरा न सम्भवति, वृत्युपस्थापितप्रकारीभूतधर्मस्यैव भावप्रत्ययार्थत्वादिति तत्र लक्षणा स्वीकार्य्या ।

मू०—"प्राथमकल्पिके तर्हि कथम् ? यथा तस्य काथञ्चित्कः प्रयोगस्तथा वृत्तिरपि"इत्युक्तम् । तत्र "शब्दरूपस्यार्थे आरोपात् तत्प्रकारमाश्रित्य यथा शब्दप्रयोगस्तथा वृत्तिरपि इत्यर्थः" इति कैयटः। तत्पक्षे कथञ्चित्पदस्य न तथा स्वारस्यम्, अन्यत्राप्यरोपस्यानुपयोगश्चेत्यन्ये व्याचक्षते—'व्यक्तावेव शक्तिस्तस्या एव च विषयताद्वयेन भानमिति यथा शक्तिग्रहप्रयोगयोरुपपत्तिस्तथा 'त्व' प्रत्ययस्यापि' इति। एवंरीतेरन्यत्र क्वाप्यदर्शनेनात्रपक्षे 'कथञ्चित्'इत्युक्तिरत्यन्तं समञ्जसेति बोध्यम् । 'अनादित्वात्संसारस्य ततोऽपि पूर्वतनडित्थादिगुणाद्याश्रित्य प्रयोगादि'इति कश्चित् । तत्र तत्तत्संकेतज्ञानादेव बोधः शक्त्याद्यभावेपीति न युक्तं वृत्यन्तरत्वापत्तेः वृत्तिजन्योपस्थितिं विना शाब्दबोधविषयत्वासम्भवाच्च । "द्वादशेऽह्नि पिता नाम कुर्यात्" इति श्रुत्या स्मृत्या वा नामत्वेन नामबोधेऽपि तत्तद्रूपेणेश्वरेण सङ्केताकरणेन तत्रापि शक्तेर्दुरुपपादत्वात् । अत्र नामपदेनाह्वानकरणीभूतो बोधकः शब्द उच्यते ।

† अत्रेदमाकूतम्—यद्यपि "यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति वार्तिककारमते गुणो नाम भेदको भेद्यश्च विशेष्यमित्येव लभ्यते । तथा च विशेष्यमात्रवाचकाद् भेदकमात्रे गुणे भावप्रत्ययः । घटादिशब्दानां घटत्वाद्यवच्छिन्नद्रव्यवाचित्वे जातौ त्वादिप्रत्ययः । जातिमात्रवाचित्वे तु शब्दार्थयोस्तादात्म्यात्तत्समनियतानुपूर्वीरूपेऽर्थे भावप्रत्ययः, यद्वाजातित्वे । यद्धि स्वरूपेणोपरञ्जकं तद्विशेषणमित्युच्यते। शब्दश्च स्वरूपेणार्थं प्रत्याययतीत्युपरञ्जकत्वादानुपूर्व्येव प्रवृत्तिनिमित्तमित्यध्यस्तेन तेनैव रूपेणार्थप्रतीत्या डित्थादिशब्देभ्योऽपि तद्वदेव स्वरूपे त्वादयः। स्वरूपाध्यासेन संज्ञावाचकानां संज्ञिप्रत्याययकत्वात्तदेव प्रवृत्तिनिमित्तम्। तथापि 'तदेतत्ते डित्थत्वम्' इत्यत्र क्रियागुणाध्यासादत्र वृत्तौ डित्थत्वसहचरितयोः क्रियागुणयोस्त्वादय इत्युक्तिः क्रियागुणयोरभेदाध्यासपरेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)–ननु प्राथमकल्पिकडित्थशब्दाद् भावप्रत्ययानुपपत्तिस्ततः पूर्वं डित्थान्तराभावादित्याह–*प्राथमकल्पिक इति । समाधानमाह—*यथेति । *काथञ्चित्क इति–कथञ्चिदेव काथञ्चित्कं विनयादित्वात्स्वार्थे ठक् । *तत्रेति—अयम्भावः–शब्दानां यत्किञ्चिद्धर्मावच्छिन्न एव शक्तिग्रहेण यत्किञ्चित्प्रकारिकैवोपस्थितिरित्युपेयते । अन्यथा शब्दान्निर्विकल्पकज्ञानाभावेन निर्धर्मिताऽवच्छेदकशक्तिज्ञानाभावेन च बोध एव न स्यात् । एवञ्च डित्थादिशब्देन यथा शब्दगतानुपूर्व्या अर्थे समारोपेणानुपूर्वीप्रकारको बोधस्तथा तादृशानुपूर्वीरूपेऽर्थे एव त्वादयोऽपिस्युरिति भाष्याशयं कैयट आह । तत् = शब्दस्वरूपम् । तत्पक्षे = कैयटव्याख्याने । *न स्वारस्यमिति — घटादिपदादपि शब्दप्रकारकबोधदर्शनेन तस्य सार्वत्रिकत्वात् भाष्यस्थस्य 'काथञ्चित्क' पदस्य स्वारस्याभाव इति भावः । शब्दार्थयोस्तादात्म्येनानुपूर्व्याः शब्दे प्रकारत्वे अर्थनिरूपितप्रकारत्वस्यापि सुलभतया तादृशप्रकारीभूतार्थे भावप्रत्ययस्य सिद्धतयाऽऽरोपानुपयोगः स्यादित्याह—*अन्यत्रारोपस्येति । यद्वाऽऽधुनिकडित्थेऽपि प्रकारीभूते संज्ञास्वरूपे त्वादिप्रत्ययसम्भवात् प्राथमिकडित्थगतक्रियाद्यारोपो निष्फलः स्यादित्याह—*तत्रारोपस्येति । *इत्यन्य इति – 'इति' शब्दो हेतौ । इति पूर्वोक्तदोषाद्धेतोरन्येऽन्यप्रकारेण भाष्यं व्याचक्षत इत्यर्थः । *व्यक्तावेव शक्तिरिति – ननु निर्धर्मिताऽवच्छेदककशक्तिग्रहासम्भवेन शक्तिग्रहस्य अर्थबोधनाय डित्थादिशब्दप्रयोगस्य चासम्भव इत्याह — *विषयताद्वयेनेति— व्यक्तिरेवात्र डित्थशब्दार्थः । तस्या एव प्रकारतया विशेष्यतया च भानम् । तथाच प्रकारताख्यविषयताविशिष्टा व्यक्तिः 'त्व' प्रत्ययार्थः । विशेष्यताख्यविषयताविशिष्टा च व्यक्तिः प्रकृत्यर्थ इति 'डित्थत्वम्' इत्यत्र त्वादिप्रत्ययोपपत्तिरित्यर्थः । अत्र पक्षे ईदृशरीतेरन्यत्र काप्यदर्शनात् 'कथञ्चित्' पदस्य स्वारस्यं सङ्गच्छत इति भावः । केचित्तु संसारस्यानादितया प्रथमकल्पाभावेन पूर्वपूर्वकल्पस्थडित्थगतगुणादीनामुत्तरोत्तरडित्थेषु आरोपेण सर्वत्रैव डित्थशब्दादारोपितगुणादिषु त्वादिप्रत्ययः सम्भवतीत्याहुः । *प्रयोगादीति–आदिना शक्तिग्रह—त्वादिप्रत्यययोः संग्रहः । *कश्चिदिति – अत्र पक्षे 'प्राथमकल्पिके कथम् ?' इति प्रश्नस्य 'यथा तस्य काथञ्चित्कः प्रयोगः' इत्युत्तरस्य च भाष्योक्तस्यासङ्गति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रित्यरुचेरुक्तम—*कश्चिदिति । ज्ञातस्यैव सङ्केतस्य शक्तिग्राहकत्वमित्युक्तम्, सिंहावलोकनन्यायेन तत्र विशेषं वक्तुमुपक्रमते—*तत्तदिति—पदान्निर्विकल्पकशवितग्रह—शाब्दबोधयोरभावात्तत्र डित्थादिस्थले शक्तिर्नास्ति किन्तु सङ्केतज्ञानादेव बोध इति मतं न युक्तमित्याह—*न युक्तमिति । *वृत्त्यन्तरत्वेति—शाब्दबोधजनकोपस्थितिजनकस्यैव वृत्तित्वेन संकेतस्यापि वृत्तित्वापत्तेरित्यर्थः । शाब्दं प्रत्युपस्थितेः कारणत्वाभावे तु शाब्दबोधजनकत्वेनैव वृत्तित्वापत्तिर्बोध्या । ननु संकेतस्य वृत्तित्वं नाभ्युपगम्यते वृत्तित्वन्तु वृत्तिपदव्यवहार्य्यत्वमेवेत्याशङ्कायामाह—*वृत्तिजन्येति—घटादिपदादाश्रयतयोपस्थिताकाशादेः शाब्दबोधवारणाय वृत्त्या पदजन्यपदार्थोपस्थितेः कारणत्वस्यावश्यकतया संकेतस्य वृत्तित्वाभावे शाब्दबोधानापत्तिरिति भावः । नन्वेवमभेदानुकरणपक्षे वृत्तेरभावेनानुकार्य्यस्यानुकरणेन बोधानापत्तिरिति चेन्, न तस्य स्मरणात्मकत्वेन शाब्दबोधत्वाभावात् स्वाश्रयतावच्छेदकानुपूर्वीमत्त्व-स्वनिरूपकार्थविषयकत्वान्यतरसम्बन्धेन वृत्तिविशिष्टोपस्थितेरेव शाब्दं प्रति कारणत्वेनानुकार्य्यस्य बोधे बाधकाभावाच्च । नन्वाधुनिकसंज्ञास्थले शक्त्यभावेन लक्षणया बोधसम्भवेऽपि द्वादशेऽह्नि क्रियमाणनामस्थले "द्वादशेऽह्नि" इति वचनात् शक्तिरस्त्येवेति तत्र प्रागुक्ता लक्षणा न सङ्गतेत्याशङ्कायामाह—*द्वादश इति—अयम्भावः—द्वादशेऽह्नि क्रियमाणनामस्थले "द्वादशेऽह्नि" इति वचनात् संकेतस्य सत्वेन तस्य च शक्तिग्राहकत्वेन शक्त्यैव बोधसम्भवाल्लक्षणोक्तिर्नसङ्गच्छत इति । *श्रुत्येति—श्रुतित्वे प्रमाणाभावादाह-स्मृत्येति । *तत्तद्रूपेणेति—नामत्वव्याप्यानुपूर्वीविशेषेणेत्यर्थः । येन केनरूपेण बोधितेश्वरसंकेतस्यापि शक्तिग्राहकत्वे "नापभाषितवै" (महाभा० पस्पशाह्नि०) इत्येवमपभाषत्वेनापभ्रंशस्याप्युच्चारणादपभ्रंशेऽतिव्याप्तिः । न चापभ्रंशे शक्तिरिष्टैव नैयायिकादिभिस्तथाऽनभ्युपगमात् । तस्मात्तत्तद्रूपेणेश्वरोच्चरितत्त्वमेव शक्तिनियामकं तच्च प्रकृते नास्तीति भावः । *तत्रापीति—द्वादशेऽह्नि क्रियमाणनामस्थलेऽपीत्यर्थः । ईश्वरस्य सर्वज्ञत्वात्तत्रापि चैत्रत्वादिविशेषरूपेणोच्चारणं कल्प्यत इति केचित् । ननु "चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च (महाभा० पस्पशाह्नि०) इति भाष्ये नामपदेन यथा सुबन्तस्य ग्रहणं तथाऽत्र सुबन्तग्रहणे इष्टस्य साध्वसाधुसाधारण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दस्येष्टस्य ग्रहणं न स्यादत आह—*अत्रनामपदेनेति—उक्तस्मृतिवाक्य एवेत्यर्थः। *आह्वानेति—आह्वानकरणीभूत इत्यर्थे उक्तसंकेतज्ञानाल्लक्षणया बोधकत्वात्। सङ्केतस्य च लक्षणाप्रयोजकसम्बन्धज्ञानसंपादकतयोपयोगः प्रागुक्त एव। तस्माद्यत्र पाणिन्यादिस्मार्तसङ्केतस्तस्य वाचकत्वमन्येषां तूक्तरीत्या लक्षणयैव बोधकत्वमिति सिद्धम्।

मू०—यत्तु पदपदार्थयोर्बोध्यबोधकभावनियामिका शक्तिरेव सम्बन्ध इति, तन्न शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात्। दीपगतप्रकाशकत्वशक्तावपि सम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात्। तदुक्तं हरिणा:—

एतद्विषये कौस्तुभायुक्तिखंडनम्

"उपकारः स यत्राऽस्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः" ॥ इति
(वाक्यप० ३।३।६)

उपकार इति—उपकार्योपकारयोरुपकारस्वभावः सम्बन्धो यत्राऽस्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारको गुणानामपि द्रव्याश्रितत्वनियामकः सम्बन्ध (?) इति तदर्थ इति हेलाराजः। सम्बन्धः पदे वाक्ये च। तदाह न्यायभाष्यकारः—"समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणम्" इति। (वात्स्या० भा० २।१।५५)। अनेन हि पदेष्विव वाक्येष्वपि ऐश्वरः समय इति स्पष्टमेवोक्तम्। वाक्यविषये समयग्राहकमाकाङ्क्षाद्यपि। समयज्ञानार्थमित्यस्य साधूनामित्यादिः।

रत्न०—कौस्तुभाद्युक्तं घटादिविषयकबोधजनकघटादिपदानां सामर्थ्यमेव शक्तिरिति मतं खण्डयति यत्त्वित्यादिना। शक्तिः=सामर्थ्यविशेषः। बोध्यबोधकभावनियामिका=बोधजनकत्वावच्छेदिका। *शक्तिरेवेति—एवेन वाच्यवाचकभावापरपर्यायशक्तिसम्बन्धनिरासः, शक्तिसत्वे बोधज-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नकत्वं तदभावे बोधजनकत्वाभाव इति शक्तेर्बोधजनकतानियामकत्वम् । ॐशक्तेरपीति—शक्तेर्भिन्न एव सम्बन्धः शक्तेः कार्यजनकत्वनियामकत्वेन दृष्टः यथा दीपगतप्रकाशकत्वशक्तेः कार्यजनकत्वे दीपवस्तुनोःप्रकाशकत्वशक्त्यतिरिक्तसंयोगादिसम्बन्धसत्त्व एव वस्तुप्रकाशकत्वं नान्यथा तथा घटपदादिगतशक्तेरपि शाब्दबोधरूपकार्य्यजनने सम्बन्धसत्व एवार्थबोधकत्वं नान्यथा तदाह —ॐउपकार इति—यत्रोपकारः उपकारस्वभावः सम्बन्धोऽस्ति तत्र धर्मः सामर्थ्यरूपः (शक्तिरूप इति यावत्) अनुगम्यते = अनुमीयते । असौ सम्बन्धः शक्तिनामपि कार्यजनने शक्तिः = उपकारकः, गुणानामपि गुणः = द्रव्याश्रितत्वनियामक इत्यर्थः । ॐउपकार इति—यत्रोपकारस्वभावः सम्बन्धोऽस्ति तत्र शक्त्याख्यो धर्मोनुमीयतेऽसम्बद्धानां शक्तिसत्वेऽपि कार्यजनकत्वाभावादित्यर्थः । समयज्ञानार्थम् = सङ्केतज्ञानार्थम् । इदमित्यस्य व्याकरणमित्यत्रान्वयः । पदलक्षणायाः = पदरूपायाः । अन्वाख्यानम् = प्रकृतिप्रत्ययादिप्रदर्शनद्वारा बोधकम् । वाक्यलक्षणायाः = वाक्यरूपायाः । अत्रान्वाख्यानमिति सम्बध्यते । अर्थलक्षणम् = वाक्यार्थबोधकं शास्त्रं तर्कमीमांसादि । अनेन = वाक्यलक्षणाया वाच इति कथनेन । ॐपदेष्विवेति—शाब्दबोधोपयोगिनी शक्तिर्यथा पदे तथा वाक्येऽपीति भावः । आकाङ्क्षादीनामपि वाक्यार्थनिर्णायकत्वात्तेऽपि वाक्यसङ्केतग्राहकाः । नन्वपभ्रंशेष्वपि सङ्केतस्य सिद्धान्तयिष्यमाणतया व्याकरणादीनाञ्च तत्सङ्केतस्याबोधकतया समयज्ञानार्थमित्यसङ्गतमित्यत आह—ॐसाधूनामिति—साधुशब्दानामेव सङ्केतज्ञानार्थमित्यर्थः । तेनापभ्रंशीयसङ्केताबोधकत्वेऽपि न क्षतिः ।

मू०—एतेन 'पदार्थे सम्बन्धग्रहवन्त्यपि पदानि वाक्यार्थे समयग्रहानपेक्षाण्येवेति वाक्यस्फोटो नैयायिकासम्मतः' इति परास्तम् । एतच्चोपरिष्टाद्वक्ष्यामः । पदस्यैवार्थबोधकमवयवार्थद्वारा व्याकरणमिति च सूचितम् ।

वाक्यस्फोटे वात्स्यायनसम्मतिं प्रदर्श्य अध्यासनिरूपणम्

'कः शब्दः' 'कोऽर्थः' इति प्रश्ने 'घट इत्ययं शब्दः' 'घट इत्ययमर्थः' इत्येकाकारोत्तरदर्शनात्तयोरध्याससिद्धिः । 'घट इत्याकारकं ज्ञानम्'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति व्यवहाराच्छब्दज्ञानयोरपि सः 'इति'शब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वात् । अत एव 'पदं श्रुतम्' 'पदार्थं शृणु' 'अर्थं वदति' इत्यादिव्यवहारः। शब्दार्थयोरितरेतराध्यासादेव "वृद्धिरादैच्" (पा० सू० १।१।१) "ओमित्येकाक्षरं ब्रह्म" (ब्रह्मविद्योप० ३) इति शक्तिग्राहकश्रुतिस्मृत्योः सामानाधिकरण्येन प्रयोगः।

(रत्न०)—*एतेनेति—उक्तन्यायभाष्याद् वाक्येऽपि सङ्केतसाधनेनेत्यर्थः। *पदार्थ इति—निरूपितत्वं सप्तम्यर्थः। *सम्बन्धग्रहवन्तीति—पदार्थनिरूपितो यः शक्तिरूपः सम्बन्धो विषयतया तद्विशिष्टान्यपीत्यर्थः। *वाक्यार्थ इति—वाक्ये शक्त्यभावेन वाक्यार्थनिरूपितशक्तिमनपेक्ष्यैव शाब्दबोधं जनयतीति वाक्यस्फोटस्य शक्तत्वं नैयायिकमतविरुद्धमिति निरस्तम्, वाक्यस्फोटस्योक्तरीत्या नैयायिकोपास्याऽचार्यैरेव स्वीकृतत्वात् पदद्वयादिघटिताकाङ्क्षादितो वाक्यार्थबोधे वाक्यस्फोटस्यापरिहरणीयत्वाच्च। *एतच्चेति—वाक्यस्फोटस्य नैयायिकसम्मतत्वं प्रामाणिकत्वञ्चेत्यर्थः। उपरिष्टात् = स्फोटनिरूपणे। ननु साक्षाद् व्याकरणेन पदवाक्यार्थयोरनुक्तत्वात्कथं पदाद्यर्थबोधकत्वं तस्यात आह—*पदस्यैवेति—प्रकृतिप्रत्ययार्थबोधनद्वारा पदाद्यर्थबोधन एव तात्पर्यमिति भावः। *सूचितमिति—पदलक्षणायाः वाचः समयग्राहकमित्यनेन पदानां वाचकत्वान्वाख्यानोक्त्या च प्रकृत्यादिकल्पना सूचितेत्यर्थः। नन्वस्तु सङ्केतस्तत्र तथापि सङ्केतस्याध्यासमूलकत्वादध्यास एव मानाभावेन सङ्केतग्रहासम्भवोऽत आह—*कः शब्द इति—शब्दार्थविषयके द्विविधेऽपि प्रश्ने 'घटः' इति समानाकारोत्तरदर्शनेन शब्दार्थयोरध्याससिद्धिः। अन्यथा'इति' शब्देन शब्दार्थाभ्यां 'घट' इति वर्णचतुष्टयस्याभेदबोधो नोपपद्येतेति भावः। तयोः = शब्दार्थयोः। उक्तरीत्या 'घट इति ज्ञानम्' इति व्यवहारेण शब्दज्ञानयोरपि सः = अध्यासः। तदाह—*इति शब्दस्येति। *शब्दस्वरूपेति—शब्दस्वरूपपरतातात्पर्यबोधनद्वाराऽभेदस्यापि बोधनादिति भावः। *अत एवेति—अध्यासादेवेत्यर्थः। *अर्थं शृणिवति—श्रवणेन्द्रियस्य शब्दमात्रग्राहकत्वेन श्रावणप्रत्यक्षविषयताया अर्थेऽसम्भवेन 'पदार्थं शृणु' 'अर्थं वदति'



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिव्यवहारः शब्दार्थयोरध्यासे सत्येवोपपद्येतेति भावः । अध्यासादेव शब्दगतश्रावणविषयत्वस्यार्थे प्रतीतिः । एवं लोकतः शब्दार्थयोरध्यासं संसाध्य श्रुत्यादितः प्रमाणयति —*शब्दार्थयोरिति । *श्रुतिस्मृत्योरिति- अभ्यर्हितत्वेन श्रुतेः पूर्वनिपात इति । यथासंख्यसन्वयोपपत्तये ओमित्यस्य प्राथम्यं प्रकल्प्य बोधः कार्यः । ननु "यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्योऽध्यमृतात्सम्बभूव (तैत्ति० उप० १।४।१) इत्युत्पत्तिश्रवणादोङ्कारस्य ब्रह्मरूपत्वानुपपत्तिरिति चेत्, न 'भू'धातोरत्र भानविषयकत्वार्थेनादोषात् ।

मू०—तादात्म्यञ्च 'तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्' । अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः । तत्र भेदस्योद्भूतत्वविवक्षया 'अस्यार्थस्यायं वाचकः' 'ऊञः प्रगृह्यम्' "तस्य वाचकः प्रणवः" (यो० द० समा० पा० सू० २७) इत्यादौ षष्ठी । अभेदस्य तत्त्वविवक्षया तु प्रथमा, यथा उक्तेषु । अत एवार्थे शब्दधर्मत्वव्यवहारः, अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात् । नाप्यत्यन्ताभेदे सः, घटे स्वधर्मत्वव्यवहाराभावात् । अयमध्यासः आदिव्यवहारकृदीश्वरकृत एव । एतच्च "स्थितोऽस्य वाचकस्य वाच्येन सह सम्बन्धः, सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवार्थमभिनयति यथावस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते 'अयमस्य पिता' अयमस्य पुत्रः" इत्यादिना पातञ्जलभाष्ये एव स्पष्टम् । हरिरप्याह—

तादात्म्यनिरूपणम्

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥
(वाक्यप० ३।३।२९)

सम्बन्ध(न्धि)शब्दे सम्बन्धो योग्यतां प्रति योग्यता ।
समयाद्योग्यतासंविन्मातापित्रादियोगवत् ॥
(वाक्यप० ३।३।३१)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सति१ † प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते ।
शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते ॥ इति
( वाक्यप० ३।३।३७ )

अस्यार्थः—यथा चक्षुरादीनां रूपादिविषयज्ञानजनने अनादिः=पुरुषयत्नानपेक्षा योग्यता तज्जनकतावच्छेदकधर्मवत्त्वरूपा, तथा शब्दानामर्थे अनादिः सम्बन्ध एव योग्यता=तज्जनकतावच्छेदको धर्मः। सम्बन्धशब्दे योग्यतां प्रति बोधजनकतावच्छेदकधर्मरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः सम्बन्धः स एव योग्यता, सा स्वाभाविक्येव अनादिवृद्धव्यवहारपरम्पराऽपरपर्यायास्मदादिसमयगृहीतोक्तेश्वरसमयान्निश्चीयते । यथा मातापुत्रयोर्जन्यजनकभावसम्बन्धस्य व्यवहारो निश्चायकस्तद्वत्। न तु जनकत्वमेव योग्यता 'एतज्जननेऽयं योग्यः' इतिव्यवहारात् तदाह—❀सतीति—यतः शब्दस्यार्थे सम्बन्धे सति तत्प्रत्ययहेतुत्वमुपपद्यते तस्मादित्यन्वयः ।

अत एवैतदुपक्रमे ।

ज्ञानं २†प्रयोक्तुरर्थश्च स्वरूपञ्च प्रतीयते ।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः ॥
( वाक्यप० ३।३।१ )

इत्यादिना शब्दार्थज्ञानानामध्यासस्योपपादनं कृतम्। 'तेषाम्' इत्यस्य 'अतः' इत्यादिः ।

'अयं सास्नादिमानर्थो गौः' इत्यर्थकात् 'अयं गौः' इत्येवं

---

१ † सति प्रत्ययहेतुत्वे सम्बन्ध उपपद्यते ।
शब्दस्यार्थे यतस्तत्र सम्बन्धोऽस्तीति गम्यते ॥
इति वाक्यपदीयपुस्तकस्थः पाठः ।

२ † "ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते"
इति वाक्यपदीयपुस्तकस्थः पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकानां व्यवहारादुक्तं तादात्म्यं सम्बन्ध इत्यर्थः । एतेन तयोरभेदे घटादिशब्दे मधुधारणाद्यापत्तिः, अग्न्यादिशब्दोच्चारणे मुखदाहाद्यापत्तिः, अर्थे वर्णमालाद्यनुभवापत्तिश्चेति निरस्तम् भेदाभेदोपपादनात् ।

(रत्न०)—ननु शब्दार्थयोस्तादात्म्येऽग्निशब्दोच्चारणे मुखदाहाद्यापत्तिस्स्यात् 'अयं वाचकः' इति व्यवहारानुपपत्तिश्चेत्यतोऽध्यासमूलकतादात्म्यस्वरूपमाह —*तादात्म्यञ्चेति — तथा चाध्यासमूलकस्य भेदविशिष्टाभेदस्य तादात्म्यरूपत्वान्न दाहादिरिति भावः । ननु तेजस्तिमिरयोरिव भेदाभेदयोः परस्परं विरोधोऽत आह —*अभेदस्याध्यस्तत्वाच्चेति — यथा तटे गङ्गात्वारोपेऽपि न हि तेन स्नानादिकार्यं जायते तद्वदत्रापीति भावः । तत्र= तादात्म्ये । यदा भेदांशस्योद्भूतत्वविवक्षा तदा षष्ठीत्यत आह— *भेदस्येति – अभेदाभिभवपूर्वकभेदविवक्षा भेदस्योद्भूतत्वविवक्षा । "तस्य वाचकः प्रणवः" ( यो० द० समा० पा० सू० २७ ) इति योगसूत्रम् । तस्येश्वरस्य वाचकः प्रणव ओङ्कार इत्यर्थः । *तत्त्वविवक्षयेति—भेदाभिभवपूर्वकाभेदविवक्षयेत्यर्थः । उक्तेषु = "ओमित्येकाक्षरं ब्रह्म" "वृद्धिरादैच्" इत्यादिषु । *शब्दधर्मत्वेति —'अर्थं शृणोति' इत्यादौ शब्दधर्मस्य श्रवणकर्मत्वस्यार्थे आरोप इत्यर्थः । यद्वा 'अर्थः शब्दधर्मः' इति व्यवहार इत्यर्थः । *अत्यन्तभेद इति — आरोपिताभेदसामानाधिकरण्याभाव इत्यर्थः । *अश्वेति— नहि 'पुरुषोऽश्वधर्मः' 'अश्वो वा पुरुषधर्मः' इति व्यवहारः अभेदसहचरितभेदाभावात् । नन्वत्रापि कस्मान्नाध्यासः अध्यासमूलभूतानादिवासनाया अभावात् । अत्यन्ताभेदे = भेदासहचरिताभेदे यथा स्वस्य स्वस्मिन् । नन्वध्यासकर्त्तुरभावादध्यासो निर्मूलोऽस्मदादीनामध्यासकर्तृत्वेऽतिप्रसङ्गश्चात आह—*अयमिति । *अनादीति—सर्गाद्यकालिक इत्यर्थः । *एतच्चेति—तस्येश्वरकृतत्वञ्चेत्यर्थः । 'एतच्च' इत्यस्य भाष्य एव स्पष्टमित्यत्रान्वयः । तेषु तेषु पदेष्वनादितः सिद्धमेव वाच्यवाचकभावरूपं शक्तिविशेषमीश्वरसङ्केतोऽभिनयति प्रकाशयतीत्यर्थः । नतूत्पादयति । दीपो यथा स्थितान्येव वस्तूनि प्रकाशयति, यथा वा स्थित एव पितापुत्रयोर्जन्यजनकभावरूपः सम्बन्धः 'अयमस्य पिताऽय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मस्य पुत्रः' इति लोकव्यवहारेण व्यज्यते । यद्यपि पूर्वमन्योऽन्याध्यास-मूलकस्तादात्म्यरूपः सङ्केत उक्तो भाष्ये तथाप्यस्माद् भाष्यात् एतादृशोऽपि सङ्केत इष्ट एव । तथा च शब्दार्थयोर्द्विविधसङ्केतदर्शनेन भेदाभेदौ सूचितौ । प्रलयानन्तरं पुनः सर्गेऽपि पूर्ववत्तत्तच्छक्तियुक्तानामेव शब्दानामाविर्भावाद् वाच्यवाचकभावशक्त्यपेक्षः सङ्केत ईश्वरेण पूर्ववदेव क्रियते । अत एव "यथापूर्वमकल्पयत्" इति श्रुतिः सङ्गच्छते । ※हरिरपीति–अत्राद्यकारिका बोधजनकतैव शक्तिरित्यत्र मानत्वेनोक्ता दीक्षितैः । भूषणकृतापि तथैव व्याख्याता, तद्दूषणायाह—※अस्यार्थ इति । ※अनादिरिति – अस्यैवार्थः 'पुरुषप्रयत्नानपेक्षा' इति । ※स्वविषयेष्विति—स्वे आत्मीया रूपादयो विषया येषु ज्ञानेष्विति बहुव्रीहिणा रूपादिविषयकज्ञानेष्वित्यर्थः चक्षुरादिषु विषयनिरूपितशक्तेर्बाधात् । तज्जनकता = बोधजनकता । अयम्भावः—दीक्षितमते बोधजनकतैव योग्यता । मञ्जूषाकारमते – बोधजनकतावच्छेदकीभूतो यो धर्मः वाच्यवाचकभावापरपर्यायशक्तिरूपः स एव योग्यता इति । ※सम्बन्धशब्द इति – अत्र सम्बन्धशब्दोऽर्श आद्यजन्तः । तथा च – शक्तिरूपसम्बन्धवच्छब्दे घटपटादावित्यर्थः । ※योग्यतां प्रतीति—"अभितः परितः—" (पा० सू० वा०२।३।२) इति षष्ठ्यर्थे द्वितीया । द्वितीयार्थश्च निरूप्यनिरूपकभावलक्षणसम्बन्धरूपः । सम्बन्धशब्दे = घटादौ । योग्यतां प्रति बोधजनकतावच्छेदकधर्मरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः सम्बन्धः स एव योग्यताद्योतक इत्यर्थः, पूर्वं धर्मरूपयोग्यताया उक्तत्वेनात्र 'योग्यता' पदस्य तद्द्योतके लाक्षणिकत्वात् । ※सा चेति – योग्यता चेत्यर्थः । ※स्वाभाविकीति—अकृत्रिमेत्यर्थः । ※अनादीति — अनादिर्या वृद्धव्यवहारपरम्परा सा पर्यायो यस्य तादृशो योऽस्मदादिसमयस्तेन गृहीतो य उक्त ईश्वरसमयस्तेन निश्चीयते इत्यर्थ इति मञ्जूषाकाराः । भूषणकृतस्तु सम्बन्धशब्द इत्यस्य तद्वाच्ये लक्षणया सम्बन्धशब्दजन्यप्रतीतिविषयः सम्बन्धः । योग्यतां प्रति योग्यता = योग्यताशब्दजन्यप्रतीतिविषयो योग्यता । 'सम्बन्ध' शब्द 'योग्यता' शब्दयोरर्थप्रदर्शनस्य फलमाह—※समयादिति—'अस्य शब्दस्यास्मिन्नर्थे सम्बन्धः' इति 'अयमर्थः एतद्योग्यतावान्' इति व्यवहाराद्योग्यतानिश्चय इत्यर्थः । 'घटपदमत्र योग्यमेतत्सम्बन्धि' इतिव्यवहार-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटक 'योग्य' पद 'सम्बन्ध' पदयोरर्थज्ञानमेवार्थप्रदर्शनस्य फलमिति भावः। तत्र दृष्टान्तमाह — ॐमातेति – मात्रादिप्रतियोगिको जन्यजनकभावाख्यः सम्बन्धो यथा 'अयमस्य पिता' 'इयमस्य माता' इति व्यवहाराद् ज्ञायते बोधजनकतारूपयोग्यताज्ञानमपि तथैवेति भाव इति, तन्न 'एवज्जननेऽयं योग्यः' इति व्यवहाराद्योग्यतापदस्य जनकत्वार्थकत्वाभावात् । ॐअत एवेति – योग्यताया जनकताभिन्नत्वादेवेत्यर्थः। ॐएतदुपक्रम इति – एतत्कारिकातः प्रागित्यर्थः। ॐप्रयोक्तुरिति—शेषे षष्ठी, निष्ठान्तयोगे कर्त्तरि षष्ठ्या निषेधात् । प्रयोक्तुरुच्चरितैः 'घट इत्ययं शब्दः' 'घट इत्ययमर्थः' 'घट इतीदं ज्ञानम्' इत्येवं रूपैः शब्दैर्ज्ञानम् , अर्थः, शब्दस्वरूपं च प्रतीयते श्रोतुः, अतस्तेषां शब्दार्थज्ञानानां समवस्थितः स्वभावसिद्धः कश्चन सम्बन्धोऽस्तीत्यर्थः। ॐअयं सास्नादिमानिति — 'अयं सास्नादिमानर्थो गौः' इत्यर्थो यस्य तस्माद् 'अयं सास्नादिमानर्थो गौरित्यर्थकाद्' इति समस्तं पदम् 'अयं गौः' इत्येवं लोकानां व्यवहारादित्यस्य विशेषणम् । उक्तम् = अध्यस्तम् । ॐसम्बन्ध इति –सम्बन्धग्राहकमित्यर्थः। ॐ एतेनेनि–तादात्म्यस्याध्यस्तत्वेनेत्यर्थः । ॐअर्थे वर्णेति—शब्दे यथा वर्णाः प्रतीयन्तेऽर्थेऽपि तथा प्रतीयेरन्निति भावः । ॐभेदाभेदेति—भेदस्य वास्तविकत्वादभेदस्यारोपितत्वादित्यर्थः ।

मू०—वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि बौद्धं, तयोरभेदः। न च बौद्धे दाहादिशक्तिमत्त्वमित्यग्रे निरूपयिष्यामः । अतएव पुरोवर्त्ति डित्थं पश्यतो नामजिज्ञासया 'कोऽयम् ?' इतिप्रश्ने 'डित्थोऽयम्' इत्युत्तरे सन्निहितदेशपिण्डमुद्दिश्य 'डित्थ'शब्दविधेयताप्रतीतिः सङ्गच्छते । 'अस्यायमर्थोऽस्यार्थस्येदं पदम्' इत्यादौ षष्ठ्यनुपपत्त्या तयोः स्वाभाविकयोगाङ्गीकाराच्च । असम्बद्धानां घटपटादीनामेवं व्यवहाराभावात् । 'अस्यायं वाचकः' इत्यादिव्यवहारोप्येवमेव 'अयं वाचकः एतत्सम्बन्धी' इत्यादि तदर्थात् । स्पष्टञ्चेदम् "अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते । योगः शब्दार्थयोः" (वाक्यप० ३।३।३।) इति हरिकारिकाव्याख्यावसरे हेलाराजीये ।

तादात्म्यस्य शक्तिनियामकसम्बन्धत्वम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'समयः' 'सङ्केतः' इति चाप्तोपदेशवृद्धव्यवहारपर्यायौ । अत एव न्यायभाष्यकृदादयः "सामयिकः शब्दादर्थप्रत्ययः" (वैशे० सू० ७।२।२० ) इति सूत्रे "कः पुनरयं समयः ? 'अस्य शब्दस्येदमर्थजातमभिधेयम्' इति 'अस्येदं नामधेयम्' इत्यादि नियोगरूपः 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्यादि नियोगश्च" ( न्या० भा० २।१।५५ ) इत्याहुः । नियोगश्चाप्तोपदेश एव । "सामयिकः शब्दादर्थप्रत्ययः" इतिकणादसूत्रव्याख्यातृभिश्च "नकुलदंष्ट्रास्पृष्टा या काचिदौषधिः सा सर्पविषहन्त्री" (वैशे० सू० उप० ७।२।२०) इत्याप्तोपदेशस्यैव समयत्वमुक्तम् । "अयमयमितिनियोगोऽपि समयः" इतिपातञ्जलाः । उक्त ईश्वरसङ्केत एव शक्तिरिति तु न युक्तम् 'अयमेतच्छक्योऽत्रास्य शक्तिः' इत्यस्य सङ्केतस्यानापत्तेः, ईदृशसङ्केतस्य लोके दर्शनेन तादृशेश्वरसङ्केतस्याप्यनुमानात् ।

(रत्न०)—शब्दार्थयोस्तादात्म्य आपतितदोषोद्धाराय भेदस्यारोपितत्वमुक्त्वा तत्त्वतोऽभेदेऽपि समाधिमाह—*वस्तुत इति – शब्दार्थौ द्विविधौ बौद्धौ बाह्यौ च । तत्र बौद्धार्थेन सह बौद्धशब्दस्य तादात्म्यम् । बौद्ध इत्यस्य बुद्धिरूप–देशस्थ इत्यर्थो न तु बुद्धिविषय इति, बाह्यस्यापि बुद्धिविषयत्वात् । *बौद्धमिति – अस्य शक्तमिति शेषः । तयोः = बौद्धशब्दार्थयोः । अग्रे = बौद्धपदार्थनिरूपणावसरे । *निरूपयिष्याम इति— शब्दार्थयोर्बौद्धत्वमितिशेषः । *अत एवेति—शब्दार्थयोस्तादात्म्यादेवेत्यर्थः । *पश्यत इति—अनेन वस्तुविषयकज्ञानस्य सिद्धत्वं सूचितम् । *कोऽयमिति—अत्यन्तभेदे 'अस्य किन्नाम' इति प्रश्न उचितः । *डित्थोऽयमिति—'अयम्' इत्यनेन सन्निहितदेशस्थपिण्डस्य (डित्थस्य) ग्रहणम् । अत्राभेदेन प्रश्नोत्तरयोर्भेदेनोद्देश्यविधेयभावस्य च सङ्गतिः । ननु शब्दार्थयोरभेदे 'अस्यायमर्थः' इति व्यवहारानुपपत्तिः, भेदसम्बन्ध एव षष्ठीविधानादतआह—*अस्यायमर्थ इति । *स्वाभाविकयोगेतिवास्तविकभेदसम्बन्ध इत्यर्थः । भेदमात्रस्य षष्ठीनिमित्तत्वे घटस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पट' इति व्यवहारोऽप्यापद्येतेति भावः । ❀एवमेवेति—भेदसम्बन्धमादायैवेत्यर्थः । योगः = सम्बन्धः । ❀शब्दार्थयोरिति – अस्याः कारिकायाः "तत्त्वमप्यतो व्यपदिश्यते" इत्यवशिष्टोंऽशः । षष्ठ्यनुपपत्त्या शब्दार्थयोः स्वाभाविकः सम्बन्धोऽस्त्येव । स एव सम्बन्धः 'गौरयम्' इत्यभेदेन व्यपदिश्यते असम्बद्धयोः सामानाधिकरण्यासम्भवादितिभावः । वृद्धव्यवहारात्संकेतग्रह इति मतमसङ्गतमुभयोः पर्यायत्वादित्याह —❀समय इति—नहि वृद्धव्यवहारात्सङ्केतग्रहः किन्तु शक्तिग्रह एव । अतएव = वृद्धव्यवहारसङ्केतयोः पर्यायत्वादेव । ❀सूत्र इति—वैशेषिकदर्शनीयं सूत्रमिदम्, यदुपरिभाष्यं तन्न्यायदर्शनीयं सूत्रं तु "सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य" (न्या० सू० २।१।५५) इत्येवं रूपम् । ❀अर्थजातमिति—अर्थविशेष्यकोऽयं संकेतः । ❀नामधेयमिति — पदविशेष्यकश्चायम् । वृद्धव्यवहारस्य संकेतत्वमुक्त्वेश्वरव्यवहारस्यापि तदाह—❀अस्माच्छब्दादिति । नियोगशब्दस्य विधौ प्रसिद्धत्वादाह—❀नियोगश्चेति —आप्तोपदेशस्य समयत्वे वैशेषिकसम्मतिमपि प्रमाणयति — ❀सामयिक इति—सङ्केताधीन इत्यर्थः । एतेन 'घटः शब्दवान्' 'घटोऽर्थः' इति प्रत्ययाभावेन शब्दार्थयोः सम्बन्धाभावादनियतबोधापत्तिरित्यपास्तम् संकेतरूपस्य नियामकस्य सत्त्वात् । ❀अयमयमिति—'अयं सास्नादिमान्' 'अयं गौः' इत्याकारक इत्यर्थः । ❀ईश्वरसंकेत इति—अर्थविशेष्यकः पदविशेष्यको वेत्यर्थः । ❀न युक्तमिति – संकेतस्य शक्तिबोधकत्वेन शक्तिरूपत्वाभावात् । ❀अनापत्तेरिति — संकेतस्य शक्तिरूपत्वेऽत्र घटकतया शक्तिनिवेशो न स्यादितिभावः । ननु शक्तिघटितसंकेतसत्त्वे मानाभावोऽत आह—❀ईदृशस्य संकेतस्येति । ❀तादृशेश्वरसंकेतस्येति—'अयमेतच्छक्योऽत्रास्य शक्तिः' इत्यस्य । तस्मात्संकेतः शक्तिप्रकाशक एव न तु शक्तिरिति भावः । संकेतस्य क्वचित् शक्तित्वेन व्यवहारस्तु भाक्त एव ।

मू०—अत एव न्यायवाचस्पत्ये उक्तम् "सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः सङ्केतः तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्सङ्केतः" इति । १†तथा योगवाचस्पत्ये उक्तम् "सर्वे च

†१ "सोऽयं वृद्धव्यवहारः साम्प्रतिकानां संकेतग्रहोपायः, सर्गादिभुवां तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दाः सर्वार्थाभिधानसमर्थाः इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः, ईश्वरसंकेतस्तु प्रकाशकः । अत एव "नित्यः शब्दार्थसम्बन्धः" ( वाक्यप० १।२३ ) इति तान्त्रिकाः" इति । सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगि (ज्ञान) गम्य एव तेषां योगबलेनोभयरूपपराप्रत्यक्षात्, युक्तं चैतत् एकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभयरूपतया उभयोरपि तत्कार्ययोरुभयरूपत्वात् ।

"क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम् ।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा ॥" इत्युक्तेः ।

नित्यत्वं तु यावत्सृष्टिस्थित्या व्यवहारनित्यतया च बोध्यम् । श्रुतिश्च—

"सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् ।
तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टाम्" ॥

इति । अभिष्यन्दमानाम्=तत्तद्रूपेणाभिव्यक्ताम् । अन्यामिव= भेदवतीमिव । आत्मनि=चित्ते ।

"प्राणापानान्तरे देवी वाग्वै नित्यं स्म तिष्ठति ।
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ॥
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी (न्धना) ।
केवलं बुद्ध्युपादानक्रमरूपानुपातिनी ॥
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्त्तते ।
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ॥

---

महर्षिदेवतादीनां परमेश्वरानुग्रहाद्धर्मज्ञानवैराग्यैश्वर्यातिशयसम्पन्नानां परमेश्वरेण सुकर एव संकेतः कर्तुम् । तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः संकेतः ( तद्व्यवहारपरम्परागतश्चास्मदादीनामपि ) संकेतग्रहो न सम्बन्धस्मृतिमपेक्षते । आप्तपरम्परात एव ततो निःशङ्कव्यवहारोपपत्तेः" इति तु न्यायवार्तिकपुस्तके सम्प्रत्युपलभ्यमानः पाठः ( न्या०वा०तात्प० टी० २।१।५५ )



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपज्योतिरेवान्तः परा वागनपायिनी" इति भारतं च। एते श्रुतिभारते हरिग्रन्थे (वाक्यप०टी०कांड०१कारि०१४४) स्पष्टे । हरिवंशेऽपि "अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः" इति । "योग्यतालक्षणः सम्बन्धः" इत्यादेः कैयटस्य कारणताऽवच्छेदकधर्मरूपः सम्बन्ध इत्यर्थः । 'तत्त्वमस्या-(छान्दो० उप० ६।८।७।) दिवाक्यस्याखण्डार्थेन शुद्धेनापि ब्रह्मणाऽऽध्यासिकं तादात्म्यम् ।

(रत्न०)—अत एव = संकेतस्य शक्तिग्राहकत्वादेव । ❀तद्व्यवहाराच्चेति — महर्षिदेवतादिव्यवहाराच्चेत्यर्थः । ❀तत्सङ्केतइति—ईश्वरसंकेत इत्यर्थः । ननु विद्यमानस्यैव शक्तिरूपसम्बन्धस्य सङ्केतप्रकाश्यत्वे यस्य शब्दस्य यस्मिन्नर्थे शक्तिर्नास्ति तत्र सङ्केतेन बोधो न स्यादत आह— ❀सर्वे च शब्दा इति । ❀सर्वार्थाभिधानसमर्था इति — सर्वार्थनिरूपितशक्तिमन्त इत्यर्थः । अत एव = शक्तेर्नित्यत्वेन संकेतस्य तत्प्रकाशकत्वादेवेत्यर्थः । ❀नित्यः शब्दार्थसम्बन्ध इति —

" नित्याः शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः" ॥

इतिवाक्यपदीयस्था पूर्णकारिका । (वाक्यप०१।२३) तान्त्रिकाः = वैयाकरणाः तन्त्रशब्दस्य करणघञन्तत्वेन शास्त्रपरत्वात् । नन्वेवं सर्वशब्देन सर्वार्थबोध इत्यत आह — ❀सर्वैरिति । ❀योगीति—तथा च ज्ञातस्यैव सम्बन्धस्य बोधकत्वेनास्मदादीनां ज्ञानाभावान्न बोध इति भावः । ❀उभयरूपपरेति — "नामरूपे व्याकरवाणि" (छान्दो० उप० ६।३।२) इतिश्रुत्या शब्दार्थयोर्ब्रह्मोपादानकत्वेनोभयरूपत्वम् । ❀प्रत्यक्षादिति—ननु परा वाग्रूपेति वक्ष्यते, तस्या योगबलेन प्रत्यक्षे तत्कार्य्यभूतानां शब्दानां प्रत्यक्षत्वेऽप्यर्थाप्रत्यक्षत्वेन सम्बन्धिद्वयज्ञानाभावात् कथं सम्बन्धप्रत्यक्षं तेषामत आह—❀युक्तश्चैतदिति। ❀उभयरूपत्वादिति—स्फोटात्मकब्रह्मण एव शब्दात्मकमर्थात्मकञ्च जगत् कार्य्यम् । कारणाच्चाभिन्नं कार्य्यम्। एवञ्च तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन शब्दाभिन्ना परा वाक्, तदभिन्नोऽर्थ इति शब्दार्थयोरप्यभेदः । तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चैकस्य प्रत्यक्षे उभयोरपि प्रत्यक्षत्वात् सम्बन्धस्यापि प्रत्यक्षत्वं योगिनाम् । तत्र प्रमाणमाह—*क्रियेति—शब्दशब्दार्थकारणं परारूपं शब्दब्रह्म क्रियाशक्तिप्रधानायाः विन्दुरूपिण्याः प्रकृतेः साङ्ख्यप्रसिद्धाया गुणत्रयात्मिकाया अभवत् । अयं भावः—ब्रह्म द्विविधं मायानुपहितं निर्गुणम्, मायोपहितं सगुणञ्च । तत्र सगुणं ब्रह्म जगदुपादानमिति मते विन्दुपदेन ब्रह्मणो ग्रहणम् । साङ्ख्योक्तप्रकृतेरुपादानत्वे तु प्रकृतिरेव विन्दुपदवाच्या । सा च क्रियाप्रधाना रूपान्तरेण परिणमनशीला । तत एव विन्दुपदवाच्यायाः परावागात्मकं शब्दब्रह्माभवत् । ततश्च परात्मकाच्छब्दब्रह्मणः क्रमेण स्थूलं नामरूपात्मकं जगदभूत् । विस्तरश्चाग्रे वक्ष्यते । ननु विन्दुतः परावाग्रूपस्फोटात्मकस्य ब्रह्मण उत्पत्तिस्वीकारेऽनित्यत्वापत्तिरत आह—*नित्यत्वं त्विति । सर्गादावुत्पद्य प्रलयकालं यावत् स्थित्या घटादिवन्मध्ये नाशाभावेन सापेक्षमस्य नित्यत्वमिति भावः । व्यवहारनित्यतया = प्रवाहनित्यतया । तत्र श्रुतिमपि प्रमाणयति—*सूक्ष्मामिति—सूक्ष्मरूपामित्यर्थः । *अर्थेनेति—अर्थेन न प्रविभक्तं भिन्नं तत्त्वं स्वरूपं यस्यास्ताम् । स्फोटरूपैकैव वागुपाधिभेदाद् भिद्यतेऽत आह—*एकामिति । अभिष्यन्दमानाम् = शब्दार्थविशेषरूपेणाभिव्यज्यमानाम् । अन्ये तामेकामन्यामिव = भिन्नरूपामिव । अस्यैवार्थः 'नानारूपाम्' इति । *चित्त इति—अन्तःकरण इत्यर्थः । एतेन शब्दार्थयोर्बुद्धिस्थत्वं दर्शितम् । सा वाक् चतुर्विधा—परा, पश्यन्ती, मध्यमा, वैखरी च । अत्रोत्तरोत्तरं स्थूलत्वं बोध्यम् । स्थूलक्रमेण तत्स्वरूपमाह—*प्राणापानेति—सर्वेषां प्राणिनां प्राणापानवाय्वोरन्तरे मध्ये वाग्रूपा देवी नित्यं तिष्ठति स्म । प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी प्राणव्यापाराभिव्यक्ता सैव वाक् स्थानेषु कण्ठादिषु वायौ विवृते विवर्तरूपतां प्राप्ते सति कृतवर्णपरिग्रहा ककारादिवर्णरूपा परश्रवणग्राह्या वैखरीत्युच्यते । तदुक्तम्—"प्राणेनाप्यायिता सेयं व्यवहारनिबन्धिनी" इति । प्राणवायुवृत्तिं व्यापारमनुसृत्य तत्तच्छब्दविशेषतत्तदर्थविशेषोल्लेखिन्या बुद्ध्या विषयीकृता परश्रवणग्रहणयोग्या सूक्ष्मा मध्यमा वागुच्यते । सूक्ष्मत्वं वैखरीमपेक्ष्य । अविभागा = कार्य्यकारणविभागरहिता । सर्वतः संहृतक्रमा = वर्णक्रमरहिता । योगिनां समाधौ सविकल्पकज्ञानविषयः पश्यन्तीत्युच्यते । अन्तः = मूलाधारे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्योतिःस्वरूपाऽनपायिनी = उक्तरीत्या सूक्ष्मतया नित्या परा वागभिधीयते । ॐएते श्रुतिभारते इति—प्रथमाद्विवचनान्तम् । ननु "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकव्याख्याऽवसरे "अर्थस्यानित्यत्वात् तत्संबन्धस्य नित्यत्वासम्भवः" इत्याशङ्क्य "तादात्म्यरूपा या योग्यता तदात्मकः सम्बन्धः" इति कैयटासङ्गतिरर्थस्यानित्यत्वे तादात्म्यस्याप्यनित्यत्वादत आह—ॐकैयटस्येति । 'योग्यतालक्षणः' इत्यस्य तादात्म्यव्यङ्ग्यः कारणताऽवच्छेदकधर्मरूपः सम्बन्धः शक्तिरित्यर्थः । स च नित्यः शब्दस्य नित्यत्वेन तन्निष्ठकारणताऽवच्छेदकधर्मस्य नित्यत्वौचित्यात् । ननु ब्रह्मणोऽखण्डत्वाद् वाक्यस्य च पदार्थसंसर्गरूपसखण्डार्थबोधकत्वेन तादात्म्यासम्भवोऽत आह—ॐतत्त्वमस्यादीति—† तात्पर्यविषयीभूतार्थबोधकत्वमेव वाक्यत्वम् । तथा च वेदान्तवाक्यानामखण्डे ब्रह्मण्येव तात्पर्येण वैयाकरणनये ब्रह्मवाक्ययोरुभयोरपि नित्यत्वेन तादात्म्यसम्भवः । ॐअखण्डार्थेनेति—परोक्षत्वविशिष्टस्यात्मनः 'तत्' पदेनोपस्थितिरपरोक्षत्व(प्रत्यक्षत्व)विशिष्टस्य च 'त्वम्' पदेनोपस्थितिरिति द्वयोः सामानाधिकरण्यासम्भवात्परोक्षत्वापरोक्षत्वरूपविशेषणांशत्यागेन विशेष्यमात्रस्य बोधेनाखण्डार्थत्वमित्यर्थः । किञ्चज्ञानं द्विविधं निर्विकल्पकं, सविकल्पकञ्च । तत्र संसर्गावगाहि प्रत्यक्षम्

---

† अयं भावः—क्रियाकारकभावं पुरस्कृत्यैवार्थबोधने शब्दाः प्रवर्त्तन्ते । क्रियाकारकभावश्च धर्मधर्मिभावं विना नोपपद्यते । धर्मधर्मिभावश्च ब्रह्मण्यनुपपन्नः ब्रह्मणो निर्धर्मत्वात् । अतः पदपदार्थविभागं विनैवाखण्डं तत्त्वमस्यादिवाक्यमखण्डमेव ब्रह्म बोधयति । न च पदार्थसंसर्गबोधकस्यैव वाक्यत्वेन तत्त्वमस्यादिवाक्येनाखण्डब्रह्मणो बोधासम्भव इति वाच्यम् तात्पर्यविषयीभूतार्थबोधकस्यैव वाक्यत्वेन तत्त्वमस्यादिवाक्यस्य तात्पर्यविषयीभूताखण्डब्रह्मरूपार्थबोधकतयोक्तवाक्यत्वसत्त्वेनादोषात् । तथा च तत्त्वमस्यादिवाक्येनाखण्डब्रह्मणः प्रतीयमानत्वात् तयोस्तादात्म्यं सुलभम् । किञ्च तत्त्वमस्यादिवाक्यजन्यं ज्ञानं प्रत्यक्षमेव, तन्मते प्रत्यक्षत्वस्येन्द्रियजन्यत्वानपेक्षत्वेन प्रमाणचैतन्यस्य प्रत्यक्षयोग्यविषयावच्छिन्नचैतन्येन सहाभेदस्यैव प्रत्यक्षत्वप्रयोजकत्वमभेदस्य चोभयोश्चैतन्ययोरेककालिकत्वमेकदेशस्थत्वञ्च प्रयोजकम् । तत्त्वमस्यादिवाक्यजन्यबोधे च प्रमातुरेव विषयतयाऽन्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य प्रमातृरूपविषयचैतन्यस्य च शरीरान्तर्गतैकदेशस्थत्वेन वर्त्तमानकालिकत्वेन चाभेदात् प्रत्यक्षत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'घटं जानामि' इत्यादि सविकल्पकम् । संसर्गानवगाहि तत्त्वमस्यादिवाक्यादिजन्यं निर्विकल्पकम् । न च प्रत्यक्षस्यैव निर्विकल्पकत्वसम्भवेन वाक्यजन्यज्ञानस्य निर्विकल्पकत्वासिद्धिरिति वाच्यम् वेदान्तिनये प्रमाण †चैतन्य—विषयावच्छिन्नचैतन्ययोरभेदस्यैव प्रत्यक्षत्वप्रयोजकत्वात् । 'सोऽयं देवदत्तः' इतिवद् विषयावच्छिन्नचैतन्यस्य प्रमाणावच्छिन्नचैतन्यस्य चाभेदात् प्रत्यक्षत्वमपि । ॐशुद्धेनापीति — यथा 'सोऽयं देवदत्तः' इति ज्ञाने तत्पदेन देशान्तरस्थत्वस्य प्रतीत्या इन्द्रियसन्निकर्षस्य च तदजनकतया 'सोऽयम्' इति वाक्यसहकारेणेन्द्रियस्यापि तत्ताविषयकज्ञानजनकत्वम् एवं सखण्डार्थप्रतिपादकस्यापि वाक्यस्य "नेह नानाऽस्ति किञ्चन" ( कठोप० ४।११ ) इति वाक्यसहकारेणाखण्डार्थप्रतिपादकत्वम् ।

मू०—तद्ग्रहश्च "नेह नानाऽस्ति" ( कठोप० ४।११ ) इत्यादिनिषेधवाक्यमनने सति शमदमादिसम्पन्नस्यातिशुद्धचित्तस्यैवेति न दोषः । यद्वा शब्दाद्विशिष्टबोध एव, अखण्डार्थस्तु मानसबोधविषय एव । यद्वा निषेधवाक्यसहकारेण धर्मोपलक्षिते शक्तिग्रहात् तदुपलक्षिताखण्डार्थस्यैव बोध इत्यादि द्रष्टव्यम् । तादा-

---

† अयम्भावः—चैतन्यं त्रिविधं प्रमाणचैतन्यम्, प्रमातृचैतन्यम्, विषयचैतन्यञ्च । तत्रान्तःकरणवृत्त्यवच्छिन्नचैतन्यं प्रमाणचैतन्यम्, अन्तःकरणावच्छिन्नचैतन्यं प्रमातृचैतन्यम्, विषयावच्छिन्नचैतन्यं विषयचैतन्यम् । तत्र यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना ( नालिकया ) केदारान् प्रविश्य केदारवदेव चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते । स एव परिणामो वृत्तिरित्युच्यते । यत्र च ज्ञानकरणविषययोः संनिकर्षस्तत्रैवान्तःकरणस्य विषयाकारा वृत्तिः । यत्र च विषयस्य विषयाकारवृत्तेश्चैकदेशस्थत्वं तत्र विषयावच्छिन्नचैतन्यमन्तःकरणवृत्त्यवच्छिन्नचैतन्यञ्चैकमेव जायते । तथा च यत्र चैतन्ययोरेकदेशस्थत्वेनैक्यं तदेव प्रत्यक्षत्वप्रयोजकम् । तत्त्वमस्यादिवेदान्तवाक्यजन्यज्ञानस्थले च प्रमातुरेव ( आत्मन एव ) विषयत्वेन तस्य चान्तःकरणसन्निकृष्टत्वेन तस्य प्रमातृरूपविषयाकारेण परिणामात्तत्रान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य प्रमातृरूपविषयावच्छिन्नचैतन्यस्य चैकदेशस्थत्वेनैक्यात् प्रत्यक्षत्वम् । एवमेव यत्र यत्रात्मनो वाक्यजन्यज्ञानविषयत्वं तत्र सर्वत्र प्रत्यक्षमेव ज्ञानमिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्म्यमूलकस्य सम्बन्धत्वे अर्थभेदात्तत्तादात्म्यापन्नशब्देषु भेदौचित्येनार्थभेदाच्छब्दभेद इत्युपपद्यते । समानाकारत्वमात्रेण तु 'एकोऽयं शब्दो नानार्थः' इति व्यवहारः। तस्य निरूपकाश्रयभेदाभ्यां भेद इत्येके ।

( रत्न० )—ननु तत्त्वमस्यादिवाक्यानामखण्डब्रह्मबोधकत्वेऽस्मदादीनामपि तद्बोधापत्तिस्तयोस्तादात्म्यग्रहश्च स्यादत आह—*तद्ग्रहश्चेति-तादात्म्यग्रहो ब्रह्मग्रहो वेत्यर्थः। *नेह नानाऽस्तीति—ब्रह्मातिरिक्तं किञ्चिदपि नास्तीत्यर्थः ।

"मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥" (कठ० ४।११)

इति पूर्णो मन्त्रः । वाक्यमनने = वाक्यार्थमनने । बाधकप्रमाणनिरास-साधकप्रमाणोपन्यासरूपयुक्तिभिरनुचिन्तनं मननम् । अन्तरिन्द्रियनिग्रहः शमः। बहिरिन्द्रियनिग्रहः दमः । *अतिशुद्धचित्तस्येति—नित्यनैमित्तिककर्मणा शुद्धचित्तस्येत्यर्थः । तदुक्तम्—

"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः ॥" इति ।

ननु ब्रह्मणस्तत्त्वमस्यादिमहावाक्यजन्यज्ञानविषयत्वे "अदृष्टो द्रष्टा अश्रुतः श्रोता" ( बृह० उप०३।७।२३ ) "यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सह" (तैत्ति०उप०२।४।१) इत्यादिश्रुतिविरोध इति चेत्, न द्विविधं ब्रह्मस्वरूपमविद्ययाऽऽवृतं तदनावृतञ्च । तत्रावरणनिरासायावृतस्यैव तत्त्वमस्यादिजन्यज्ञानविषयत्वम् । अनावृतस्वरूपविषयिका तु "अदृष्टो द्रष्टा" ( बृहदा०उप०३।७।२३ ) इत्यादिश्रुतिः । ननु व्यवहारावस्थायां वेदान्तिभिरपि व्यवहारमार्गेणैव पदार्थकल्पनया वाक्यार्थो बोद्धव्य इति पदानां सखण्डार्थबोधकत्वस्यैवानुभवादखण्डयोर्वाच्यवाचकभावो न सम्भवतीत्यत आह—*यद्वेति । शब्दात् = तत्त्वमस्यादिवाक्यात् । विशिष्टबोधः = संसर्गावगाहिबोधः। अखण्डार्थः = संसर्गानवगाहिनिर्विकल्पात्मकः। *मानसबोध इति—ननु तत्त्वमस्यादिवाक्यजन्यो बोध इति भावः । नन्वखण्डार्थस्य मानसबोधविषयत्वे तत्त्वमस्यादिवाक्यमेवाखण्डब्रह्मप्रत्यक्षं जन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यतीति वेदान्तसिद्धान्तविरोधोऽत आह — *यद्वा निषेधेति – परोक्षत्वापरोक्षत्वादिधर्मोपलक्षिते शक्तिज्ञानाद् धर्मोपलक्षितस्यैव बोध इति भावः । उपलक्षणत्वञ्चात्र 'उपलक्ष्यांशविषयकप्रतीतिविषयतानिरूपितावच्छेदकताख्यविषयताऽनाश्रयत्वे सति तदंशेऽवभासमानत्वम्' । यथा तच्छब्दजन्यबोधे बुद्धिविशेषविषयत्वरूपोपलक्षितधर्मस्य भासमानत्वेऽपि नावच्छेदकत्वम् तथा तत्त्वमस्यादिवाक्यजन्यबोधे परोक्षत्वापरोक्षत्वयोर्भासमानत्वेऽपि नावच्छेदकत्वमिति भावः । तादात्म्यमूलकस्य = वाच्यवाचकभावापरपर्यायस्य । सम्बन्धत्वे = शक्तित्वे । तत्तादात्म्यापन्नेति = अर्थतादात्म्यापन्नेत्यर्थः । *शब्दभेद इति—नन्वेवं वेदे पठितस्य विनियोगकालेऽर्थान्तरे प्रयोगाच्छब्दभेदापत्तिरिति चेत्, न इष्टापत्तेः । न च वेदत्वानापत्तिः तेषामपि वेदान्तर्गतत्वस्य स्वीकारात् । तदुक्तं हरिणा—

"मन्त्रास्तु विनियोगेन लभन्ते भेदमूहवत् ।
तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु ॥" इति ।

नन्वर्थभेदस्य शब्दभेदकत्वे एकः शब्दो नाना इत्यभिप्रायकस्य "अक्षाः, पादाः, माषाः" इति सरूपसूत्रस्थभाष्यस्यानुपपत्तिरत आह—*समानाकारेति—आनुपूर्व्या ऐक्येन शब्दैकत्वव्यवहार इति भावः । वस्तुतोऽर्थभेदाच्छब्दभेद इत्ययुक्तम् । 'कुटीभार्य्यः' इत्यत्र समानायामाकृतौ भाषितपुंस्कत्वाभावान्न पुंवत्' (महाभा० ६।३।३४) इत्याशयकभाष्यासङ्गतेः । सामर्थ्यादिना ऐक्योपपादने बीजाभावइति चेत्सत्यम् "विषयेण तु नानालिङ्गकरणात्सिद्धम्"इत्यादिना भाष्यकृतैव शब्दैक्यस्य दर्शितत्वात् । "आन्यभाव्यन्तु कालशब्दव्यवायात्" (महाभा० मा०सू० १) इत्यादिना च शब्दभेदस्य दर्शितत्वात् *तस्येति—तादात्म्यस्येत्यर्थः । *निरूपकेति—शक्तिनिरूपकोऽर्थः शक्त्याश्रयः शब्दः उभयभेदात्तादात्म्यभेदः † शब्दभेदश्च ।

---

† यत्तूक्तं कुसुमाञ्जलौ "शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रमः" ( न्या० कुसु० प्र० स्त० कारि० ७ ) इति । अयम्भावः—शक्तिभेदादेव सजातीयादेकस्मात् कार्य्यवैजात्यम् इति शङ्कां निराकुरुते—शक्तिभेदो न चाभिन्न इति । चो हेतौ । न शक्तिभेदः अभिन्नो यतः = शक्तिशक्तिमतोरभेदात् । एतेन शक्तिभेदो निराकृतः । ननु माऽस्तु शक्तिभेदः किन्तु स्वभावादेव एककारणस्य विलक्षणकार्य्यनिर्वाहकत्वं स्यादित्यत्राह—स्वभावो दुरतिक्रम इति । एकस्मिन् कार्य्ये जनयितव्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—अन्ये तु 'एकत्रैवाम्रफले रूपरसगन्धादीनां भिन्नानां तादात्म्यवत् एकत्रैव शब्देऽनेकार्थनिरूपितानि भिन्नानि तादात्म्यानि' इत्याहुः । परे तु 'निरूपकभेदेऽपि तादात्म्यमेकमेवेति शक्त्यैक्यमेव' इत्याहुः । "हलोऽनन्तरा"—( पा०सू०१।१।७) इति सूत्रे सरूपसूत्रे च भाष्ये सूचितमिदं पक्षत्रयम् । सर्वजातीयैः सङ्केतैरस्य सम्बन्धत्वेनैव ज्ञानम्, तदेव च बोधसाधनमिति बोध्यम् । न च तयोस्तादात्म्यस्वीकारे समव्याप्ततया शब्दादनुमानमेव स्यादर्थस्य इति प्रमाणान्तरत्वभङ्गः पक्षधर्मताज्ञानाद्यनपेक्षतया तस्य प्रमाणान्तरत्वात्, सिद्धिसत्त्वे इच्छां विनापि बोधदर्शनाच्च ।

(रत्न०)—शब्दरूपशक्त्याश्रयस्यैक्येऽर्थभेदात्तादात्म्यभेद एव न तु शब्दभेद इत्याह—*अन्येत्विति—। रूपरसेति—'गुणसमुदायो द्रव्यम्' इति मते आम्रफलेऽनेकप्रकारकरूपरसादीनामुपलम्भात्तैः सह यथा रूपादीनां भिन्नं भिन्नं तादात्म्यं तथैकस्मिन्नेव शब्देऽर्थभेदाद् भिन्नानि—तादात्म्यानि, शब्दैक्यञ्च † । अस्मिन् पक्षेऽर्थभेदेऽपि न शब्दभेदोऽनेक-

---

यः स्वभावः कार्य्यान्तरजननकाले तस्यानुवृत्तौ दहनस्यापि जलादित्वं स्यात् स्वभावस्य दुरपह्नवत्वादिति तन्मते एकस्य दण्डस्य घटहिंसाद्यनेककार्य्यजनकत्वं न स्यात् । किञ्च 'सोऽयम्' इति प्रत्यभिज्ञायां सादृश्यमेव बीजं तदा 'सोऽयं ककारः' इत्यत्रापि तथात्वापत्तौ ककारादीनामप्यैक्यापत्तिरिति ।

† शब्दैक्यमते पक्षद्वयम् । शक्यताऽवच्छेदकभेदेऽपि शक्तिरेकैव, शक्यताऽवच्छेदकताभेदेन शक्तिभेदस्य सर्वसम्मतत्वाद् भिन्नैव शक्तिरिति च । नन्वेवं 'पुष्पवन्त' पदस्यापि नानार्थतापत्तिः सूर्य्यत्वचन्द्रत्वरूपनानाधर्मस्य शक्यताऽवच्छेदकत्वादिति चेत्, न शक्यताऽवच्छेदकताभेदेन शक्तिभेद इत्यस्य शक्यताऽवच्छेदकतापर्य्याप्त्यधिकरणभेदेन शक्तिभेद इत्यर्थात् । प्रकृते च सूर्य्यत्वचन्द्रत्वरूपोभयधर्मपर्य्याप्तैकावच्छेदकतेति न दोषः। ननु शक्यताऽवच्छेदकभेदेऽपि शक्तिरेकैवेति मते नानाधर्मावच्छिन्ननिरूपिताया एकस्या एव शक्तेः स्मरणादेककाल एव नानार्थबोधापत्तिः शक्तिज्ञानजन्यनानाधर्मावच्छिन्नोपस्थितेरवारणादिति चेत्, न यथा यथा रूपसमवायसत्त्वेऽपि 'रूपवान्' इत्याकारकप्रतीतिनियामकरूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्नाधिकरणतायाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दरूपव्यक्तिकल्पनायां गौरवात् । तस्मादेकस्मिन् वृन्ते यथाऽनेकानि फलान्युद्भवन्ति तथैकस्मिन्नेव शब्दे नानार्थसम्बन्ध इति भावः । अत्र पक्षे "ग्रामशब्दोऽयं बह्वर्थः...तद्यः सारण्यके ससीमके वर्त्तते तमभिसमीक्ष्यैतत्प्रयुज्यते 'अनन्तराविमौ ग्रामौ' इति भाष्ये (महाभा० १।१।७) 'तद्यः सारण्यके ससीमके' इत्याद्युक्त्याऽर्थभेदेन शब्दभेदप्रतीतिरर्थगतभेदमारोप्योपपादनीया । शब्दभेदपक्षे तु 'ग्रामशब्दोऽयं बह्वर्थः' इति भाष्यासङ्गतिरानुपूर्व्यैक्येन शब्दैक्याद् वारणीया । *भाष्ये सूचितमिति — "हलोऽनन्तराः संयोगः" इति सूत्रे भाष्ये मध्ये नदीपर्वतादिसत्त्वेऽप्यनन्तरशब्दप्रयोगदर्शनाद् व्यवहितेऽपि संयोगसंज्ञा प्राप्नोतीत्याशङ्क्य "ग्रामशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते । तद्यथा 'ग्रामो दग्धः' इति । अस्ति वाटपरिक्षेपे वर्तते । तद्यथा 'ग्रामं प्रविष्टः' इति । अस्ति मनुष्येषु वर्तते तद्यथा 'ग्रामो गतो, ग्राम आगतः' इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा 'ग्रामो लब्धः' इति । तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यतेऽनन्तराविमौ ग्रामाविति" । अत्र नदीपर्वतादीनामपि ग्रामग्रहणेन ग्रहणादव्यवधाने एवानन्तरशब्दप्रयोगाद् व्यवहिते न स्यादिति समाहितम् । अत्र "ग्रामशब्दोऽयं बह्वर्थः" इत्युक्त्या ध्वन्यते 'अर्थभेदेऽपि शब्दैक्यम्' इति शब्दभेदे ग्रामशब्दस्यापि बह्वर्थत्वासम्भवात् । "तद्यः सारण्यके ससीमके" इत्याद्युक्त्याऽन्यत्रार्थे यो ग्रामशब्दः स भिन्न इति प्रतीयते । तस्मादर्थभेदाच्छब्दभेद इत्युपलभ्यते । सरूपसूत्रभाष्येऽपि "प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । प्रत्यर्थं शब्दा अभिनिविशन्ते । किमिदं प्रत्यर्थमिति ? । अर्थमर्थं प्रति प्रत्यर्थं प्रत्यर्थं शब्दनिवेशात्" इत्युक्तेरर्थभेदाच्छब्दभेदस्य, तत्रैवाग्रे "यदपि ह्यर्थावर्थौ प्रति तदपि प्रत्यर्थमेव । यदपि अर्थानर्थान् प्रति तदपि प्रत्यर्थमेव" इत्यभिधानादर्थभेदेऽपि शब्दाभेदस्य चोपलब्धिः । तथा चार्थभेदेन शब्दभेदस्तादात्म्यभेदश्चेत्येकः पक्षः । न

---

अभावान्न रूपवत्ताप्रतीतिस्तथा तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितत्वविशिष्टशक्तिस्मरणस्य कारणत्वादेकार्थबोधकालेऽर्थान्तरबोधवारणात् । शक्तिभेदाच्च नानार्थत्वव्यवहारः । सर्वार्थनिरूपितवृत्तीनाम् 'वर्तते' इत्येकशब्दोपात्तत्वादेकत्वं न्याय्यमित्याहुः । किञ्च शक्तिभेदे गौरवमपि ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चात्रपक्षे ग्रामशब्दोऽयं बह्वर्थ इत्यस्यासङ्गतिरानुपूर्व्यैक्यमादाय तथोक्तेः। न च अर्थभेदेऽपि शब्दैक्यमते "ग्रामशब्दोऽयं बह्वर्थः" इत्यस्य सङ्गतत्वेऽपि "तद्यः सारण्यके" इतिभाष्यासङ्गतिरितिवाच्यम् शक्तिगतस्यार्थगतस्य वा भेदस्यारोपात्तथोक्तेः । अत्र शब्दैक्यपक्षे शक्यताऽवच्छेदकताभेदेऽपि शक्ति-रेकैवेत्येकः पक्षः । तत्र च भाष्ये "अस्ति शालासमुदाये वर्तते । अस्ति वाटपरिक्षेपे वर्तते" इत्यत्रास्तीतिक्रियाया वृत्तिरूपार्थबोधिका 'वर्तते' इति वर्तिक्रिया कर्त्री इति भाष्ये सर्वार्थनिरूपितवृत्तीनामस्तिक्रियाकर्त्रर्थक 'वर्तते' इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षस्य भाष्य-सम्मतत्वात् शक्तिभेदकल्पने गौरवाच्चायमेवपक्षः सिद्धान्तिसम्मतः। *पक्षत्रयमिति — अर्थभेदात्तादात्म्यभेदःशब्दभेदश्चेत्येकः, अर्थभेदेऽपि शब्दैक्यं तादात्म्यभेदश्चेति द्वितीयः, अर्थभेदेऽपि तादात्म्यैक्यं शब्दैक्यश्चेति तृतीयः । अत्र शब्दैक्ये तादात्म्यभेदेन शक्तिभेदपक्षः तादात्म्यैक्येन शक्त्ये-कत्वपक्ष इति भेदद्वयमादाय भेदत्रयम् । शब्दैक्यशब्दभेदपक्षेण तु पक्ष-द्वयमेवेतिदिक् । संकेतो नानाविधः – 'उक्तेश्वरेच्छारूपः' 'अयमेत-च्छक्यः' 'अत्रास्य शक्तिः' 'अस्य शब्दस्येदमर्थजातमभिधेयम्' 'अस्येदं नामधेयम्' अध्यासमूलकः 'अयं गौः'इतितादात्म्यादिरूपश्चेति तादा-त्म्यमूलकशक्तिज्ञानमेव बोधजनकमिति न नियम इत्याह — *सर्व-जातीयैरिति — उक्तसर्वप्रकारकैरित्यर्थः । अस्य = शक्तिरूपसम्बन्धस्य । तत्त्वेन = सम्बन्धत्वेन । यत्तु सर्वविधसंकेतानां संकेतत्वेन सम्बन्धते-त्यर्थः,तन्न, ईश्वरेच्छादिरूपसंकेतस्य सम्बन्धतायाः पूर्वं खण्डितत्वात्। वैशेषिकमतेन शङ्कते — *न चेति — वैशेषिकमते द्वे एव प्रमाणे–प्रत्य-क्षानुमानरूपे । शब्दादीनान्तु प्रामाण्यमेव नास्ति अनुमानेऽन्तर्भावात् । तथा च वैशेषिकसूत्रम् "एतेन शाब्दं व्याख्यातम्" † (अ. ९आ. २ सू. ३ ) एतेनेत्यस्य लैङ्गिकज्ञाननिरूपणेनेत्यर्थः । शाब्दमप्यनुमान-

† शाब्दम्=शब्दकरणकं ज्ञानम् इति यन्नैयायिकादीनामभिमतं तदप्येतेन लैङ्गिकत्वेन लिङ्गप्रभवत्वेनानुमानत्वेनैव व्याख्यातम् , यथा व्याप्तिपक्षधर्मताप्रतिसं-धानापेक्षं लैङ्गिकं तथा शाब्दमपि । अत्र हि आकाङ्क्षादिमत्पदस्मारितत्वं व्याप्यम्, पदार्थानां मिथः संसर्गवत्त्वं व्यापकम् इति व्याप्यव्यापकभावमादायानुमित्यैव शाब्दज्ञानोपपत्तौ शब्दरूपं प्रमाणान्तरं न स्वीकार्य्यमिति वैशेषिकाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेवेति भावः । तथाहि—एते पदार्थाः, परस्परं संसर्गवन्तः, आकाङ्क्षादिमत्पदैः स्मारितत्वात्, 'घटमानय' इति पदार्थसंसर्गवत् । ❀ समव्याप्ततयेति — स्वव्यापकत्व-स्वव्याप्यत्वोभयसंबन्धेन स्वविशिष्टतयेत्यर्थः । सहचरिततयेति यावत् । ❀ अनुमानमेवेति — अनुमानप्रयोगश्चेत्थम्—'घटमानय' इत्यादिपदानि, तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि, आकाङ्क्षादिमत्पदकदम्बकत्वात्, 'पटमानय' इति पदकदम्बकवत्, इति । अत एवोक्तं गौतमेन—"पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः" (न्या० सू० २।१।५३) इति । अन्नशब्दोच्चारणे मुखस्य पूर्णत्वापत्तेः, अग्निशब्दोच्चारणे मुखस्य दाहापत्तेः, असिशब्दोच्चारणे मुखस्यच्छेदापत्तेश्च न शब्दार्थयोस्तादात्म्यरूपः सम्बन्ध इति तदर्थः । तार्किकमते तु शब्दस्याकाशनिष्ठतया साध्यसाधनयोर्व्यधिकरणत्वान्न व्याप्येन शब्देन व्यापकार्थानुमानम् । ❀पक्षधर्मतेति—अनुमितौ व्याप्तिज्ञानस्य करणतया करणस्य च व्यापारवत्त्वनियमात् परामर्शरूपव्यापारोऽपेक्ष्यते । परामर्शश्च व्याप्तिविशिष्टपक्षधर्मता ( पक्षवृत्तिता ) ज्ञानरूपः यथा 'वह्निव्याप्यधूमवान् पर्वतः' इति । परामर्शज्ञानानन्तरम् 'पर्वतो वह्निमान्' इत्यनुमितिः । प्रकृते च नहि 'अर्थव्याप्यं पदम्' इति व्याप्तिज्ञानानन्तरम् 'अर्थव्याप्यपदवानयम्' इति परामर्शानन्तरं शाब्दबोधो दृश्यत इति पक्षधर्मताऽनपेक्षतया परामर्शादिकं विनैव बोधदर्शनात् शब्दस्य प्रमाणान्तरत्वमङ्गीकार्य्यम् । ननु शब्दस्य प्रमाणान्तरत्वे सर्वत्राकाङ्क्षादिरूपसामग्र्यन्तरकल्पने गौरवात् सर्वत्र व्याप्त्यादिकल्पनमेव न्याय्यः । एवञ्च क्लृप्तसामग्र्यैवोपपत्तौ सामग्र्यन्तरकल्पने लाघवमित्याह — ❀सिद्धीति — अनुमितिस्थले 'पर्वतो वह्निमान्' इति निश्चयसत्त्वे सिषाधयिषां विनाऽनुमिति र्न जायते । शाब्दबोधस्थले तु 'घटवद् भूतलम्' इति निश्चयात्मकसिद्धिसत्त्वेऽपि सिषाधयिषां विनैव 'घटवद् भूतलम्' इति वाक्योच्चारणे सति शाब्दबोधो जायते इति वैधर्म्यान्नानुमित्यात्मकं शाब्दज्ञानमिति भावः । यत्तु शाब्दानुमितिर्व्याप्तिज्ञानाद्यनपेक्षा विलक्षणैव, अन्यथा भिन्नविषयकप्रत्यक्षम् प्रति शाब्दसामग्र्या अनुमतिसामग्र्याश्च प्रतिबन्धकताद्वयकल्पने गौरवम् इत्याहु—'सिद्धीति' इति अवतरणमाहुः, तन्न व्याप्तिज्ञानानपेक्षाया अनुमितेरदर्शनात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—किञ्च पदमात्रात् पदार्थप्रत्ययस्य जायमानस्यानुमितित्वासम्भवः। 'पदेभ्यः स्मृतिरेव' इति तु न युक्तं तत्ताऽनुल्लेखाद् वाक्यादपि तदापत्तेश्च। किञ्च 'शाब्दयामि' इत्यनुव्यवसायान्न स्मृतित्वमनुमितित्वं वा तज्जन्यप्रत्ययस्य। किञ्च तथाऽनुव्यवसायप्रयोजिकायाः शाब्दत्वजातेस्तदवच्छिन्ने आकाङ्क्षादिज्ञानहेतुत्वस्य च कल्पनावश्यकत्वे तद्वृत्त्यनुमितित्वस्य व्याप्तिस्मृत्यादेश्च कल्पने गौरवम्।

शाब्दजप्रत्ययस्यानुमितित्वनिरासः

किञ्च सिद्धिसत्त्वेऽपि शाब्दबोधोदयेनानुमितेश्चानुदयेन सिद्धिप्रतिबन्ध्यताऽवच्छेदककोटौ शाब्दातिरिक्तत्वविशेषणदाने गौरवम्। न च तत्प्रत्यक्षादिज्ञाननाशादेव तत्रानुमितिः अनुभवविरोधात् सर्वत्र तथापत्तेश्चेति दिक्।

(रत्न०)—ननु सिषाधयिषाविरहविशिष्टसिद्धिसत्त्वेऽनुमितिरिव शाब्दबोधोऽपि न स्यात् प्रत्यक्षसामग्र्या बलवत्तया शाब्दबोधानुपयोगात्। यद्वा शाब्दातिरिक्तानुमितिं प्रति सिद्धेः प्रतिबन्धकत्वं कल्प्यत इति न दोष इत्यत आह—*किञ्चेति। *पदमात्रादिति — व्याप्तिस्मृतिमन्तरैवेत्यर्थः। पदार्थप्रत्ययस्य = शाब्दबोधस्य। *जायमानस्येति — अनुभवसिद्धस्येत्यर्थः। ननु पदात्पदार्थोपस्थितिर्नानुमित्यात्मिका किन्तु स्मृतिरूपैवेति नोक्तदोषोऽत आह — *पदेभ्य इति। *स्मृतिरेवेति — एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति विधयेति भावः। *एवेति — अनेन स्मृतिशाब्दबुद्ध्योर्निरासः। *तत्ताऽनुल्लेखादिति — तत्ता = अनुभूतता, भूतकालिकानुभवात्मकज्ञानीयविषयतेति यावत्। अयं भावः—स्मरणस्थलेऽनुभूतता प्रतीयते, शाब्दबोधे च नहि 'ज्ञातोऽयं घटः' इति स्मृतिविषयीक्रियत इति न शाब्दस्य स्मृतित्वम्। ननु शाब्दे तत्ताया अभानेऽपि लाघवात् स्मृतित्वमेवात आह — *वाक्यादपीति — अपिना पदसंग्रहः। ननु वाक्यजबोधस्थले पदार्थोपस्थितेः पूर्वं वाक्यार्थांशोद्बोधकसमवधानं न भवतीति नियमोऽत एव वत्ससादौ 'हरेऽव' इत्यादौ च विशि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टशक्त्या पदार्थोपस्थितिमात्रमुद्बोधकसमवधानाभावात् । तत उद्बोधकसमवधाने तदर्थविषयको वाक्यार्थबोधः । अत एव वाक्यार्थस्यापूर्वत्वम् । वाक्यार्थेऽपूर्वत्वञ्च—'शाब्दबोधप्राक्क्षणवर्त्तिशब्दजन्यस्मृत्यविषयत्वम्' इति वाक्यार्थस्य स्मृतित्वासम्भवोऽत आह—*किञ्च शाब्दयामीति—खण्डशः पदार्थानां संसर्गाणाञ्च स्मरणसम्भवेऽपि तेषां वाक्यार्थत्वाभावो विशिष्टस्यैव वाक्यार्थत्वात् । प्रत्येकज्ञानानन्तरमनुव्यवसायात्मकं ज्ञानविशिष्टविषयकं ज्ञानं जायते । यथा घटदर्शनानन्तरम् 'घटं चाक्षुषयामि' इति वह्न्यनुमित्यनन्तरम् 'वह्निमनुमिनोमि' इति तथा शाब्दज्ञानानन्तरम् 'घटं शाब्दयामि' इत्यनुव्यवसायस्यैव दर्शनात् 'स्मरामि' इत्यस्य 'अनुमिनोमि' इत्यस्य वाऽदर्शनान्न स्मृतित्वं नाप्यनुमितित्वं शाब्दस्येति भावः । *तज्जन्येति—शब्दजन्येत्यर्थः । शाब्दत्वादेव 'साक्षात्कृतमनुमितम्' इति वा नानुभवः किन्तु 'शब्दादागतम्' इत्येव । ननु यथा पदार्थोपस्थितेः स्मृतित्वनये शब्दजन्यत्वमात्रेण शाब्दत्वमितरस्मृतिविलक्षणः 'शाब्दयामि' इति व्यवहारश्च, न तु शक्तिज्ञानपदार्थोपस्थितिकार्य्यताऽवच्छेदकीभूतजातिविशेषाक्रान्तता तथा स्मृतित्वेऽपि तद्व्यवहारो युक्त एवात आह—*किञ्चेति—अयं भावः-शब्दजन्यज्ञानस्यानुमितित्वेऽपि 'शाब्दयामि' इत्यनुव्यवसायानुरोधेन शाब्दत्वजातिरवश्यं कल्पनीया स्यात्तथा शाब्दत्वरूपानुमितित्वव्याप्यधर्मावच्छिन्नरूपकार्य्यं प्रति आकाङ्क्षादिज्ञानस्य च कारणताया आवश्यकतया तत्रानुमितित्वस्य व्याप्तिस्मृत्यादेश्च कारणत्वकल्पनं विफलमेव गौरवञ्च । *सिद्धिसत्त्वेऽपीति—पर्वतादौ वह्निनिश्चयानन्तरं सिषाधयिषां विनाऽनुमितिर्न भवति शब्दप्रयोगानुपातिशाब्दबोधस्तु जायत इति 'शाब्दातिरिक्तानुमितिनिष्ठप्रतिबन्ध्यतानिरूपितप्रतिबन्धकतावती सिद्धिः' इति कल्पनेऽतिगौरवमित्यर्थः । ननु सिद्धिसत्त्वेऽपि परबोधनायानुमितिवत्परार्थः शाब्दोऽपि स्यादितिचेत्, न, अनुमित्साविरहात्, परार्थानुमितौ 'पर्वतो वह्निमान्, धूमात्, यो यो धूमवान् स स वह्निमान्' इतिवाक्यं प्रयुज्यते, शाब्दबोधस्तु परप्रयुक्तवाक्यात् स्वबोधार्थमिति तस्य परार्थत्वासम्भवात् । *प्रतिबन्ध्यतेति—तत्रानुमितौ 'शाब्दातिरिक्त' इति विशेषणमिति शब्दे, ज्ञाने, भेदे च प्रतिबन्ध्यताऽवच्छेदकता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पनीया स्यादिति भावः। ननु यद्यपि सिद्धिः प्रतिबन्धिका तथापि सिद्धेर्निश्चयात्मकज्ञानरूपतया क्षणद्वयावस्थायित्वेन तन्नाशानन्तरमेव शाब्दानुमितिरत आह—*न च प्रत्यक्षेति। *अनुभवेति—सिद्धिसत्त्व एवानुमितेरनुभवेन तद्विरोध इति भावः। ननु क्षणविलम्बस्य सूक्ष्मत्वान्नानुभवविरोधोऽनुभवस्य विसंवादित्वाच्चात आह—*सर्वत्रेति—शाब्दानुमितिस्थले तथा स्वीकारे 'पर्वतो वह्निमान्'इत्याद्यनुमितिस्थलेऽपि सिद्धिनाशानन्तरमनुमितिस्वीकारेणैवोपपत्तौ सिद्धेः प्रतिबन्धकत्वमिति सिद्धान्तभङ्गः। किञ्च यत्र 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इति चाक्षुषनिश्चयस्ततः सिषाधयिषा तत्रानुमितिर्जायतेऽत एव 'सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता' इति लक्षणे 'सिषाधयिषविरह' इति विशेषणं सङ्गच्छते। यदि सिद्धिनाशानन्तरमेवानुमितिस्तदा सिषाधयिषाकालेऽपीष्टानुमितिर्न स्यादितिभावः।

अपभ्रंशेऽपि शक्तिसत्त्वम्

मू०—सा च शक्तिः साधुष्विवापभ्रंशेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां तिरश्चां च बोधः। न हि तेषां तदैव तत्सम्भव इत्यन्ये।

न च साधुस्मरणात्ततो बोधः।

"ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः"।

(वाक्यप० कां० १ कारि० १५१)

"अम्बाम्बेति यदा बालः † शिक्ष्यमाणः (शिक्षमाणः) प्रभाषते।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः"॥

(वाक्यप० कां० १ कारि १५२)

इति हर्युक्तेः। अनुमानमत्र ज्ञानम्। साधुविषयकस्मरणेनेत्यर्थः। तद्विदाम्=साधुविदाम्। असाधोः साधुप्रकृतिकत्वात्सादृश्येन तज्ज्ञानमिति वाच्यम् साधुस्मरणं विनाऽपि बोधानुभवात्, तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च। तदर्थज्ञापकत्वेन स्मरणं

† "शिक्ष्यमाणोऽपभाषते" इति वाक्यपदीयपुस्तकस्थः पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तु नार्थोपस्थापकं शक्तताऽवच्छेदकानुपूर्व्यग्रहात्, तद्वाचक-सर्वनामस्मरणाननुभवाच्च, उच्चारितस्यैव बोधकत्वेन स्मृत-साधुतो बोधासम्भवाच्च ।

न च शक्तिभ्रमाद् बोधः, पूर्वपूर्वभ्रमाच्चोत्तरोत्तरभ्रम इति पामराणां शक्त्यग्रहेऽपि तद्भ्रमोपपत्तिरिति वाच्यम् घटत्वादि-विशिष्टघटादिरूपार्थनिरूपिताया घटादिपदवृत्तित्वेन गृहीताया भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च 'गगरी'पदादौ भ्रमानुपपत्तेः । यदि तु अशक्त्या केनचिद् 'गगरी'इति प्रयुक्ते अम्बाऽम्बेत्यादाविव 'घट' इति साधुशब्द-स्मरणात्प्रयोज्यस्य बोधे (न) तटस्थस्य 'गगरीशब्दादेवास्य बोधः' इति भ्रमेणाद्यस्य शक्तिभ्रमस्तन्मूलकश्चान्येषामपि । तदुक्तं हरिणा — "तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः" इति । ( वाक्यप० कां० १ कारि० १५० ) 'इव' शब्देन तदुपगमस्य भ्रमत्वं सूचितम् । तादात्म्यस्य शक्तित्वञ्च स्पष्टमेवोक्तम् । तदुक्तं जैमिनिना— " तदशक्तिश्चानुरूपत्वात् " ( मीमां०द० १।३।२८ ) इति, तद्भाष्यकृता च तत्रोक्तरीत्या शक्तिभ्रम उपपादित इत्युच्यते तदा प्रत्येकं तत्तत्संस्कृतस्य तत्तदपभ्रंशेन विनिगमनाविरहात्तेषु शक्तिः । न च सकलदेशशिष्टपरिगृहीतत्वं विनिगमकम् "शवतिर्गतिकर्मा कम्बोजेषु विकार एवैनमार्या भा-षन्ते" (महाभा० पस्पशाह्नि०) इत्यादिभाष्यरीत्या तत्तद्देशनियत-संस्कृतेषु शक्तिसिद्ध्यनापत्तेर्वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्यापत्तेश्च । तत्तद्देशीयशिष्टानां तत्त-द्भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं विना भ्रमत्वायोगाच्च । अत एव स्त्रीशूद्रबालानां प्रयुक्ते साधौ अर्थसंशये तदपभ्रंशेन निर्णयः ।

(रत्न०) — शक्तिस्वरूपं निरूप्य तदाश्रयस्वरूपमाह — *सा चेति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यवाचकभावरूपेत्यर्थः । ननु व्यवहारदर्शनस्य शक्तिग्राहकत्वं न सम्भवति जन्मसमये तद्बोधकशब्दाभावात् । शक्तिग्रहाभावे इष्टसाधनत्वज्ञानाभावेन स्तनपाने प्रवृत्त्यनापत्तिरत आह—*व्यवहारदर्शनेनेति—जन्मान्तरीयव्यवहारदर्शनं स्वसंस्कारद्वारा शक्तिस्मारकमित्यर्थः । संस्कारोद्बोधकश्च जीवनादृष्टमेवेति कल्प्यत इति भावः । *अत एवेति—पूर्वजन्मानुभूतशक्तिस्मरणादेवेत्यर्थः । *तिरश्चामिति—जडानां पश्वादीनां स्वजात्यनुसारेणैव प्रतिनियता काचित् प्रतिभा दृश्यतेऽतस्तेषामप्यनादिवासनयैव तद्ग्रहः । तदैव = आद्यबोधकाल एव । तत्सम्भवः = शक्तिज्ञानसम्भवः तदानीं तद्ग्राहकसामग्र्यभावात् । *अन्य इति—अनेनारुचिः सूचिता, बालादीनां प्रवृत्ताविष्टसाधनत्वप्रकारकज्ञानस्यैव प्रयोजकत्वेन जन्मान्तरानुभवजन्योद्बुद्धसंस्कारजन्येष्टसाधनत्वप्रकारकज्ञानेनैव प्रवृत्त्युपपत्तौ पदादिनिष्ठशक्तिस्मरणस्यानुपयोगात् । अत्र तार्किकाः—व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणादव्युत्पन्नानाञ्च तेन शक्तिभ्रमाद् बोधसिद्धेर्नापभ्रंशेषु शक्तिरिति । तत्राद्यं प्रथमं निराकरोति—*न चेत्यादिना । न चेत्यस्याग्रेतनेन 'वाच्यम्'इत्यनेनान्वयः।*ते साधुष्विति—ते = अपभ्रंशाः। साधुष्विति सप्तम्यर्थो विषयत्वम् । तथा चापभ्रंशाः साधुविषयकस्मरणद्वारा प्रत्ययोत्पत्तिहेतवः = शाब्दबोधजनका भवन्तीत्यर्थः । *अम्बाऽम्बेतीति—'अम्बा अम्बा' इति साध्वानुपूर्वीं शिक्ष्यमाणो बालो यदा अव्यक्तं प्रभाषते इत्यादिरूपेण अम्बाऽम्बेति पाठेऽन्वयः । म्बाम्बाम्बेति पाठे तु वक्ष्यमाणरीत्यान्वयः । यदा शिक्ष्यमाणः शिक्षां प्राप्यमाणः बालः 'म्बा म्बा म्बा' इत्यव्यक्तं भाषते तदा तेनाव्यक्तेन तद्विदाम् = साधुशब्दज्ञानवतां व्यक्ते = साधुशब्दविषयकज्ञाने सति निश्चयः = शाब्दबोधनिश्चयो भवतीत्यर्थः । *साधुप्रकृतिकत्वादिति—साधव एव शब्दा अशक्तैरभिधातृभिर्विभिन्नरूपतां नीता इति साधुप्रकृतिकत्वं तेषाम्, तदुक्तम् हरिणा—

"पारम्पर्यादपभ्रंशा निर्गुणेष्वभिधातृषु ।
प्रसिद्धिमागता ये तु तेषां साधुरवाचकः ।।
दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन्वादे बुद्धिविपर्ययः ।।" इति ।

(वाक्यप० कां० १ कारि० १५५।१५६)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' प्रकृते च साध्वसाध्वो र्नहि कश्चन सम्बन्ध इति स्मरणासम्भवोऽत आह—*सादृश्येनेति—'स्वघट-कयत्किञ्चिद्वर्णवत्त्वम्' एव सम्बन्धः, यथा 'घड़ा' इत्यनेन 'घट' इत्यस्य ज्ञानम्। समाधिमाह—*साधुस्मरणमिति। *अनुभवादित्रि—नन्वनुभव एव वैमत्यं कारणं विना कार्य्यानुभवस्य काप्यदर्शनेन मानाभावश्चेति फलबलेन तादृशनियमकल्पनान्न दोषोऽत आह—*तद्वाचकेति—अपभ्रंशबोध्यार्थवाचकसाधुशब्देत्यर्थः। ननु 'एतदर्थबोधकं किञ्चित्पदं भवेत्' इति सामान्यतः स्मरणाद् बोध इत्याह—*तद्वाचकत्वेनेति—शक्त-ताऽवच्छेदकानुपूर्वीरूपेण पदज्ञानस्यैव वाच्यार्थोपस्थापकत्वादिति भावः। नन्वपभ्रंशबोध्यार्थबोधकानामानुपूर्व्यवच्छिन्नानां तदादिसर्वनाम्नां स्मरणा-द्बोधोऽत आह—*तद्वाचकसर्वनामेति। नन्वनुभवे विप्रतिपत्तिरत आह—*उच्चारितस्यैवेति—"उच्चार्यमाणः शब्दः सम्प्रत्यायको भवति न संप्रतीय-मानः" (महाभा० १।१।६८) इति भाष्यात्तथैव लोके दर्शनाच्चेति भावः। एतावता प्रबन्धेन व्युत्पन्नानां साधुस्मरणेनापभ्रंशतो बोध इति निराकृतम्। अव्युत्पन्नानां शक्तिभ्रमाद्बोध इति निरस्यति—*न च शक्तिभ्रमादिति—नन्वन्यप्रकारत्वेन ज्ञातस्यैव तदभाववत्तत्प्रकारकज्ञानरूपभ्रमसम्भवेन पाम-राणां शक्तिप्रकारकघटादिसाधुपदविशेष्यकज्ञानाभावेन गगर्य्यादिशब्दे तद्भ्रमानुपपत्तिरत आह—*पूर्वपूर्वभ्रमाच्चेति—यस्य 'घटपदं घटत्वाव-च्छिन्ननिरूपितशक्तिमत्' इति ज्ञानं विद्यते तस्य यथाकथञ्चिद् 'गगरी' पदम् 'घटत्वावच्छिन्ननिरूपितशक्तिमत्' इति भ्रमो जातस्तदनन्तरम् 'गगरी' पदं घटत्वावच्छिन्ने शक्तम्' इति पामराणां ज्ञानपरम्परा जातेति प्राथमिक-ज्ञानगतभ्रमत्वमादायैव साजात्यादुत्तरोत्तरस्मिन् भ्रमत्वव्यवहार इति भावः। *घटत्वादिविशिष्टेति—घटत्वाद्यवच्छिन्नघटाद्यर्थनिरूपिता शक्तिः घटा-दिपदवृत्तिरिति घटादिपदवृत्तित्वनिष्ठप्रकारताकशक्तिनिष्ठविशेष्यताकत्वेन गृहीताया इत्यर्थः। *भिन्नानुपूर्वीकेति—अयम्भावः—तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकतया 'घड़ा' आदिपदे घटत्वरूपानुपूर्व्य-भाववत्तानिश्चयस्य सत्त्वेन शक्तताऽवच्छेदकानुपूर्वीमत्त्वज्ञानस्यैव शक्तिभ्र-मत्वनिश्चायकत्वाद् गगर्य्यादिपदे शक्तिभ्रमानुपपत्तिरिति। *साधारणधर्म-दर्शनाभावेनेति—अयं गगरीपदे भ्रमानुपपत्तेरेव हेतुः 'घड़ा' आदिपदे

८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वघटकयत्किञ्चिद्वर्णवत्त्वरूपसाधारणधर्मसत्त्वात् । *यदि त्विति—क-चिद्यदि चेति पाठः । अस्य—'शक्तिभ्रम उपपादित इत्युच्यते तदा'इत्यग्रेतनेन सम्बन्धः । *अशक्त्येति—अयम्भावः—प्रयोजकवृद्धेन 'घटम्' इति प्रयो-क्तव्ये 'गगरीम्' इति प्रयुक्ते साधुशब्दं जानतः प्र योज्यस्य गगरीमित्यपभ्रंशेन स्मृतेन 'घटम्' इति साधुशब्देन बोधो जातः । परन्तु व्यवहारं पश्यता शक्तिं जिज्ञासुना तटस्थेन बालेन 'गगरी' शब्दश्रवणोत्तरं घटानयने प्रवर्त-मानं तमुपलभ्य स्मृतेन घटपदेन तद्बोधमजानता 'गगरी' पदमेव घट-त्वावच्छिन्ननिरूपितशक्तिमत्त्वेन ज्ञातमिति तन्मते 'गगरी'इत्यस्यैव शक्त-ताऽवच्छेदकत्वेन ज्ञाततया तदभाववति तत्प्रकारकज्ञानस्यावरणाद् भ्रमत्वं सूपपादम् । तज्ज्ञानस्य भ्रमत्वेऽन्येषामपि तादृशज्ञानस्य भ्रमत्वम् । *तदुक्तं हरिणेति—तादात्म्यम् = अर्थतादात्म्यम् । उपगम्येव = अभेद-मापन्ना इव अर्थस्य प्रकाशका भवन्तीत्यर्थः । "ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः" इति पूर्वार्धम् । ते = अपभ्रंशाः । इवशब्देन तद्-वाचकत्वज्ञानस्य भ्रमत्वं सूचितम् । *तादात्म्यस्येति—'अयमर्थः' इत्यभेदेन व्यवहाराद्ध्यासमूलकं तादात्म्यमेव मुख्यम्, सम्बन्धान्तरकल्पने तु तस्यापि सम्बन्धान्तरमित्यनवस्था स्यात् । अविशेषादपभ्रंशेनाप्यर्थस्य तादा-त्म्यमिति हरिरप्याह—"तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः" इति । अत्र 'उपगम्येव' इति कथनेनापभ्रंशेनापि तादात्म्यमागतमितिभ्रमवारणा-याह— *इवशब्देनेति । उपगम्येवेतिपाठ इति नापभ्रंशेन तादात्म्यमिति-भावः । *शक्तित्वमिति — शक्तिव्यञ्जकत्वात्तादात्म्यस्य शक्तित्वमिति भावः । अपभ्रंशे शक्तिभ्रमे जैमिनिसम्मतिमाह — *जैमिनिनेति । *तदशक्तिश्चेति—तेषामपभ्रंशानां न शक्तिः किन्तु शक्तिभ्रमः अनु-रूपत्वात् = सादृश्यात्, गोरूपार्थबोधनाय प्रयोगस्तु गाव्यादेः । नन्विदं सूत्रमर्थान्तरपरत्वेनापि व्याख्यातुं † शक्यं व्याख्यास्यते चार्थान्तरपर-

† "अथ यदुक्तम्—अर्थोऽवगम्यते गाव्यादिभ्यः, अत एषामप्यनादिरर्थेन सम्बन्ध इति । तदशक्तिरेषां गम्यते । 'गो' शब्दमुच्चारयितुकामेन केनचिद-शक्त्या 'गावी' इत्युच्चारितम् । अपरेण ज्ञातम् 'सास्नादिमान्' अस्य विवक्षितस्त-दर्थे 'गौः' इत्युच्चारयितुकामः 'गावी' इत्युच्चारयति । ततः ( तस्मात् ) शिक्षित्वा ( शिक्षां प्राप्य ) अपरेऽपि सास्नादिमति विवक्षिते 'गावी' इत्युच्चा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वेनैवात आह—*तद्भाष्येति—मीमांसासूत्रभाष्यकृता शबरस्वामिना मदुक्तरीत्यैव व्याख्याय शक्तिभ्रम एवापभ्रंशेषु दर्शित इत्यर्थः । *तत्तदपभ्रंशेनेति—हेतौ तृतीया । *विनिगमनेति—एकतरपक्षपातिनी युक्तिर्विनिगमना । *शवतिरिति—कम्बोजदेशे शवधातुर्गत्यर्थे । विकारे (मृतके) अर्थे त्वार्य्यदेशे प्रयुज्यते ।एवमेव 'हम्म' 'रंह' इत्यादिधातवोऽपि सुराष्ट्रादिदेशनियता एवेति सकलदेशशिष्टपरिगृहीतत्वस्य संस्कृतेऽप्यभावात्तस्य विनिगमकत्वासम्भव इति भावः । न च शवादीनां सकलशिष्टापरिगृहीतत्वे मानाभावः पतञ्जलिनैव पस्पशायां तत्तद्देशनियतत्वस्योक्तत्वात् † । *वाचकस्य व्यञ्जकत्व इति—वाचकशब्दोऽपि व्यञ्जनया बोधक इत्यस्योदाहरण इत्यर्थः ।

यथा—"पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ पओहरं पेक्खि ऊण जइ वससि ता वससु ॥"
"पथिक नात्र संस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तदा वस ॥" इति संस्कृतम् ।

अत्र पयोधरो मेघः स्तनश्चेति श्लेषः । अत्र 'पओहर' शब्दो व्यञ्जनयोपभोगक्षमत्वस्य बोधकः । स च स्तनस्य वाचकः । अपभ्रंशस्य वाचकत्वाभावे तु वाचकोदाहरणासंगतिः स्यादितिभावः । यद्यपि वाच्यस्य व्यञ्जकत्वे उदाहरणमिदम् तथापि शब्दस्य वाचकत्वं विना तदर्थस्य वाच्यत्वासम्भवेन तथोक्तम् । *शिष्टानामिति—अर्थसाक्षात्का-

---

रयन्ति । तेन गाव्यादिभ्यः सास्नादिमानर्थोऽवगम्यते अनुरूपो हि गाव्यादिर्गोशब्दस्य" ( मीमां० द० शाब० भा० १।३।२८ ) इति भाष्यानुपूर्वी । ततश्च "तदशक्तिश्चानुरूपत्वात्" इति सूत्रस्यार्थस्तु तस्योच्चारयितुः करणवैकल्यादशक्तिरसामर्थ्यम् गोशब्दोच्चारणे इति शेषः । अनुरूपत्वात् तु तदर्थे 'गावी' इत्यस्योच्चारणम् इति। नहि तेषाम् अपभ्रंशानां न शक्तिरित्यर्थः । इत्येवाग्रे वक्ष्यते ।

† "एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते 'शव' इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते, दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु" इति "सर्वे देशान्तरे" इति वार्तिकस्थं भाष्यम् ( महाभा० पस्पशाह्नि० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रवान् शिष्टः । यथादृष्टार्थवक्तेति यावत् । *निर्विचिकित्सेति—निःसन्देहेत्यर्थः । *बाधकमिति—विपरीतबुद्धिजनकमित्यर्थः । नहि 'गगरी शब्दो वाचकत्वाभाववान्' इति कस्यचिद्बुद्धिरुदेतीति भावः । शक्तिभ्रमासम्भवस्थलं दर्शयति—*अत एवेति — अपभ्रंशानां शक्तत्वादेवेत्यर्थः। प्रयुक्ते = उच्चारिते, साधौ = साधुशब्दे, स्त्रीशूद्रबालानाम् इत्यस्य अर्थसंशये इत्यत्रान्वयः । *निर्णय इति — शक्तत्वेनोक्तसंस्कृतशब्दाज्ञानात्तदपभ्रंशेन निर्णय इत्यर्थः । अपभ्रंशस्यावाचकत्वे निर्णयासम्भव इति भावः । *प्रयुक्त इति—अस्य 'अन्येन' इत्यादिः ।

आर्यम्लेच्छाधिकरणतात्पर्यनिरूपणम् ।

मू०—आर्यम्लेच्छाधिकरणस्य तु इदं तात्पर्यम् । तत्र हि यद्यपि आर्याः 'यव'शब्दं दीर्घशूके प्रयुञ्जते तमेव च बुध्यन्ते म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते तमेव च बुध्यन्ते । 'म्लेच्छ'पदेनानार्याः । तथापि आर्यप्रसिद्धेर्बलवत्वाद् वेदे दीर्घशूकपरतैवेति सिद्धान्तितम् । तत्र हि "शवतिर्गतिकर्म्मा" इत्याद्युक्तभाष्याद् द्वयोरपि शक्तिग्रहाद्बोधेनोभयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्य्यप्रसिद्धेर्बलवत्त्वाद् वेदे तद्बोध एवोचित इति । एवञ्चानार्यैरपि यज्ञे दीर्घशूका ( यवाः ) एवोपादेया अयज्ञे ( पूर्वपक्षे ) त्वनार्य्यैः प्रियङ्गव एवोपादेया इति विशेषः । तदुक्तं हरिणा—

"शब्दतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः" इति ।

आर्याणां शिष्टत्वात्तत्प्रसिद्धेर्बलवत्त्वमिति बोध्यम् , न तु अनार्यप्रसिद्धेऽर्थेऽशक्तत्वेऽसाधुत्वे वा तात्पर्यम् । जैमिनिरप्याह—"तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात्" ( मीमां०द० १–३–८ ) इति । 'यव'शब्दे उभयथा शब्दार्थावगमाद् विकल्पः स्यादित्यर्थः । एवं पूर्वपक्षे सिद्धान्तसूत्रम् "शास्त्रस्थानां तन्निमित्तत्वात्" ( मीमां०द० १-३–९ ) इति । यः शास्त्रस्थानां शिष्टानां स शब्दार्थः, वेदे इति शेषः, तेषामविच्छिन्ना स्मृतिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्देषु वेदेषु च। ते (न) शिष्टा हि श्रुतिस्मृत्यवधारणे निमित्तमित्यर्थः। यत्तु "दीर्घशूकेषु शक्तः सादृश्यात् प्रियङ्गुषु प्रयुज्यते पूर्वसस्ये क्षीणे द्वयोरप्युत्पत्तेस्तच्च तयोः सादृश्यम्"† इति शबरस्वामी। अत्र वदन्ति, तदा एकस्य गौणत्वमिति विकल्पपूर्वपक्षासङ्गतिः। किञ्च "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इति दीर्घशूकान् यवान् दर्शयति वेद इति भवदुक्त्यसङ्गतिः प्रियङ्गूणामपि तथैवोत्पत्तेरन्यथा भवदुक्तसादृश्यासङ्गतिः, वाक्यशेषोऽप्युक्तयुक्तिमूलक इति दिक्॥

(रत्न०)—नन्वार्य्यम्लेच्छाधिकरणासङ्गतिस्तेनापभ्रंशानामशक्तत्वबोधनादत आह—*आर्य्येति।*अधिकरणेति—अधिकरणं नाम—विषयसन्देहपूर्वपक्षसिद्धान्तप्रतिपादको वेदवाक्यार्थनिर्णायको वाक्यविशेषः। आर्य्यम्लेच्छावधिकृत्य प्रवृत्तमधिकरणमार्य्यम्लेच्छाधिकरणमित्युच्यते। न ह्यार्य्यम्लेच्छाधिकरणेनापशब्दानामशक्तत्वं प्रतिपाद्यते, किन्तु वेदार्थनिर्णये तेषामेव तदधिकारित्वाद् वैदिकशब्दार्थसन्देहे यं शब्दं यत्रार्थे आर्य्याः प्रयुञ्जते तेन शब्देन तदर्थ एव ग्राह्य इति निर्णीयत इति भावः। आर्य्याः = शिष्टाः। तदुक्तं महाभाष्ये—"के पुनः शिष्टाः? वैयाकरणाः। कुत एतत्? शास्त्रपूर्विका हि शिष्टिः, वैयाकरणाश्च शास्त्रज्ञाः। यदि तर्हि शास्त्रपूर्विका शिष्टिः, शिष्टिपूर्वकञ्च शास्त्रम् तदितरेतराश्रयं भवति इतरेतराश्रयाणि च न प्रकल्पन्ते। एवन्तर्हि निवासतश्चाचारतश्च। स चाचार आर्य्यावर्ते एव। कः पुनरार्य्यावर्त्तः? प्रागादर्शात्प्रत्यक् कालकवनात्। दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन् आर्य्यावर्ते निवासिनो ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः" (महाभा०

---

† "यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियङ्गुषु भविष्यति, यदि प्रियङ्गुषु, सादृश्याद् यवेषु, किं सादृश्यम्? पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्चैतत्तयोः सादृश्यम्" इति तत्रत्यभाष्यानुपूर्वी (मीमां० द० शाब० भा० १।३।९)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

६।३।१०९ ) । एतेनार्य्यपदेनार्य्यावर्तनिवासिनां ग्रहणेऽन्येषामपि ग्रहणापत्तिरित्यपास्तम् । *दीर्घशूकेष्विति–दीर्घाः शूकाः ( यवस्योपरि स्थिताः कण्टकाः) येषां ते इत्यर्थः । *प्रियङ्गाविति—प्रियङ्गुः कङ्गुरिति केचित् । शरत्कालारम्भे एव कङ्गुः सिध्यति । ततश्च कङ्गोः पूर्वसस्यान्तर्गतत्वेन वाक्यशेषेण चोत्तरसस्येषु वर्णनात्प्रियङ्गुपदेन कङ्गुः कश्चन धान्यविशेषो बलियादिमण्डलेषु 'चीन' इति प्रसिद्धो ग्राह्यः तस्य च दीर्घशूकेन सह समानकालिकत्वदर्शनादित्युपाध्यायाः । विशेषजिज्ञासुभिः 'हिन्दी शब्द-सागर' नामके हिन्दीभाषाकोशे 'कंगनी' शब्दव्याख्या द्रष्टव्या । ननु म्लेच्छपदेन प्रसिद्धार्थग्रहणे वेदे तत्प्रसङ्गाभावाच्छङ्कैवासङ्गतेत्यत आह–*म्लेच्छपदेनेति–'म्लेच्छ' अव्यक्ते शब्द इति धात्वनुसारात् "न म्लेच्छितवै" (महाभा० पस्पशाह्नि० )— इत्यादि भाष्यप्रामाण्याच्च म्लेच्छा अपशब्दवक्तारस्तदाह — *म्लेच्छपदेनेति । *तत्र हीति – यवादिशब्दस्थले हीत्यर्थः । *द्वयोरपीति—आर्य्यम्लेच्छयोरित्यर्थः । प्रियङ्गुदीर्घशूकयोरिति तु न युक्तम् उत्तरत्र तृतीयस्येति दर्शनात्पूर्वोक्तार्थस्यौचित्यात् । *उभयत्रेति–प्रियङ्गुदीर्घशूकयोरित्यर्थः । *शक्तत्वेनेति – न तु लक्षणेति भावः । *विकल्पेति – प्रसिद्धिद्वयेन विकल्पः स्यादित्यर्थः । *बलवत्त्वादिति – आर्य्याणामेव वैदिककर्मण्यधिकारात्तत्प्रसिद्धेर्बलवत्त्वम् । अत्र 'यव' शब्देन दीर्घशूक एव ग्राह्यः—"यत्रान्या ओषधयो म्लायन्ते" इति वाक्यशेषादिति सिद्धान्तितं मीमांसाभाष्यकृता शबरस्वामिना । वार्तिककारास्तु "यत्रार्य्याणामेव संशयस्तत्रैव वाक्यशेषेण निर्णयोऽन्यथाऽऽर्यप्रसिद्धेर्बलवत्त्वादेव निर्णये वाक्यशेषवैयर्थ्यापत्तिः" इति वदन्ति । वस्तुतस्तु वारुणप्रघासिककरम्भपात्रेष्वेव 'यव' शब्देन दीर्घशूकस्य ग्रहणं स्यात्तत्रैव वाक्यशेषसत्त्वात् अन्यत्र वाक्यशेषाभावाद् विकल्प एव स्यात्तस्मात्प्रसिद्धित एव निर्णयः वाक्यशेषस्त्वभ्युच्चयत्वेनोक्त इत्यभिप्रायेणाह – *आर्य्यप्रसिद्धेरिति । *अनार्य्यैरपीति – अपशब्दभाषिभिरित्यर्थः । *यज्ञे दीर्घशूका एवेति — तत्र दीर्घशूकानामेवापूर्वजनकत्वनिर्णयात् । *अयज्ञे त्विति—तत्र स्वस्वव्यवहारस्यैव निर्णायकत्वात् । शब्दतत्त्वम् = शब्दविशेषार्थविशेषयोस्तादात्म्यम् । शिष्टाः = पूर्वोक्ता अतीन्द्रियार्थद्रष्टारः । ते हि योगबलादिन्द्रियव्यापारं विनापि शब्दा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थयोः सम्बन्धमवगच्छन्ति । ※व्यवस्थिता इति — प्रमाणत्वेनेति शेषः । ननु हरिकारिका-मीमांसाधिकरणयोर्मिथोविरोधस्तत्रार्य्यप्रसिद्धेर्बलवत्त्व-मुक्तम् अत्र तु शिष्टानाम्, शिष्टत्वञ्चोभयसाधारणमत आह— ※आर्य्याणामिति – 'आर्यप्रसिद्धिः' इत्यत्र'आर्य्य'पदेन शिष्टानामेव ग्रह-णम् । शिष्टाश्च आर्य्या एव न तु अनार्य्या इति भावः। ※बोध्यमिति – अत्र पूर्वोक्तस्य 'तात्पर्य्यम्' इत्यस्यान्वयः। एवञ्चानार्य्यप्रसिद्धार्थनिरूपिताशक्त-त्वेऽसाधुत्वे वा नाधिकरणस्य तात्पर्य्यमिति भावः। ※तेष्वदर्शनादिति— "यवमयश्चरुः, वाराही उपानहौ, वैतसे कटे, प्राजापत्यान् सञ्चिनोति" इति वेदवाक्ये 'यव''वराह''वेतस'शब्दान् समामनन्ति । तत्र केचिद्दीर्घ-शूकेषु यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु । वराहशब्दं केचिच्छूकरे केचित् कृष्णशकुनौ । वेतसशब्दं केचिद् बञ्जुलके केचिज्जम्ब्वाम् । (मीमां० द० शाब० भा० १।३।८) तेषु विरोधस्यादर्शनात् = उभयथापदार्थबोधात् । समा विप्रतिपत्तिः = तुल्यज्ञानम्, तथा च वार्तिकम्—

"स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद्द्वयोरपि" ॥ इति

शब्दार्थस्य लोकप्रमाणत्वेन विरोधाभावात् समा विप्रतिपत्तिः = विकल्पः स्यादिति पूर्वपक्षे सिद्धान्तसूत्रम् "शास्त्रस्थानां तन्निमित्तत्वात्" इति, "यवशब्दो यदि दीर्घशूकेषु प्रसिद्धः सादृश्यात्प्रियङ्गुषु भविष्यति । यदि प्रियङ्गुषु प्रसिद्धस्तर्हि सादृश्याद् यवेषु । किं सादृश्यम् ? पूर्वसस्ये (शारदे) क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्चैतत्तयोः सादृश्यम् । कः पुनरत्र निश्चयः ? यः शास्त्रस्थानां स शब्दार्थः । के शास्त्रस्थाः ? शिष्टाः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च । तेन शिष्टा निमित्तं श्रुतिस्मृत्य-वधारणे । ते हि एवमामनन्ति यवमयेषु करम्भपात्रेषु विहितेषु वाक्य-शेषम् (अस्यामनन्तीत्यत्रान्वयः) । 'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इव उत्तिष्ठन्ति' इति दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनादविच्छिन्नपारम्पर्य्यो दीर्घशूकेषु यवशब्द इति गम्यते । तस्मा-त्प्रियङ्गुषु गौणः । तस्माद् दीर्घशूकानां पुरोडाशः कर्त्तव्यः । तस्मात् 'वराहं गावोऽनुधावन्ति' इति वाक्यशेषेण शूकरे वराहशब्दम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शयति, अप्सुजो वेतस इति वञ्जुले वेतसशब्दम् । शूकरं हि गावोऽनुधावन्ति । वञ्जुलोऽप्सु जायते । जम्बूवृक्षः स्थले गिरिनदीषु वा" (मीमां० द० शाब० भा० १।३।९) इति सिद्धान्तः । अत्र शबरस्वामिना "प्रियङ्गुषु (यवशब्दो) गौणः" इत्युक्तं तच्चासङ्गतमित्याह—॥यत्त्विति । ॥पूर्वपक्षासङ्गतिरिति – द्वयोस्तुल्यत्वे विकल्पसन्देह उचितः, एकस्य गौणत्वे तु गौणत्वादेव विकल्पासम्भव इति भावः । ॥भवदुक्त्यसङ्गतिरिति – पूर्वसस्ये क्षीणे सत्युभयोरपि मोदमानत्वे उत्थानकर्तृत्वरूपसादृश्योक्तिरसङ्गता स्यादिति भावः । नन्वार्य्यप्रसिद्धेर्बलवत्वाद् दीर्घशूकग्रहणे वेदस्थवाक्यशेषासङ्गतिर्वैयर्थ्यादत आह—॥वाक्यशेषोऽपीति । ॥उक्तयुक्तीति—आर्य्यप्रसिद्धिबलवत्त्वरूपेत्यर्थः ।

आर्य्यम्लेच्छयोस्तुल्यं शिष्टत्वं शब्दापशब्दयोस्तुल्यं शक्तत्वञ्च

मू०—न्यायभाष्यकारोऽपि† "आप्तोपदेशः शब्दः" (न्या० सू० १।१।७) इति सूत्रे "अर्थसाक्षात्कारवानाप्तः स यथादृष्टार्थबुबोधयिषया यं प्रयुङ्क्ते स प्रमाणशब्द इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणम्" इत्याह । तत्र ऋषिः = वेदः, म्लेच्छः = अपशब्दवक्ता । ततः सूत्रकृता "सामयिकः शब्दादर्थप्रत्ययः" (वैशे०सू० ७।२।२०) इति प्रमाणत्वेन लक्षितशब्दमात्रजप्रत्ययस्य तुल्यमेव सामयिकत्वमुक्तम् । सामयिकत्वम् = 'समय (संकेत) गृहीतसम्बन्धजन्यत्वम्' इति न ऋषीणां विरोधः । काव्ये च्युतसंस्कृतिदोषस्य दूषकताबीजं तु साधुपदसमुदायमध्येऽसाधुपददर्शनेन विप्रसभायां चाण्डालदर्शनेनेव सहृदयोद्वेग एवेति बोध्यम् । साधुत्वं तु नापभ्रंशानां शिष्टैर्धर्मबुद्ध्या तदप्रयोगात् । न चैवं ततो

† "आप्तः खलु साक्षात्कृतधर्मा यथा दृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणमर्थस्याप्तिः तया प्रवर्तते इत्याप्तः, ऋष्यार्यम्लेच्छानां समानं लक्षणम्, तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते इति । एवमेभिः प्रमाणैः देव-मनुष्य-तिरश्चां व्यवहाराः प्रकल्पन्ते नातोऽन्यथेति" इति तु न्यायभाष्यपुस्तके सांप्रतमुपलभ्यमानः पाठः । नागेशेन तु तद्भावार्थ एवोपरि निर्दिष्टः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधानापत्तिः असाधुत्वनिश्चयस्य तत्प्रतिबन्धकत्वादिति वाच्यम् तत्सत्त्वेऽपि ततो बोधदर्शनेन तस्य तदप्रतिबन्धकत्वात् । साधुत्वं च 'व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठपुण्यजनकताऽवच्छेदको जातिविशेषः' । तदुक्तम्—"एकः पूर्वपरयोः" (पा०सू०६।१।८४) इति सूत्रे भाष्ये "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके (च) कामधुग्भवति" इति। सम्यग् ज्ञातः=सम्यक्त्वेन=साधुत्वेन ज्ञातः, शास्त्रान्वितः=शास्त्रव्युत्पादनमार्गेणानुसंहितः, सुप्रयुक्तः=शिक्षोक्तरीत्या प्रयुक्तः । तस्य च शिष्टप्रयोगकोशव्याकरणाद्यनुमापकम् ॥

(रत्न०)—नव्यनैयायिकभ्रममपाकुर्वन्नपभ्रंशस्य शक्तत्वे प्रमाणान्तरमाह—*न्यायेति—आप्तस्य भ्रमादिशून्यस्य य उपदेशः स शब्द इत्यर्थः । पूर्वमाप्तलक्षणं वैदिकाभिप्रायेण, अत्र तु लोकवेदोभयसाधारण्येनाह—*अर्थसाक्षादिति । नन्वत्र ऋष्यार्य्येत्यत्र ऋषिपदं व्यर्थमार्य्यपदेनैव गतार्थत्वादत आह—*ऋषिर्वेद इति—वेदेनेत्यर्थकात् 'तदुक्तमृषिणा' इति दर्शनात्। ननु मुख्यम्लेच्छस्य प्रकृतानुपयोगोऽत आह—*म्लेच्छ इति । अपभ्रंशे शक्तौ न्यायभाष्यप्रामाण्यमुपन्यस्य सूत्रप्रामाण्यमाह†—* सामयिक इति—शब्दजन्योऽर्थविषयको बोधः सामयिकः= सङ्केतकृतः। अत्र 'शब्द' शब्देन शब्दापशब्दयोरुभयोरपि ग्रहणादुभयोरपि शक्तत्वं सूचितमिति भावः । ननु नहि संकेतज्ञानजन्यो बोधः किन्तु शक्तिज्ञानजन्यः संकेताच्च भिन्ना शक्तिरिति शाब्दबोधस्य सामयिकत्वमसङ्गतमत आह—*सामयिकत्वञ्चेति—समयेन=संकेतेन तादात्म्यादिरूपेण गृहीतो यः सम्बन्धः शक्तिरूपस्तज्जन्यत्वमित्यर्थः। *ऋषीणाम् इति—वैयाकरणनैयायिकऋषीणामित्यर्थः । वैयाकरणैः शाब्दबोधस्य समयगृहीतसम्बन्धजन्यत्वं नैयायिकैः साक्षात्समयजन्यत्वमुक्तमिति न विरुध्यत इत्यर्थः । अत्र 'समय'पदस्य समयगृहीतसम्बन्धे लाक्षणिकत्वात् । ननु

---

† साम्प्रतम् "सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य" इति न्यायसूत्रपाठ उपलभ्यते । इदं सूत्रं तु वैशेषिकदर्शनस्थम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदार्थस्य सामयिकत्वं न सम्भवति वेदवाक्यस्य व्यावहारिकवाक्यभिन्नत्वेनार्थेनाज्ञातसम्बन्धत्वात् । तत्कल्पने संकेतापातात्सापेक्षप्रामाण्यापत्तिरिति चेत्, न लोकवेदयोरर्थभेदाभावाद्वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकतया संकेतान्यानपेक्षतयाऽनपेक्षमेव प्रामाण्यम् । नन्वपभ्रंशे शक्तिस्वीकारे काव्ये च्युतसंस्कृतेर्दोषत्वं न स्यात्तद्बीजस्य शाब्दबोधाजनकत्वस्याभावादत आह—*काव्ये च्युतसंस्कृतीति—तत्र नहि शाब्दबोधाजनकत्वं बीजं किन्तु हृदयोद्वेगकरत्वमेव बीजमिति भावः । तल्लक्षणं तु काव्यप्रदीपकृता—"यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धं यत् तत् तद्भाषायां च्युतसंस्कृतीत्यर्थः" इत्युक्तम् । तदुदाहरणं यथा—

"गाण्डीवी कनकशिलानिभं भुजाभ्याम् ।
आजघ्ने विषमविलोचनस्य वक्षः ॥" (किरातार्जु० १७।६३)

"आङो यमहनः" ( पा०सू० १।३।२८ ) "स्वाङ्गकर्मकाच्च" इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम् । इह तु तदुल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम्' इति ( साहि०दर्प०परि० ७ कारि० ४ ) । *पददर्शनेनेति — पदश्रवणेनेत्यर्थः । नन्वपभ्रंशानां शक्तत्वे साधुत्वापत्तिशक्तत्वस्यैव साधुत्वादत आह—*साधुत्वं त्विति । *धर्मबुद्ध्येति—साधुत्वस्य पुण्यजनकताऽवच्छेदकधर्मरूपत्वादितिभावः । ननु दन्त्यमध्यात् 'अस्व' शब्दाद् वाजिबोधादर्शनेन शाब्दबोधेऽसाधुत्वनिश्चयस्य प्रतिबन्धकत्वमत आह—*न चैवमिति । तस्य = असाधुत्वनिश्चयस्य । *तदप्रतिबन्धकत्वादिति—असाधुत्वनिश्चयसत्त्वेऽपि संस्कृतमविदुषामपभ्रंशतो बोधेन तन्निश्चयस्य शाब्दबोधाप्रतिबन्धकत्वादित्यर्थः । नन्वपभ्रंशेऽसाधुत्वे मानाभावोऽत आह—*साधुत्वञ्चेति । *अर्थविशिष्टेति—एतेन यस्य यदर्थबोधकत्वं तदर्थविशिष्टस्यैव तस्य साधुत्वं सूचितम् । *पुण्यजनकेति—समवायसम्बन्धावच्छिन्नपुण्यविशेषत्वावच्छिन्नकार्य्यतानिरूपितस्वाभिव्यञ्जककण्ठाद्यभिघातजनककृतिमत्वसम्बन्धावच्छिन्न व्याकरणबोधितशिष्टप्रयुक्तशब्दनिष्ठ कारणताऽवच्छेदकेत्यर्थः । शिष्टप्रयुक्तत्वञ्च साक्षात्परम्परया वा । तेन शिष्टैः साक्षादुच्चरितानां व्याकरणव्युत्पाद्यानामनुकरणानां बाहुलकादिना बोधितानाञ्च संग्रहः । एतेन सूर्य्यत्वचन्द्रत्वोभयधर्मावच्छिन्न एव पुष्पवन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदस्य, बहुवचने एव दारादिशब्दस्य च साधुत्वम्, अन्त्यादिपरस्य वघ्यादेरसाधुत्वञ्च न स्यादित्यपास्तम्। ननु तस्य पुण्यजनकत्वे माना-भावोऽत आह—*तदुक्तमिति।

मू०—लाक्षणिकेष्वपि शक्यार्थमादायैव पदस्य साधुत्वं पदान्तरसम्बन्धेऽन्वयाद्यनुपपत्त्या शक्यताऽवच्छेदकारोपेणैव लक्ष्यार्थ-बोधात्। 'गोपी' इत्यादौ प्रक्रियादशायाम् 'गोप' इति प्रातिपदिकस्य गोपत्वारोपेण तत्स्त्रीबोधकत्वानुमानम् "पुंयोगादाख्यायाम्" (पा० सू० ४।१।४८) इति शास्त्रतः।

शक्यताऽवच्छेदकरूपेण बोधकतया लाक्षणिकानामपि साधुत्वम्

"लिङ्गं लिङ्गपरिज्ञाने सूत्रं प्रत्ययशासकम्।
सोऽयमित्यभिसम्बन्धात्पुंशब्दे स्त्र्यभिधायिता"॥

इति हर्य्युक्तेः। अत एव 'यदिह परिनिष्ठितं तत्साधु' इत्यर्थापत्तिलभ्यवाक्यात् 'साधुत्वबोधकं व्याकरणम्' इति भाष्यं सङ्गच्छते। तद्बोधकं व्याकरणमद्यत्वे पाणिनीयमेवेत्यपि भाष्ये स्पष्टम्। एवञ्च पाणिनीयव्याकरणव्युत्पत्तिज्ञानपूर्वकं साधुत्वेन ज्ञातसाधुशब्दप्रयोगाद्धर्म इति बोध्यम्। अत एव "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" † इति भाष्ये उक्तम् "वाचकत्वाविशेषेऽपि (वा) नियमः पुण्यपापयोः"। (वाक्यप० कां०३ समुद्दे०२ कारि० ३०) इति हरिणाऽप्युक्तम्।

(रत्न०)—ननूक्तसाधुत्वस्यार्थनियन्त्रिततया तटादौ गङ्गादिपदस्यासाधुत्वापत्तिरत आह—*लाक्षणिकेष्विति। *शक्यार्थमादायेति—स्वार्थे संसाधितस्य पदस्य लक्षणया बोधकत्वम्। विभक्त्यन्ते शक्तिविरहात् शक्यसम्बन्धरूपलक्षणाया वक्तुमशक्यत्वे तु स्वार्थे संसाधितपदघटकप्राति-

† "एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च तत्र धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति। "एवं क्रियमाणमभ्युदयकारि भवतीति" इति तु महाभाष्ये पस्पशाह्निके पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदिकस्य लक्षणया बोधकत्वं बोध्यम् । अत एव 'गङ्गायां घोषः' इत्यादौ स्त्रीत्वप्रयुक्तटाबादिसिद्धिः, प्रथमप्रवृत्तकार्य्यबाधायोगात्, नपुंसकह्रस्वत्वञ्च न। ननु शक्यार्थमादाय विभक्त्युत्पत्तौ विभक्त्यर्थान्वयः शक्यार्थ एव स्यात्। किञ्चान्यार्थे व्युत्पादितस्यान्यत्रप्रयोगेऽसाधुत्वापत्तिस्तदवस्थैवात आह — ॐशक्यताऽवच्छेदकारोपेणेति — एवञ्च तटादेरपि प्रवाहत्वावच्छिन्नत्वात्प्रकृत्यर्थताऽवच्छेदकावच्छिन्नत्वेन विभक्त्यर्थान्वय उपपद्यत इति भावः । अत एव 'गङ्गायां मीनघोषौ स्तः' इति सङ्गच्छते । स्वार्थे संसाधितस्य लक्षणया बोधकत्वे स्वलिङ्गात्यागेऽपि क्वचिच्छास्त्रप्रामाण्यात्स्वलिङ्गत्यागोऽपीत्याह — ॐगोपीत्यादाविति — एवञ्च पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्तमानात्पुंबोधकाच्छब्दान्ङीषित्यर्थकेन "पुंयोगादाख्यायाम्" ( पा०सू० ४।१।४८ ) इत्यनेन 'ङीष्' सिद्धिः । नन्वेवं या स्वयं गाः पालयति तत्र गोपालनकर्तृत्वरूपप्रवृत्तिनिमित्तस्य स्वत एव सत्त्वेन तदभाववति तत्प्रकारकज्ञानरूपारोपस्यासम्भवान्ङीषोऽनापत्तिरिति चेत्, न, तत्र 'गोपा' इत्यस्यैवेष्टत्वात् । एतेन पुंयोगे 'अजी' इतिवदन्तः परास्ताः पुंयोगहेतुकारोपितप्रवृत्तिनिमित्तप्रकारकबोधजनकादेव ङीषो विधानात्। ननु पूर्वं स्त्रीबोधाभावान्ङीषोऽप्राप्तिरत आह — ॐप्रक्रियेति — तत्र गोपत्वारोपेण ङीषो निमित्तं स्त्रीबोधकत्वम् आनुमानिकमिति भावः । ननु तात्पर्य्यग्राहकाभावादनुमाने मानाभावोऽत आह — ॐपुंयोगादिति । शास्त्रमेवानुमाने मानमित्यत्र लिङ्गमाह — ॐलिङ्गमिति — प्रत्ययशासकम् पुंयोगादिति सूत्रम् स्त्रीलिङ्गपरिज्ञाने लिङ्गमनुमापकमित्यर्थः । ननु पुंवाचकस्य स्त्रीवाचकत्वासम्भव इत्याह— ॐसोऽयमिति । अयम्भावः—गोपालनादिरहितायां स्त्रियां पुंवाचकस्य वृत्तौ=प्रवृत्तौ दाम्पत्यादिसम्बन्ध एव निमित्तम्। यथा लक्षणायां सामीप्यादिसम्बन्धो लिङ्गम् । स च सम्बन्धो दाम्पत्यमेवेति नाग्रहः । अत एव 'देवकी' 'केकयी' 'श्याली' 'दिनकरी' इत्यादिप्रयोगाः सङ्गच्छन्ते । परे तु भाष्याद्दाम्पत्यसम्बन्धस्यैव लाभादेषामसाधुत्वमेव । प्रामाणिकत्वे गौरादित्वं बोध्यम् । नन्वेवमपि तत्तदर्थे तत्तच्छब्दस्य व्याकरणव्युत्पाद्यत्वमेव पुण्यजनकतावच्छेदकं तदेव च साधुत्वमास्तां कृतं जातिविशेषाङ्गीकारेणात आह— ॐअत एवेति । अयम्भावः—यदि तत्तत्कार्य्यविधान एव व्याकरणस्य तात्पर्यं तदा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"साध्वनुशासनेऽस्मिन् शास्त्रे" ( महाभा० १।१।१ ) इति भाष्यविरोधो व्याकरणस्य साध्वनुशासनत्वभङ्गश्चेति साधुत्वविधायकत्वं तत्तत्कार्य्यविधायकत्वं च शास्त्राणां स्वीकार्य्यमिति साधुत्वजातिरावश्यिकीति । ननु शास्त्राणां साधुत्वविधायकत्वे परस्परविरोधेन कस्यापि साधुत्वं न स्यादितिचेन्न अप्रवृत्तनित्यविध्युद्देश्यताऽवच्छेदकानाक्रान्तो यः स्वविहितकार्य्यघटितस्तत्रैव पुण्यजनकतावच्छेदकीभूतसाधुत्वस्य बोधनेन विरोधाभावात् । अभ्यनुज्ञाप्रयोजकसाधुत्वन्तु स्वविहितकार्य्यघटितस्यैवेति न दोषः । *अर्थापत्तीति—अर्थस्य व्याकरणगतसाध्वनुशासनत्वोपपादकस्य साधुत्वस्यापत्तिः कल्पना। यथा 'पीनो देवदत्तः' इत्यत्र पीनत्वोपपादकस्य रात्रिभोजनरूपार्थस्य कल्पना। प्रसङ्गादाह—*तद्बोधकञ्चेति—साधुत्वबोधकमित्यर्थः । *प्रयोगाद्धर्मइति—शास्त्रव्युत्पत्तिज्ञानपूर्वकप्रयोगादित्यर्थः । तेन केवलज्ञानप्रयोगयोर्व्यवच्छेदः प्रयोगमात्राद्धर्मोत्पत्तौ शास्त्रवैयर्थ्यापत्तेः । ज्ञानमात्रादित्यपि न, भाष्ये दूषितत्वात् ।

अपभ्रंशे शक्तिसाधनम्

मू०—किञ्चापभ्रंशे शक्त्यंशे कदापि कस्यापि व्यवहर्त्तुर्बाधादर्शनेन न तत्र शक्तिज्ञानस्य भ्रमत्वम् असति बाधके प्रमात्वस्यैवौचित्यात् । किञ्चैवमृषीणामार्षज्ञानेन तदभावनिश्चयात्तेषां भ्रमासम्भवेन ततो बोधानापत्तिः । किञ्च प्रमाणानां सम्बद्धार्थबोधकत्वेन तेषामपि अर्थेन सम्बन्ध आवश्यकः । अत एव 'गौः' इत्यस्य शब्दस्यार्थे बहवो 'गावी' 'गोणी' 'गोता' 'गोपोतलिका' इत्यादयोऽपभ्रंशा वर्तन्ते' इत्यर्थकम् 'गौः' इत्यस्य शब्दस्य गाव्यादयोऽपभ्रंशा इति भाष्यम् (महाभा० पस्पशाह्नि०) आञ्जस्येन सङ्गच्छते। अत एव धर्मार्थत्वं साधूनामुक्तं भाष्ये †। एतेन

† "यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥
कः ? वाग्योगविदेव । कुत एतत् ? यो हि शब्दान् जानाति अपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः एवमपशब्दज्ञानेऽप्यधर्मः । अथवा भूया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"अर्थाय ह्येते उच्यन्ते शब्दाः न धर्माय" इति शबरस्वाम्युक्तमपास्तम् ।

जैमिनिसूत्रस्याप्ययमर्थः—अपभ्रंशा अपि साधवः तेऽपि हि साधयन्त्यर्थमिति पूर्वपक्षे 'अन्यायोऽनेकसाधुशब्दत्वम्' † इति केचिदेव साधवो न सर्व इति मनसि निधाय तर्हि साधौ प्रयोक्तव्ये असाधूच्चारणं कथमित्याशङ्क्य "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" (मीमां०द० १।३।२५) इति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनाद् "यथा शुष्के पतिष्यामीति कर्दमे पतति, तथा साधौ प्रयोक्तव्येऽसाधोः प्रयोगः" इत्युक्तम् ॥

(रत्न०)–"समानायामर्थावगतौ" इतिभाष्यात्पुनः स्मृतामपभ्रंशे शक्तिं सिंहावलोकनन्यायेन साधयति—❀किञ्चेत्यादिना । ❀भ्रमत्वमिति—अयम्भावः–यत्रोत्तरकाले बाधनिश्चयस्तत्रैव पूर्वज्ञानस्य भ्रमत्वं कल्प्यते। अपभ्रंशस्थले तु शक्त्यभावप्रकारकापभ्रंशविशेष्यकज्ञानरूपबाधस्योत्तरकालेऽदर्शनेन न ह्यपभ्रंशनिष्ठशक्त्यंशे भ्रमत्वम् इति । ❀आर्षज्ञानेनेति—दिव्यज्ञानेनेत्यर्थः । भ्रान्तिरहितानामेव ऋषित्वान्निश्चये हेतुः । ❀तदभावनिश्चयादिति—अपभ्रंशे वस्तुतः शक्त्यभावे तेषां तदभाव (शक्त्यभाव) निश्चयादित्यर्थः । दोषान्तरमाह—❀किञ्चेति । प्रमाणानाम्=प्रमाणत्वेन स्वीकृतसाधुशब्दानाम्। ❀सम्बद्धार्थेति–शक्तिरूपसम्बन्धेन सम्बद्धार्थेत्यर्थः । तेषामपि=अपभ्रंशानामपि । ❀अत एवेति—अपभ्रंशानामप्यर्थेन सह सम्बन्धसत्त्वादेवेत्यर्थः । नन्वसाधोः साधु

---

नधर्मः प्राप्नोति । भूयांसोऽपशब्दाः । अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा—'गौः' इत्यस्य 'गावी' 'गोणी' 'गोता' गोपोतलिका' इत्येवमादयोऽपभ्रंशाः" इत्यादिना प्रक्रम्याग्रे च "समानायामर्थावगतौ शब्देन चापशब्देन च तत्र धर्मनियमः क्रियते 'शब्देनैवार्थोऽभिधेयो नापशब्देन' इति एवं क्रियमाणमभ्युदयकारि भवतीति" इति साधुशब्दप्रयोगस्य धर्मार्थत्वमुक्तं महाभाष्ये पस्पशायाम् ।

† "अन्यायश्चानेकशब्दत्वम्" (मीमां० द० १।३।२६) इति मीमांसासूत्रपाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकृतित्वेन प्रकृतिविकृतिभावरूपसम्बन्धषष्ठ्यैव "गौरित्यस्य" इति भाष्यसङ्गतिरत आह—*अत एवेति—अपभ्रंशानां शक्तत्वादेवेत्यर्थः। *धर्मार्थत्वमिति—"समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः क्रियते" इति भाष्ये शक्तत्वस्य तुल्यत्वाद्धर्मार्थत्वमुक्तमिति भावः। एतेन = उक्तभाष्यविरोधेन। अर्थाय = अर्थप्रत्यायनाय। *जैमिनिसूत्रस्येति—"तदशक्तिश्चानुरूपत्वात्" (मी०द०१।३।२८) इत्यस्येत्यर्थः। *अयमर्थ इति—तेषां साधूनामेवाशक्त्योच्चारणमनुरूपत्वात् = अर्थतोऽवयवतश्चानुरूपत्वादित्यर्थः। *अपभ्रंशा अपीति—तदुक्तं शबरस्वामिना—"किमत्रैकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरेऽपभ्रंशाः, उत सर्वेऽनादयः? सर्वे इति ब्रूमः। कुतः? प्रत्ययात्। प्रतीयते हि गाव्यादिभ्यः सास्नादिमानर्थः। तस्मादितो वर्षशतेऽप्यस्यार्थस्य सम्बन्ध आसीदेव, ततः परेण, ततश्च परतरेणेति अनादिता। कर्त्ता चास्य सम्बन्धस्य नास्तीति व्यवस्थितमेव। तस्मात्सर्वे साधवः सर्वैर्भाषितव्यम्। सर्वे हि साधयन्त्यर्थम्। यथा हस्तः करः पाणिरिति। अर्थाय ह्येते उच्चार्य्यन्ते नादृष्टाय। न ह्येषामुच्चारणे शास्त्रमस्ति। तस्मान्न व्यवतिष्ठेत कश्चिदेक एव साधुरितरेऽसाधव इति" (मीमां० द० शाबरभा० १।३।२४) इति पूर्वपक्षे "अन्यायश्चानेकशब्दत्वम्" ( मीमां०द० १।३।२६ ) इति सूत्रस्य "न चैष न्यायो यत् सदृशाः शब्दा एकमर्थमभिनिविशमानाः सर्वेऽविच्छिन्नपारम्पर्या एवेति। प्रत्ययमात्रदर्शनादभ्युपगम्यते। सादृश्यात्साधुशब्देऽप्यवगते प्रत्ययोऽवकल्प्यते। तस्मादमीषामेकोऽनादिरन्येऽपभ्रंशाः"। नन्वेवं पर्यायाणामप्यसाधुत्वं स्यादत आह—'हस्तः' 'करः' 'पाणिः' इत्येवमादिषु त्वभियुक्तोपदेशादनादिरमीषामर्थेन सम्बन्धः" ( मीमां०द०शाब०भा० १।३।२६ ) इति सिद्धान्तः। तथा च केचिदेव साधवो न सर्वे इत्यर्थं मनसि निधाय तर्हि साधौ प्रयोक्तव्येऽसाधूच्चारणं कथमित्याशङ्क्य "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" ( मी० द० १।३।२५ ) इति सूत्रेण शब्दविषयकप्रयत्ननिष्पत्तेरपराधस्य यत्नान्तरकरणरूपवैपरीत्यस्योच्चारयितुर्भागित्वमित्यर्थकेन प्रमादाद् गाव्यादयः प्रयुज्यन्त इत्युक्तम्। एवं हि तत्रत्यो भाष्यग्रन्थः "महता प्रयत्नेन शब्दमुच्चरन्ति—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्रापराध्येतापि उच्चारयिता । यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृद् उपस्प्रक्ष्यामीति द्विरुपस्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुः, न नियोगतोऽविच्छिन्नपारम्पर्या एवेति" ( मीमां० द० शाब० भा० १।३।२५ ) ।

मू०—किञ्च एकस्यार्थस्यानेकसाधुशब्दत्वमन्याय्यं तस्मादेकोऽनादिरन्येऽपभ्रंशाः । हस्तः, करः, पाणिरित्यादयोऽभियुक्तोपदेशात्सर्वे साधव इत्युक्त्वा तत्राभियुक्तोपदिष्टः साधुरित्युक्तम् । तत्रेदमाशङ्क्येत 'गौः' इति प्रयोक्तव्ये गाव्यादीनामिव गगर्यादीनामपि प्रमादात्प्रयोगः कुतो न ? इति तत्रेदं सूत्रम् "तदशक्तिश्चानुरूपत्वात्" ( मीमां० द० १।३।२८ ) इति । तेषामेवाशक्त्योच्चारणमनुरूपत्वात्, अर्थतोऽवयवतश्चानुरूपत्वादिति तदर्थः । तत्रार्थत आनुरूप्याग्रहणे गोपादिशब्दानामप्युच्चारणं प्रसज्येत । एकदेशानुरूप्याच्च विभक्तिव्यत्ययेऽपि 'अश्मकैरागच्छामि' इति प्रयोगात् 'अश्मकेभ्यः' इत्यर्थावगतिर्भवति । तत्र यद्ययं तदर्थे लौकिकः प्रयोगस्तदा न साधुर्वेदे तु साधुरित्यन्यत् । एवञ्च पतञ्जलिना एकवाक्यता भवति ।

( रत्न० )—*गगर्यादीनामिति—गोशब्दापभ्रंशत्वेनेत्यर्थः । *अनुरूपत्वादिति—विनिगमनाविरहाद् रूपतोऽर्थतश्च सादृश्यं ग्राह्यमिति भावः । *तदर्थ इति—सूत्रस्य शाब्दोऽर्थः, पूर्वं तु तात्पर्य्यार्थ इत्यपौनरुक्त्यम् । अर्थतः सादृश्यस्य फलमाह—*गोपादिशब्दानामिति—गोशब्दापभ्रंशतयेत्यर्थः । आदिना 'गगरी' 'गावी' इत्यादीनां सङ्ग्रहः । द्वितीयसाम्यं न सर्वावयवतस्तथात्वे तत्त्वमेव स्यान्न सादृश्यम् । अत्र विभक्त्यंश एवान्यथोच्चारणम् । अवयवतः सादृश्याभावे तु 'अश्मकैः' इत्यनेन 'अश्मकेभ्यः' इत्येतत्पदजन्यबोधो न स्यात् । मुख्यविशेष्यतया पदजन्यप्रतीतिविषयीभूतस्यैवार्थपदव्यवहार्य्यत्वेन प्रकृते तदभावात्तदपभ्रंशासिद्ध्या तदर्थबोधो न स्यात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अवयवतः' इत्युक्तौ त्ववयवतः सादृश्यसत्वान्न दोषः। नन्वेवमपि सादृश्यस्योभयतोऽपेक्षणेन प्रकृते तदर्थत्वाभावेन तदर्थबोधो न स्यादिति चेत्, न, 'अवयवतः'इत्यस्य शब्दार्थोभयावयवत इत्यर्थेनादोषात्। *अयमिति–'अश्मकैः' इत्यर्थः। तदर्थे = 'अश्मकेभ्यः' इत्यर्थे। *वेदेत्विति––"व्यत्ययो बहुलम्" ( पा०सू० ३।१।८५ ) इत्यनेन विभक्तिव्यत्ययेऽपि साधुत्वबोधनात्। *पतञ्जलिनेति––"समानेऽर्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्त्तकः" ( महाभा० मा० सू० २ ) इति ऋलृक्सूत्रस्थपतञ्जल्युक्त्येत्यर्थः। अपभ्रंशानां शक्तत्वेऽप्यसाधुत्वमुभयतः सिद्धम् 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वम्' इति न्यायादिति भावः।

अपभ्रंशानां शक्तत्वे प्रातिपदिकत्वस्येष्टत्वम् तन्निरासश्च ।

मू०—नन्वपभ्रंशानां शक्तत्वेऽर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकसंज्ञापत्तिरिति चेत्, इष्टापत्तिः। अत एव पस्पशायाम् "एवं हि श्रूयते 'यर्वाणस्तर्वाणोनाम ऋषयो बभूवुः...ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे कर्मणि पुनर्नापभाषन्ते" इति भाष्ये उक्तम्। तत्र यर्वाणस्तर्वाण इति णान्ताज्जसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम्। अत एव रुत्वोत्वादि, बभूवुरित्यनेन सामानाधिकरण्यश्च। प्रकृतिप्रत्यययोरुभयोरपि शास्त्रविषयत्व एव साधुत्वम्, न त्वन्यतरस्य। 'गगरी' इत्यादि च 'घट' इतिपदस्यैवापभ्रंश इति न ततः 'सुः'। 'गगरीम्' इत्यादि प्रयुञ्जते चेति केचित्।

परे तु "साध्वनुशासनेऽत्र शास्त्रे" ( महाभा० १।१।१ ) इति भाष्योक्तेरर्थवत्त्वेन साधूनामेव संज्ञाविधावुद्देश्यत्वमिति नासाधुषु प्रातिपदिकसंज्ञा। यर्वाणस्तर्वाण इत्यादौ सुबप्यसाधुरेव। अत एव "परश्च" (पा० सू०३।१।२) इति सूत्रे भाष्ये 'किमस्य द्व्यसमित्यसाधुः वृत्तिजसादृश्येऽप्यवृत्तिजत्वात्' इत्युक्तम्। प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलाना-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मसाधुत्वं बोध्यम्, तत्र वृत्तिजसदृशत्वात् । कश्चित्साधुरिति भ्राम्येदतः "प्रत्ययः पर एव" इति नियमेनाप्यस्यासाधुत्वमुक्तं भाष्ये । 'अर्थतः शब्दतश्च यः प्रत्ययजातीयः स पर एव' इत्यर्थेनास्यासाधुत्वं बोध्यते । एवञ्च शास्त्रविहितत्वाभावादमोप्यसाधुत्वमित्युक्तप्रायम् । अस्गो 'अश्व' शब्दस्यासाधुत्वमुक्तमन्यत्र । अत एव "प्रकृतिपर एव प्रत्ययः, (प्रयोक्तव्यः) प्रत्ययपरैव च प्रकृतिः" (महाभा० ३।१।२) इति नियमाकारो दर्शितो भाष्ये । साधूनामेव प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम् । खण्डसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणमर्थवत्त्वबोधनवत् । एवञ्च भाषानुसारेण क्रियमाणनामोत्तरं विभक्तिरप्यसाधुरित्याहुः ।

(रत्न०)—*अर्थवत्त्वादिति–वृत्त्याऽर्थविषयकबोधजनकत्वादित्यर्थः। *इष्टापत्तिरिति—'इष्टापत्तिः' इत्यादिग्रन्थस्य 'केचित्' इत्यनेनान्वयः । तेनैकदेशिमतमिदमिति भावः । *अत एवेति—प्रातिपदिकत्वस्येष्टत्वादेवेत्यर्थः । *पस्पशायामिति—भाष्यस्थपस्पशानामप्रकरण इत्यर्थः । *यर्वाण इति—एतन्नामान इत्यर्थः । *बभूवुरिति—एतदग्रे "प्रत्यक्षधर्माणः (योगजप्रत्यक्षेण सर्वं विदितवन्तः) परावरज्ञाः (विद्याऽविद्याप्रविभागज्ञाः) विदितवेदितव्याः (अनेन श्रवण, मनन, निदिध्यासनसम्पदुक्ता) अधिगतयाथातथ्याः" (वेदितव्यस्य यद्यथास्वरूपं सत्यस्वरूपं शुद्धसच्चिदानन्दस्वरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैः) इतिभाष्यग्रन्थः, परन्त्वत्रानुपयुक्तत्वान्नोक्तः । ते = पूर्वोक्ताः । *तत्रभवन्तइति—पूज्या इत्यर्थः । 'प्रयुञ्जते' 'अपभाषन्ते', उभयत्रापि "वर्त्तमानसामीप्ये"—(पा० सू० ३।३।१३१) इति भूते लट् । अत एव प्रयुक्तवन्तोऽपभाषितवन्त इत्यनयोरर्थः । केचित्तु लौकिकेष्वर्थेष्वतिवैराग्येणाग्रहाभावाद् 'यद्वाऽस्तु नः तद्वाऽस्तु नः किं प्रयोजनम्' इत्यर्थे 'यद्वानः' 'तद्वानः' इति प्रयोक्तव्ये 'यर्वाणस्तर्वाणः' इति प्रयुक्तवन्त इत्यर्थमाहुः । याज्ञे कर्मणि तु साधूनेव प्रयुक्तवन्त इत्याह—*याज्ञ इति । एतेन ज्ञानिनामपि कर्मण्यधिकारः सूचितः । *णान्ताज्जसीति—णान्ताज्जसीति सूचितम् । *अत एवेति—जसः सत्वादेवेत्यर्थः । *सामानाधिकरण्यञ्चेति—अत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव "शेषे प्रथमः" (पा० सू० १।४।१०८) इत्यनेन प्रथमपुरुष-प्रयोगः सिद्ध्यति । न च जसि प्रत्ययेऽनयोः साधुत्वापत्तिः प्रकृति-प्रत्यययोरुभयोरपि शास्त्रविषयत्व एव साधुत्वबोधनात् । न च यत्किञ्चिच्छास्त्रबोधितसाधुत्ववत्येव लक्षणप्रवृत्तिस्वीकारादिदमसङ्गतम्, पुण्यजनकताऽवच्छेदकीभूतजातिरूपसाधुत्वस्य तादृशलक्ष्य एव विधानेऽपि तदतिरिक्तविधेयांशस्य सर्वत्रैव प्रवृत्तेरित्याह—❀प्रकृतिप्रत्यययोरिति । नन्वेवं 'गगरी' इत्यादावपि सुबाद्यापत्तिरत आह—❀गगरीति । असाधुशब्दाः साधुपदप्रकृतिका न तु सुप्तिङ्प्रकृतिप्रकृतिकाः । तेन सुबन्ततिङन्ता-र्थस्यापभ्रंशशब्देनैवोक्तत्वादुक्तार्थानामितिन्यायान्न ततः प्रत्ययाः । प्रथमान्तार्थस्यापभ्रंशेनोक्तत्वेऽपि कर्मत्वादेरनुक्तत्वादाह—❀गगरीमिति । ❀केचिदिति—अनेनारुचिः सूचिता । तामेव प्रकटयति—❀परेत्वि-त्यादिना । ❀साधूनामेवेति—नन्वेवम् 'साधुत्वे शास्त्रप्रवृत्तिः शास्त्रप्रवृत्तौ च साधुत्वम्' इत्यन्योऽन्याश्रय इतिचेत्, न, शब्दानां नित्यत्वात्तदन्वा-ख्यानाय कल्पितेष्वेव प्रवृत्तिस्वीकारात्, धातुसंज्ञाविधायकस्य धातुसं-ज्ञोद्देश्यकप्रत्ययविधायकस्य चासाधुत्वे†ऽपि प्रवृत्तिस्वीकाराच्च । न चाव्युत्पन्नात् स्वाद्यसिद्धिः "सर्वं नाम च धातुजमाह" इति निरु-क्तात्सर्वेषामेव व्युत्पन्नत्वात् "यानि तर्हि अग्रहणानि प्रातिपदिकानि, एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्त्तव्यः" (महाभा० पस्पशाह्नि० ) इतिभाष्येणैव तेषामपि साधुत्वबोधनाच्च । ❀असाधुरे-वेति—आर्षप्रयोगे त्वसाध्वनुकरणस्यापि साधुत्वाद्दोषाभावः । ❀अत एव परश्चेति—साधुप्रकृतिपरत्वविशिष्टप्रयुज्यमानप्रत्ययस्य साधुत्वादेवे-त्यर्थः । ❀किमस्य द्वयसमिति—अस्य किम्प्रमाणमित्यर्थकमित्यर्थः ।

---

† ननु "भूवादयो धातवः" (पा० सू० १।३।१) इत्यस्य संज्ञाविधायकत्वेन साधुत्वविधायकत्वाभावाद् भ्वादीनामसाधुत्वस्य तदवस्थतया शास्त्रान्तराणां प्रवृत्त्य-नापत्तिरत आह—धातुसंज्ञोद्देश्यकेति । तथा च धातुसंज्ञोद्देश्यकशास्त्राणां विधित्वस्य नियततयाऽसाधुष्वपि भ्वादिषु तेषाम्प्रवृत्तिस्वीकारेण तैरेव स्वविहितकार्य्यघटितभ्वा-दीनां साधुत्वबोधनेनादोषात् । एवञ्च धातूद्देश्यकप्रत्ययविधायकातिरिक्तविधिशास्त्राणां साधुष्वेव प्रवृत्तिरिति स्वीकारे न क्षतिः । अत्र पक्षे संज्ञाविधायकानां साधुत्वा-विधायकत्वेन लाघवमपि । अव्युत्पन्नानां तु यथा साधुत्वं तथा मूले एव स्पष्टम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

❀वृत्तिजसादृश्य इति — 'ऊरुद्वयसम्' इति वृत्तिघटकवृत्त्यानुपूर्वीमत्त्वेऽपीत्यर्थः। केवलानाम् = प्रकृतिरहितानाम्। ननु प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलप्रत्ययस्य प्रयोगाप्राप्तेर्नियमासङ्गतिरत आह — ❀तत्र वृत्तिजेति — वृत्तिघटकवृत्त्यानुपूर्वीमत्त्वेन साधुत्वभ्रमनिवारणार्थं एव नियम इतिभावः। ❀अर्थत इति — अस्यानुक्तौ 'अस्' धातोरपि प्रत्ययात्पूर्वं प्रयोगो न स्यात्। 'अस्' धातूद्देश्यककार्य्यविधानसामर्थ्यात् पूर्वप्रयोगकल्पनाऽपेक्षया नियमे एतत्प्रवेशस्यैवौचित्यात्। ❀शब्दतश्चेति — एतदभावे कर्माद्यर्थकक्तादिप्रत्ययार्थकत्वेन कर्मादिशब्दानामपि पूर्वं प्रयोगो न स्यात्। अस्य = 'किमस्यद्वयसम्' इत्यस्य। ❀असोऽपीति — 'गगरीम्' इत्यत्रेतिभावः। अर्थान्तर्भावेणैव साधुत्वमावश्यकमितिसूचयन्नाह — ❀अस्व इति। शब्दत एव साधुत्वविधाने 'अस्व' शब्दस्य दरिद्रार्थकस्य घोटकेऽप्यसाधुत्वं न स्यादितिभावः। उभयोः शास्त्रविषयत्व एव साधुत्वमित्यत्र मानं दर्शयति — ❀प्रकृतिपर एवेत्यादिना। नन्वेवं प्रकृत्यादीनां साधुत्वेऽपि वाक्यस्य साधुत्वं न स्यादतआह — ❀खण्डसाधुत्वेति — अवयवसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधन एव तात्पर्य्यमितिभावः। ❀अर्थवत्त्वेति — यथा प्रकृतिप्रत्ययार्थबोधनस्य पदवाक्यार्थबोधन एव तात्पर्य्यं तथेतिभावः। ❀एवञ्चेति — साधूनामेव प्रकृतित्वे चेत्यर्थः। ❀भाषानुसारेणेति — अपभ्रंशानुसारेणेत्यर्थः। ❀अत एव समानायामिति — अपभ्रंशानां शास्त्रविषयत्वाभावादेवेत्यर्थः। ❀वाचकत्वेति — "असाधुरनुमानेन वाचकः कैश्चिदिष्यते" इतिपूर्वार्द्धेनापभ्रंशानां वाचकत्वाभावमभिधायोत्तरार्द्धेन मतान्तरमाह — ❀वाचकत्वेति — अपभ्रंशानां वाचकत्वेऽपि शास्त्रेण धर्मनियमः क्रियते, साधुभिरेवभाषितव्यं नासाधुभिरिति, एवं हि क्रियमाणमभ्युदयकारि भवतीति॥

मू०—ननु साधुत्वस्य जातित्वे कत्वादिना सङ्कर इति चेत्, न, ययोर्जात्योः परस्परासामानाधिकरण्येनैव सिद्धिः परस्परमाश्रयभेदकता च लोकसिद्धा तयोः साङ्कर्यस्यैव दोषत्वात्। आश्रययोर्भेदभङ्ग एव हि साङ्कर्य्यदूषकताबीजम्। तादृशजात्योर्यत्र साङ्कर्य्यप्रसङ्गस्तत्रोभयवैलक्षण्यं स्वी-

साधुत्वजातौ सांकर्य्यबाधकत्वम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्य्यम्, यथा नृसिंहे, अश्वतरे वा । ययोस्तु सामानाधिकरण्येन (एव) सिद्धिः तयोः साङ्कर्य्यस्य व्याप्यव्यापकभावापन्नजात्योः साङ्कर्यस्येवा(सामानाधिकरणस्येवा)दोषत्वात् ।

एवञ्च 'साङ्कर्य्यमुपाध्योरपि दोषाय यदि तत्रापि आश्रयभेदभङ्गप्रसङ्गः' इति स्पष्टं श्रीहर्षकृतखण्डने† । न तु साङ्कर्य्यस्य सर्वथा जात्यभावकल्पकत्वं मानाभावात् । एवञ्च भूतत्वमूर्त्तत्वे पृथिवीत्वशरीरत्वे च जातिरूपे एव । क्रियासमवायिकारणताऽवच्छेदकतया मूर्त्तत्वादेरिव भूतादिपदशक्यताऽवच्छेदकतया भूतत्वादेरपि जातित्वात् । न हि कारणताऽवच्छेदकतयैव जातिसिद्धिर्न शक्यताऽवच्छेदकतयेति राजाज्ञाऽस्तीति दिक् ।

(रत्न०)—*सङ्कर इति—साङ्कर्यञ्च—स्वसामानाधिकरण्य—स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्रितयसंवन्धेन परस्परविशिष्टत्वम् । यथाभूतत्वमूर्त्तत्वयोस्त्रितयसम्बन्धेन परस्परविशिष्टत्वान्न जातित्वम् । साङ्कर्य्यस्य जातित्वदूषकताबीजन्तु स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यैतदुभयसम्बन्धेन जातिविशिष्टजातित्वं यत्र तत्र स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभाव इति नियमभङ्ग एव, यथा उक्तोभयसम्बन्धेन पृथिवीत्वविशिष्टं द्रव्यत्वं यदि पृथिवीत्वसमानाधिकरणात्यन्ताभावप्रतियोगि स्यात्तदा तस्य व्यापकत्वं विहन्येत । तथा च व्यापकत्वभङ्ग एव दूषकताबीजमिति भावः । वस्तुतस्तु तादृशनियमे मानाभावान्न साङ्कर्य्यं जातिबाधकम् । प्रकृते पूर्वोक्तत्रितयसम्बन्धेन परस्परवैशिष्ट्यं सिद्धम् । तथाहि—साधुत्वं साधुगगनादिशब्दघटकगकारादावस्ति कत्वं नास्तीति साधुत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तस्य । साधुकृष्णादिशब्दघटककारे कत्वं साधुत्वञ्चेति स्वसामानाधिकरण्यम् । असाधु 'कपड़ा'आदिशब्दघटकककारे कत्वमस्ति साधुत्वं तु नास्तीति स्वाभावसामानाधिकरण्यमिति कत्वे साधुत्ववैशिष्ट्यसत्त्वाज्जातित्वं न

---

† बहुशोऽवगाहितेऽपि खण्डने 'साङ्कर्यमुपाध्योरपि दूषकम्' इत्यंशो नोपलब्धः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यादत आह — *इति चेत्, नेति । *परस्परासामानाधिकरण्येनेति — अयम्भावः — यत्र स्वव्यापकात्यन्ताभावप्रतियोगित्वसम्बन्धेन जात्योः परस्परवैशिष्ट्यं तत्रैव यदि साङ्कर्य्यं तदा तस्य जातित्वबाधकत्वम् । यथा नरत्वव्यापकात्यन्ताभावप्रतियोगित्वं सिंहत्वे । एवं सिंहत्वव्यापकात्यन्ताभावप्रतियोगित्वं नरत्वे । 'यत्र यत्र नरत्वं तत्र तत्र सिंहत्वाभावो यत्र यत्र सिंहत्वं तत्र तत्र नरत्वाभावः' इतिव्याप्तिसत्त्वात्ते जाती यदि नरसिंहे भगवति स्वीकृते स्यातां तदा साङ्कर्य्यलक्षणाक्रान्तत्वात्तयोर्जातित्वं न स्यादिति तत्र विलक्षणैव जातिर्न नरत्वं नापि सिंहत्वम् । प्रकृते च स्वव्यापकाभावप्रतियोगित्वस्य कत्वादिसाधुत्वयोरभावान्न साङ्कर्य्यं तयोर्जातित्वे बाधकम् । तदेवाह — *परस्परमाश्रयभेदकता चेति — स्वव्यापकात्यन्ताभावप्रतियोगित्वमेवाश्रयभेदकतेति भावः । *आश्रययोर्भेदभङ्ग इति — 'नरो न सिंहः, सिंहो न नरः' इति नरत्वाश्रयसिंहत्वाश्रययोर्भेदस्य भङ्गो यः स एव दोषः । यदि नरत्वं सिंहत्वं च क्वचिदप्येकत्र स्वीकृतं स्यात्तदा तत्र 'नराभिन्नः सिंहः' इति तादात्म्यसम्भवाद् भेदो भज्येतेति भावः । ककारादिस्थले तु साध्वसाध्वोः ककारयोः सत्त्वात् 'साधुः ककारः' इति तादात्म्यस्येष्टत्वान्नास्ति भेदभङ्गरूपो दोष इति न साङ्कर्य्यं कत्वसाधुत्वयोर्जातित्वे बाधकमितिहृदयम् । एवम् 'अश्वो न गर्दभः' 'गर्दभो नाश्वः' इति भेदस्यैवेष्टत्वात्तद्भङ्गभियाऽश्वतरेऽपि न गर्दभत्वं नाप्यश्वत्वमिति बोध्यम् । *सामानाधिकरण्येनेति — यथा भूतत्वमूर्त्तत्वयोः पृथिव्यादिचतुष्टयमादाय सामानाधिकरण्यम् । तयोः = समानाधिकरणयोर्जात्योः । *व्याप्यव्यापकेति — यथा पृथिवीत्वद्रव्यत्वयोः । *साङ्कर्यस्येवेति — यथा व्याप्यव्यापकभावापन्नजात्योः सामानाधिकरण्यं न दोषावहं किन्तु व्याप्तिप्रयोजकत्वेन गुण एव तथा भूतत्वमूर्त्तत्वयोः साङ्कर्यमिष्टमेवेति भावः । अत्र दृष्टान्तदले 'सामानाधिकरण्यस्येव' इत्येव पाठः । 'साङ्कर्यस्येव' इति स्वपपाठः, साङ्कर्यमत्र सामानाधिकरण्यमात्रं वा, व्याप्तिसत्वे साङ्कर्य्यस्यासम्भवात् । उभयोर्जात्योरेव साङ्कर्य्यं जातित्वबाधकम्, उपाध्योस्तु साङ्कर्य्यं न जातित्वबाधकमिति मतं निराकरोति — *उपाध्योरपीति । *भूतत्वमूर्तत्वे इति — साङ्कर्य्याद् भूतत्वमूर्त्तत्वयोर्न जातित्वमिति प्राचीनमतखण्डनपरमिदम् । दीधितिमते तु जन्यद्रव्यसम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वायिकारणताऽवच्छेदकतया१† भूतत्वं जातिः सिद्ध्यतीति तस्याः पृथिव्यादिचतुष्टयवृत्तित्वेन साङ्कर्य्यासम्भवः । न चाकाशे भूतत्वव्यवहारानुपपत्तिर्बहिरिन्द्रियग्राह्य विशेषगुणवत्वेन तद्व्यवहारस्य भाक्ततयाऽदोषात् । *मानाभावादिति — सर्वत्र साङ्कर्य्यस्य जातित्वबाधकत्वे २† मानाभाव इति भावः । *पृथिवीत्वशरीरत्वे इति—घटादौ पृथिवीत्वमस्ति शरीरत्वं नास्ति । तैजसादिशरीरे शरीरत्वमस्ति पृथिवीत्वं नास्ति । अस्मदादिशरीरे चोभयमिति सांकर्य्याच्छरीरत्वं न जातिरिति तार्किकमतं खण्डयति —*जातिरूपे एवेति — गन्धसमवायिकारणताऽवच्छेदकतया पृथिवीत्वस्य सुखादिसाक्षात्कारकारणताऽवच्छेदकतया शरीरत्वस्य च जातित्वसिद्धेः । 'पृथिवी शरीरम्' इति व्यवहारसत्त्वादाश्रयभेदभङ्गाभावादितिभावः । * क्रियासमवायीति — समवायसंबन्धावच्छिन्नक्रियात्वावच्छिन्नकार्य्यतानिरूपितकारणताऽवच्छेदकतया लाघवाद्यथा मूर्त्तत्वं जातिः कल्प्यते तथा भूतपदनिष्ठशक्ततानिरूपितपृथिव्यादिनिष्ठशक्यताऽवच्छेदकतयापि भूतत्वं ३† जातिर्लाघवात्सेत्स्यतीति भावः । *राजाज्ञाऽस्तीति—लाघवरूपयुक्तेस्तुल्यत्वात् । अत एव 'जल' पदशक्यताऽवच्छेदकतया जलत्वं जातिरिति वर्धमानः । समवायसंबन्धेन भोगं प्रति अवच्छेदकतासंबन्धेन शरीरस्य कारणतया तदवच्छेदकतया शरीरत्वस्यापि जातित्वं बोध्यम् ।

मू०—देशभाषाऽनुसारेण कृतानाम् 'कूची' (कुञ्ची) 'मञ्ची'

---

१ † अत्र मते घटादिरूपान्त्यावयविद्रव्ये भूतत्वं जातिः कथं सिद्ध्यतीति चिन्त्यम् । तादात्म्यसम्बन्धावच्छिन्नकारणतानिरूपितसमवायसम्बन्धावच्छिन्नद्रव्यनिष्ठकार्य्यताऽवच्छेदकतया तत्रापि भूतत्वजातिः सिद्ध्यतीति कश्चित् ।

२ † स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वव्यापको यः स्वसमानाधिकरणाभावप्रतियोगिताऽवच्छेदकत्वाभावस्तद्रूपनियमस्य भङ्ग एव मानमिति चेत् , न, तादृशनियमस्याप्रामाणिकत्वात् । व्याप्तिग्राहकानुकूलतर्काभावादिति भावः ।

३ † यत्तु द्रव्यवृत्तिकपालादौ द्रव्यान्तरोत्पत्तिवारणाय तत्प्रतिबन्धकताऽवच्छेदकतया भूतत्वं जातिः सिद्ध्यतीति, तन्न, मूर्तत्वमादाय विनिगमनाविरहात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अप्पि' 'कोण्डा' इत्यादि नाम्नामसाधुत्वमेव । 'टि' 'घु' 'भ' आदि-

देशिकभाषा-नाम्नामसाधुत्वम्

संज्ञानां तु शिष्टप्रयुक्तत्वात्साधुत्वमेव । सर्वशब्दानां सर्वार्थवाचकत्वेऽपि "वृद्धिरादैच्" (पा० सू० १।१।१) इत्यादीनामज्ञातशक्तिज्ञापकसङ्केतरूपतया विधित्वमेव । यत्तु

"व्यवहाराय नियमः संज्ञायाः (नाम्न्) संज्ञिनि क्वचित् ।
नित्य एव तु संबन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रेऽस्मिन्, शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसंबन्धो विशेषणविशेष्यवत्" ॥ इति
(वाक्यप० कां० २ कारि० ३६९—३७०)

तत्तु तत्र सङ्केते कृते तत्तत्सङ्केतज्ञानरूपप्रकरणवशात्तस्यैवोपस्थितिर्नान्यस्येति फलितनियमपरम् । तदेतद् 'विशेषणविशेष्यवत्' इत्यनेन सूचितम् । यथा 'नीलो घटः' इत्यनेन विद्यमान एव घटे नीलसंबन्धः पुरुषेण बोध्यते, न तु तेन नीलादियोगः क्रियते 'नील एव न पीतः' इति नियमश्च फलति तद्वदित्यर्थात् । पाणिन्युपदेशादिरूपसङ्केतग्राह्यत्वात् तत्तत्संज्ञात्वस्य संज्ञानामनित्यत्वव्यवहारोऽपि । वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसंबन्धनित्यताहानिः । तेष्वेव 'वृद्धि'पदवाच्यत्वोपदेशे वक्त्रिच्छाया एव नियामकत्वाद् यदृच्छाशब्दत्वव्यवहारः 'स्वेच्छया संज्ञाः क्रियन्ते' इति च व्यवहारः । वेदमात्रप्रसिद्धशब्दभिन्नत्वरूपलौकिकत्वादुक्तरीत्या साधुत्वाच्च तेषां शास्त्रविषयता । स्पष्टञ्चेदं सर्वम् "ऋलृक्" सूत्रे भाष्ये । किञ्च सर्वेषां सर्वार्थवाचकत्वमस्माभिर्दुर्ज्ञेयं विशिष्य सकलार्थशब्दज्ञानाभावात् । सामान्यज्ञानं तु न बोधोपयोगि । योगिदृष्ट्या तु तथा व्यवहारः शास्त्रे । इत्यन्यत्र विस्तरः ।

देशभाषाऽनुसारेण क्रियमाणनाम्नः सूक्तवाकादौ सङ्कल्पादौ चोल्लेखस्तु बर्बराणां भ्रान्त्यैव । तस्माद् "घोषवदाद्यन्तरन्तस्थं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति गृह्यसूत्रोक्त-†नाम्नैव साधुना तदुचितम् ॥

( रत्न० )—यत्तु 'टि' 'घु' 'भ' आदिसंज्ञावद् योगार्थरहिताधुनिक-नाम्नामपि साध्वसाधुवहिर्भूतत्वम्, साध्वसाधुलक्षणानाक्रान्तत्वात्; साक्षात्परम्परया वा शिष्टप्रयुक्तस्यैव साधुत्वात्, तदर्थेऽनादिप्रयुक्तत्वे सति शक्तिवैकल्यादिना अन्यथोच्चारणविषयत्वस्यैवासाधुत्वाच्च। किञ्च तदर्थे यस्य कस्यचन शब्दस्य साधुत्वेन शास्त्रतोऽन्वाख्याने हि स तदतिरिक्तस्य तदर्थेऽसाधुत्वं बोधयेत्, न चात्र तथा। एवं यो यत्रार्थेऽनादिप्रयुक्तः सन् व्याकरणबोध्यः स तत्रार्थे साधुरिति तत्त्वं बोध्यम्। अत एव सकल-देशशिष्टानां यज्ञादिषु तत्तदाधुनिकसाङ्केतिकनामग्रहणेऽपि प्रत्यवायाभाव-प्रतीतिः सङ्गच्छते । अन्यथा "शब्दै र्भाषितव्यं नापशब्दैः" इत्यादि निषेधसद्भावात् प्रत्यवायापत्तिर्दुर्वारैवेत्याहुः प्राञ्चस्तन्निराकरोति—*देशभाषेति । *कूचीमञ्चीति — एतानि दाक्षिणात्यनामानि । नन्वेवं 'टि' 'घु' 'भ' आदि नाम्नामपि तदर्थे व्याकरणासंस्कृतत्वेनासाधुत्वा-पत्तिरत आह — *टिघुभादीति । तथाच शिष्टप्रयुक्तत्वमेव मुख्यं साधु-त्वानुमापकम्, व्याकरणादि तूपलक्षणम् । यद्वा शिष्टप्रयुक्तत्वेन व्याकरण-संस्कारकल्पना कल्पनीया । यत्तु "सर्वे सर्वार्थवाचकाः" इति पक्षमादाय "वृद्धिरादैच्" ( पा० सू० १।१।१ ) इत्यादिसंज्ञाशास्त्राणां नियमार्थत्वं तेषामपि तत्तदर्थेष्वनादिसंकेतस्य सिद्धतयेति, तत्खण्डयति — *सर्व-शब्दानामिति — सर्वेषां सर्वार्थवाचकतया वृद्ध्यादिपदेनार्थत्वेन रूपेणार्थ-बोधेऽप्यादैच्त्वादिरूपेणाबोधात् तत्तद्रूपेण संकेतग्राहकतया विधाय-कत्वमेव संज्ञाशास्त्राणाम् । ननु 'घट' शब्दस्य घटत्वावच्छिन्ने शक्ति-सत्त्वेऽपि प्रकरणादिना यथा 'घटमानय' इत्यादिना तत्तद्घटस्यैव बोधस्तथा वृद्ध्यादिशब्दानामर्थत्वावच्छिन्ने शक्तिसत्त्वेऽपि सामान्यरूपेण तात्पर्य-

† "दशम्यामुत्थाय ब्राह्मणान्भोजयित्वा पिता नाम करोति ॥१॥ द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तं कृतं कुर्यान्न तद्धितम् ॥२॥ इति पारस्करगृह्यसूत्रे प्रथमकाण्डे नामकर्मप्रकरणे पाठः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वशादादैचामेव बोधः स्यादिति चेत्, न, तात्पर्यग्राहकत्वेनैव विधित्वसम्भवात् । अयम्भावः—सर्वो हि शब्दः संज्ञात्वेन विनियुज्यमानो योग्यत्वात्सर्वत्रार्थे सम्बद्धः । तात्पर्य्यसङ्कोचकत्वात्तु विधित्वमिति । नन्वेवं हरिग्रन्थविरोधोऽत आह—*यत्त्विति । संज्ञायाः = संज्ञावाचकस्य क्वचित् संज्ञिनि व्यवहाराय = नियतव्यवहाराय । डित्थादिष्वर्थेषु डित्थादिपदानां गवादिपदवन्नित्य एव शक्तिरूपः सम्बन्धः । अस्मिन् व्याकरणे वृद्ध्यादिशब्दानां शक्तिसंकोचलक्षणो नियमो व्यवहाराय । यतोऽकृत्रिमोऽनादिरभिसम्बन्धो विशेषणविशेष्यवत्—यथा गुणद्रव्ययोः समभिव्याहारे गुणे विशेषणत्वं द्रव्ये विशेष्यत्वमनादिसिद्धं तथा संज्ञासंज्ञिनामपीति भावः । *तत्त्विति—हरिकथनमित्यर्थः। तत्र = आदैजादिषु । *फलितेति—फलितनियमार्थमादायैव हरिवचनं न तु नियमस्य शाब्दत्वमादायेति न विरोधः । नन्वेवं संज्ञानामकृत्रिमत्वे कृत्रिमाकृत्रिमेति न्यायविरोधोऽत आह—*पाणिन्युपदेशादिति । वाचकताबोधकत्वेऽपि = शक्तिबोधकत्वेऽपि । तदनुत्पादकत्वात् = वाचकताया अनुत्पादकत्वात् । *शब्देति—"नित्यः शब्दार्थसम्बन्धः" इति सिद्धान्तभङ्गो नेतिभावः । अत्र व्याकरणे संज्ञाशब्दानां स्वाभिमतार्थस्यैव वाच्यत्वोपदेशे वक्त्रिच्छाया एव नियामकत्वाद् यदृच्छाशब्दत्वादिव्यवहारः । ननु सूत्राणां छान्दसत्वाद् वृद्ध्यादिपदानां लौकिकत्वव्यवहारानुपपत्तिरत आह—*वेदमात्रेति—ननु तदर्थे शास्त्रेणासंस्कृतत्वादसाधुत्वापत्तिरत आह—*उक्तरीत्येति—शिष्टप्रयुक्तत्वादित्यर्थः । एवञ्च देशभाषया कृतानां नाम्नां शास्त्रेण तदर्थेऽबोधितत्वाच्छिष्टाप्रयुक्तत्वाच्चासाधुत्वमेव तदाह—*देशभाषयेति—बर्बराणाम् = अज्ञानाम् । *सूक्तवाकेति—यागेषु "अमुकशर्म्माऽऽयुराशास्ते" इत्यादिसूक्तवाकप्रयोगः । सङ्कल्पश्च यद्यपि मानसो व्यापारस्तथापि शब्दविशेषप्रयोगे एव 'सङ्कल्पपदव्यवहार्य्यत्वम्' तस्य तथैव विधानात् । *घोषविदिति—महाभाष्येऽप्युद्धृतमवतरणमिदम् तद्यथा—"याज्ञिकाः पठन्ति—दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति ( महाभा० पस्पशाह्नि० ) ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—किञ्च अग्न्यादिनक्षत्रदेवता उक्त्वा

याज्ञिकनाम-विचारः

"नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि।
यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम्॥"

( ज्यौ० वेदा० कारि० ३५ )

इति वेदाङ्गज्योतिषोक्तं †१नक्षत्रनाम च तदुपयोगि। 'नामकरणे नाक्षत्रं नाम नक्षत्रपादाक्षरादि कार्यम्' इति वृद्धाः। गृह्यपरिशिष्टे च क्वचित्तथैवोक्तम्। एतदेव जातकर्मप्रकरणे "नक्षत्रनाम च निर्दिशति" "तद्रहस्यं भवति" (आप० गृ० सू० खं० १५ सू० २–३) इत्यापस्तम्बेनोक्तम्। तदेव च "अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्" (आश्व० गृ० सू० खं० १३ सू० ९) इत्याश्वलायनेनोक्तम्। एवमेव नामकरणे वृद्धशिष्टानामाचारो लेखश्च। अतएव "ज्यौतिषं यज्ञकर्मणि" इत्युक्तम्। तत्तन्नक्षत्रवाचकेभ्यो जातार्थप्रत्यये निष्पन्नं तत्तन्नक्षत्र ( जम् ) नामेति केचित्। तत्र "पुत्रस्य नाम गृह्णाति रौहिणाय तिष्याय" इति बौधायनसूत्रं मूलम्। यत्तु "असौ असौ इत्यादिश्ये नामनी" इत्याश्वलायनेनोक्तं तत्तु सन्दिग्धम्। यद्यपि †२ देवत्रातेन "आनुराधो देवदत्तः" इति प्रयोक्तव्यम्" इत्युक्तं तत्र सूत्राक्षरानुग्रहश्चिन्त्यः। शाङ्खायना-

---

१ † लगधाचार्यप्रणीते "ज्यौतिषवेदाङ्ग" नामके ग्रन्थे 'कृत्तिका' नक्षत्रमारभ्य सर्वेषां नक्षत्राणां देवताः प्रदर्शितास्तद्यथा—

"अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः।
सर्पाश्च पितरश्चैव भगश्चैवार्यमाऽपि च॥३२॥
सविता त्वष्टाऽथ वायुश्चेन्द्राग्नी मित्र एव च।
इन्द्रो निर्ऋतिरापो वै विश्वेदेवास्तथैव च॥३३॥
विष्णुर्वसवो वरुणोऽज एकपात् तथैव च।
अहिर्बुध्न्यस्तथा पूषा अश्विनौ यम एव च"॥३४॥

एतदुत्तरम् "नक्षत्रदेवता एताः" इत्यादिपद्यम्।

२ † 'यदपि' इति तूचितम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दयश्च ज्यौतिषोक्तमेवाद्रियन्ते । इदानीमाश्वलायना देवत्रातोक्त्या,

"निर्दिशेद् यजमानस्य नाम सांव्यवहारिकम् ।
नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि" ॥

इत्याश्वलायनश्रौतकारिकोक्त्या च तथैवाचरन्ति, नामकरणेऽपि तदेव नाक्षत्रं नामेति च वदन्ति । परे तु—बौधायनादिवाक्ये रौहिणादिपदं तत्तन्नक्षत्रजातत्वेन तत्तद्देवतानामोपलक्षणम् । एवं हि ज्यौतिषेण तेषामेकमूलकल्पनालाघवं भवति, विकल्पस्यानौचित्याच्च, संज्ञापर्याय 'नाम' शब्देन पाचकादिशब्दवत् केवलयौगिकश्रावणादिशब्दानां ग्रहीतुमनौचित्याच्च, 'अभिवादनं प्रयोजनमस्य' इत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च, तस्य साधारणत्वादित्याहुः ॥

( रत्न० )—*अग्न्यादीति —अग्न्यादयः कृत्तिकादिनक्षत्राणां देवता उक्त्वेत्यर्थः । *एताभिरिति —या एता नक्षत्रदेवता उक्ता एताभिर्यन्नाम तद् यजमानस्य यज्ञकर्मणि नक्षत्रजं नक्षत्रात् = तद्विशिष्टकालोत्पत्तेर्जातं शास्त्रज्ञैः स्मृतमित्यर्थः । नक्षत्रदेवतावाचकपदघटितं नाम 'अग्निदत्तः' इत्यादि कार्य्यमिति यावत् । *तदुपयोगीति—यज्ञोपयोगीत्यर्थः । तर्हि यज्ञादन्यत्र कथम् ? अत एतत्प्रसङ्गादाह —*नामकरण इति । *नक्षत्रपादादीति – पक्षान्तरं चेदम् । अत्रैव मानमाह *गृह्यपरिशिष्टे चेति—"तदक्षरादिकं नाम यस्मिन् धिष्ण्ये यदक्षरम्" इति तत्रोक्तम् । *एतदेवेति—नक्षत्रपादाक्षरादि 'चूडामणिः' इत्यादिकमेवेत्यर्थः । *तद्रहस्यमिति — नक्षत्रपादाक्षरादि गोप्यं भवतीत्यर्थः । *तदेव चाभीति—तेनैवाभिवादनं कुर्य्यादित्यर्थः । *ओपनयनादिति—आ उपनयनात्, उपनयनात्प्रागित्यर्थः । तदुक्तम् "व्यावहारिकं नाम कृत्वा अभिवादनीयमभिवादनप्रयोजनं नाम उपांशु कर्तव्यम् । तच्च मौञ्जीबन्धनान्तं मातापितरावेव जानीयाताम् । उपनयनकाले चानेन नाम्ना 'अभिवादय' इति कुमारं प्रति वाच्यम्" इति । *जातार्थप्रत्यय इति —रौहिणतिष्येत्यादिकमेव नक्षत्रनामपदवाच्यमित्यर्थ इति पक्षान्तरमनेनोक्तम् । *नाम गृह्णातीति — श्रौते कर्मणि 'अयं यजमानोऽमुकशर्मणे पुत्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यायुराशास्ते' इत्यदिप्रयोगात् । स च दर्शपूर्णमासयोर्वेदिमध्ये यजमान उपविश्य पुत्राणां नाम गृह्णाति 'अमुकशर्मा सन्तनोतु' इत्यादि प्रयुज्यते । *यत्त्वसाविति — अयं यजमान इत्यस्यानन्तरम् 'असौअसौ' इति यजमान-नामनी ( नामद्वयम् ) सांव्यावहारिकनाक्षत्रे प्रथमान्तेनादिश्य 'आयुरा-शास्ते' इत्यादि होता ब्रूयादित्यर्थः । *सन्दिग्धमिति – नामद्वयस्वरूपस्या-निश्चयात् । देवत्रातेन = आश्वलायनभाष्यकृता । ज्यौतिषोक्तम् = नक्षत्रपादाक्षरादि । *आचरन्तीति — अत्रायमाचारः स्वकुलदेवताऽनु-सारेणामुकभक्त इति कांस्यपात्रे नाम लिखित्वा मासनाम कुर्य्यात् । तच्च :—

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ॥
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ।

इति स्मृति संग्रहे । अत्र चैत्रादिक्रमेण मार्गशीर्षादिक्रमेण वा एतानि नामानि ज्ञेयानि । ततो नक्षत्रनाम । ततो द्व्यक्षरं चतुरक्षरञ्चेत्यादि शर्म्माद्यन्तव्यावहारिकं नाम लेख्यमिति । स्वसिद्धान्तमाह — *परेत्वि-त्यादिना । रौहिणादिपदम् = रौहिणतिष्यादिपदम् । *तत्तद्देवतानामेति — तत्तन्नक्षत्रदेवतानामघटितनामोपलक्षणमिदम् । अत्र मानमाह — *एवं हीति । *एकमूलकल्पनेति —'नक्षत्र देवता एताः' इत्येकमूलकल्पनेत्यर्थः । *संज्ञापर्य्यायेति — नामशब्देन सांकेतिकनाम्नामेव ग्रहणमुचितं न तु पाचकादिवद् यौगिकानाम । तस्य = जातार्थप्रत्ययान्तस्य रौहिणादेः । *साधारणत्वादिति – अभिवादनानभिवादनसर्वव्यवहारविषयत्वादित्यर्थः। *अशक्यत्वाच्चेति — अभिवादनीयपदाक्षराननुगुण्यादितिभावः । तथा च नक्षत्रदेवतावाचकपदघटितमेव नाम ग्राह्यं यज्ञादिष्विति सिद्धान्तः ।

मू०—अत्र तत्त्वं महन्तो विदांकुर्वन्तु । यत्तु 'कूची' 'मञ्ची' इत्यादीनां साध्वसाधुबहिर्भूतत्वं शास्त्रविषयता चेति, तन्न, तृतीय-कोटेरभावात् एवंविधेभ्योऽन्यत्र शास्त्रविषयेषु साध्वसाधुबहिर्भावस्य काप्यदृष्टत्वाच्च । अत एव "ऋलृक्" सूत्रे लृकारोपदेशे प्रयोजनं यदृच्छाशब्दे "दध्यलृतकाय देहि" इत्युक्त्वा

साध्वसाधुभिन्नस्य निरासोऽसाधोः प्राति-पदिकत्वाभावश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्याय्यस्य ऋतकशब्दस्य भावात् तस्यैव संज्ञात्वं न्याय्यं न त्वस्ये-त्यादिनाऽस्याऽसाधुत्वाच्छास्त्राविषयत्वेन परिहृतम् । 'न्याय्यस्य' इत्यस्य शास्त्रबोधितस्य शिष्टप्रयुक्तस्य चेत्यर्थः ।

यद्यपि "†समाने प्रवृत्तिनिमित्तेऽन्वाख्यातोऽनन्वाख्यात-स्य निवर्तको भवति यथा 'देवदत्त' शब्दो 'देवदिण्ण' शब्दं निव-र्तयति न गाव्यादीन्" इति भाष्येण ऋतकस्य शास्त्रसिद्धत्वेऽपि क्रियाप्रवृत्तिनिमित्तकत्वेन 'लृतक' शब्दस्य शब्दप्रवृत्तिनिमित्तकस्य भिन्नार्थकस्यास्य नासाधुत्वबोधनं लभ्यते तथापि शिष्टाप्रयुक्तत्वे-नैवास्यासाधुत्वं कैयटेनोक्तम् । स्वीकृतश्च शास्त्रान्वितानामपि 'वचन्ति' इत्यादीनां शिष्टाप्रयुक्तत्वेनासाधुत्वं सर्वैः । ततः 'पक्षा-न्तरैरपि परिहारा भवन्ति' इत्याशयेन "त्रयी च शब्दानां प्रवृत्तिः, न सन्ति यदृच्छा शब्दाः" इत्यादिना परिहारान्तरमुक्तम् । तदाऽ-साधुत्वं शास्त्राविषयत्वं च स्पष्टमेवोक्तम् । एवञ्चैतत्पक्षैकवाक्य-तया आद्येऽपि तत्त्वमेवोचितम् । एकस्यैव पक्षभेदेन शास्त्रविषय-त्वतदविषयत्वयोः "न वेति"–( पा०सू० १।१।४४ ) सूत्रे भाष्ये तिरस्काराच्च । किञ्चैवं साधुत्वस्य व्याकरणव्यङ्ग्यताऽना-पत्तिः, "साध्वनुशासने शास्त्रे"—( महाभा० १।१।४४ ) इत्या-दिभाष्यासङ्गतिश्चेति दिक् ।

एवञ्च भाषाशब्दानां शिष्टैर्धर्मबुद्ध्या साधुपर्यायवदप्रयो-गाद् व्याकरणलक्षणाऽननुगमाच्चासाधुत्वेन अर्थवत्त्वेऽपि न शास्त्रविषयत्वमिति न तत्र प्रातिपदिकत्वमित्यन्यत्र विस्तरः ।

( रत्न० )-नन्वेवं यज्ञकर्मणि केषाञ्चिदेकवाक्यत्वेऽपि केषाञ्चिन् मतभेद एवेति व्यवस्थानुपपत्तिरत आह -- *अत्र तत्त्वमिति–चतुर्विधानि नामानि–नक्षत्रदेवतावाचकपदघटितम्, जातार्थप्रत्ययान्तनक्षत्रवाचकम्,

† "समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति" इति भाष्यानुपूर्वी बोद्धव्या ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नक्षत्रपादाक्षरादि, तथा घोषवदादीत्यादिना भाष्योक्तश्च । तत्रेदं तत्वम् यज्ञकर्मणि नक्षत्रदेवतावाचकपदघटितं ग्राह्यम "एताभिर्यज्ञकर्मणि" इति प्रतिपदोक्तवचनात् । नक्षत्रपादाक्षरादि च अभिवादने कार्यम्, "तदेवाऽभिवादनीयञ्च समीक्षेत" इत्युक्तेः । अन्यत्र व्यवहारे पूर्वोक्त-नामद्वयभिन्नमिति । कौस्तुभाद्युक्तं खण्डयति—*यत्त्वित्यादिना । *साध्वसाध्विति—पुण्यजनकताऽवच्छेदकधर्मरूपसाधुत्वस्य तत्तदर्थेऽनादि प्रयुक्तत्वे सति शक्तिवैकल्यादिनाऽन्यथोच्चारणविषयत्वरूपासाधुत्वस्य चाभावादित्यर्थः । *शास्त्रविषयता चेति—अनपभ्रष्टत्वस्यैव शास्त्रप्र-वृत्त्युपयोगित्वादुभयबहिर्भूतत्वेऽपि न शास्त्रविषयत्वं विहन्यत इति भावः । नन्वीदृशशब्दानामेव तृतीयकोटित्वमत आह—*एवंवि-धेभ्य इति । *अन्यत्रेति—संज्ञाशब्देभ्योऽन्यत्र जात्यादिशब्देष्वि-त्यर्थः । वादिप्रतिवाद्युभयसम्मतस्यैव दृष्टान्तत्वेनैतस्य साध्वसाधु-वहिर्भूतत्वमकिञ्चित्करमिति भावः । यद्येवंविधोऽपि शब्द उपलभ्येत तर्हि तदनुकरणे "प्रकृतिवदनुकरणम्" इत्यतिदेशेन शास्त्रविषये 'दध्य्लृतक' इत्यादावच्कार्यार्थं लृकारोपदेशस्य चरितार्थतया लृकारोपदेश-प्रत्याख्यानपरभाष्यवार्तिकविरोधः स्यात् । तत्र हि 'साधोरनुकरणं साध्वे-व, असाधोरनुकरणमसाध्वेव, इति लृकारानुकरणस्यासाधुत्वेन शास्त्र-विषयत्वाभावे तदर्थलृकारोपदेशो न कर्तव्यः' इत्युक्तं वार्तिककृता । भाष्य-कृता तु असाध्वनुकरणस्य भिन्नार्थत्वेन साधुत्वमाश्रित्य तदर्थं लृकारोपदेश-स्याऽऽवश्यकत्वमुक्तमिति त्वन्यत् । तदेतद् ध्वनयन् भाष्यान्तरविरोधमाह-*अत एवेति—"लृकारोपदेशो यदृच्छाऽशक्तिजानुकरणाद्यर्थः" इति वार्तिककारोक्तेरिति भावः । न्याय्यस्य = शास्त्रसिद्धस्य । भावात् = सत्त्वात् । तस्यैव = ऋतकस्यैव । न त्वस्य = लृतकस्य । *क्रियेति—क्रियाप्रवृत्तिनिमित्तकः 'ऋतक' शब्दः क्रियाप्रवृत्तिनिमित्तकमेव 'लृतक' शब्दं निवर्तयेद् अर्थविशिष्टस्यैव साधुत्वबोधनात्, न हि शब्दप्रवृत्ति-निमित्तकम् लृतकशब्दं निवर्तयेत् । प्रकृतिप्रत्ययव्युत्पादनपूर्वकं साधुत्वेन बोधितोऽन्वाख्यात इत्युच्यते । *असाधुत्वमिति—साक्षात्परम्परया वा शिष्टाऽप्रयुक्तत्वस्यैवासाधुत्वम् । *पक्षान्तरैरपीति—यथा व्यक्तिपक्षे सरूप-सूत्रारम्भः जातिपक्षेण तु तत्खण्डनमित्यर्थः । वस्तुतस्तु 'चतुष्टयी-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दानां प्रवृत्तिः' इति पक्षेऽपि दोषः सुपरिहर एव। यदुक्तम्— "ऋतको न लृतकनिवर्तक इति माभूत्तस्य निवर्तकत्वम्। शिष्टप्रयोगाभावात्तु तन्निवृत्तिः" इति। एवञ्च शिष्टाप्रयुक्तयदृच्छाशब्दाः असाधुत्वेन शास्त्राविषया इति भाष्याशयः। ❀त्रयीशब्दानामिति—चतुष्टयीशब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चेति यदृच्छाशब्दं लृतकं प्रकल्प्य प्रयोजनमुक्तम्। त्रयीशब्दानां प्रवृत्तिरिति यदृच्छाशब्दममत्वा लृकारोपदेशस्य खण्डनं कृतम्। तथा च त्रयीपक्षबहिर्भूतानां शब्दानामसाधुत्वं शास्त्राविषयत्वञ्च स्पष्टमेव लभ्यते। ❀एतत्पक्षेति—त्रयीपक्षेत्यर्थः। ❀आद्येऽपीति—चतुष्टयीपक्षेऽपीत्यर्थः। ❀तदविषयत्वेति—शास्त्राविषयत्वेत्यर्थः। ❀भाष्य इति—"आचार्य्यदेशशीलनेन च तद्विषयता"। आचार्य्यदेशशीलनेन च यदुच्यते तस्य तद्विषयता प्राप्नोति। "इको ह्रस्वोऽङ्यो गालवस्य"। "प्राचामवृद्धात् फिन्बहुलम्"। गालवा एव ह्रस्वान् प्रयुञ्जीरन् प्राक्षु चैव हि फिन् स्यात्। तद्यथा जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत्। तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति। यस्य पुनर्नित्याः शब्दा गालवग्रहणं पूजार्थम्, देशग्रहणञ्च कीर्त्यर्थम्।" अत्र गालवा एव ह्रस्वान् प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यादित्युक्त्याऽन्येषां तत्प्रयोगेऽसाधुत्वं लभ्यते। तच्च नेष्टमित्यभिप्रेत्यान्येषामपि प्रयोगे साधुत्वं यथा स्यादिति शब्दानां नित्यत्वमाश्रित्य सर्वेषां साधुत्वेन समाहितम्। अनेनैकस्यैव शब्दस्य साधुत्वासाधुत्वे नेष्टे इति स्पष्टमेव लभ्यते इति। ❀तिरस्काराच्चेति—चो हेतौ यतस्तिरस्कारोऽतस्तदविषयत्वम्। ❀किञ्चैवमिति—व्याकरणाव्युत्पाद्यस्यापि साधुत्व इत्यर्थः। ❀असङ्गतिश्चेति—तद्बहिर्भूतानामपि साधूनां सत्त्वापातात्। ❀एवञ्चेति — तन्मतस्यायुक्तत्वे चेत्यर्थः। भाषाशब्दानाम्—'कूची' 'मञ्ची' इत्यादीनाम्। ❀शिष्टैर्धर्मबुद्ध्येति—एतेन 'टि' 'घु' 'भ' आदिशब्दानां व्याकरणाव्युत्पाद्यत्वेऽपि साधुत्वं सूचितम्।

शक्तेस्त्रैविध्यम्

**मू०—शक्तिस्त्रिधा—रूढिः, योगः, योगरूढिश्च। शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वं तत्पदे सा तदर्थनिरूपिता रूढिः, यथा मणिनूपुरादौ।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रकल्पितावयवार्थमात्रबोधे योगशक्तिः, यथा पाचकादौ। 'अश्वगन्धा' पदमोषधिविशेषबोधे रूढम्। अश्वसम्बन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढमित्युच्यते। "रूढिर्योगापहारिणी" इति तु प्रकरणाद्यभावे बोध्यम्।

यत्र 'मण्डप'पदादिभ्यो मण्डपानकर्त्रादेः रूढ्यर्थमण्डपादिगुणवत्त्वेन बोधः, तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थत्यागेन योगाद् रूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः।

यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये बोधकत्वं सा योगरूढिः, यथा पङ्कजादिपदे, तत्र 'पङ्कजनिकर्तृ पद्मम्' इति बोधात्। पद्मस्यानुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना बोधान्न तत्र लक्षणाऽवसरः।

क्वचित्तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः, "भूमौ पङ्कजमुत्पन्नम्" कह्लारकैरवमुखेष्वपि पङ्कजेषु" इत्यादौ। स्पष्टश्चेदम् "आर्हात्" ( पा० सू० ६।१।१९ ) इति सूत्रे भाष्ये।

(रत्न०)—शक्तिस्वरूपं निरूप्य तद्भेदं निरूपयति—*शक्तिरिति। *रूढिरिति – कल्पितप्रकृतिप्रत्ययार्थबोधकत्वासमानाधिकरणा या किञ्चिदर्थनिरूपिता शक्तिः सा रूढिरित्युच्यते। *मणिरिति—शब्दार्थकभौवादिक 'मण'धातोरौणादिके इन्प्रत्यये 'मणिः' इति। एवं 'णू स्तुतौ' नुवनं नूः सम्पदादित्वात्क्विपि 'नूः'इति, 'पुर अग्रगमने' अस्मात् "इगुपध"—(पा० सू० ३।१।१३५) इति कप्रत्यये 'पुरः' इति। नुवः पुरो नूपूरः। नहीमौ शब्दौ शब्दकर्तृरूपार्थौ स्तुतिसम्बन्ध्यग्रगमनकर्तारं वा बोधयतः किन्तु रत्नं भूषणविशेषं वेति रूढिशक्तिमत्वमनयोः। ननु पङ्कजादिपदात्कुमुदादिबोधवारणाय रूढेः प्रतिबन्धकत्वस्वीकारात् 'अश्वगन्धा' शब्दात्कथं वाजिशालाबोधोऽत आह—*योगापहारिणीति—एवञ्च सति प्रकरणादिके योगार्थबोध इति भावः। रूढेर्बलवत्त्वे बीजन्तु अवयवार्थानुसन्धानमूलकयौगिकार्थापेक्षया रूढ्यर्थस्य प्रथमो-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पस्थितत्वमेव । यत्र तु यौगिकार्थस्य प्रथमोपस्थितत्वं तत्र तस्यैव बलवत्त्वम्, यथा "वाजिभ्यो वाजिनम्" इत्यत्र प्रकरणादिना विश्वेदेवानां प्रथमोपस्थितत्वात् 'वाजमन्नमामिक्षारूपमस्ति येषाम्' इति योगाद् बोधो न वाजिनोऽश्वस्य । ❀यत्रेति—यत्रत्वित्यर्थः । "मण्डपो मण्डपोऽभवत्" इत्यादौ । अत्र यथाऽर्थतो मण्डपानकर्तुश्चैत्रादेः मण्डपानकर्तृत्वेन न बोधः किन्तु मण्डपो गृहविशेषस्तद्गतसर्वोपकारकत्वादिगुणवत्त्वेनैवेत्याह—❀मण्डपपदादिभ्य इति । ❀लक्षणाया बलवत्त्वेनेति—तात्पर्यानुपपत्ते रूढेर्योगापहारित्वस्य च बलवत्वप्रयोजकत्वादिति भावः । ❀यत्र शास्त्रेति—यत्रावयवशक्तिसमानाधिकरणा समुदायशक्तिस्तत्रेत्यर्थः । तत्र हि पङ्कजनिकर्तृत्वान्वितं विशेष्यं पद्मम् । †ननु 'पङ्कज'पदादपि क्वचित्कुमुदादिबोध इष्यत एव तथा च सर्वसाधारणी शक्तिरेवास्तु, पद्मरूपविशेषपरतायान्तु लक्षणैवास्त्वित्यत आह—❀पद्मस्येति । केवलरूढ्यर्थबोधमाह—❀भूमौ पङ्कजमिति—अत्र योगार्थस्य बाधः । केवलयोगार्थमुदाहरति—❀कह्लारकैरवमुखेष्विति—कह्लारम् = सौगन्धिकं ह्रस्वकमलम् । कैरवम् = कुमुदम् । मुखेषु = प्रभृतिषु । ❀आढ्य इति—तत्र हि सर्वतोमानार्थक'परिमाण'शब्दस्य प्रस्थादौ योगरूढिरित्युक्त्वा "तदस्यपरिमाणम्" (पा० सू० ५।१।५७) "संख्यायाः संज्ञा" (पा० सू० ५।१।५८) इति सूत्रयोर्विशेष्यविशेषणभावानुपपत्तिमाशङ्क्य "वचनादीयती विवक्षा भविष्यति" इत्युक्तम् । रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यत इति भावः ।

**मू०—सैषा शक्तिः संयोगादिभिर्नानार्थशब्देषु नियम्यते । तदुक्तं हरिणा—**

शक्तितात्पर्यनिर्णायकनिरूपणम्

**"संसर्गो (संयोगो) विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥**

---

† ननु योगरूढिस्थले योगार्थस्यापि शाब्दत्वे 'पङ्कज' पदात् 'पङ्कजनिकर्तृपद्मम्' इति बोधापत्तिः । न चेष्टापत्तिरनुभवविरोधात्, 'स्थलपङ्कजं पङ्कजम्' इतिप्रयोगानापत्तेश्चेति चेत्, न, क्वचित्तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोध इति मूलेनैव समाहितत्वात्, योगार्थबोधवारणाय रूढेः प्रतिबन्धकत्वाद्वा । न च ग्राह्याभावानवगाहितया तदसम्भवः, मणिमन्त्रादिन्यायेनानुभवसिद्धस्य तस्य सत्त्वात् । न च गौरवम्, फलमुखगौरवस्यादोषत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" ॥
(वाक्यप० कां० २ कारि० ३१७।३१८) इति।

एते संयोगादयः शब्दार्थस्यानवच्छेदे = संदेहे तदपाकरणद्वारेण विशेषस्मृतिहेतवः = निर्णयहेतव इत्यर्थः। उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका इति भावः। सङ्ख्या संज्ञा सूत्रे (पा० सू० १।१।२३) भाष्येऽपि स्फुटमेतत्। अत्र सामर्थ्यमेवैकं मुख्यं निर्णायकं संयोगादयस्तद्व्यञ्जकप्रपञ्चः, तैः सामर्थ्यस्यैवाभिव्यक्तेरिति परे। 'सवत्सा धेनुः' 'अवत्सा धेनुः' इति संसर्ग-विप्रयोगयोरुदाहरणे। 'रामलक्ष्मणौ' इत्यादौ साहचर्येणोभयोर्युगपदेव नियमनमिति नान्योऽन्याश्रयः। साहचर्यम् = सादृश्यम्, सदृशयोरेव सहप्रयोगनियमात्। "रामार्जुनगतिस्तयोः" इत्यत्र विरोधेन तत्। "अञ्जलिना जुहोति" "अञ्जलिना सूर्यमुपतिष्ठते" इत्यत्र जुहोत्यादिपदार्थवशाद् 'अञ्जलि' पदस्य तत्तदाकाराञ्जलिपरत्वम्। 'सैन्धवमानय' इत्यादौ प्रकरणेन तत्। "अक्ताः शर्करा उपदधाति" इत्यादौ "तेजो वै घृतम्" इति घृतस्तुतिरूपाल्लिङ्गाद् 'अक्ताः' इत्यस्य घृतसाधनाञ्जनपरत्वम्। 'रामो जामदग्न्यः' इत्यादौ 'जामदग्न्य' पदसन्निधानेन रामः = परशुरामः। 'अभिरूपाय कन्या देया' इत्यादौ 'अभिरूपतराय' इति सामर्थ्यात्प्रतीयते। 'यश्च निम्बं परशुना' † इत्यादावौचित्यात् 'परशुना' इत्यस्य च्छेदनार्थत्वम्। 'भात्यत्र परमेश्वरः' इत्यत्र राजधानीरूपाद्देशात् 'परमेश्वर'पदं राजबोध-

---

† "यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः॥

इति वाक्यपदीयटीकायामुद्धृता पूर्णा कारिका।
(वाक्यप० टी० कां० २ कारि० ३१६)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कम् । 'चित्रभानुर्भाति' इत्यादौ रात्रौ वन्हौ, दिवा सूर्ये । व्यक्तिः= लिङ्गम् । 'मित्रो भाति' 'मित्रं भाति' अत्राद्ये सूर्यः, अन्त्ये सुहृत् । "स्थूलपृषतीम्" इत्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः ।

आदिना षत्वसत्वणत्वनत्वादि । 'सुषिक्तम्' इत्यत्रोपसर्गोऽन्यार्थः । 'सुसिक्तम्' इत्यत्र पूजार्थः सुः कर्मप्रवचनीयः । 'प्रणायके' प्रणयनक्रियाकर्ता णत्वात् । 'प्रनायके' प्रगतनायकदेशबोधः इति पुञ्जराजः । क्वचित्प्राकरणिकाऽर्थबोधोत्तरं वक्तृबोद्धव्यवैशिष्ट्यप्रतिभादिसहकारेण द्वितीयार्थबोधोऽपि । यथा श्यालकादिप्रयुक्तात् 'सुरभिमांसम्' इत्यादेर्द्वितीयाश्लीलार्थबोधः ।

(रत्न०)–*नानार्थेति — न चार्थभेदाच्छब्दभेदेन नानार्थकत्वासम्भवः, आनुपूर्व्यैक्येन नानाऽर्थकत्वव्यवहारात् । *संयोग इति — संयोगत्वञ्च-नानार्थशब्दशक्यान्तरवृत्तितयाऽप्रसिद्धत्वे सति तच्छक्यवृत्तित्वेन प्रसिद्धत्वे सति सम्बन्धत्वम् । विप्रयोगः = विश्लेषः । साहचर्यम् = सादृश्यम्, न तु सहचरणं भाष्यविरोधादित्यन्यत्र विस्तरः । अर्थः = प्रयोजनम् । प्रकरणम् = वक्तृश्रोतृबुद्धिस्थता । लिङ्गम् = संयोगातिरिक्तसम्बन्धेन सम्बद्धो व्यावर्तको धर्मविशेषः । नानाऽर्थपदशक्यान्तरावृत्तिरेकशक्यगतः साक्षाद् शब्दवेद्यो धर्म इति यावत् । अन्यस्य शब्दस्य सन्निधिः = नानार्थपदस्यैकार्थमात्रवाचकपदसमभिव्याहारः । सामर्थ्यम् = निर्दिष्टजननशक्तिः, कारणता वा । औचिती = योग्यता । देशः = ग्रामादिः । कालः = दिवसादिः । व्यक्तिः = पुं-नपुंसक-स्त्रीत्वानि । स्वरः = उदात्तादिः । *सङ्ख्यासंज्ञेति — "अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्ययो भवति" । अर्थो वाऽस्यैवं संज्ञके न भवति प्रकृतं वा तत्र भवति । इदमेवं संज्ञके न कर्तव्यमिति" । अनेन भाष्येण स्पष्टमेव लभ्यते यदर्थसंशयेऽर्थात्प्रकरणाद्वा निर्णयो विधेय इति । तुल्यत्वादिदमुपलक्षणं तात्पर्य्यनिर्णायकानां संयोगादीनाम् इति । *सामर्थ्यमेवेति — सामर्थ्यस्य शक्तिरूपत्वेन, कारणतारूपत्वेन वा संयोगादीनां सामर्थ्यद्योतकत्वमेव । द्योतितं च सामर्थ्यमविवक्षितार्थविषयकतात्पर्यं निरुन्धानं विवक्षितार्थविषयकमेव तात्पर्यमवधारयती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्युक्तम् — ॐसामर्थ्यमेवेति । ॐसवत्सेति — धेनुशब्दस्य नवप्रसूतामात्र-वाचकत्वमतेनेदमुक्तम् । नवप्रसूतगवीमात्रवाचित्वे तु 'सशङ्खचक्रो हरिः' इत्युदाहर्तव्यम् । निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तेश्च तत्रैव सम्भवाद् 'अवत्सा' शब्देन 'गौः' एवोच्यते । सदृशयोरेव सह-चरणस्य दृष्टतया लक्षणया 'सहचरण' शब्दस्य सदृशार्थ-बोधकत्वेन साहचर्यं सादृश्यमुच्यते । न च सहचरणरूपसादृश्य-ग्रहणे दशरथापत्ययोरेव सहचरणात्तयोरेव 'रामलक्ष्मणौ' इत्यत्र ग्रहणं सिध्यति, सादृश्यग्रहणे त्वेकस्य नियतत्वे हि तत्सादृश्यमन्यस्मिन् वाच्यमिति 'रामलक्ष्मणौ' इत्यत्र द्वयोरपि नानाऽर्थकतया परस्परसादृ-श्यग्रहणेऽन्योन्याश्रय इति वाच्यम् "अपपरि"—(पा० सू० १।४।८८) इति सूत्रस्थभाष्यप्रामाण्यात् सदृशयोरेव सहप्रयोगनियमेन युगप-देवोभयोः सादृश्यनियमनात् तदाह — ॐनान्योऽन्याश्रयइति । ॐरामार्जु-नेति — अत्रोपमायां सदृशलक्षणाप्रयोज्यः विरोधात् परशुरामकार्तवीर्य्य-योर्बोधः । न च 'रामादिपदस्य भार्गवादावभिधानियमने विरोधः, विरो-धाच्चाभिधानियमनम्' इत्यन्योन्याश्रयः, 'तयोः' इत्यत्र तत्पदस्य परस्पर-विरोध्यर्थप्रतिबिम्बनप्रयोजकत्वेन युगपदेव विरोधस्फूर्तेः । ॐअञ्जलिनेति-होमकारणतारूपसामर्थ्यवशात्, सूर्योपस्थानकरणरूपसामर्थ्यवशाच्च होमोपस्थानजनकाकारविशेषो लक्ष्यत इति भावः । अर्थस्योदाहरणम् — 'स्थाणुं वन्दे भवच्छिदे' इति । अत्र भवच्छेदरूपप्रयोजनवशात्स्थाणुः = शिवः । ॐतदिति — तात्पर्यनियमनमित्यर्थः । ॐसैन्धवमान-येति — 'सैन्धव' पदेन भोजनकाले लवणबोधो यात्रादिकाले 'अश्व' बोधः । ॐअक्ता इति – अञ्जनविशिष्टा इत्यर्थः । ॐशर्करा इति — मृत्तिकामिश्राः क्षुद्रपाषाणप्रायाः शर्कराः 'कङ्कर' इति नाम्ना लोके प्रसिद्धाः । यद्यपि 'अक्ताः' इत्यत्र न विशेषार्थो नापि 'तेजो वै घृतम्" इति विधिस्तथापि "यः स्तूयते स विधीयते" इति न्यायेन विधायकत्वमप्यस्य कल्प्यम् । शर्करोपधानश्चाग्न्याधानार्थम् । ॐलिङ्गादिति — संयोगातिरिक्तसम्बन्धेन सम्बद्धो व्यावर्तकधर्मो लिङ्गम् । यथा 'कुपितो मकरध्वजः' इत्यत्र समुद्रव्यावृत्तकोपरूपाल्लिङ्गात् 'मकरध्वज' शब्देन कामः । यत्तु लिङ्गं चिह्नमिति, तन्न, व्याप्यधर्मस्यैव चिह्नत्वात्, कोपस्य च कामव्याप्यत्वा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावात् । सन्निधिः = पूर्वोक्तरूपः सामानाधिकरण्यं वेति "सशङ्खचक्रो हरिः" इत्यादौ नातिव्याप्तिः । *अभिरूपतरायेति — दानकरणत्वस्य तत्रैव सत्त्वात् । इदञ्चाभिरूपपदस्य नानार्थकत्वमतेन । *परशुनेति — अत्र च्छेदनक्रिया गम्यते । *मित्रो भातीति – पुल्लिङ्गेन सूर्यः । *मित्रं भातीति– क्लीबेन सुहृत् । *स्थूलपृषतीमिति — स्थूला चासौ पृषती तथा स्थूलानि पृषन्ति यस्यामिति सन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थनिर्णयः । *स्वरादय इति — आदिशब्दग्राह्यमाह — *क्वचिदिति — वक्तुर्बोद्धव्य- देवदत्तादेश्च यद्वैलक्ष्यण्यम्, नवनवोन्मेषशालिबुद्धिरूपा प्रतिभा च तयोः सहकारेणेत्यर्थः । *द्वितीयार्थ इति—व्यङ्ग्यार्थ इत्यर्थः । यथा "गतो- ऽस्तमर्कः"—इत्यादौ वक्ता धार्मिकश्चेत्तदा तेन सन्ध्यावन्दनसमयो गम्यते, यदा च बोद्धव्यस्तादृशस्तदापि स एवार्थो गम्यते । एवं वक्तृ- बोद्धव्ययोर्दुष्टत्वे स्तेयाद्यवसरावगमः । परन्तु द्वितीयार्थस्य प्रतिभा- ( वासना ) शालिनामेव बोधो नान्यथा । *सुरभि इति — अत्र मांस- लाभोन्मुखं प्रति सुरभिमांसमपेक्षत इति श्यालकवचने अण्डकोशादिः प्रतीयते । अश्लीलः = व्रीडादिजनकः । 'श्री'शब्दात् सिध्मादित्वाल्लचि कपिलकादित्वाल्लत्वे साधुः ।

इति शक्तिनिरूपणम् ।

---

## अथ लक्षणानिरूपणम् ।

मू०—ननु सर्वेषां सर्वार्थवाचकत्वे लक्षणोच्छेद इति चेत्, न, योगिनां सर्वार्थवाचकत्वज्ञाने(सत्य)ऽप्यस्मदादीनां तदभावात् ।

लक्षणानिरूपणम् किञ्च 'अन्वयाद्यनुपपत्तिज्ञानपूर्वकं शक्यत्वेन गृहीतार्थसम्बन्धज्ञानेनोद्बुद्धशक्तिसंस्कारतो बोधे लक्षणा' इति व्यवहारात् । तच्छक्तिसंस्कारश्चेदृशस्थले जन्मान्तरी- योऽपि ।

वस्तुतः तात्पर्यानुपपत्तिरेव तद्बीजम् । अन्यथा 'गङ्गायां घोषः' इत्यादौ घोषादिपद एव मकरादिलक्षणापत्तिः, तावताऽ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्यन्वयानुपपत्तिपरिहारात् । एवं रूढिप्रयोजनान्यतरदपि तत् कारणमनुभवबलात् ॥

(रत्न०)—'सिंहावलोकन'न्यायमाश्रित्य लक्षणां निरूपयति— *नन्वित्यादिना। *उच्छेदेति — अतिरिक्तवृत्तिस्वीकारनैष्फल्यमित्यर्थः। *योगिनामिति — ननु व्यवहारदशायाम् 'इदं लक्ष्यम्' इति व्यवहारोपपत्तये तदावश्यकत्वमत आह — *किञ्चेति—एकपदार्थेऽपरपदार्थसम्बन्धोऽन्वयः। आदिना तात्पर्यज्ञानसंग्रहः। *शक्यत्वेनेति —'शक्तिविषयत्वेन ज्ञातो योऽर्थः भगीरथखातावच्छिन्नजलप्रवाहादिः यः सम्बन्धः सामीप्यादिस्तस्य यज्ज्ञानं स्मरणात्मकं तेनोद्बुद्धो यः शक्तिविषयकसंस्कारस्तज्जन्यबोधस्थले लक्षणा' इति व्यवहारादित्यर्थः। एवञ्च लक्ष्यार्थविषयकसंस्कार एव लक्षणेति भावः। व्यञ्जनायामतिव्याप्तिवारणाय— *शक्यत्वेनेति। शक्यस्याप्यभिधारूपसम्बन्धेन प्रतिपादनादाह — *अन्वयानुपपत्तीति — ननु प्रवाहमुपस्थाप्य क्षीणशक्तिके 'गङ्गा' पदे प्रवाहसम्बन्धेन तीरोपस्थितावपि तत्र 'गङ्गा' पदस्य वृत्तिर्न सम्भवतीति चेत्, न, 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति रीत्या साक्षात्सम्बन्धिनो बाधात्सम्बन्धिसम्बन्धिनोऽपि ग्रहणेनादोषात् । एतेन तीरांशेऽनुभवाभावात्संस्कारासम्भव इत्यपास्तम्, 'गङ्गा' पदसम्बन्धस्य तत्रापि सत्त्वात्। *व्यवहारादिति — सन्मात्रविषयिण्या भगवदिच्छायास्तीरादावपि सत्त्वाच्छक्तिरेवेति भावः। एतेनैकस्या एवेश्वरेच्छायाः शक्तित्वस्वीकारेणानन्तस्थलेऽतिरिक्तशक्तिकल्पनाऽपेक्षया क्लृप्तशक्यसम्बन्धरूपलक्षणायां लाघवमित्यपास्तम्। यत्तु 'गङ्गा' पदेन 'घोष' पदासमभिव्याहारे तीरार्थाबोधाद् घोषपदमेव तीरबोधकम्, अत एव "लाक्षणिकं पदं नानुभावकम्" इति मीमांसकाः, तन्न, 'प्रत्ययार्थस्य स्वप्रकृत्यर्थे एवान्वयः' इति नियमाद् 'गङ्गायाम्' इति सप्तम्यर्थस्य तीरपदार्थेऽनन्वयापत्तेस्तस्य गङ्गारूपप्रकृत्यर्थत्वाभावात्। *जन्मान्तरीयेति — अत एव † बालानां तिरश्चाञ्च स्तनपानादौ इष्टसाधनताज्ञा-

---

† वस्तुतस्तु नेदं विचारसहम्, जन्मसमये बालानां तिरश्चाञ्च न हि वाक्यश्रवणं स्तनपानप्रवृत्तिप्रयोजकम्, किन्त्वदृष्टरूपोद्बोधकवशादिष्टसाधनताप्रका-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोपपत्तिः । अन्वयानुपपत्तेर्लक्षणाबीजत्वं खण्डयन्नाह †—*वस्तुतस्त्विति । किञ्चान्वयानुपपत्तौ लक्षणाबीजत्वं किम् ? न हि लक्षणाजनकत्वरूपम् , शक्यसम्बन्धरूपलक्षणायास्तज्जन्यत्वासम्भवात् । नापि लक्ष्यार्थविषयकतात्पर्यग्राहकत्वम् , प्रकरणादितोऽपि तत्सम्भवात् । नापि लक्ष्यार्थबोधहेतुत्वम 'छत्रिणो यान्ति' इत्यादौ व्यभिचारात् । *घोषादिपद एवेति — अपूर्वज्ञानविषयत्वस्यैव विधेयतया लक्षणायाश्च ज्ञातशक्यार्थसम्बन्धरूपत्वेन तदानीमसम्भवात् 'गङ्गा'पद एव लक्षणेत्यन्ये । अत एव 'न विधौ परः शब्दार्थः' इति सङ्गच्छते । *रूढीति—कुशाकर्मकलवनकर्त्रर्थकस्य 'कुशल'पदस्य निपुणे रूढिरेव । 'गङ्गायां घोषः' इत्यादौ शैत्यपावनत्वादिप्रतीतिः प्रयोजनम् । 'गङ्गायां घोषः' इत्युक्तौ यादृशं पावनत्वादि प्रतीयते न हि तादृशं 'गङ्गातटे घोषः' इत्युक्त्या प्रतीयते । एवञ्च मुख्यार्थबाधः, शक्यार्थसम्बन्धः, रूढिप्रयोजनान्यतरच्चेति त्रयं लक्षणायां हेतुः । तात्पर्यानुपपत्तेरपि प्रवेशे तु चतुष्टयम् । केचित्तु — लक्षणाजन्यज्ञानेऽन्वयानुपपत्तितात्पर्यानुपपत्त्युभयत्र मुख्यार्थबाधज्ञानत्वेन तयोः प्रयोजकता । मुख्यार्थबाधश्च — समभिव्याहृतपदतात्पर्यविषये मुख्यार्थताऽवच्छेदकरूपेण मुख्यार्थासंसर्गरूपः । एवञ्च 'छत्रिणो यान्ति' 'यष्टीः प्रवेशय' 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ छत्र्यादिमुख्यार्थानां समभिव्याहृतक्रियासु कर्तृत्वादिरूपेणान्वयाबाधेऽपि तात्पर्यविषयेषु मुख्यच्छत्र्यच्छत्रिगमनभोजनार्थप्रवेशनदध्युपघातकावधिरक्षणेषु मुख्यार्थताऽवच्छेदकरूपेण तदन्वयबाधोऽस्त्येवेति नान्वयानुपपत्तेर्लक्षणाबीजत्वे दोष इत्याहुः ॥

मू०—अत्रेदं बोध्यम्—शक्यार्थोपस्थितौ तद्विषयकान्वय-

---

रकं स्मरणात्मकं ज्ञानमेव प्रवृत्तिप्रयोजकमिति शब्दनिष्ठशक्तिजन्यः संस्कारो जन्मान्तरीयोऽपीति चिन्त्यमित्युपाध्यायाः ।

† वस्तुतस्तु वेदस्यापौरुषेयत्वे "यजमानः प्रस्तरः" "आयुर्वै घृतम्" इत्यादौ तात्पर्याऽनुपपत्तेरप्यसम्भवेनान्वयतात्पर्यान्यतरानुपपत्तेरेव लक्षणाबीजत्वमुचितमित्युपाध्यायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधे ज्ञाते तस्मिन् वक्तृतात्पर्याविषयत्वेनाप्रामाण्यग्रहे तदितरत्र वक्तृतात्पर्यग्रहे च सति लाक्षणिकार्थबोधः; शक्यार्थान्वयबोधं विना तत्र तात्पर्याविषयत्वग्रहासम्भवात्, संसर्गविषयज्ञानस्यैवान्वयबोधत्वात् । 'प्रसिद्धनानाऽर्थविषयकबोधजनकत्वमेव नानार्थत्वम्' इति नातिप्रसक्तं नानार्थत्वम् । सम्बन्धज्ञानम्—'तीरसम्बन्धिप्रवाहबोधकमिदम्' इति 'गङ्गापदशक्यप्रवाहसम्बन्धि तीरम्' इति वा ।

शक्यार्थान्वयबोधानन्तरं लक्षणा तत्र मतभेदश्च

'सम्बन्ध एव लक्षणा' इत्यन्ये । अत्र पक्षेऽपि संयोग-संयुक्तवृत्तित्वरूपसम्बन्धद्वयरूपा एका लक्षणा । लक्षणे जातावेकवचनम् ।

एवञ्च लक्ष्यताऽवच्छेदकेऽपि लक्षणा भवत्येवेति बोध्यम् । विशेषणे संयोगारोपो वा ।

लक्ष्यताऽवच्छेदके न लक्षणा, उभाभ्यामनारोपितैकसम्बन्धस्यासम्भवात् । 'विशेष्यगतसम्बन्धज्ञानस्य लक्ष्यतावच्छेदकप्रकारकलक्ष्यबुद्धित्वं कार्यताऽवच्छेदकम्' इत्यलक्ष्यस्यैव तस्य भानम्' इत्यन्ये । तादृशसम्बन्धज्ञानजन्या तदुपस्थितिरेव लक्षणा । स्वविषयसम्बन्धिवाचकत्वेन चैषा पदनिष्ठा ।

वृत्तित्वन्तु—'शाब्दबोधजनकपदपदार्थसम्बन्धत्वम्' इति परे । तन्मतेऽपि स्फुटमेव लक्ष्यताऽवच्छेदके लक्षणा । 'पदादपि शाब्दबोध एव, न तु स्मृतिः' इति तेषामाशयः । यत्र 'कमलानि कमलानि' इत्यादौ सौरभविशिष्टकमलबोधस्तत्रापि विशिष्टे लक्षणा ॥

(रत्न०)—*तद्विषयकेति— 'भगीरथखातावच्छिन्नजलप्रवाहनिरूपितवृत्तितावान् घोषः' इत्यन्वयबोध इत्यर्थः। ननु गङ्गापदात्प्रवाहविशेषरूपार्थस्योपस्थितावपि तस्य शाब्दधीविषयत्वे मानाभाव इत्यत आह — *शक्यार्थेति । *अन्वयबोधेति – 'गङ्गानिरूपितवृत्तितावान् घोषः' इत्यन्वयबोध इत्यर्थः । *तात्पर्य्येति —'गङ्गापदं गङ्गासम्बन्धितीरं बोधयतु' इति तात्पर्य्येत्यर्थः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

⁕तदितरत्रेति – तटादावित्यर्थः । आधाराधेयभावसम्बन्धेन 'गङ्गाविशिष्टो घोषः' इति ज्ञानमप्रमा, बाधितार्थविषयकत्वादिति रीत्येत्यर्थः । शक्यार्थविषयकशाब्दबोधाभावे लक्षणाबीजस्य तात्पर्य्यानुपपत्तेरसम्भवादिति भावः। ननु गङ्गापदात्प्रवाहविशेषस्योपस्थितिरस्तु शाब्दबोधो माऽस्त्वत आह– ⁕संसर्गेति । ननु हर्य्यादिपदवद् गङ्गादिपदानामपि नानार्थत्वापत्तिरत आह– ⁕प्रसिद्धेति – अर्थे प्रसिद्धत्वञ्च –अन्वयानुपपत्त्यप्रयोज्यतत्पदजन्यप्रतीतिविषयत्वम् । नन्वेवं 'घोष'पदेनापि स्वशक्यसमीपवृत्तित्वसम्बन्धेन मीनादिबोधापत्तिरत आह – ⁕सम्बन्धज्ञानमिति । ⁕तीरसम्बन्धीति – 'गङ्गा'पदम् तीरसम्बन्धिप्रवाहविशेषविषयकबोधजनकम्'इति पदविशेष्यकज्ञानमित्यर्थः। अर्थविशेष्यकज्ञानमाह–⁕गङ्गापदेति । एवञ्च तटादिविषयकबोधजनकत्वमेव लक्षणेति भावः। ननु गङ्गापदात्तीरोपस्थितिरेव भवेन्न तु तेन तीरविषयको बोधः,'लाक्षणिकं नानुभावकम्'(शाब्दबोधजनकम् )इति मीमांसकसिद्धान्तविरोधादत एव "न विधौ परः शब्दार्थः" इति प्रवादोऽपि सङ्गच्छत इति चेत्, न, तस्योद्देश्यविधेयभावेनान्वयाभाव एव तात्पर्य्यात् । वैयाकरणनये तु शक्यताऽवच्छेदकरूपेणैव लक्ष्यार्थभानान्न काऽपि शङ्का। तार्किकमतमाह –⁕सम्बन्ध एवेति — शक्यसम्बन्ध एवेत्यर्थः । 'एव' इत्यनेन शक्तिज्ञानजन्यलक्ष्यार्थविषयकस्य पूर्वोक्तसंस्कारस्य व्यावृत्तिः । ननु तीरत्वावच्छिन्नविषयकबोधजनकत्वस्य लक्षणात्वे लक्षणया तीरतीरत्वयोर्बोधसम्भवेऽपि तस्याः सम्बन्धरूपत्वस्वीकारे तीरतीरत्वयोरेकस्य प्रवाहसम्बन्धस्य वक्तुमशक्यतया नैयायिकमते तयोर्बोधो न स्यादत आह– ⁕अत्रपक्षेऽपीति – 'सम्बन्ध एव लक्षणा' इति पक्षेऽपीत्यर्थः । अपिना लक्ष्यार्थविषयकसंस्काररूपलक्षणापक्षेऽपि लक्ष्यताऽवच्छेदके लक्षणा ध्वनिता । लक्ष्यताऽवच्छेदके लक्षणाया अस्वीकारे तुल्ययुक्त्या शक्यताऽवच्छेदकेऽपि शक्तिर्न सिद्ध्येदिति भावः । एतेन शक्यसम्बन्धरूपलक्षणाया लक्ष्यताऽवच्छेदकेऽभावाच्छक्यादशक्योपस्थितिरूपैव लक्षणेति निरस्तम् । ननु संयोग-संयुक्तवृत्तित्वोभयात्मकस्योभयत्राप्यभावात्कुत्रापि लक्षणा न स्यादिति चेत्, न, अपर्याप्त्या उभयात्मकस्यापि प्रत्येकं सत्त्वात् । ननु संयोगसम्बन्धस्तीरे संयुक्तवृत्तित्वं तु तीरत्वे इति तयोर्भेदात्, लक्षणात्वेनाभिमतसम्बन्धानामानन्त्याच्च 'सम्बन्धो लक्षणा' इति लक्षणालक्षणे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'सम्बन्धः' इत्येकवचनान्तमनुपपन्नमत आह — *जाताविति१†। *एवञ्चेति — संयोगसम्बन्धस्य तटे, संयुक्तसमवेतत्वस्य तटत्वे सत्त्वेन लक्ष्यताऽवच्छेदकेऽपि२† लक्षणा सिद्धेति भावः । लाघवान्मतान्तरमाह — *विशेषण इति — तीरत्व इत्यर्थः । *संयोगारोपेति — आरोपितसंयोग इत्यर्थः । इतोऽपि लाघवादाह — *लक्ष्यताऽवच्छेदक इति । उभाभ्याम् = तीरतीरत्वाभ्याम् । वस्तुतस्तु पदपदार्थयोरभेदस्याध्यस्तत्वाद् 'गङ्गा'पदमेव सम्बन्धिज्ञानविधया तीरं स्मारयति । तत्र चाविनाभूतत्वात्तीरत्वस्मृतावपि शाब्दे भानसम्भवात्तत्र वृत्तित्वकल्पने न मानमिति भावः । नन्वेवमलक्ष्यस्यापि तीरत्वस्य भानस्वीकारे यस्य कस्यापि भानापत्तिरत आह — *विशेष्यगतेति—लक्ष्यताऽवच्छेदकतटत्वादिप्रकारकबुद्धिं प्रत्येव विशेष्य ( तीरादि ) गतसम्बन्धज्ञानस्य कारणत्वान्नातिप्रसङ्ग इति भावः । ननु 'वृत्त्योपस्थितस्यैव शाब्दबोधे भानम्' इति नियमभङ्ग एवात्रपक्षे दूषणमत आह — *तादृशसम्बन्धेति — शक्यसम्बन्धज्ञानजन्या शक्यादशक्योपस्थितिरेव लक्षणेत्यर्थः । 'गङ्गा'पदेन प्रवाहविशेषोपस्थितिस्तया चैकसम्बन्धिज्ञानमिति विधया तीरस्मरणं तदेव च बोधहेतुरिति भावः । अत एव 'गङ्गा'पदं न तीरोपस्थापकं किन्तु 'घोष'पदमेवेति 'लाक्षणिकं नानुभावकम्' इति मीमांसकप्रवादः । एवञ्च लाक्षणिकस्याननुभावकत्वाभावे 'घोष'पदस्यैवानुभावकत्वे 'घोष'पदे तीरवाचकत्वापत्तिरित्यपास्तम्, तस्याप्यनुभावकत्वाभावात् । ननु तीराद्युपस्थितेः पदजन्यत्वाभावाच्छाब्दबोधविषयत्वानुपपत्तिः, पदाजन्यस्यापि शाब्दे भानस्वीकारेऽतिप्रसङ्ग इति चेत्, न, शक्यार्थविषयकशाब्दबोध एव तादृशनियमेन लक्ष्यार्थबोधे पदार्थोपस्थितेरेव नियामकत्वात् । एतन्मते तीरस्य गङ्गापदार्थत्वाभावात्सप्तम्यर्थान्वयानापत्तिर्दोषः । किञ्चैवं लक्ष्यार्थविषय-

---

१† सम्बन्धत्वरूपजातिगतैकत्वस्य जातिमति सम्बन्धे आरोपादित्यर्थः ।

२† ननु 'घटस्य घटत्वम्' इतिवत् 'तीरत्वं गङ्गायाः' इति सम्बन्धज्ञानाभावात्तत्र लक्षणा न स्यादिति चेत्, न, 'घटो न' इत्यादौ घटत्वस्यैव स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वये यथा संसर्गमर्यादयाऽवच्छेदकत्वं घटत्वे भासते तथा तीरत्वेऽपि सामीप्यावच्छेदकत्वस्य भानेनादोषात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कबोधे शब्दाश्रयतयोपस्थिताकाशादेरपि † बोधापत्तिः । किञ्चोपस्थितेर्वृत्तित्वानुपपत्तिः उपस्थितिहेतोरेव वृत्तित्वात् । ननु विषयतयोपस्थितेः शब्दवृत्तितया तस्याः शब्दधर्मत्वासिद्धिरत आह — *स्वविषयेति — स्वम् = उपस्थिविरूपा लक्षणा तद्विषयस्तटादिस्तत्सम्बन्धी प्रवाहादिस्तद्वाचकत्वं पदे इति पदधर्मत्वं तस्याः । एतेन अन्यपक्षेऽपि स्वप्रतियोगिवाचकत्वसम्बन्धेन पदनिष्ठत्वं बोध्यमिति सूचितम् । ननु शक्तेरिच्छारूपतया लक्षणायाश्च ज्ञानरूपतया वैजात्येन वृत्तित्वासम्भव इत्याह — *वृत्तित्वमिति — गङ्गापदस्य यः प्रवाहविशेषे सम्बन्धो यश्च तीरे स वृत्तिरित्यर्थः । 'तीरम् प्रवाहसम्बन्धि' 'गङ्गापदम् तीरसम्बन्धिनीरविशेषवाचकम्' इत्याकारभेदादिति भावः । ननु वृत्तिरूपस्य पदपदार्थसम्बन्धस्योपस्थितिजनकत्वाच्छाब्दबोधजनकेत्ययुक्तमत आह — *शाब्दबोधजनकेति — अन्यथाऽवान्तरवाक्यार्थबोधकाले पदार्थस्मरणस्य नष्टत्वान्महावाक्यार्थबोधो न स्यादिति भावः । अयम्भावः — प्रथमक्षणे उपस्थितिर्द्वितीयक्षणे अवान्तरवाक्यार्थबोध इति तृतीयक्षणे उपस्थितेर्नाशान्महावाक्यार्थबोधो न स्यात्तदानीं शाब्दबोधकारणस्य पदार्थोपस्थितेरभावात् । शक्तिसंस्कारद्वारा पदस्यैव शाब्दबोधजनकत्वे तु नायं दोष इति । एवञ्च मतभेदेन लक्षणा पञ्चविधा — शक्यताऽवच्छेदकारोपरूपा, संस्काररूपा, सम्बन्धरूपा, सम्बन्धज्ञानरूपा, उपस्थितिरूपा च । तत्राद्या ग्रन्थकारसिद्धान्तभूता ।

लक्षणाभेदनिरूपणम्

मू० — सा द्विधा — गौणी, शुद्धा च । स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी । तदतिरिक्तसम्बन्धेन तत्प्रतिपादिका शुद्धा । प्रकारान्तरेणापि सा द्विधा — अजहत्स्वार्था, जहत्स्वार्था च । शक्यार्थापरित्यागेनेतरार्थलक्षणमाद्या । तदपरित्यागश्च-

---

† वस्तुतस्तु — 'एकसम्बन्धिज्ञानविधया तत्पदनिष्ठशक्तिज्ञानप्रयोज्यशक्यार्थज्ञानजन्यशक्यताऽनवच्छेदकावच्छिन्नोपस्थितिर्लक्षणा' इति स्वीकारे नातिप्रसङ्गः, 'शक्तिप्रयोज्य' इति निवेशात् । 'आकाश' पदशक्यस्यापि आकाशस्य पदादेवोपस्थितिसत्त्वेऽपि न शाब्दे भानमिति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

... वेद वेदांग विद्यालय ग्रन्थालय
आगत क्रमांक ...... 407
दिनांक ......

शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिनाऽन्वयित्वम् । तेन 'छत्रिणो यान्ति' 'कुन्तान् प्रवेशय' 'काकेभ्यो दधि रक्ष्यतामि' इत्यादौ न दोषः; अच्छत्र्यादिसाधारणरूपेण च्छत्र्यादेः, कुन्तवद्विशेषणतया कुन्तानाम्, दध्युपघातकतया काकादेश्च लक्ष्यार्थान्वयिक्रियाविशेषणत्वात् । स्वार्थपरित्यागेनेतरार्थलक्षणमन्त्या । तत्परित्यागश्च – शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिनाऽनन्वयित्वम् । अतः 'गां वाहीकं पश्य'इत्यादौ न दोषः । अत्र गोसदृशे लक्षणायामपि न गोस्तदन्वयिदर्शनक्रियान्वयित्वम् । एवं रीत्या अन्येऽपि प्रकारा ऊह्याः । त्वगादिशब्दानाम् 'त्वचा ज्ञातम्' इत्यादौ त्वगिन्द्रिये निरूढलक्षणा । 'असति प्रयोजने शक्यार्थबाधप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढलक्षणा' इति व्यवहारः, अन्यथा रूढिशक्तिरेवेति बोध्यम् । प्रयोजनवती तु 'कुन्ताः प्रविशन्ति' इत्यत्र भीतिपलायमानवाक्ये कुन्तानां तात्पर्यविषयकुन्तिप्रवेशेऽन्वयबाधात् 'कुन्त' पदस्य तत्संयुक्तपुरुषे लक्षणा, कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनम् । 'गङ्गायां घोषः' इत्यत्र प्रवाहे घोषाधिकरणत्वबाधात् 'गङ्गा' पदेन स्वसम्बन्धि तीरं लक्ष्यते, गङ्गागतशैत्यपावनत्वप्रतीतिः प्रयोजनम् । 'गौर्वाहीकः' इत्यत्र गोसादृश्यं लक्ष्यताऽवच्छेदकम्, गवाभेदप्रत्ययः फलम्, व्यञ्जनाजन्यबोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एष च आहार्य्यः, शब्दजन्यभेदकधर्मोपस्थितिकालिकत्वात् । लक्ष्ये 'गङ्गायां घोषः' इत्यादौ च गङ्गागतशैत्यादिप्रतीतये मध्ये तीरादौ गङ्गाऽभेदप्रतीतिः । 'उपकृतं बहु नाम'इत्यादौ लक्ष्ये अपकारे उपकाराभेदप्रतीतिद्वारैवासाधुत्वं व्यङ्ग्यम् । केचित्तु 'गौर्वाहीकः' † इत्यादौ

---

† "वाहीक इति । वाहीको नाम देशविशेषः । तत्रत्यः पुरुषो वाहीकः । केचित्तु–'बहिर्भवो बाहीकः' इति व्युत्पत्त्या सदाचारबहिर्भूत इत्यर्थः । "बहिषष्टि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साधारणधर्माश्रयो जडादिर्जडत्वेन लक्ष्यस्तत्र गवाभेदप्रतीतिद्वारा गोवृत्त्यसाधारणजडत्वप्रतीतिः फलम् । न च 'गौर्वाहीको जडः' इत्यादौ पौनरुक्त्यम् , लक्ष्यताऽवच्छेदकान्तरव्युदासे तस्य तात्पर्य्यात् । सदृशत्वेन लक्षणेति वादिनाऽपि सादृश्यस्य विशिष्य साधारणधर्मप्रतीतिं विना पर्यवसानाभावेन प्रसिद्ध्यादिना तत्पर्यवसानं वाच्यमिति, अन्यथाऽनुपपत्त्या प्रसृतायाः लक्षणायाः साधारणधर्मविशिष्टे एवौचित्यात् । एतेन 'गौर्वाहीकः' इत्यादौ 'गो'शब्देन स्वशक्यगतजाड्यादिगुणसदृशजाड्यादय एव लक्ष्यन्ते, तैश्च जातिशक्तिनये व्यक्तिलाभवत्स्वाश्रयव्यक्तिलाभ इति परास्तमित्याहुः ।

'ग्रामो दग्धः' 'पुष्पितं वनम्' इत्यादौ दग्धादिपदान्यर्शआद्यजन्तानि' इत्यर्थवत्सूत्रभाष्योक्तेः २† तत्र लक्षणैव नेति बोध्यम् । ईदृशेषु जहदजहल्लक्षणा इत्यन्ये ।

(रत्न०)–लक्षणारूपसम्बन्धस्य नानात्वात्तं विभजते–*द्विधेति । *गौणीति — सादृश्यसम्बन्धेन यः शक्यसम्बद्धस्तत्प्रतिपादिका गौणीत्यर्थः । यत्तु गौणी न लक्षणाभेदरूपा विशिष्टबुद्धियोग्यसम्बन्धे सत्येव लक्षणास्वीकारात् । न हि संयोगेन 'दण्डी चैत्रः' इतिवत् सादृश्यसम्बन्धेन 'सिंहवान् चैत्रः' इति विशिष्टबुद्धिर्दृश्यत इति मीमांसकाः, तन्न, विशिष्ट-

---

लोपो यञ्च" "ईकक् च" इति वार्तिकाभ्यां टिलोपे ईककि च कृते 'ब व योरभेदाद् 'वाहीक' इति रूपम्' इत्याहुः"। ( साहि० द० टि० )

२ † यद्यप्येवमानुपूर्वीकम् भाष्यं तत्र नोपलभ्यते तथाप्येतदर्थकं तूपलभ्यत एव । तथाहि—अवयवा एवार्थवन्तो न समुदाया इति पक्षे 'आढ्यमिदं नगरम्' 'गोमदिदं नगरम्' इत्यादेरुपपत्तये भाष्ये "इह तावत् 'आढ्यमिदं नगरम्' इत्यकारो मत्वर्थीयः, आढ्याः अस्मिन्सन्ति तदिदमाढ्यमिति । गोमदिदं नगरमिति मत्वन्तान्मत्वर्थीयो लुप्यते" इत्युक्तम् । एवञ्च 'आढ्यम्' इत्यत्र यथा 'अकारो मत्वर्थीयः' इत्युक्त्या अर्शआदिभ्योऽजुक्तस्तथा दग्धादिपदेष्वपि स्यादित्यभिप्रेत्य मूले 'अर्थवत्सूत्रभाष्योक्तेः' इत्युक्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्ध्ययोग्यत्वेऽपि 'उपकृतम्' इत्यादौ विपरीतलक्षणास्थले स्वनिरूपितविरोधाधिकरणत्वसम्बन्धेऽप्यस्याः सर्वसम्मतत्वादिति ध्वनयन्नाह—*स्वनिरूपितेति—स्वम् = शक्यम् तन्निरूपितसादृश्याधिकरणत्वसम्बन्धेनेत्यर्थः। *तदतिरिक्तेति—सादृश्यातिरिक्तसम्बन्धेनेत्यर्थः। सा = शुद्धा। यत्तु 'गौरनुबन्ध्यः' इत्यादौ 'आकृतिः पदार्थः' इति पक्षे स्वार्थापरित्यागेन व्यक्तिबोधो लक्षणयेति, तन्न, तत्र हि अविनाभावाद् व्यक्तिराक्षिप्यते न तु शब्देनाभिधीयते, रूढेः प्रयोजनस्य वाऽभावेन लक्षणाया असम्भवात्। सा = गौणी, शुद्धा च। द्विविधत्वमेव दर्शयति—*अजहत्स्वेति। जहति स्वानि (पदानि) यम् (अर्थम्) स जहत्स्वोऽर्थः, जहत्स्वः (पदकर्तृकत्यागकर्मीभूतः) अर्थो यस्यां लक्षणायां सा जहत्स्वार्था, जहत्स्वार्था न भवतीत्यजहत्स्वार्था। तत्राजहत्स्वार्थामाह—*शक्यार्थेति। लक्षणम् = बोधनम्। सामान्ये नपुंसकम्। बोधिकेत्यर्थः। ननु स्वार्थपरित्यागस्य क्वाप्यदर्शनादिदं विशेषणमसङ्गतमत आह—*तदपरित्यागश्चेति—शक्यार्थापरित्यागश्चेत्यर्थः। *येन केनापीति—येन केनापि धर्मेणेत्यर्थः। *तेनेति—शक्यलक्ष्योभयसाधारणरूपेण लक्ष्यार्थान्वयिना शक्यार्थान्वयित्वस्यैव 'अत्याग' पदार्थत्वेनेत्यर्थः। *छत्रिणो यान्तीति—अत्रैकसार्थवाहित्वेन रूपेणाच्छत्रिणामिव छत्रिणामपि गमनेऽन्वयः। तथा च स्वघटितसार्थवाहिनि लक्षणाऽत्रेति भावः। यत्र स्वार्थस्य विशेष्यतया क्रियाद्यन्वयस्तत्राऽजहत्स्वार्था यथा—'छत्रिणो यान्ति' इत्यादौ। अत्र हि नहि शक्यार्थो लक्ष्यार्थे विशेषणीभूयान्वेति। 'यष्टीः प्रवेशय' इत्यादौ तु जहत्स्वार्थैव, यष्टेः पुरुषविशेषणतयाऽन्वयादिति तार्किकोक्तं खण्डयन्नाह—*कुन्तवदिति—कुन्तिनि पुरुषे संयोगेन कुन्तो विशेषणम् तथा च कुन्तिनामिव कुन्तानामपि प्रवेशक्रियायामन्वय इति तत्राप्यजहत्स्वार्थैवेति भावः। एवञ्च 'छत्रिणो यान्ति' इत्यादौ शुद्धा, 'यष्टीः प्रवेशय' इत्यादौ च गौणी लक्षणेति भावः। तीक्ष्णत्वं साधारणो धर्मः। 'काकेभ्यो दधि रक्ष्यताम्' इत्यदौ कस्यचिन्मतं तृतीयप्रकारसङ्गतमिति सूचयन्नाह—*दध्युपघातकेति—अत्र 'काक' पदस्य दध्युपघातके लक्षणया लक्ष्यताऽवच्छेदकदध्युपघातकत्वरूपेण काकस्यापि क्रिया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्वयादजहत्स्वार्थैवेति भावः । इयं गौणी, लक्ष्यार्थस्य बिडालादेः सादृश्यसम्बन्धेन शक्यार्थसम्बद्धत्वात् । जहत्स्वार्थामाह — *स्वार्थपरित्यागेनेति । *अत्रेति — गोसदृशे लक्षणायां गोर्विशेषणत्वेऽपि न गोर्दर्शनक्रियायामन्वयः । ननु शक्यताऽवच्छेकारोप एव लक्षणेति मते कथं स्वार्थपरित्यागः, गोत्वविशिष्टस्यैव क्रियायामन्वयादिति चेत्, न, आरोपितगोत्वस्यान्वयित्वेऽपि वास्तविकस्यानन्वयेनादोषात् । *एवंरीत्येति — वाक्यार्थे शक्यार्थस्यान्वयसिद्धये यत्रेतरार्थाक्षेपः = इतरस्य शक्यताऽनवच्छेदकावच्छिन्नस्याक्षेपः = प्रत्यायनं तत्रोपादानलक्षणेत्युच्यते। यथा–रूढितः 'श्वेतो धावति' इत्यादौ श्वेतगुणस्य धावनक्रियायामन्वयसिद्धये इतरस्याश्वत्वाद्यवच्छिन्नस्य बोधनम्। एवं प्रयोजनतो 'यष्टीः प्रवेशय' इत्यत्राप्युपादानलक्षणा बोध्या । तदुक्तम्—

मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥" इति
(साहि० द० परि० २ कारि० ६)

यत्र वाक्यार्थे शक्यार्थभिन्नस्यान्वयसिद्धये स्वस्य = शक्यार्थस्य अर्पणम् = परार्थ (लक्ष्यार्थ) बोधनेनोपयोगीकरणं तत्र लक्षणेत्युच्यते। यथा रूढितः 'कलिङ्गः साहसिकः' प्रयोजनतो 'गङ्गायां घोषः'। अत्र परस्य कलिङ्गदेशीयपुरुषस्य तटस्य च 'साहसिक' 'घोष'पदार्थयोरन्वयसिद्धये स्वस्य कलिङ्गदेशरूपस्य प्रवाहरूपस्य च पुरुषतटादिबोधनेनोपयोगित्वमिति लक्षणलक्षणा । तथा चोक्तम् ।

अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये ।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥ इति
(सा० द० परि० २ कारि० ७)

यत्र विषयस्य (लक्ष्यार्थस्य) अनिगीर्णस्य = वाचकशब्दप्रतिपादितस्य अन्यतादात्म्यप्रतीतिकृत् = शक्यार्थतादात्म्यप्रतीतिकृत् लक्षणा तत्र सारोपा बोध्या । यथा रूढितः 'अश्वः श्वेतो धावति' प्रयोजनतः 'एते कुन्ताः प्रविशन्ति' । अत्र लक्ष्यार्थवाचकाश्वशब्दैतच्छब्दयोः सत्वात् तदर्थयोश्च शक्यश्वेतगुणकुन्तरूपार्थेन सह तादात्म्यप्रतीत्या सारोपा बोध्या। यत्र लक्ष्यार्थवाचकशब्दो नास्ति अन्यत्सर्वं तद्वदेव तत्र साध्यवसानिका

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणा । यथा — 'श्वेतो धावति' 'कुन्ताः प्रविशन्ति' इति । तदुक्तम्—

"आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ।
विषयस्याऽनिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका ॥" इति
( साहि० द० परि० २ कारि० ८।९ )

*प्रकारा इति — रूढिमतीत्वप्रयोजनवतीत्वविशिष्टोपादानात्व—लक्षणलक्षणात्वादय इत्यर्थः । *त्वगादीति—इयं शुद्धा जहत्स्वार्था । ननु रूढिः = प्रसिद्धिः तया बोधकानामश्वगन्धादिपदानामोषधिविशेष इवार्थविशेषे त्वगादिपदानामपि शक्तिरस्तु यदर्थविषयकबोधजनकत्वं यत्र प्रसिद्धम् तत्र तन्निरूपितशक्तिरितिनियमादत आह — *असतीति — रूढिस्थले किञ्चित् प्रयोजनं नास्ति इति भावः । त्वगिन्द्रिये रूढिलक्षणाक्रान्तत्वाद् रूढिरेवेति भावः । *अन्यथेति — एतेन कुशलादिपदे यद्यवयवार्थबाधप्रतिसन्धानपूर्वकं दक्षादेर्बोधः प्रामाणिकानुभवसिद्धस्तदा लक्षणा । सतोग्रहणमसतः परित्यागरूपश्च सादृश्यं कुशग्राहिणि वर्तते तत्राप्याद्ये जहत्स्वार्था, अन्त्येऽजहत्स्वार्था, अन्यथा रूढि† शक्तिरेवेति सूचितम् । *कुन्तानामिति — तात्पर्यविषयकुन्तिप्रवेशे कुन्तानामन्वयबाधादित्यन्वयः। इयं शुद्धाऽजहत्स्वार्था, पुरुषविशेषणतया कुन्तानां प्रवेशक्रियायामन्वयात् । यत्तु मुख्यार्थविशेषणिका लक्षणाऽजहत्स्वार्था सा च गौण्यपीति,

---

† अत्रान्त्यपक्ष एव ज्यायान्, व्युत्पत्तिनिमित्तस्य सपदि अप्रतीतेर्बाधप्रतिसन्धानं विनाऽपि दक्षत्वादिप्रतीतेश्च, "कुशेः कलच्" इत्युणादिना तत्साधनाच्च । ननु जहत्स्वार्थात्वाजहत्स्वार्थात्वकृतो भेदः शुद्धाया एवेति कुतो गौण्यामपि तत्सम्भवः ? तथाहि—केवलवाहीकानयनाभिप्रायेण 'गौर्वाहीक आनीयताम्' इत्यत्र जहत्स्वार्था । गोवाहीकोभयानयनतात्पर्यके तस्मिन्नजहत्स्वार्थेति भेदसत्त्वादिति चेत्, सत्यम्, अत्र सम्बन्धः सादृश्यम्, अन्यो वा ? आद्ये शक्यसादृश्यस्य शक्येऽभावाल्लक्ष्यत्वासम्भवेन अजहत्स्वार्थात्वासम्भवः । द्वितीये तु लक्ष्यार्थेन सह सादृश्यसम्बन्धाभावात्सकलसम्मतगौणीत्वमेव भज्येतेति । वैयाकरणनये सादृश्यस्य भेदाघटितत्वे तु प्रतियोगिताया आधारत्वानियामकत्वेन शक्यस्य सादृश्यानधिकरणत्वं बोध्यम् । केचित्तु तत्त्वे गौण्या अपि तत्त्वमिष्टमेवेत्याहुः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तन्न, 'चित्रगुः' इत्यादावप्यजहत्स्वार्थात्वापत्तेः, 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ मुख्यार्थस्य विशेषणत्वाभावेनासंग्रहापत्तेश्च । यदा यत् किञ्चिद् गोसदृशसत्त्वेन गोवाहीकसमुदायबोधनेच्छया 'गाव एते यान्ति' इति प्रयुज्यते तदा गौण्या अप्यजहत्स्वार्थात्वं दुर्वारमेवेति नव्याः । एतदेवाभिप्रेत्य प्रयोजनवतीं जहत्स्वार्थां गौणीमाह—*गौरिति —वाहीके गोत्वबाधात् तत्सदृशे लक्षणेति भावः । *गोसादृश्यमिति —उपमितसमास एव सादृश्यं लक्ष्यताऽवच्छेदकमिति कश्चित् । अत्र वाहीके सादृश्यमहिम्ना भिन्नधर्मप्रकारकोपस्थितावप्यभेदप्रतीतिर्व्यञ्जनया । ननु वाहीके गवाऽभेदस्य बाधितत्वात् कथं तत्प्रतीतिरत आह—*व्यञ्जनाजन्येति— निश्चयात्मकबाधज्ञानमेव प्रतिबन्धकं बाधसंशयानन्तरमपि विशेषधर्मदर्शने तद्वत्ताबुद्धेरनुभवसिद्धत्वात् तदाह —*एष चेति—बोध इत्यर्थः । *आहार्य्य इति —स्वविरुद्धधर्मधर्मिताऽवच्छेदककस्वप्रकारकेच्छाजन्यं ज्ञानमाहार्यमित्युच्यते । यथा 'गौर्वाहीकः' इत्यत्र 'गोत्वाभाववान् वाहीको गोत्ववान्' इत्याकारकमाहार्यज्ञानम् । तत्र स्वम् = गोत्वम्, तद्विरुद्धोधर्मः गोत्वाभावः, तदवच्छिन्ना धर्मिता गोत्वनिष्ठप्रकारतानिरूपिता वाहीकनिष्ठा इतीच्छाजन्याहार्यज्ञानत्वं सुलभम् । एतच्च भ्रमात्मकमेवेति प्रतिबन्धकत्वाभावः, निश्चयात्मकस्यैव प्रतिबन्धकत्वात्प्रतिबन्ध्यत्वाच्च । *शब्दजन्येति —वाहीकशब्दजन्या या वाहीकत्वरूपभेदकधर्मविषयिकोपस्थितिस्तत्कालिकत्वादित्यर्थः । एतेन बाधसमकालिकत्वं दर्शितम् । *मध्य इति —लक्ष्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधात्प्रागित्यर्थः । अभेदाध्यवसायादेव गङ्गागतशैत्यादेस्तत्र प्रतीतिरित्यर्थः । एवमेव 'उपकृतम्' इत्यत्र वैपरीत्यसम्बन्धेन लक्ष्येऽपकारे लक्ष्यार्थबोधानन्तरमसाधुत्वरूपव्यङ्ग्यार्थबोधात्प्रागभेदप्रतीतिद्वारा व्यङ्ग्यार्थबोध इत्याह —*उपकृतमिति —

"उपकृतं बहु तत्र किमुच्यते, सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम् ॥

अत्र वैपरीत्यलक्षणयाऽपकारादि लक्ष्यते । 'गो'शब्दस्य जाड्यादिपरत्वे 'गोर्जाड्यम्' इति प्रतीत्यापत्तिः, 'नामार्थयोरभेदः' इति सिद्धान्तविरोधश्चेति दूषणमभिप्रेत्य तन्मतानादरं सूचयन्नाह —*केचित्त्विति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अयं भावः — 'गौर्वाहीकः' इत्यत्र 'गो'पदस्य जडो लक्ष्यो न सदृशः । तत्र मध्ये गवाभेदप्रतीतिद्वाराऽसाधारणजडत्वं व्यङ्ग्यम् । ॐलक्ष्यताऽवच्छेदकान्तरेति — 'गौर्वाहीकः' इत्यत्र जडत्वमेव लक्ष्यताऽवच्छेदकं नान्यदिति द्योतनायैव 'जड'शब्दप्रयोग इति भावः । ननु साधारणधर्माश्रये लक्षणायाम् 'आह्लादयति मुखेन्दुः' इत्यादौ पौनरुक्त्यमिति चेत् , न, तत्रेन्दुपदस्येन्दुवृत्तिधर्मवति लक्षणायाम् 'इन्दुवृत्तिधर्मसदृशधर्मवन्मुखकर्तृकमाह्लादनम्' इत्यर्थेनादोषात् । ॐसदृशत्वेनेति — सदृशे लक्षणेत्यर्थः । अयं भावः — सदृशे लक्षणास्वीकारे सादृश्यस्य यत्किञ्चिद्विशेषधर्मप्रयोज्यतया तत्प्रतीतिरावश्यिकीति प्रसिद्ध्यादिना सादृश्यप्रयोजकं धर्मं निर्णेयमित्यन्यथाऽनुपपत्त्या साधारणधर्मविशिष्ट एव लक्षणायां लाघवमिति । एतेन = जडत्वावच्छिन्ने लक्षणास्वीकारेण । ॐजाड्यादय एवेति — एवञ्च 'गो'पदस्य गोगतजाड्यादिसदृशजाड्यादिधर्ममात्रमर्थः । ननु 'नामार्थयोरभेदान्वयः' इति सिद्धान्ताज्जाड्यस्याभेदेन वाहीकेऽन्वयानापत्तिरत आह — ॐजातिशक्तीति — 'जातिः पदार्थः' इति नये 'घटमानय' इत्यादौ जातेरानयनासम्भवाज्जात्या यथा व्यक्तेराक्षेपस्तथा जाड्यादिधर्मेणान्यथाऽनुपपत्त्याऽऽश्रयस्याक्षेपेण 'जाड्याश्रयाभिन्नो वाहीकः' इति शाब्दबोधः उपपादनीय इति भावः । ॐपरास्तमिति — लाघवाज्जडत्वावच्छिन्न एव लक्षणाया उचितत्वाल्लक्ष्यमाणव्यधिकरणत्वेन वाहीकस्य 'गो'शब्देन प्रतिपादनासम्भवाच्च । यदाहुः — "लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति, लक्ष्यमाणा ये जाड्यादयस्तैरेव यदि शक्यसम्बन्धस्तदा गौणी वृत्तिरित्यर्थः । अत्रारुचिबीजम् 'परे तु'इत्यादिना स्फुटीभविष्यति । मतान्तरासङ्गतिं ध्वनयन्नादौ सिद्धान्तमाह — ॐग्राम इति । ॐअर्श आद्यजन्तानीति — 'दग्धगृहविशिष्टो ग्रामः' इति बोधः । तथा च भाष्यप्रामाण्याद् 'ग्राम'पदस्य ग्रामावयवे लक्षणा, अवयवगतदहनरूपधर्मस्य स्वावयविनि ग्रामे आरोप इति च न युक्तमिति भावः । ॐईदृशेष्वपि — अवयवमात्रेण सम्बन्धे समुदायवाचकप्रयोगस्थलेष्वित्यर्थः । ॐजहदजहदिति — अवयवस्य दहनकर्मत्वेन सम्बन्धात् समुदायेनासम्बन्धाच्च तत्त्वम् । ॐअन्ये इति — अत्रारुचिबीजं तु 'आढ्यमिदं नगरम्' इति भाष्योक्तरीत्या 'ग्रामो दग्धः' इत्यादौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षणाया अभाव एव । किञ्च "तत्त्वमसि" इत्यादौ जहदजहल्लक्षणायाः सत्त्वेऽपि जहल्लक्षणयैव निर्वाहः स्वार्थैकदेशत्यागेऽपि स्वार्थत्यागस्य सत्त्वात् । अजहल्लक्षणया तु न निर्वाहः, नञः प्रतियोगिताऽवच्छेदकावच्छिन्नाभावबोधकत्वादिति ।

मू०—केचित्तु ज्ञाप्यसम्बन्धेनोद्बुद्धशक्तिसंस्कारतो बोधे लक्षणा 'गभीरायां नद्यां घोषः' इत्याद्यनुरोधात् । तथा हि—न

मीमांसकाभिमत-लक्षणानिरूपणम्

तावद् 'गभीर' पदं तीरलक्षकम् 'नद्याम्' इत्यनन्वयापत्तेः । न हि तीरं नदी । अत एव न 'नदी'पदेऽपि, गभीरपदार्थानन्वयात् । न हि तीरं गभीरम् । न च पदद्वये प्रत्येकं सा, विशिष्टनदीतीराप्राप्तिप्रसङ्गात् । न च 'नदी'पदेन गभीरनदीतीरं लक्ष्यते, 'गभीर' पदं तात्पर्यग्राहकमिति वाच्यम्, विनिगमनाविरहात् । न च 'नदी'पदस्य द्रव्यवाचकतया साक्षात्सम्बन्धानुरोधेन तत्रैव सेति वाच्यम्, 'गभीर' पदस्यापि नित्यं गुणिवाचकतया तेनापि साक्षात्सम्बन्धस्यैव सत्त्वात् । अतः समुदाये साऽङ्गीकार्या । अत एवार्थवादवाक्यानां प्राशस्त्ये लक्षणासिद्धिः । अपभ्रंशेष्वपि लक्षणा इष्टैव । अत एव लक्ष्यस्य व्यञ्जकतायाम् "साहेन्ती" इत्याद्युदाहरणं प्रकाशकारैर्दत्तम् , तस्यापि शक्तत्वाच्च । ज्ञापकत्वञ्च-'अर्थबोधकतापर्य्याप्त्यधिकरणत्वम्' इति न प्रत्येकं वर्णेषु सा । लक्ष्यताऽवच्छेदकत्ववल्लक्षकताऽवच्छेदकत्वस्यापि गुरुभूतायां पदघटितानुपूर्व्यां स्वीकारे बाधकाभावः । ज्ञापकताशरीरे ज्ञानं च शाब्दबोधरूपमेव निविष्टमिति न † शब्दसमवायेन घटादिपदज्ञाप्याकाशस्य शक्तिं विनाऽप्युपस्थितस्य शाब्द ( बोध )-विषयत्वम् । अत एव 'छत्रिणो यान्ति' इत्यादौ छत्रिपदस्यैकसा-

† 'न समवायेन घटादिपदज्ञाप्याकाशसम्बन्धिनोऽप्युपस्थितस्य शाब्दबोधविषयत्वम्' इति त्वपपाठ अर्थासङ्गतेरित्युपाध्यायाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थवाहित्वेन छत्र्यच्छत्रिसमुदाये लक्षणेति समासादिवृत्तौ विशिष्ट-शक्तिमनङ्गीकुर्वन्तोऽपि वृद्धा आहुः ।

( रत्न० )—'शक्यसम्बन्धो लक्षणा' इति स्वीकारे वाक्ये लक्षणा न सम्भवति तत्र शक्तेरभावादिति मीमांसकमतमाह—*केचित्त्विति—स्वज्ञाप्यसम्बन्धो लक्षणा । एवञ्च वाक्यार्थस्यापि वाक्यज्ञाप्यत्वात् तत्र लक्षणा सिध्यतीति भावः । *ज्ञाप्येति — स्वम् = पदादिस्तज्ज्ञाप्यो योऽर्थ-स्तत्सम्बन्धेनोद्बुद्धो यः शक्तिजन्यः संस्कारस्ततो यत्र बोधस्तत्र लक्ष-णा'इति व्यवहार इत्यर्थः । *गभीरायामिति — शक्यसम्बन्धरूपलक्षणा-स्वीकारेऽत्र सा न स्यादिति भावः । *न तावदिति — 'गभीरायां नद्याम्' इति सप्तम्यन्तार्थयोरभेदान्वयः, तत्र यदि 'गभीर'पदेन तीरं लक्ष्यते तदा 'तीराभिन्ना नदी' इति बोधापत्तिः, सा च असङ्गता, तीरनद्योरभेदस्य बाधात् तदाह—*नहीति । अत एव = अनन्वयादेव। *नदी पद इति—तथा सति 'गभीराभिन्नं तीरम्' इति स्यात्, तच्च न सम्यक्, तीरे गाम्भी-र्यस्य बाधात् । ननु पदद्वये प्रत्येकं लक्षणाऽस्तु, 'गभीर'पदस्य गभीरतीरे 'नदी'पदस्य नदीतीरे, तथा च 'गभीराभिन्ननदीतीरे घोषः' इति बोधः स्यादित्याशङ्क्य समाधत्ते—न च पदद्वये प्रत्येकमित्यादिना । तदाह—*न च पदद्वय इति । *विशिष्टनदीति — नामार्थयोरभेदान्वयेन 'गभीरतीराभिन्नं यन्नदीतीरं तत्र घोषः' इत्येव बोधः स्यान्न तु 'गभीराभिन्ना या नदी तत्तीरे घोषः' इति । यत्तु 'गभीर'पदं 'नदी'पदञ्चोभयमपि गभीरत्व-विशिष्टनदीतीरलक्षकम् । तदा एकपदादर्थप्रत्ययेऽपरपदं तात्पर्यग्राहक-मिति, तन्न, कस्य लक्षकत्वं कस्य तात्पर्य्यग्राहकत्वमित्यत्र विनिगमना-विरहात्, समुदायशक्तौ पर्य्यवसाने लक्षणाया एव न्याय्यत्वाच्च । *नित्यं गुणीति — शुक्लादिशब्दस्य 'शुक्लो गुणः' इत्यादौ गुणवाचकत्वस्य सत्त्वेऽपि 'गभीरो गुणः' इत्यस्यादर्शनेन गुणिवाचकत्वमेव तस्य न तु गुणवाचकत्वमिति भावः । अत एव = अत्र तत्तत्पदे लक्षणाया अस-म्भवादेव । समुदाये = 'गभीरायां नद्याम्' इत्यत्र । सा = लक्षणा । तथा च गभीराभिन्ननदीबोधोत्तरं लक्षणया 'गभीराभिन्ननदीतीरे घोषः' इति बोधः । अत एव = वाक्ये लक्षणास्वीकारादेव । *अर्थवादवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्यानामिति—अर्थस्य प्रयोजनस्य विध्यर्थप्रशंसापरो वादोऽर्थवादः, तद्बोधकवाक्यानामित्यर्थः । "वायुर्वै क्षेपिष्ठा देवता" इति वाक्यम् 'वायुदेवताकं कर्म प्रशस्तम्' इत्यर्थे लाक्षणिकमिति ज्ञाप्यसम्बन्धस्यैव लक्षणात्वे सङ्गच्छत इति भावः । यत्तु प्राधान्याद् विशेष्यवाचकपदस्यैव लक्षणा, विशेषणवाचकपदानि तात्पर्यग्राहकाणि तात्पर्य्यग्राहकत्वाच्च वाक्यलक्षणाप्रवाद इति, तन्न, 'विश्वरूपो वै त्वाष्ट्रः' इत्यादौ विशेष्यवाचकपदानामप्यनेकत्वात् कस्य लक्षणेति विनिगमकाभावात् । नन्वेवमपभ्रंशेऽपि ज्ञाप्यसम्बन्धसत्त्वाल्लक्षणापत्तिः, शक्यसम्बन्धस्य लक्षणात्वे तु न तत्र लक्षणा, शक्तेरभावेन शक्यार्थाभावादिति तार्किकमतं खण्डयन्नाह—*इष्टैवेति—अपभ्रंशेऽपि शक्तेः साधितत्वादिति भावः । अत एव=अपभ्रंशे लक्षणास्वीकारादेव । *लक्ष्यस्य व्यञ्जकतायामिति—व्यञ्जना लक्ष्यार्थनिष्ठाऽपीत्यत्रेत्यर्थः । *साहेन्तीति—

"साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्जकए ।
सब्भाव-णेह करणिज्जसरिसअं दाव विरइअं तुमए" ।।
( काव्यप्रका० उल्ला० २ कारि० ७ ) इति प्राकृतम् ।
'साधयन्ती सखि ! सुभगं क्षणे क्षणे दूनासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया' ।। इति संस्कृतम् ।

मदर्थं नायकं वशीकुर्वती त्वम् हे सखि ! क्षणे क्षणे दूनासि=दुःखीभवसि । सद्भावस्नेहाभ्यां यत् करणीयं तत् त्वया कृतमित्यर्थः । अत्र 'मत्पतिना सह रमणं कृतम्' इति लक्षणया बोध्यते । लक्ष्यार्थतश्च 'शत्रुत्वमाचरितम्' इति व्यज्यते । अपभ्रंशे लक्षणाया अभावे उदाहरणमिदं विरुध्येतेति भावः । यत्तु ज्ञाप्यत्वम् न 'स्वजन्यबोधविषयत्वम्', आकाशस्यापि समवायेन स्वाश्रयतया घटपदजन्यबोधविषयत्वेन घटादिपदज्ञाप्यत्वापत्तेः । न च 'स्वजन्यशाब्दबोधविषयत्वम्' तद्, 'गङ्गायां घोषः' इत्यत्र प्रवाहस्य शाब्दबोधाविषयत्वेन लक्षणाऽनापत्तेः । तस्माच्छक्त्या स्वजन्यबोधविषयत्वमेव ग्राह्यमिति, तन्न, स्वजन्यशाब्दबोधविषयत्वस्यैव तत्त्वात् । 'गङ्गायां घोषः' इत्यत्र प्रवाहसम्बन्धित्वेनैव तीरबोधेनादोषात् । *तस्यापीति—अपभ्रंशस्यापीत्यर्थः । नन्वेवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञापकत्वमेव लक्षकत्वं लब्धम्, तथा च तस्य प्रत्येकवर्णेऽपि सत्वाद् वर्णानामपि लक्षकत्वापत्तिरत आह—*ज्ञापकत्वमिति—पर्याप्त्या१† बोधकताया समुदाय एव सत्त्वात् समुदायस्यैव लक्षकत्वमिति भावः। ननु वाक्येऽपि लक्षणास्वीकारे वाक्यवृत्त्यानुपूर्व्याः तद्गततद्व्यक्तित्वस्य वा लक्षकताऽवच्छेदकत्वे गौरवमत आह—*लक्ष्यताऽवच्छेदकत्ववदिति—'गभीरायां नद्यां घोषः' इत्यादौ गुरुभूतस्यापि गभीराभिन्ननदीतीरत्वरूपधर्मस्य यथा लक्ष्यताऽवच्छेदकत्वं तथा गुरुभूताया अपि वाक्यगताऽनुपूर्व्याः लक्षकताऽवच्छेदकत्वं फलबलात् स्वीक्रियते, तद्गततद्व्यक्तित्वस्यावच्छेदकत्वस्वीकारे गौरवाभावश्च। *ज्ञापकतेति—ज्ञापकत्वञ्च-ज्ञानजनकत्वम्, तत्प्रयोजकत्वं वा। तत्र ज्ञानञ्च शाब्दबोधरूपं ग्राह्यम्। तेन 'घट'पदादेकसम्बन्धिज्ञानमितिविधया आकाशस्योपस्थितावपि तस्याः स्मृतिरूपतया न दोषः। वाक्ये लक्षणायां तार्किकसम्मतिमाह—*अत एवेति—वाक्ये लक्षणास्वीकारादेव। *छत्रिण इति—तार्किकमते प्रकृतौ प्रत्यये च शक्तिर्न तु समुदाये, तथा च 'छत्र' शब्दाद् 'इनि' प्रत्यये 'छत्री' इति प्रकृतिप्रत्ययसमुदायरूपं तत्र च शक्तेरभावाच्छक्यसम्बन्धरूपलक्षणा न सम्भवति, ज्ञाप्यसम्बन्धरूपलक्षणास्वीकारे तु 'छत्री' इति समुदायज्ञाप्यच्छत्रविशिष्टरूपार्थस्य सार्थवाहे स्वघटितत्वरूपसम्बन्धसत्त्वात् तत्र लक्षणा सिध्यतीतिभावः। समासादिवृत्तौ शक्तिमङ्गीकुर्वतां मते तु शक्य२† सम्बन्धस्यापि सत्त्वान्न दोषः।

---

१† ननु 'न ह्यवयवापर्य्याप्तस्य समुदाये पर्य्याप्तिर्दृश्यते' इति नियमाद् बोधकतायाः पर्य्याप्त्याऽवयवेऽपि सत्वाद् दोषतादवस्थ्यमिति, तन्न, बोधकताप्रतियोगिकपर्य्याप्त्यनुयोगिताऽवच्छेदकधर्मावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगीभूतसमुदायवृत्तितद्व्यक्तित्वरूपधर्मावच्छिन्नस्यैव ज्ञापकत्वेनादोषात्।

२† ननु शक्यसम्बन्धरूपलक्षणास्वीकर्तृनये 'छत्रिणो यान्ति' इत्यत्र लक्षणा न स्यात् तन्मते प्रकृतिप्रत्ययसमुदाये शक्तेरभावादिति चेत्, न, छत्रपदस्यैकसार्थवाहे लक्षणा, तद्धितार्थश्चात्र सम्बन्धः तथाचैकसार्थवाहसम्बन्धवन्तः छत्रिणोऽच्छत्रिणश्च गच्छन्तीत्यर्थेनादोषात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—परे तु आरोपितशक्यताऽवच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे, व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः। 'छत्रिणो यान्ति' इत्यादावप्यच्छत्रिषु साहचर्याच्छत्रित्वारोपः। 'काकेभ्यो दधि' इत्यादावपि दध्युपघातकमात्रे काकत्वारोपः। 'कमलानि कमलानि' इत्यादौ कमलत्वेनैव व्यक्तिविशेषबोधः। "त्वामस्मि वच्मि" इत्यादौ सम्बोध्यत्वादिनैवोपदेश्यत्वाद्यवस्थाविशिष्टतत्तद्व्यक्तिबोधो लक्षणया। अत्र पौनरुक्त्याद् विशेषानाधायकत्वाद्वा तात्पर्यानुपपत्तिः, सामान्यविशेषभावः सम्बन्धः। अत एव "पुंयोगादाख्यायाम्" (पा०सू० ४।१।४८) इति सूत्रे भाष्ये 'गोपी'इत्यादौ गोपसम्बन्धिस्त्रीत्वेन लक्षणायाम् "तस्येदम्" (पा०सू०४।३।१२०) इति शास्त्रेण तादृशेऽर्थेऽण्प्रत्ययान्तस्यैव तादृशवाक्यस्यैव वा साधुत्वनियमादसाधुत्वापत्तिं दूषणमभिसंधाय "नावश्यमयमेवाभिसम्बन्धो भवति तस्येदमिति, किन्तु तन्मूलकः सोऽयमित्यप्यभिसम्बन्धोऽस्ति" इत्युक्त्वा "चतुर्भिः प्रकारैस्तस्मिन् स इत्येतद्भवति; तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्य्यात्। मञ्चा हसन्ति, सिंहो माणवकः, गङ्गायां घोषः, यष्टीः प्रवेशय" (महाभा० ४।१।४८) इत्युक्तम्। कैयटोऽप्याह—"आरोप्यते तादूप्यम्, न तु मुख्यम्। बालेषु मञ्चत्वाऽरोपान्मञ्चपदप्रवृत्तिः 'हसन्ति' इति पदान्तरप्रयोगाद्द विज्ञायते" (महा भा० प्र० ४।१।४८) इति। सोऽयमपीत्यादेः 'सोऽयम्' इत्यपि विशेष्यविशेषणभावोऽस्तीत्यर्थः। न च 'गङ्गायां घोषः' इत्यादावारोपितगङ्गात्वेन बोधेऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथा भ्रमत्वेन ग्रहाच्च तदुत्तरं गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपं फलं न सिध्येत्, अत एव शुक्तौ रजतज्ञाने भ्रमत्वज्ञानवतो न प्रवृत्तिरिति वाच्यम्, मध्ये व्यञ्जनया मुख्यगङ्गापदार्थभेद-

हर्य्यादिसिद्धान्तनिष्कर्षः
बाधज्ञानस्य कुत्रचिदप्रामाण्यप्रयोजकत्वाभावश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यापि प्रतीतेः । व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इत्यदोषात् । वस्तुतस्तु शाब्दानुपपत्तिमूलकारोपितार्थबोधे बाधज्ञानेन नाप्रामाण्यग्रहो जन्यते । अत एव 'पचति' इत्यादिजबोधे नाप्रामाण्यग्रहः, तथा सत्यनुपपत्तिपरिहाराभावादित्यग्रे निरूपयिष्यामः ।

(रत्न०)—आरोपितेति – सामीप्यादिसम्बन्धमूलकशक्यताऽवच्छेदकारोप एव लक्षणा । तथा च 'गङ्गा' पदशक्यताऽवच्छेदकप्रवाहविशेषत्वस्य †१ तीरे आरोपात् तीरस्यापि प्रवाहविशेषत्वेनैव बोध इति भावः । तदुक्तं हरिणा —

"अर्थमात्रं विपर्य्यस्तं शब्दः स्वार्थे व्यवस्थितः"

(वाक्यप० कां० २ कारि० २५७) इति ।

एवञ्च शक्त्यैव बोधान्न लक्षणाप्रयुक्तकार्य्यकारणभावान्तरं कल्पनीयम् । *प्रसिद्धेति — तत्पदवाच्यत्वेन प्रसिद्धो यस्तद्भिन्नो योऽप्रसिद्धस्तटादिस्तद्रूपव्यक्तिबोधे प्रसिद्धत्वविशिष्टव्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः । गङ्गादिपदस्य प्रसिद्धोऽर्थः प्रवाहविशेषादिः, अप्रसिद्धस्तटादिरिति यावत् । प्रसिद्धत्वञ्च–'पदान्तरासमभिव्याहारेऽपि तज्जन्यप्रतीतिविषयत्वम्' तच्च प्रवाहादावेव न तु तटादौ । *व्यक्तिविशेष इति–'कमलानि कमलानि' इत्यादौ सौरभविशिष्टस्यैव कमलत्वेन बोधः । 'कमल'पदस्य कमलत्वाच्छिन्नविषयकबोधजनकत्वेऽपि कमलत्वव्याप्यधर्मावच्छिन्नस्य बोधो†२ लक्षणयैव । एतेन 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इत्यपास्तम् । आरोपबीजं दर्शयन्नाह—*छत्रिणो यान्तीति—अत्र साहचर्य-

---

†१ अत्र सर्वत्र 'गङ्गा' पदशक्यप्रवाहबोधक 'प्रवाह' पदे 'भगीरथखातावच्छिन्न' इति विशेषणं बोध्यम् । 'गङ्गापदं प्रवाहत्वावच्छिन्ने शक्तम्' इतित्वयुक्तम्, यत्र कुत्रापि प्रवाहे 'गङ्गा' पदप्रयोगापत्तेः ।

†२ नन्वत्र शक्यताऽवच्छेदकारोपो दुर्वचस्तद्धर्माभाववति तद्धर्मप्रकारकज्ञानस्यैवारोपपदार्थत्वेन 'कमलानि कमलानि' इत्यत्र तद्धर्माभावाभावादिति चेत्, न, लक्षणास्थले लक्षकपदस्य स्वशक्यताऽनवच्छेदकधर्मवन्निष्ठविशेष्यतानिरूपितस्वशक्यताऽवच्छेदकनिष्ठप्रकारताकप्रतीतिजनकतया तादृशप्रतीतेरेवारोपपदार्थत्वादित्युपाध्यायाः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेवारोपे बीजमिलिभावः । प्रसिद्धान्यव्यक्तिबोध इत्यस्योदाहरणद्वयं प्रदर्श्य व्यक्तिविशेषबोध इत्यस्योदाहरणद्वयमाह —*कमलानीति। *व्यक्तिविशेषेति — सौरभविशिष्टकमलरूपव्यक्ताविव्यर्थः ।

"तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि"† ॥

अत्र पुनरुक्त'कमल'पदं सौरभविशिष्टे संक्रमितम् । सौरभातिशयो व्यङ्ग्यः। *त्वामस्मि वच्मीति—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत्" ॥

विद्वत्सभां जिगमिषुं कंचनाप्तं प्रति कस्यचिदुक्तिरियम् । अत्र 'अस्मि' इत्यहमित्यर्थेऽव्ययम् । अत्र 'वच्मि' इत्यनुपयुक्तम्, तदभावेऽपि कण्ठादिव्यापारेणैव वचनक्रियाप्रतीतेः । अतोऽत्र 'वचिः' उपदेशं लक्षयति । उपदेशश्च—हितबोधकशब्दप्रयोगरूपव्यापारविशेषः । एवं 'त्वाम्' 'अस्मि' इति पदद्वयमप्यनुपयुक्तम्, सम्मुखीकृत्य कथनेनैव युष्मदर्थस्य वचनकर्मताया अस्मदर्थस्य वचनकर्तृत्वस्य च तद्वाचकपदं विनैव सिद्धेः, 'वच्मि' इत्युत्तमपुरुषेणैवास्मदर्थप्रतीतेश्चेति युष्मत्पदमुपदेशार्हत्वमस्मत्पदमाप्तत्वं लक्षयति । तथा चोपदेशार्हेण त्वया श्रोतव्यमाप्तेन मया च वक्तव्यमिति भावः । अत्राप्युपदेशार्ह आप्तश्च व्यक्तिविशेष एव । ननु 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति नियमाच्छक्यताऽवच्छेदकरूपेणाज्ञाते शाब्दबोधविषयीभूते लक्षणा न स्यादिति चेत्, न, तादृशनियमस्य निर्मूलत्वात् । अस्मदाद्यर्थसामान्यं शक्यमाप्तत्वविशिष्टोऽस्मदर्थस्तु लक्ष्य इति तयोः सामान्यविशेषभावः सम्बन्धः । *विशेषानाधायकत्वादिति — विशेषस्य = कमलत्वव्याप्यधर्मावच्छिन्नस्य, अनाधायकत्वात् = व्याप्यधर्मप्रकारकबोधाजनकत्वात् । *अत एवेति — आरोपेण बोधादेवेत्यर्थः। *लक्षणायामिति—अस्य 'असाधुत्वापत्तिम्'इत्यत्रान्वयः।

---

† इदञ्च पद्यं काव्यप्रकाशटीकायां मूलस्थप्राकृतपद्यस्य संस्कृतानुवादरूपेण नागेशेन चतुर्थोल्लासे चतुर्विंशकारिकाव्याख्यायामुक्तम्। एवं हि तत्रत्यं प्राकृतं पद्यम्—

ताला जाअन्ति गुणा जालाते सहिअएहिं घेप्पन्ति ।
रइ किरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*तादृशवाक्यस्यैवेति – 'गोपस्य स्त्री' इति वाक्यस्यैवेत्यर्थः। *अयमेवेति – व्यधिकरणात्मकपतिपत्नीभावादिरित्यर्थः। *तन्मूलक इति — पतिपत्नीभावादिमूलक इत्यर्थः। *सोऽयमिति — अभेद इत्यर्थः, गोपत्वाद्यारोपेणैव तत्सम्भवादिति भावः। *अतस्मिन् स इति — तद्धर्माभाववति तदारोपविधयेति भावः। *विशेष्यविशेषणभाव इति—सम्बन्धानवच्छिन्नविशेष्यविशेषणभाव इत्यर्थः। तदुत्तरम् = भ्रमात्मकज्ञानोत्तरम्। *फलं न सिध्येदिति — भ्रमात्मकज्ञानस्य संवादिप्रवृत्तिजनकत्वनियमाभावात्। *शुक्तौ रजतज्ञान इति — रजतेति भावप्रधाननिर्देशः। यद्वा तादात्म्येन निर्देशमादायेदम्। *न प्रवृत्तिरिति — संवादिप्रवृत्तिरित्यर्थः। *मध्य इति — लक्ष्यार्थव्यङ्ग्यार्थबोधयोर्मध्य इत्यर्थः। ननु 'गङ्गात्वाभाववान् तटः' इति बाधज्ञानमभेदज्ञाने भ्रमत्वं कल्पयेदत आह — *व्यञ्जनेति — निश्चयात्मक † बाधज्ञानस्यैव भ्रमत्वकल्पकत्वं नान्यथेति भावः।

---

† केचित्तु—'मुखं चन्द्रः' 'गौर्वाहीकः' इत्यादौ लक्षणां विनैवाभेदबोधः, 'तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वम्' इति प्रतिबन्ध्यताऽवच्छेदककोटौ 'शाब्दान्यत्व' निवेशेन शाब्दज्ञाने बाधज्ञानस्याप्रतिबन्धकत्वात्। न चैवं 'वह्निना सिञ्चति' इत्यत्र प्रमात्मकशाब्दबोधापत्तिरिति वाच्यम्, योग्यताविरहात्। न च प्रकृतेऽपि योग्यताविरहः, इष्टचमत्कारसिद्धये आहार्य्य-योग्यताज्ञानस्य सत्वात्' इत्याहुस्तन्न, चमत्कारस्याहार्य्याभेदत एव सिद्धौ प्रतिबन्ध्यताऽवच्छेदककोटौ 'शाब्दान्यत्व' निवेशे योग्यताज्ञानहेतुत्वस्य च कल्पने गौरवात्। न च शाब्दज्ञाने आहार्य्यत्वासम्भवः, प्रात्यक्षिक एव तस्य नियतत्वादिति वाच्यम्, तादृशनियमे मानाभावात्। ये तु 'मुखचन्द्रः' इत्यादौ सारोपलक्षणां वदन्ति विषयस्यानिगीर्णत्वादिति, तन्मतेऽप्यत्र वाच्ययोरेवाभेदो वाच्यो न तु वाच्यलक्ष्ययोः। अन्यथा "राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्" (काव्य प्र० कारि० १४० उदा०)

इत्यादावुपमितसमासमूलकोपमाऽभ्युपगमे लक्ष्मीकर्तृकालिङ्गनासङ्गतिरित्यालङ्कारिकसमयो व्याहन्येत। किञ्चोपमानवाचकचन्द्रादिपदस्य रूपके उपमानसदृशे लक्षणा इत्यालङ्कारिकाः, तन्न, तत्र सादृश्यं लक्ष्यताऽवच्छेदकं वाच्यम्, तच्च लक्ष्यांशे सामान्यरूपेणैव प्रतीयते, सुन्दरत्वादिविशेषरूपेण वा ? नाद्यः, शब्दोपात्तसादृश्यस्योपमानत्वप्रयोजकतयोपमात्वापत्तेः। नान्त्यः, 'सुन्दरं मुखं चन्द्रः' इत्यत्र पौनरुक्त्यापत्तेः। न च शब्दोपात्तसादृश्यस्यैवोपमाप्रयोजकत्वम्, 'नलिनप्रतिपक्षमाननम्' इत्यादौ तदभावापत्तेः। यदि तु 'सुन्दरं मुखम्' इत्यादौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु तद्वत्ताबुद्धिं प्रति, तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वात् कथमारोपितशक्यताऽवच्छेदकप्रकारकज्ञानस्य प्रमात्वम् 'शङ्खः पीतः' इतिवत् ? इत्याशङ्क्याह — *वस्तुतस्त्विति — एवञ्च लक्ष्यार्थबोधानन्तरं व्यङ्ग्यार्थबोधात्प्राग् ज्ञानान्तरमभेदप्रयोजकं नाश्रयणीयमिति लाघवं सूचितम् । *शाब्दानुपपत्तीति — अन्वयानुपपत्तिरित्यर्थः । *आरोपितार्थबोधइति — 'प्रवाहत्ववत्तीरम्' इति बोध इत्यर्थः । *बाधज्ञानेनेति — तदभाववत्तानिश्चयेनेत्यर्थः । *नाप्रामाण्यग्रह इति — बाधज्ञाने प्रतिबन्धकत्वं हि तद्वत्ताबुद्धेरप्रमात्वबोधनरूपमेव । तच्चानाहार्य्यज्ञानस्यैव । प्रकृते च 'प्रवाहत्वाभाववत् तीरं प्रवाहत्ववत्' इत्याहार्य्यमेव ज्ञानमिति न तस्य प्रतिबन्ध्यत्वम् नापि प्रतिबन्धकत्वमिति भावः । *अत एवेति — आहार्य्यस्य प्रतिबन्ध्यत्वाभावा-

---

धर्मान्तरेण ( आह्लादकत्वेन ) सादृश्यमित्युच्यते तदा—

"विद्वन्मानस-हंस वैरिकमलासंकोच-दीप्तद्युते
दुर्गामार्गण-नीललोहित समित्स्वीकार-वैश्वानर ।
सत्यप्रीतिविधान-दक्ष विजयप्राग्भाव-भीम प्रभो !
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

( काव्य प्र० उल्ला० १० उदा० का० ४२५ )

इत्यत्र रूपके श्लेषनिमित्तकं यदभेदाध्यवसानं तेन 'मानसवशित्वरूपे भूपहंसयोः सादृश्ये सिद्धे सदृशलक्षणामूलकस्य भूपे हंसरूपकस्य सिद्धिः; रूपकसिद्धौ च सरोमनोरूपार्थद्वयाभिधानरूपस्य श्लेषस्य सिद्धिः' इत्यन्योऽन्याश्रयः। तस्माद् रूपकस्थले सदृशे न लक्षणा किन्त्वभेदान्वय एव । न च रूपके सदृशे लक्षणाया अभावे तत्फलभूततादूप्याप्रतीतिरिति वाच्यम्, सादृश्यस्य ताद्रूप्यप्रयोजकत्वे 'तत्सदृशः' इति वाक्यादपि तादृशप्रत्ययापत्तेः । यत्तु वदन्ति 'रूपके लक्षणा नास्ति' इत्ययुक्तं तथाहि—साधारणधर्मानुपस्थितिकाले रूपकं न भवतीति सर्वसम्मतम् । तत्र सादृश्यस्य रूपके प्रवेशाभावे विशेषधर्मानुपस्थितौ रूपकाप्रवेशः । 'राजनारायणम्' इत्यादौ विशेषणसमासे उत्तरपदार्थप्राधान्यान्नारायणत्वेनोपस्थिते लक्ष्मीकर्तृकालिङ्गनेऽपि न विरोधः' इति । अत्रोच्यते—उपमितसमासस्थले भेदघटितसादृश्यविशिष्टोपमेये 'उपमान' शब्दस्य निरूढलक्षणा । इदमेव इवादीनां द्योतकत्वम् । 'सदृश' शब्दप्रयोगे तु लक्षणाया अभावान्न ताद्रूप्यप्रत्ययः । अत एव ताद्रूप्यप्रत्यय एव लक्षणाफलमिति प्राचीनाः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवेत्यर्थः । *पचतीत्यादिजेति — स्थालीस्थे व्यापारैकदेशेऽपि धातुवाच्याधिश्रयणाद्यधःश्रयणान्तव्यापारत्वारोपेण तद्विषयकबोध इत्यर्थः । यद्वा आख्यातार्थैकत्वादेः क्रियायामारोपादेकवचनाद्युपपत्तिः । अन्यथा धात्वर्थक्रियायां सङ्ख्यादेरभावात्तदनुपपत्तिः स्यादिति भावः । *तथा सतीति — अप्रामाण्यग्रहे सतीत्यर्थः । *परिहारेति — प्रामाणिकस्यैवानुपपत्तिपरिहारकत्वादिति भावः । न चाख्यातार्थैकत्वादेः कर्त्रादावन्वयेनोपपत्तिः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य सिद्धान्ततया सुबन्तस्थले तथैव दर्शनात्, धातोरेवात्र प्रकृतित्वेन तत्र तदन्वयायोगात्, कर्त्रादेः 'भावप्रधानमाख्यातम्' इति न्यायेन धात्वर्थक्रियायां गुणीभूतत्वाच्च । वैयाकरणनये क्रियायामेकत्वारोपाभावेन 'स्थाली पचति' इत्यादौ धातुवाच्याधिश्रयणाद्यधःश्रयणान्तव्यापारस्य स्थाल्यामभावेन तण्डुलादिधारणरूपव्यापारैकदेशेऽपि धातुवाच्यव्यापारत्वारोपरूपो दृष्टान्तो बोध्यः ।

मू०—'कुन्ताः प्रविशन्ति' इत्यादौ कुन्तसंयोगविशिष्टपुरुषाणां कुन्तत्वेन प्रतीतिरित्यजहत्स्वार्थात्वोपपत्तिः । कैयटोऽप्याह—

'शक्यताऽवच्छेदकारोप एव लक्षणा' इत्यस्यैव समर्थनम्

"आरोप्यते ताद्रूप्यम् न तु मुख्यम् । बालेषु मञ्चत्वारोपान्मञ्चपदप्रवृत्तिः' 'हसन्ति' इति पदान्तरप्रयोगाद् विज्ञायते" इति । "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इति तु कस्यचित् प्रमादोक्तिः, यद्वा शक्यताऽवच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा = शक्यताऽवच्छेदकारोप इति तदर्थः । यथा तीरत्वविशिष्टस्य गङ्गात्वेन बोध इति । अत एव 'गङ्गायां मीनघोषौ स्तः' इत्याद्युपपद्यते । अन्यथा द्वन्द्वाद्यर्थस्यैकधर्मावच्छिन्नेऽन्वयस्य तादृशस्य द्वन्द्वाद्यर्थेऽन्वयस्यैव वा 'अजां ग्रामं नयति' 'अजाऽवि-धनौ देवदत्त-यज्ञदत्तौ' इत्यादौ यथासंख्यान्वये द्वन्द्ववारणाय 'पयः पयो नयति' इत्यादावेकशेषवारणाय च आवश्यकत्वेन पररीत्या च मीनस्य नीरत्वावच्छिन्नेऽन्वयेन घोषस्य तीरत्वावच्छिन्नेऽन्वयेन द्वन्द्वोऽसाधुः स्यात् । मम तु गङ्गात्वेनैव तीरबोधादेकधर्मावच्छिन्नेऽन्वयसत्त्वेन न क्षतिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युगपद् वृत्तिद्वयविरोधोऽप्यत एव न दोषाय, दूषकताबीजा-भावाच्च । अन्वयानुपपत्त्या च युगपदेव गङ्गात्वेनैव नीरतीरयो-रुपस्थितिः । 'काकेभ्यो दधि' इत्यादावप्येवमेव ।

( रत्न० )—ननु 'कुन्ताः प्रविशन्ति' इत्यादौ पुरुषमात्रस्यारो-पितकुन्तत्वेन प्रवेशान्वयेऽजहत्स्वार्थलक्षणात्वन्न स्यादत आह—*कुन्ता इति—तथा सति कुन्तसंयोगविशिष्टपुरुषाणां तत्र कुन्तत्वेनान्वयादज-हत्स्वार्थात्वोपपत्तिरिति भावः । आरोपे कैयटप्रमाणमाह—*कैयट इति—ननु 'शक्यताऽवच्छेदकान्यरूपेण ज्ञाते लक्षणा भवति' इत्यर्थक 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इति व्युत्पत्तिविरोधोऽत आह—*शक्यादिति । *यद्वेति—शक्यताऽवच्छेदकं गङ्गात्वं तद्भिन्नं रूपं तटत्वं तेन रूपेण ज्ञाते पदार्थे (तटे) लक्षणा भवतीत्यर्थः । अज्ञातपदार्थे शक्यसम्बन्धज्ञानासम्भवेन लक्षणाया असम्भवादिति भावः । *अत एवेति—शक्यताऽवच्छेदकारोपेण गङ्गातीरयोर्बोधादेवे-त्यर्थः । अन्यथा = 'गङ्गा'पदस्य तटत्वावच्छिन्नमात्रार्थकत्वे । यत्र द्वन्द्वा-र्थस्यैकधर्मावच्छिन्ने एकधर्मावच्छिन्नस्य वा द्वन्द्वार्थेऽन्वयस्तत्रैव द्वन्द्वसमास इत्यत आह—*द्वन्द्वार्थस्येति—एकधर्मावच्छिन्नस्येत्यर्थः । एकधर्मावच्छिन्नस्यैकसम्बन्धेनैकधर्मावच्छिन्नेऽन्वयस्यैव सहविवक्षा-पदार्थत्वेन सहविवक्षायामेव द्वन्द्वविधानादिति भावः । तादृशसहविव-क्षायाः फलमाह—*'अजां ग्रामं नयति' इति—अत्राजाग्रामयोर्न द्वन्द्वः, ग्रामस्य संयोगे अजायाश्च व्यापारेऽन्वयेनैकधर्मावच्छिन्नेऽन्वया-भावात् । तादृशस्य = एकधर्मावच्छिन्नस्य । *अजाऽवि-धनाविति—अत्र प्रतियोगिदलेऽनुयोगिदले च निविष्टस्यैकधर्मावच्छिन्नत्वस्य यथासंख्य-मन्वये द्वन्द्वाभावरूपं फलं बोध्यम् । समुदायस्य समुदायेऽन्वये तु 'अजाऽवि-धनौ देवदत्तयज्ञदत्तौ' इति समस्तं पदद्वयम् । *पयः पय इति—उभयं कर्मद्वितीयान्तम् । अत्राप्येकस्य संयोगेऽपरस्य व्यापारेऽन्वयः । *परीत्येति—नैयायिकरीत्येत्यर्थः । *अत एवेति—आरोपितैकरूपेणो-भयोर्बोधादेवेत्यर्थः । *दूषकताबीजेति—बुद्धेः क्रमिकत्वमेव दूषकता-बीजम् । एकरूपेणोभयोरुपस्थितौ तु बुद्धेः क्रमिकत्वाभाव इति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतएव क्रमिकस्थले तार्किका अपि वृत्तिद्वयमभिप्रेत्य तादृशनियमं प्रत्याचख्युः, यथा 'चित्रगुधनम्' । अत्र 'गो' पदं बहुव्रीहौ गोस्वामिनि लाक्षणिकम् । ततः षष्ठीतत्पुरुषे स्वामिसम्बन्धिनि इति लक्षणाद्वयम् । ❀उपस्थितिरिति — विरोधाभावादिति भावः । ❀एवमेवेति — दध्युपघातके बिडालादौ काकत्वारोपो बोध्यः ॥

मू०—गौतमोऽप्याह—†१ "सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण-बाल-कट-राज-सक्तु-चन्दन-गङ्गा-शकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः" ( न्या० द० अध्या० २ आह्नि० २ सू० ६३) इति । तस्य भावस्तद्धर्मः तदभावेऽपि तदुपचारः = तच्छब्दव्यवहार इत्यर्थः । स च तद्धर्मारोपेण । आरोपनिमित्तानि च सहचरणादीनि । 'यष्टीः प्रवेशय' 'मञ्चाः क्रोशन्ति' 'वीरणेष्वास्ते' 'अयं राजा यमः' 'प्रस्थः सक्तुः' 'चन्दनं तुला' 'गङ्गायां घोषः' 'कृष्णः शकटः' 'अन्नं प्राणाः' 'अयं कुलस्य राजा' इत्युदाहरणानि । यष्टित्वारोपो ब्राह्मणे, साहचर्यात् । मञ्चत्वारोपो बालेषु, तात्स्थ्यात् । कटेषु वीरणत्वारोपस्तादर्थ्यात् । राज्ञि यमत्वारोपो वृत्तात् †२ । सक्तौ प्रस्थ-

शक्यताऽवच्छेदकारोपे गौतमसम्मतिः

---

†१ पतञ्जलिनाऽप्युक्तम्—'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति—तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादिति । तात्स्थ्यात्तावत् 'मञ्चाः हसन्ति' 'गिरिर्दह्यते' । ताद्धर्म्यात् जटिनं यान्तम् 'ब्रह्मदत्तः' इत्याह । ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्ते इति । अतो जटी 'ब्रह्मदत्तः' इत्युच्यते । तत्सामीप्यात् 'गङ्गायां घोषः' 'कूपे गर्गकुलम्' । तत्साहचर्यात् 'कुन्तान् प्रवेशय' 'यष्टीः प्रवेशय' इति" ।

†२ यद्यपि 'राज्ञि यमत्वारोपो वृत्तात्' इत्यनन्तरं 'गौर्वाहीक' इत्यारभ्य 'अप्रमाण्यग्रहजनकत्वस्याभावात्' इत्यन्तः पाठः क्वचिदुपलभ्यते, तथापि न्यायसूत्रोदाहरणप्रदर्शनानन्तरम् 'इति तद्व्याख्यातारः' इत्युक्त्या, व्याख्यातृभिश्च मध्ये 'गौर्वाहीक' इत्यादीनामनुक्तत्वात्, अस्मदुपलब्धकतिपयलिखितमुद्रितपुस्तकेषु अस्मदुपन्यस्तपाठस्यैवोपलभ्यमानत्वाच्च मध्ये तत्पाठोऽनुचित एव प्रतीयते इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वारोपस्तन्मानकत्वात् । चन्दने तुलात्वस्यारोपः, तद्धार्यत्वात् । गङ्गायां तीरधर्माधारत्वारोपः, तत्सामीप्यात् । कृष्णगुणयोगाच्छकटे तद्धर्मकृष्णत्वारोपः । प्राणसाधनत्वादन्ने प्राणत्वारोपः । कुलाधिपत्येन पुरुषे राजत्वारोप इति तद्व्याख्यातारः । न्यायवार्त्तिककारोऽपि—"साहचर्यं नाम यष्टिकया सम्बन्धः, तत्सम्बन्धात्तु 'यष्टिकावान्' इत्येव स्यान्नतु 'यष्टिका' इति । 'यष्टिकावान्' इति तु मुख्य एव । तस्मादुपचारबीजमन्यद्वक्तव्यम् । उच्यते, यष्टिकायां तावदयं 'यष्टिका' शब्दो यष्टिकात्वजातिनिमित्तकः । तत्र संयुक्तसमवेतां जातिं ब्राह्मणे समवायेनाध्यारोप्य ब्राह्मणम् 'यष्टिका' इत्याह" (न्या०वा० २।२।६३) इत्याह । 'गौर्वाहीकः' इत्यादावपि साधारणधर्मजडत्वादिरूपेण निमित्तेन वाहीकस्यारोपितगोत्वेन बोधः । ततो व्यञ्जनया मुख्यगवाभेदप्रतीतिः प्रयोजनम् । तत एव चमत्कारः । आद्यबोधेन तु न चमत्कारः, तस्मिन् भ्रमत्वज्ञानात् । अत एव 'गौर्वाहीको जडः' इत्यादौ न पौनरुक्त्यम् ।

'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता'

इत्यस्य यद्गुणज्ञानपूर्वकं वाहीके 'गो' शब्दप्रयोगस्तैर्ज्ञायमानगुणैर्योगात्तद्गुणरूपात्सम्बन्धादित्यर्थः । प्रकृत्यादित्वात्तृतीया । यद्वा प्रथमत एव तत्र नामार्थयोरभेदबोधः, बाधज्ञानस्यानुपपत्तिजलक्षणाजन्यशाब्दबोधेऽप्रामाण्यग्रहजनकत्वस्याभावात् । 'भावप्रधानो निर्देशः' इत्यस्याप्ययमेवार्थः । घटादिपदप्रवृत्तिनिमित्तस्य घटत्वादेस्तत्रैव भेदसम्बन्धेनाहार्यारोपात् घटत्वादिप्रकारकघटत्वादिबोधो घटादिशब्दाल्लक्षणयेति । 'अन्नं प्राणाः' 'चन्दनं तुला' इत्यादावाहार्यारोपस्यैव लक्षणात्वादिति बोध्यम् ॥

( रत्न० )—आधुनिकनैयायिकानां सिद्धान्तं दूषयन् तन्मूलसम्मतिमाह — *गौतमोऽपीति । *सहचरणेति — अत्र सूत्रे सहचरणादीनां ब्राह्मणादिभिर्यथासंख्यमन्वयः । *अतद्भावेऽपीति — तस्य = शब्दस्य,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः = प्रवृत्तिनिमित्तम् । तदभावेऽपि = प्रवृत्तिनिमित्ताभावेऽपि । *सचेति — व्यवहारश्चेत्यर्थः । तद्धर्मारोपेण = प्रवृत्तिनिमित्तारोपेण, अतद्भावेऽपि—तच्छब्दाशक्यत्वेऽपि, तदुपचारः = तच्छब्दव्यपदेशः इति व्याख्यानन्तु न युक्तम्, व्यपदेशेऽपि प्रवृत्तिनिमित्तस्यैव निमित्तत्वात्। अत्र सहचरणं न मुख्यमसम्भवात्किन्तु सम्बन्धमात्रोपलक्षणमिति तेनैव सिद्धे सूत्रे स्थानादिग्रहणं प्रपञ्चार्थम्। *तादर्थ्यादिति — वीरणानां कटार्थत्वात्तत्र वीरणत्वारोपः । वीरणः = तृणविशेषः, 'हिन्दी'भाषायां 'खस' इति नाम्ना प्रसिद्धः। "स्याद्वीरणं वीरतरम् मूलेऽस्योशीरम-स्त्रियाम्" इत्यमरः (अमरको० कां० २ वनौष० व० १६४)। लक्षणास्थले सर्वत्र प्रवृत्तिनिमित्तमारोप्यत इत्याह—*साधारणधर्मेति *तत इति — लक्ष्यार्थबोधानन्तरमित्यर्थः । *तत एवेति — अभेद-प्रतीतेरेवेत्यर्थः। एतेन युगपद् वृत्तिद्वयविरोधोऽप्यपास्तः, वृत्तेः क्रमि-कत्वात्। प्रथमं जडत्वज्ञानं ततो गोत्वारोपस्ततोऽभेदज्ञानं तेन 'अतिजडो वाहीकः' इति ज्ञानम्। गवाभेदप्रतीतिरित्यस्यातिजडत्वप्रतीतिरित्यर्थः । अत एव = आरोपादेव । *न पौनरुक्त्यमिति — जडत्वावच्छिन्ने लक्षणाया अभावात्। ननु गोत्वारोपे "लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता" इति नियमभङ्गोऽत आह—*इत्यस्येति—'लक्ष्यमाणगुणैः'इत्यत्र "प्रकृत्यादिभ्य उपसंख्यानम्" इत्यनेनाभेदे तृतीया। लक्ष्यमाणेत्यस्य — ज्ञायमानेत्यर्थः। तथा च – ज्ञानविषयीभूतगुणाभिन्नसम्बन्धाद् गुणरूप-सम्बन्धादिति यावत्, वृत्तेः लक्षणाख्यवृत्तेर्गौणता इष्टेत्यर्थः। पक्षान्तरमाह—*यद्वेति। *प्रथमत इति – लक्षणातः प्रागेवेत्यर्थः। नच बाधज्ञानस-त्त्वात्तस्य शाब्दबोधे प्रतिबन्धकत्वम्, अनुपपत्तिजलक्षणाजन्यशाब्दबोधे बाधज्ञानस्याप्रतिबन्ध †कत्वात्, तस्याहार्य्यरूपत्वात्।

*न्यायवार्त्तिकेति — उक्तानुक्तदुरुक्तचिन्ताकरं वाक्यं वार्तिकम् । ननूपनिषद्वार्त्तिकेऽव्याप्तिः, उपनिषत्सु दुरुक्तत्वाभावादिति चेत्, न, भ्रमा-

†१ वस्तुतस्तु—बाधज्ञानस्य न प्रतिबन्धकत्वं न वा तदभावस्य कारणत्वम्। नचैवं 'वह्न्यभाववान् ह्रदः' इति बाधसत्त्वेऽपि 'ह्रदो वह्निमान्' इति बोधापत्तिरिति वाच्यम्, विशिष्टबुद्धिं प्रति विशेषणताऽवच्छेदकप्रकारकनिश्चयस्य कारणत्वेन तदभावादेव तादृशविशिष्टबुद्ध्यनुदयात्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्मकदुरुक्तत्वस्य तत्रापि सम्भवात् । ननु साहचर्य्यस्य सामानाधिकरण्यरूपत्वात्पुरुषस्य यष्टिकया सह प्रकृते तदभावाल्लक्षणा न स्यादत आह — *साहचर्य्यं नामेति । *तत्सम्बन्धादिति — यष्टिकासम्बन्धाद्यष्टिकाशब्दप्रयोगे त्वित्यर्थः । *उपचारेति — भिन्नत्वेन प्रतीतिविषययोरैक्यारोपणमुपचारः । *संयुक्तेति — ब्राह्मणेन संयुक्ता यष्टिका तत्र समवेतां यष्टिकात्वजातिं समवायसम्बन्धेन ब्राह्मणे आरोप्य ब्राह्मणे 'यष्टिका'शब्दप्रयोगः । यद्वा स्व-समवायि-संयोगसम्बन्धेन यष्टिकात्वस्य ब्राह्मणे सत्त्वात् तथा प्रयोगो बोध्यः । *भावप्रधानेति — यदा 'घट' शब्दस्य घटत्वमात्रपरत्वं तदा भावप्रधाननिर्देश इत्युच्यते । तच्च जातिविशिष्टव्यक्तिवाचकत्वे न संगच्छेतात आह — *घटादिपदेति । तत्रैव = घटत्व एव । भेदसम्बन्धेन = समवायसम्बन्धेन । आहार्य्यारोपात् = समवायसम्बन्धेन तदभाववद्विशेष्यकतत्प्रकारकज्ञानविषयीकरणादित्यर्थः । *घटत्वादिप्रकारकेति — समवायसम्बन्धावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितघटत्वनिष्ठविशेष्यताकबोध इत्यर्थः । *आहार्य्यारोपस्येति — तदभाववद्विशेष्यकतत्प्रकारकेच्छाजन्यज्ञानरूपस्यैवेत्यर्थः ।

मू०—"व्रीहीन् प्रोक्षति" इत्यादावपूर्वसाधनीभूतव्यक्तीनामेव तात्पर्य्यवशाद् 'व्रीहि' पदेन व्रीहित्वेन भानम् । एवं तत्प्रतिनिधिष्वपि व्रीहित्वमारोप्य व्रीहित्वेनैव तात्पर्यवशादपूर्वसाधनीभूततत्प्रतिनिधिव्यक्तीनां भानम्, न तु अपूर्वसाधनत्वेन भानम् ।

शक्यतावच्छेदकारोप एव लक्षणेति पक्षे व्रीहीन् प्रोक्षतीत्यादौ निर्वाहप्रकारः ।

अत्र सर्वत्र तत्तद्धर्मविशिष्टे शक्यताऽवच्छेदकधर्मारोपः । अतएव "कचतस्त्रस्यति वदनम्" †इत्यादौ कचत्वादिना राहुत्वादिविशिष्टस्य बोधान्न त्रासाद्यन्वयानुपपत्तिः । हरिरप्याह—

"एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः ।

---

† कचतस्त्रस्यति वदनं वदनात्कुचमण्डलं त्रसति ।
मध्याद् बिभेति नयनं नयनादधरः समुद्विजति ॥
इति समस्ता उपगीतिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते ॥

( वाक्यप० कां० २ कारि० २५२ )

सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।

प्रसिद्धिभेदाद् गौणत्वं मुख्यत्वं चोपचर्यते" ॥

( वाक्यप० कां० २ कारि० २५५ ) इति ।

गौणमुख्यार्थबोधकः शब्द एक एव । युगपत्सर्वार्थप्रकाशनं तु न, प्रकरणादिरूपनिमित्तभेदात् । 'सर्वशक्तेः' इत्यस्य व्याख्यानम्—'अनेकधर्मणः' इति । 'गो' शब्दो गोजातौ प्रसिद्ध इति तत्र मुख्यः, वाहीके तु अप्रसिद्ध्या गौण इति तदर्थः । नन्वेवं शब्दार्थसम्बन्धस्यानित्यत्वं स्यादत आह—

गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।

अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥ इति ।

( वाक्यप० कां० २ कारि० २५७ )

कैश्चित् = शब्दार्थसम्बन्धनित्यत्ववादिभिः । निमित्तात् = जाड्यादेः । शब्दस्तु गोत्वमेवाभिधत्ते । 'गौः' इत्यत्र मुख्यं गोत्वम्, वाहीके तूपचरितम् । 'शब्द एव प्रवृत्तिनिमित्तम्' इतिपक्षे स कदाचित् गोजातौ अनुषज्यते कदाचिद् वाहीके इति तन्मतेऽपि प्रसिद्ध्यप्रसिद्धिमूलको गौणमुख्यविभागः । अर्थोऽत्र विशेष्यभूतः । स्वार्थे = प्रवृत्तिनिमित्ते । तदेव शब्दशक्यमित्येकार्थ एव शब्द इति तद्भावः । 'गौर्वाहीकः' इत्यादौ लक्षणाफलं तु सादृश्यप्रतीतिः । मुख्यार्थसाक्षात्सम्बन्धमूलारोपान्मुख्यार्थवृत्तिगुणसमानगुणवत्त्वरूपपरम्परासम्बन्धमूलारोपो जघन्य इति गौण्या अतिजघन्यत्वं बोध्यम् । गौण्यामेव च परम्परासम्बन्धो लक्षणावीजं नान्यत्र । अतएव 'प्रयोजनं न लक्ष्यं सम्बन्धाभावात्' इति प्रकाशादावुक्तम् † ।

† तत्रहि काव्यप्रकाशे—"प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्द

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)—नन्वपूर्वसाधनीभूतव्यक्तिमात्रस्य प्रोक्षणादर्शनाद् 'व्रीहीन् प्रोक्षति' इत्यनुपपन्नमत आह—*व्रीहीन् प्रोक्षतीत्यादाविति। *तात्पर्यवशादिति—तात्पर्य्यानुपपत्त्येत्यर्थः। व्रीहित्वेन = आरोपितव्रीहित्वेन। *एवं तत्प्रतिनिधीति—अयं भावः—

खदिरादिष्वशक्तेषु शक्तिः प्रतिनिधीयते ।
केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम् ॥
(वाक्यप० कां० ३ समुद्दे० १ कारि० ३)

इति हर्य्युक्तेर्व्रीहित्वजात्युपलक्षिता शक्तिरेव क्रियासाधनत्वेन व्यपदिश्यते। तथा च जातिक्रिययोरेव विभक्तिबोधितश्रौतसम्बन्धः। निराश्रयाया जातेरनुपलम्भाद् द्रव्यमाक्षिप्यते। एवञ्च नीवारेषु सदृशत्वमूलकव्रीहित्वजात्यारोपेण प्रतिनिधेरपि श्रौतत्वं सिद्धम्, जातिक्रिययोरेव श्रौतसम्बन्धबोधनात्। प्रतिनिधित्वस्य जातिपक्ष एव सम्भवः। व्यक्तिपक्षे तु विभक्त्या द्रव्यक्रिययोरेव श्रौतसम्बन्धबोधनात्तत्त्यागे प्रतिनिध्युच्छेद एवापद्येत। तात्पर्य्यवशाज्जातिक्रिययोरेव सम्बन्धस्य श्रौतत्वसाधनेन ईप्सिततमे कर्मणि द्वितीयाविधानात् 'प्रधानस्य प्रतिनिध्यसम्भवः' इत्यपास्तम्। ननु जातिक्रिययोरेव श्रौतसम्बन्धत्वे प्रोक्षणादेर्व्रीहिफलार्थत्वं न सिध्येदिति चेत्, न, प्रोक्षणादेरदृष्टद्वारा यागफलरूपप्रधानाङ्गत्वस्यैव

---

प्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात्। न चात्र व्यञ्जनादृतेऽन्यो व्यापारः। तथाहि—"नाभिधा समयाभावात्" 'गङ्गायां घोषः' इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः संकेतिताः। "हेत्वभावान्न लक्षणा" मुख्यार्थबाधादित्रयं हेतुः तथा च—

लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥

यथा 'गङ्गा'शब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि तटेऽपि सबाधः स्यात्तत् (तदा) प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः, नाप्यत्रबाधः। न च 'गङ्गा'शब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः। नापि प्रयोजने लक्ष्ये किञ्चित्प्रयोजनम्। नापि 'गङ्गा'शब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः (बाधादिकमनपेक्ष्य)" एवमुक्तम् (काव्यप्र० उल्ला० २ कारि० १५–१६) विस्तरभयात्वग्रेतनोंऽशः नोपन्यस्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीकारात्। प्रोक्षणादेः प्रधानाङ्गत्वादेव कृष्णलेषु ( गुञ्जाफलेषु ) वितुषीभावरूपद्वारलोपेनावघातनिवृत्तावपि प्रोक्षणम् संगच्छते। *व्रीहित्वेनैवेति—तेन व्रीह्यभावे सादृश्यान्नीवाराणां ग्रहणम्। प्रकृतापूर्वसाधनत्वेन रूपेण नीवाराणां ग्रहणमिति मतं निराकुर्वन्नाह—*नत्वपूर्वेति—अन्यथा यवादीनामपि प्रोक्षणापत्तिः। *अतएवेति—तत्तद्धर्मविशिष्टे शक्यताऽवच्छेदकस्यारोपादेवेत्यर्थः। *न त्रासादीति—राहुत्वविशिष्टे कचत्वारोपाद् राहुत्वविशिष्टत्वात् त्रासोपपत्तिः, कचत्ववैशिष्ट्येन चमत्कारसिद्धिरिति न दोषः। ननु प्रवृत्तिनिमित्तारोपेऽनेकार्थत्वाभावात्संयोगादिना विशेषस्मृतिरिति पूर्वोक्तग्रन्थासङ्गतिरत आह—*एकमाहुरिति—अन्ये परीक्षकाः = वैयाकरणाः अनेकार्थं शब्दमेकमाहुः। एक एव 'गो'शब्दः सर्वेषामर्थानां वाचकः। निमित्तभेदात् = अर्थप्रकरणरूपात्, शब्दान्तरेण सम्बन्धरूपाद्वा सार्वार्थ्यम् = सर्वार्थबोधकत्वं भिद्यते = नानाविधं भवति। "सर्वशक्तेस्तु तस्यैव" इत्यस्यैव व्याख्यानम् 'अनेकधर्मणः' इति। शब्दस्य प्रसिद्धिभेदात् = प्रसिद्ध्यप्रसिद्धिभ्यां मुख्यत्वं गौणत्वञ्चोपचर्य्यते। वाक्यपदीयपुस्तके 'चोपवर्ण्यते' इति पाठः। कैश्चिद्वाहीके गोत्वानुषङ्गो निमित्ताज्जाड्यादिरूपादिष्यते। स्वार्थे जातिरूपे शब्दरूपे वा व्यवस्थितः शब्दोऽर्थमात्रं विशेष्यभूतम् विपर्य्यस्तम् = भेदं गतम्। भिन्नाधिकरणेष्वारोपितं गोत्वमेव सर्वत्रार्थः विशेष्यांशस्यैव तु भेद इति भावः। अत्रार्थो द्विविधः—गोत्वादि, शब्दस्वरूपञ्च। तत्राद्यं व्याख्याय द्वितीयमाह—*शब्द एव प्रवृत्तिनिमित्तमिति। ननु 'जडो वाहीकः' इत्येवास्तु किं लाक्षणिकशब्दप्रयोगेणेत्यत आह—*लक्षणाफलन्त्विति। *सादृश्यप्रतीतिरिति—अतिजडत्वप्रतीतिरित्यर्थः। ननु सर्वत्रैव शक्यताऽवच्छेदकारोपे लक्षणावृत्तिर्जघन्या, गौणी लक्षणा त्वतिजघन्येति भेदानुपपत्तिरुभयत्राप्यारोपस्य समत्वादत आह—*मुख्यार्थसाक्षादिति—मुख्यार्थस्य = शक्यार्थस्य यः साक्षात्सम्बन्धस्तन्मूलकारोपापेक्षया मुख्यार्थवृत्तिर्यो गुणो जाड्यादिस्तत्सदृशो यो गुणो वाहीकगतजाड्यादिस्तद्गुणवत्त्वरूपपरम्परासम्बन्धमूलको य आरोपः स जघन्य इति आरोपगतजघन्यातिजघन्यत्वमादाय वृत्तावपि तद्व्यवहार इति भावः। नन्वेवं शुद्धाभेदत्वेनाभिमतलक्षितलक्षणाया अपि अतिजघन्यत्वापत्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्तत्रापि परम्परासम्बन्धमूलकारोपसत्त्वादत आह—॥गौण्यामेवेति। ॥अत एवेति—परम्परासम्बन्धस्य गौण्यतिरिक्तस्थले लक्षणामूलत्वाभावादेवेत्यर्थः। ॥प्रयोजनमिति—'गङ्गातटे घोषः' इत्येव प्रयोक्तव्ये 'गङ्गायां घोषः' इति प्रयोगस्य फलं घोषाधिकरणे तटेऽतिशयितशैत्यपावनत्वप्रतीतिरूपं वाच्यम्। तत्फलस्य शाब्दबोधविषयत्वञ्च न शक्त्या नापि लक्षणया वक्तुं शक्यम्, उभयोरपि शक्यार्थलक्ष्यार्थोपस्थापनेन क्षीणशक्तिकत्वादिति तादृशफलस्य शाब्दबोधविषयत्वसिद्धये व्यञ्जनावृत्तिः स्वीकृता आलङ्कारिकैः। यदि गौण्यतिरिक्तस्थले 'गङ्गायां घोषः' इत्यादौ परम्परासम्बन्धोऽपि लक्षणाबीजं स्यात् तदा स्वशक्यवृत्त्यतिशयितशैत्यपावनत्वाश्रयसंयुक्तवृत्तित्वरूपपरम्परासम्बन्धेन लक्षणयैव तद्बोधसम्भवे आलङ्कारिकप्रमाणभूता व्यञ्जनावृत्तिर्भज्येतेति भावः।

मू०—एवञ्च गवादिशब्दानां व्यञ्जनया जाड्यादिरूपगुणबोधकत्वाद् गुणवचनत्वेऽपि ततः प्राक् गुणवचनत्वाभावात् "प्रकारे गुणवचनस्य" (पा० सू० ८।१।१२) इति न द्वित्वम्, इति न तत्सूत्रस्थभाष्यविरोधः।

व्यञ्जनया गुणबोधकत्वे भाष्यविरोधपरिहारः, आरोपे पतञ्जल्यादिसम्मतिश्च

'गङ्गायां घोषः' इत्यादौ गङ्गादिभिर्घोषस्यात्यन्तसामीप्ये गङ्गादौ तीरधर्माधारत्वारोपो गौतमोक्तः। गङ्गादिना घोषस्य व्यवहितसामीप्ये तीरे गङ्गात्वारोपः पतञ्जल्युक्तः। आद्योऽपि "स्वरितेनाधिकारः" (पा० सू० १।३।११) इति सूत्रे पतञ्जल्युक्तः।

यत्र तु प्रकृतिप्रत्यययोर्लोपानुशासनं तत्र 'इयान्' 'गर्गाः' इत्यादौ प्रकृतिगर्भेऽर्थे प्रत्ययस्य, गर्गापत्यरूपेऽर्थे प्रकृतेः साधुत्वं लोपानुशासनबलादिति वदन्ति।

(रत्न०)—नन्वेवं लक्षणाप्रयोजनस्य शाब्दबोधोपपत्तये व्यञ्जनावृत्तिस्वीकारे गवादिपदानां व्यञ्जनयाऽतिशयितजाड्यादिगुणवाचकतया "प्रकारे गुणवचनस्य" इति द्वित्वापत्तिरत आह—॥एवञ्च गवादिशब्दानामित्यादि। ॥ततः प्राग् गुणवचनेति—प्रकारः = सादृश्यम्। अयम्भावः—'अग्निर्माणवकः' 'गौर्वाहीकः' इत्यादौ सादृश्ये वर्तमानानां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणवचनानामग्निगवादिशब्दानां द्वित्वापत्तिमाशङ्क्य भाष्यकृता समाहितम् "सर्वश्च शब्दः प्रकारे वर्तमानो गुणवचनः सम्पद्यते तत एवं विज्ञास्यामः प्राक् प्रकाराद्यो गुणवचन इति"। प्रकारे वर्तनात्प्राग् यो गुणवचनो यथा 'पटुः मृदुः' इति । नायं गोशब्दोऽग्निशब्दो वा प्रकारेऽर्थे वर्तनात् प्राग् गुणवचनः किन्तु जातिवचन इति नात्र द्वित्वापत्तिरिति तदाशयः । ॐतत्सूत्रस्थेति—प्रकारे गुणवचनस्य ( पा० सू० ८।१।१२ ) इति सूत्रस्थेत्यर्थः । ॐभाष्यविरोध इति—शक्यताऽवच्छेदकारोपपक्षे गुणवचनत्वाभावाद् व्यञ्जनावृत्तिस्वीकारे गुणवचनत्वाच्च भाष्यकृच्छङ्कासमाधानविरोधो नेत्यर्थः । यत्तु 'गो' शब्दस्य सादृश्यलक्षकत्वेन गुणवचनत्वम्' इत्यभिप्रायेण भाष्ये द्वित्वाशङ्केति, तन्न, "सादृश्यनिमित्तकाभेदोपचाराद् 'गोप' शब्दो गोप्यां वर्तते" इति "पुंयोगात्"—( पा० सू० ४।१।४८ ) इति सूत्रस्थभाष्यविरोधात् । न हि ततः सदृशे लक्षणेति लभ्यते । ॐसामीप्य इति—सतीति शेषः । एवमुत्तरत्रापि बोध्यम् । ॐतीरधर्मेति—घोषनिष्ठाधेयतानिरूपिततीरनिष्ठाधिकरणतां स्वरूपसम्बन्धेन गङ्गायामारोप्य तथाप्रयोग इत्यर्थको गौतमोक्त इत्यर्थः । ॐव्यवहितसामीप्य इति—अनत्यन्तसामीप्य इत्यर्थः । पुंयोगादिति सूत्रे भाष्ये "चतुर्भिश्च प्रकारैरतस्मिन् स इत्येतद् भवति" इत्युपक्रम्योक्तमित्यत आह—ॐपतञ्जल्युक्त इति । ॐआद्योऽपीति—घोषाधिकरणताया गङ्गायामारोपोऽपीत्यर्थः । ॐस्वरितेनेति—तत्र हि "स्वरितेनाधिकं कार्यम्" इत्युपक्रम्य "गङ्गायां गावः" इत्युक्तम् । अत्र गङ्गायामारोपिताधिकरणत्वेऽपि सप्तमी । अयं भावः—"आधारोऽधिकरणम्" ( पा० सू० १।४।४५ ) इति सूत्रे 'आधार' पदे स्वरितत्वयोगेन 'अधिकं कार्यं कर्तव्यम्' इति बोध्यते । तेन सर्वावयवव्याप्त्याऽऽधारत्वाभावेऽपि 'गङ्गायां गावः' 'कूपे गर्गकुलम्' इत्यत्र 'अधिकरण' संज्ञया सप्तमी सिध्यति । तदुक्तं भाष्ये—"तथा अधिकरणमाचार्यः किं न्याय्यं मन्यते ? यत्र कृत्स्न आधारात्मा व्याप्तो भवति, तेनेहैव स्यात् 'तिलेषु तैलम्' 'दध्नि सर्पिः' इति । 'गङ्गायां गावः' 'कूपे गर्गकुलम्' इत्यत्र न स्यात् । स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति" इति । 'गर्गाः' इति प्रकृतिमात्रप्रयोगे प्रकृतेः प्रत्ययार्थविशिष्टे, 'इयान्' इत्यादि प्रत्ययमात्रप्रयोगे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकृत्यर्थविशिष्टे प्रत्ययस्य च लक्षणेति तार्किकोक्तं खण्डयन्नाह—*यत्र तु प्रकृतिप्रत्यययोरिति—

"शास्त्रे क्वचित् प्रकृत्यर्थः प्रत्ययेनाभिधीयते ।
प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः ।"
( वाक्यप० कां० २ कारि० २३१ )

इति हर्युक्तिः, "नक्षत्रे च लुपि" ( पा० सू० २।३।४५ ) इत्यादिसूत्रमप्यत्र मानं बोध्यम् । तथा च तादृशानां तत्र शक्तिरेव शास्त्रबलादिति सिद्धम् ।

'द्विरेफ' पदे लक्षणाखण्डनमुच्चारितानामेव प्रत्यायकत्वनिरूपणञ्च

मू०—'द्विरेफ'पदं तु रूढिशक्त्या भ्रमरबोधकम् । अवयवार्थप्रतीतिस्तु नास्त्येव, रथन्तरादिपदवत् । यद्वा पदनिष्ठरेफद्वयस्यार्थे आरोपात्तत्सम्बन्धित्वेनैव भ्रमरबोधः । अतएव भ्रमरपर्यायेषु 'द्विरेफ'पदस्य कोशेषु पाठः, बाधप्रतिसन्धानं विनैव 'द्विरेफ'पदाद् भ्रमरबोधेन लक्षणेत्ययुक्तम् । किञ्च 'द्विरेफ' पदेन रेफद्वयसम्बन्धित्वेन 'भ्रमर'पदोपस्थितावपि 'भ्रमर' इति शक्तताऽवच्छेदकानुपूर्वीरूपेणोपस्थित्यभावाद् बोधानापत्तेः । न च 'द्विरेफ'पदाल्लक्षणया तदुपस्थितिः, अतएवात्र लक्षितलक्षणेति व्यवहारः, प्रत्ययार्थान्वये च प्रकृतिप्रयोज्योपस्थितिः कारणमिति वाच्यम्, एवमपि तस्यानुच्चारितत्वेनोच्चारितस्यैव च बोधकत्वेन ततो बोधानापत्तेः । उच्चारितस्यैव बोधकत्वमिति "अणुदित्—" ( पा० सू० १।१।६९ ) सूत्रे भाष्ये स्पष्टम् । पुस्तकदर्शनस्थलेऽपि मानसजपवत् सूक्ष्मतरताल्वादिव्यापारेण सूक्ष्मतरं स्वोच्चारणमस्त्येवेति न दोषः । जपे मन्त्राणां त्रैस्वर्येणैव ज्ञानस्यावश्यकतया तस्य च तत्तत्स्थानेषूच्चदेशाद्युपलभ्यमानत्वरूपतया सूक्ष्ममुच्चारणमावश्यकम् । इदमेव च स्मृतिषु मानसमुच्चारणमित्युच्यते । तथा च भारद्वाजः—

सूतके मृतके कुर्यात्प्राणायाममन्त्रकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ।
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत्" ॥ इति ।

किञ्च मानसजपलक्षणे—

धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदर्थसंस्मृत्या स उक्तो मानसो जपः ॥

इत्यस्मिन् 'उच्चरेत्' इत्युक्तम् । अत एव 'ऋग्' इत्युक्ते तात्पर्यवशाद्विशिष्टसन्निवेशायाः "अग्निमीळे" इत्यादिकायास्ततो बोधेऽपि ततो नार्थप्रत्ययः । 'गामानय इत्याह' इत्यादावनुकरणेनानुकार्यप्रतीतावपि न ततोऽर्थबोध इत्यनुभवः । किञ्च अतीतानागतानां पदानां वृत्त्यनाश्रयतया वृत्त्याश्रयत्वेन ज्ञानस्य दुरुपपादत्वम् । पदेष्वतीतत्वादि चोच्चारणक्रियानाशादिना । नष्टत्वमनुत्पन्नत्वञ्च—'नष्टाभिव्यक्तिकत्वम्' 'अनुत्पन्नाभिव्यक्तिकत्वं वा (च) । यथा च घ्राणेन्द्रियगृहीतस्यैव गन्धस्य सुखादिजनकत्वं न स्मृतस्य, यथा च महतः पटहादिशब्दस्य कर्णपीडाजनकत्वं श्रुतस्यैव न स्मृतस्य, तथा पदानां बोधजनकत्वं श्रुतानामेव न यथाकथञ्चित्प्रतीतानाम् । यथा तत्र सुखादिजनकताऽवच्छेदकवैजात्येन तेषां नान्यतो ग्रहस्तथा प्रकृतेऽपि । अत एव "परोक्षे लिट्" ( पा० सू० ३।२।११५ ) इति सूत्रे 'परोक्षे' इति न धातोर्विशेषणम्, शब्दरूपस्य तस्य परोक्षत्वासम्भवात्' इति भाष्यकैयटयोरुक्तम् । न च स्वबोध्यपदवाच्यत्वसम्बन्धेन 'द्विरेफ'पदं लक्षणया भ्रमरं बोधयतीति युक्तम्, अनुपपत्तिप्रतिसन्धानं विनाऽपि बोधात् । गौण्यतिरिक्तस्थले साक्षात्सम्बन्धस्यैव लक्षणाबीजत्वाच्चेति दिक् ॥

इति लक्षणानिरूपणम् ।

( रत्न० )—द्विरेफपदे नैयायिकाभिमतां लक्षणां खण्डयन्नाह—
*द्विरेफपदन्त्विति । *रूढिशक्त्येति—न तु लक्षणयेति भावः । *रथ-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तरादीति—'रथन्तर' शब्दः सामविशेषे रूढः । 'द्विरेफ' पदे योगजशक्ति स्वीकृत्याह— *यद्वेति—द्वौ रेफौ यस्मिन्निति व्युत्पत्त्या 'द्विरेफ'पदं रेफ-द्वयविशिष्टभ्रमरपरम् । 'भ्रमर'पदगतं रेफद्वयवत्त्वं तद्वाच्यार्थेऽलावारोप्य योगेनैव (रेफद्वयवत्वेनैव) 'द्विरेफ' शब्दो भ्रमरे व्यवह्रियत इति भावः । *अत एवेति—योगजशक्त्या रूढिशक्त्या वा बोधकत्वादेवेत्यर्थः । *कोशेषु पाठ इति—तथा चामरः—

मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।
द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमरालयः ॥ इति

(अमर को० २।५।२९) *लक्षणेत्ययुक्तमिति—लक्षणेति कथनमयुक्तमि-त्यर्थः । तार्किकैकदेशिनस्तु लक्षितलक्षणामत्राहुः । तथाहि—'द्विरेफ'पद-घटकस्योत्तरपदभूतस्य 'रेफ'पदस्य रेफद्वयसम्बन्धिनि 'भ्रमर'पदे लक्षणा । लक्षितस्य 'भ्रमर' पदस्य च भ्रमररूपेऽर्थे लक्षणेत्याहुस्तन्निराकर्तुमुपक्रमते *किञ्चेत्यादिना । *भ्रमरेतीति—'स्वाश्रयाव्यवहितोत्तरत्व' सम्बन्धेन भत्वविशिष्टं यद्रत्वं तद्विशिष्टं यदत्वं तद्विशिष्टं यन्मत्वं तद्विशिष्टं यदत्वं तद्विशिष्टं यद्रत्वं तद्विशिष्टात्वेनेत्यर्थः । *लक्षणयेति—'द्विरेफ'पदघटक 'रेफ'पदस्य रेफद्वयवति 'भ्रमर'पदे लक्षणयेत्यर्थः । एवञ्च शक्तताऽ-वच्छेदकानुपूर्वीरूपेणोपस्थितिः सिद्धेति भावः । लक्षितञ्च 'भ्रमर'पदं लक्षणाया भ्रमररूपार्थं बोधयेदिति भावः । *अत एवात्रेति—लक्षितं यद् 'भ्रमर'पदं तेन लक्षणाया बोधादेवेत्यर्थः । ननु लक्षितेन 'भ्रमर'पदेन शक्त्यैव बोधसम्भवाल्लक्षणेति व्यर्थमिति चेत्, न, 'भ्रमर'पदे लक्षणास्वीकारे 'द्विरेफ'पदे लक्षितलक्षणारूपं वृत्त्यन्तरं स्वीक्रियते । तथा च 'द्विरेफं पश्य' इत्यादौ भ्रमररूपार्थस्य 'द्विरेफ'पदनिष्ठलक्षितलक्षणारूपवृत्त्योपस्थापित-त्वेन तत्र द्वितीयार्थकर्मत्वस्य 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्' इति न्यायानुरोधेन कर्मत्वान्वयानुरोधेन तदावश्यकत्वात् । 'भ्रमर'पदे लक्षणाया अभावे तु तदर्थस्य 'द्विरेफ'पदनिष्ठवृत्त्याऽनुपस्थापितत्वेन तत्र कर्मत्वान्वयो न स्यादिति 'द्विरेफ'पदस्यैव लक्षितलक्षणावृत्तिः । 'लक्षितस्य लक्षणा' इति शब्दार्थः । अन्ये तु गौणयतिरिक्तस्थले 'साक्षात्' इति निवेशे गौरवाच्छक्यसम्बन्ध एव लक्षणा । तथा च 'रेफ'पदस्य स्वशक्यद्वयघटित'भ्रमर'पदशक्यत्वरूपपरम्परासम्बन्धेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'द्विरेफ' पदलक्षणयैव बोधसम्भवाल्लक्षितलक्षणारूपं वृत्त्यन्तरं न स्वीकार्य्यम्। न च 'लक्षितलक्षणारूपा पदवृत्तिः' इति व्यवहारानुपपत्तिः, लक्षितभ्रमरादिपदघटितसम्बन्धरूपा लक्षणेति तदर्थेनादोषादित्याहुः। ननु 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति न्यायविरोधोऽत आह—⁂प्रकृतिप्रयोज्येति—वस्तुतस्तु—लक्षितलक्षणावृत्तिस्वीकर्तृनये प्रकृतिजन्योपस्थितित्वस्य भ्रमररूपार्थे सत्त्वेन प्रकृते 'प्रकृतिप्रयोज्य' इति निवेशो विफल एवेत्युपाध्यायाः। ⁂त्रैस्वर्य्येणेति—यथाप्राप्तोदात्तत्वादिभिरित्यर्थः। "यज्ञकर्मण्यजपन्युङ्खसामसु" (पा० सू० १।२।३४) इति जपे एकश्रुतिनिषेधादिति भावः। वस्तुतस्तु जपो नाम—'अदृष्टार्थशब्दोच्चारणमात्रम्' इति यज्ञविषये पारिभाषिको 'जप' शब्द इति न तेन मानसजपस्थलेऽपि सूक्ष्मोच्चारणं लभ्यत इति कश्चित्। ⁂मनसोच्चार्य्येति—एतेन मनसाऽनुसन्धायेत्यर्थो निरस्तः। यद्यपि क्वचित् मानसजपे उच्चारणाभाव एव लभ्यते तथाप्येतत्स्मृत्यविरोधाय मानसेऽपि बुद्धिपरिकल्पितमुच्चारणं स्वीकार्य्यम्। सूतके = जननाशौचे। मृतके = मरणाशौचे। ⁂सम्यगुच्चार्य्येति—परश्रवणयोग्यतयोच्चार्य्येत्यर्थः। ⁂धिया यदिति—नृसिंहपुराणे—"त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत।

वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः॥
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः॥
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयेद् वाचा वाचिकोऽयं जपः स्मृतः॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।
अपरैरश्रुतः किञ्चित् स उपांशुजपः स्मृतः॥
धिया यदक्षरश्रेण्या वर्णाद् वर्णं पदात्पदम्।
शब्दार्थचिन्तनं भूयः कथ्यते मानसो जपः॥"

(नृसिं० पु० अध्या० ५८ श्लो० ७८–८२)

इति जपलक्षणानि निरूपितानि। यद्यपि मूलोक्तश्लोकानुपूर्वी पुराणे नोपलभ्यते तथापि भावसाम्यं त्वस्त्येव। ⁂वर्णस्वरेति—तदुक्तं भाष्यकृता—

"दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति ।
( महाभा० पस्पशाह्नि० )

*अर्थसंस्मृत्येति — सर्वत्र कर्मण्यर्थज्ञानस्य कारणत्वम् , तज्ज्ञानपूर्वकोच्चारण एवादृष्टोत्पत्तेरुक्तत्वात् । तदुक्तं पतञ्जलिना —

"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिद् ॥" इति ।
( महाभा० पस्पशाह्नि० )

पूर्वोक्ते "तदुच्चनीचस्वरितैः" इत्यादिपद्ये स्पष्टत्वं न परं प्रति किन्तु स्वं प्रत्येव ।

"नोच्चैर्जपं बुधः कुर्यात् सावित्र्यास्तु विशेषतः" ॥
( शंखस्मृ० अध्या० ११ श्लो० २९ ) इति शङ्खस्मृतेः ।

अन्यत्राप्युक्तम्— "शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ च चालयेत् ॥
किञ्चिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः" ॥ इति ।

इत्यादिवचनात्सूक्ष्मोच्चारणं मानसेऽपि लभ्यते । *अतएव ऋगितिशक्तताऽवच्छेदकानुपूर्वीरूपेणोच्चरितस्य प्रत्यायकत्वादेवेत्यर्थः । *नार्थेतिउच्चारणाभावादिति भावः । *अनुकार्य्येति — अनुकार्य्यस्यानुच्चारितत्वान्नार्थप्रत्यय इत्यर्थः । 'द्विरेफ'पदेनोपस्थापित 'भ्रमर'पदस्य बोधकत्वे दोषान्तरमाह — *किञ्चेति । *अतीतेति — तेषामेव स्मृतत्वेनेति भावः । *दुरुपपादत्वादिति — तदानीं पदाभावात् । ननु पदानां नित्यत्वात् कथमनित्यत्वमत आह — *पदेष्विति । *क्रियानाशादिनेति — क्रियागतप्रागभावप्रतियोगित्वस्य पदे आरोपादिति भावः । आदिना क्रियागतप्रागभावप्रतियोगित्वस्य पदे आरोपादनागतत्वं बोध्यम् । *नष्टत्वमनुत्पन्नत्वं चेति — अभिव्यक्तिक्रियागतध्वंसप्रागभावप्रतियोगित्वस्यारोपात् पदे नष्टत्वादिव्यवहारः । *गृहीतस्यैवेति — इन्द्रियसन्निकर्षजन्यं यद्वर्त्तमानकालिकं ज्ञानं तदीयविषयताविशिष्टगन्धत्वादेरेव सुखादिनिष्ठजन्यतानिरूपितजनकताऽवच्छेदकत्वादिति भावः । *जनकताऽवच्छेदकवैजात्येनेति — कारणताऽवच्छेदकीभूतं यदुक्तगन्धत्वादि तदभावेनेत्यर्थः । विगता जातिः = कारणताऽवच्छेदकीभूतो धर्मः तस्या भावो वैजात्यमित्यर्थः । एवं 'भ्रमर'पदेऽपि वर्तमानकालिकश्रावणप्रत्यक्षविषयीभूतानुपूर्वीरूपकारणताऽवच्छेदकीभूतधर्मस्याभावान्न बोधजनकत्वं तस्येति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः । भाष्यान्तरमपि प्रमाणयति — ※अत एवेति — उच्चारितस्यैव प्रत्यायकत्वादेवेत्यर्थः। ※स्वबोध्येति — स्वं 'द्विरेफ'पदं तद्बोध्यं 'भ्रमर' पदं तद्वाच्यत्वं भ्रमररूपेऽर्थे इति तत्सम्बन्धसत्वाद् बोधकत्वं स्यादित्याशङ्कायामाह— ※अनुपपत्तीति — एवञ्च 'द्विरेफ'पदमेव निरूढलक्षणया स्वबोध्यपदवाच्यत्वसम्बन्धेन भ्रमरं बोधयेदिति परास्तम् । तस्माच्छक्यताऽवच्छेदकारोप एव लक्षणेति सिद्धौ शक्तिविशेषरूपैव लक्षणा न त्वतिरिक्तेति विशेषरूपेण तामादाय कार्य्यकारणभावादिकल्पनागौरवं त्याज्यमेवेति भाव इत्याह — ※दिगिति ।

इति लक्षणानिरूपणम् ।

मू०—'मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धासम्बद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना'।

संक्षेपतो व्यञ्जनानिरूपणम्

अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्य्यादिभिरुक्ता। द्योतकत्वञ्च 'क्वचित्समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम्' इति वैयाकरणानामपि तत्स्वीकार आवश्यकः। एषा च शब्द-तदर्थ-पद-पदैकदेश वर्ण-रचना-चेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्ट्यादिज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः।

(रत्न०)—व्यञ्जनां निरूपयति — ※मुख्यार्थेति —मुख्यार्थस्य = शक्यार्थस्य, बाधः = परस्परसम्बन्धनिरूपकाणां पदार्थानां तात्पर्य्यविषयीभूतसम्बन्धेनैकपदार्थेऽपरपदार्थाभावः, तन्निरपेक्षो यो बोधस्तज्जनकः। अस्य 'संस्कारविशेष' इत्यत्रान्वयः। मुख्यार्थेन सम्बद्धासम्बद्धौ यौ अर्थौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य सः। ※वक्त्रादीति — आदिना

"वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ।
प्रस्तावदेशकालादे र्वैशिष्ट्यात्प्रतिभाजुषाम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ।"

( काव्य प्र० उल्ला० ३ कारि० २१-२२ )

इति कारिकोक्ता बोद्धव्यादयो ग्राह्याः । यं प्रति किञ्चिद् वक्तव्यं स बोद्धव्य इत्युच्यते, यश्च शब्दशक्यः स वाच्य इति न पौनरुक्त्यम्। तथा च वक्त्रादेर्वैशिष्ट्यम् = वैलक्षण्यम्, अन्यव्यावृत्तो धर्म इति यावत्। तस्य यज्ज्ञानं तच्च प्रतिभा च ते आदिनी यस्य = निपुणताघटितसमूहस्य तेनोद्बुद्धो यः संस्कारविशेषः स व्यञ्जना । तथा च वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वं फलितम् । प्रतिभा च -- वक्त्रादिवैशिष्ट्यसहकारेण जन्मान्तरीयतद्धीजनकत्वप्रकारकज्ञानजन्यसंस्कारोद्बोधजबुद्धिरूपा, वासनाविशेषरूपेति यावत् । सैव 'नवनवोन्मेषशालिनी'इत्युच्यते । एवञ्च शक्तिरेतज्जन्मानुभूतैव बोधजनिका व्यञ्जना तु जन्मान्तरगृहीताऽपीत्यपि विशेषोऽत्र । *अत एवेति — व्यञ्जनास्वीकारादेवेत्यर्थः । ननु द्योतकत्वस्यान्यादृशत्वान्न तत्रोपयोगोऽत आह — *द्योतकत्वञ्चेति – केवलनिपातानां प्रयोगादर्शनात् तेषां मुख्यार्थाभावेन लक्षणाया असम्भवाद् द्योतकतैवेति भावः । व्यङ्ग्यत्वम् = व्यञ्जनाबोध्यत्वम्, यथा 'प्रजपति' इत्यत्र प्रकृष्टजपबोधकत्वम्। *वैयाकरणानामिति – निपातानां द्योतकत्वस्य तदैव सम्भवात्। वृत्त्यन्तराद् व्यञ्जनाया वैलक्षण्यं दर्शयति *एषा चेति — नियन्त्रितार्थविषयकबोधजनकत्वं शब्दव्यञ्जना । वक्त्रादिवैशिष्ट्यमूला या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापाररूपाऽन्यनिष्ठा । यत्तु — 'एकसम्बन्धि ज्ञानमपरसम्बन्धिस्मारकम्' इति रीत्या व्यङ्ग्यार्थबोधे सिद्धे व्यञ्जना व्यर्थेति, तन्न, 'गतोऽस्तमर्कः' इति श्रवणोत्तरं 'सन्ध्यावन्दनादिकं कर्तव्यम्' इति 'मया स्मृतम्' इत्यनुव्यवसायाभावात्, तत्ताऽनुल्लेखाच्च। 'इदं पदमेतदर्थस्य न वाचकम्, नापि लक्षकम्, नापि स्मारकम् किन्तु व्यञ्जकम्' इति प्रामाणिकव्यवहारदर्शनादसम्बद्धस्यापि व्यङ्ग्यत्वाच्च व्यञ्जनाया आवश्यकत्वात् ।

इति व्यञ्जनानिरूपणम् ।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—ननु कोऽसौ शक्त्याश्रयः शब्दः?। न च वर्णाः प्रत्येकम् तथा द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः । नापि संहताः, उच्चरित-प्रध्वंसित्वेन यौगपद्यासम्भवात्, उत्पत्तेरभिव्यक्तेर्वा क्षणस्थायित्वात् । 'क्षण' शब्देन तदाधारः कालः । मुख्यक्षणस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वापत्तेः । उच्चरितप्रध्वंसित्वञ्च—'उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वम्' । एवञ्च 'अयं पूर्वोऽयं परः' इति प्रत्यक्षविषये 'इदम्' शब्दघटिताभिलापाभिलप्यमानपौर्वापर्य्यज्ञानस्य "इको यणचि" ( पा० सू० ६।१।७७ ) इत्याद्युपयोगिनोऽसम्भवः । नष्टस्य प्रत्यक्षविषयेदमा परमर्शायोगात् । पदप्रत्यक्षस्याप्येवंक्रमावगाहिन एव "परः सन्निकर्षः"–( पा० सू० १।४।१०९ ) इति सूत्रोक्तरीत्या भाष्यकृदनुभवसिद्धस्यानुपपत्तिः । न च पूर्ववर्णस्थितिकाले द्वितीयवर्णोत्पत्तिः, पूर्ववर्णनाशोत्तरं यत्नान्तरेण वर्णान्तरोत्पत्तेः, 'यावद् गकारे वाग् वर्तते न तावदौकारे इति येनैव यत्नेनैको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीयः प्रवर्तते' ( महाभा० १।४।१०९ ) इति च तत्रैव सूत्रे भाष्ये उक्तत्वात् । न चोत्तरवर्णप्रत्यक्षकाले संस्कारवशादव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्त्वं तदुत्तरवर्णे गृह्यते, एवं तदुत्तरवर्णप्रत्यक्षकाले उपस्थितविशिष्टतत्तद्वर्णवत्त्वं तत्तदुत्तरवर्णे गृह्यत इति तज्ज्ञानं सुलभम् 'सरो रसः' इत्यादौ विशेषश्च । यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्ति ( भवन्ति ) इति न पदप्रत्यक्षानुपपत्तिरिति वाच्यम्, आद्ये 'अयं पूर्वोऽयं परः' इत्यभिलापासम्भवात्, नष्टविद्यमानयोः सम्बन्धिनोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यत्वाच्च, एवं पदप्रत्यक्षोपपाद-

पराभिमतवर्णादिगत-शक्त्याश्रयत्व-निराकरणम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेऽपि पदस्याविद्यमानत्वेन तत्र वृत्त्याश्रयत्वग्रहानुपपत्तेश्च । अविद्यमाने आश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्' इत्यादेरापत्तिः (त्तेः)। अविद्यमानयोरपि जलघटयोराश्रयतानिरूपकत्वस्याश्रयत्वस्य च त्वद्रीत्या बाधाभावात् तज्ज्ञानस्य प्रमात्वापत्तिः (त्तेः)। किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः । तदुक्तम्—

"अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्" इति ।

( वाक्यप० कां० २ कारि० १६ )

पदसमुदायात्मकवाक्यस्येव वर्णसमुदायरूपपदस्याप्यभावात्, उभयोरप्यर्थासम्बन्धादिति तदर्थः । किञ्च 'एकं पदम्' इति बुद्धेः 'तदेवेदं कृष्णपदम्' इति बुद्धेश्चानुपपत्तिः पक्षद्वयेऽपि । न चैकजातीयबुद्धिविषयत्वौपाधिकी एकबुद्धिविषयत्वौपाधिकी च सेति वाच्यम्, तज्जातीयमिदं पद( द्य )म्' इति व्यवहारस्यापत्तेः 'तदेवेदं पद( द्य )म्' इति नियमेन व्यवहाराच्च। एतेन पूर्वनखादिनाशोत्तरं पुनरुत्पन्ने नखादौ 'तदेवेदं नखम्' 'त एव इमे केशाः' इतिवत् सादृश्येन प्रत्यभिज्ञेत्यपास्तम्, अवयवैरेकैकबुद्धिविषयैः 'एकः पटः' इत्यादिबुद्ध्युपपत्तावचयविनोऽप्यतिरिक्तस्य तव सिद्ध्यनापत्तेश्च । किञ्चैवमुच्चारणभेदाद् भिन्नेषु शक्तिग्रहासम्भवः, व्यक्तिवाद इव आनन्त्यव्यभिचारात् । व्यभिचारश्च—'गृहीतशक्तिकस्यैव बोधकत्वम्' इति सर्वसिद्धे नियमे बोध्यः । आनुपूर्वी तु तत्तत्कालघटितत्वेनाव्यवहितोच्चरत्वानुगमात् प्रत्युच्चारणं भिन्नेति तस्या अपि शक्तताऽवच्छेदकत्वे सैव दुरवस्था । तादृशाव्यवहितोच्चरत्वेनानुगमोऽपि तादृशत्वस्य दुर्ज्ञेयत्वादयुक्त एव । व्यवधानाभावे सति 'घ' ज्ञानध्वंसविशिष्टज्ञानविषय 'ट' त्वमेवानुपूर्वी, तत्परिच्छेदश्च मनसैवेति पक्षेऽपि ज्ञानव्यक्तिभेदेनानुपूर्व्यनन्ता एव । न च चरमवर्ण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानव्यङ्ग्यास्तत्तत्पदवृत्तयोऽनन्ता जातयः शक्तताऽवच्छेदकत्वेन कारणताऽवच्छेदकत्वेन च कल्प्यन्त इति न दोष इति वाच्यम्, अनन्तजातिकल्पने गौरवात्, उक्तरीत्या वृत्त्याश्रयत्वासम्भवाच्च, पदानामसत्त्वेन तत्र जातेरप्यसम्भवाच्च।

(रत्न०)—वर्णस्फोटवादिमतं खण्डयति—*नच वर्णाः प्रत्येकमिति। *तथेति—पर्य्याप्तिसम्बन्धेन शक्त्याश्रया इत्यर्थः। *उच्चरितेति—उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वेनेत्यर्थः। तथाच युगपद् वर्णसमुदायासम्भव इति भावः। *अभिव्यक्तेरिति—वर्णनित्यत्वपक्षाभिप्रायेणेदम्। ननु क्षणो नाम—शब्दतन्मात्रद्वारा प्रकृतेः परिणामविशेषः क्षणधारारूपकालस्य परमापकर्षावधिः यथा परमाणुरवयवधारायाः परमापकर्षावधिः, स च न प्रत्यक्ष इति तदधिकरणकवर्णप्रत्यक्षानुपपत्तिरत आह—*क्षणशब्देनेति। *तदाधार इति—वर्णाधार इत्यर्थः, न तु कालस्य परमापकर्षावधिरूपः। *मुख्यक्षणेति—अनेन वर्णाधारभूतकालस्य गौणक्षणत्वं सूचितम्। ननूच्चारणप्रध्वंसयोर्यौगपद्यमयुक्तम् क्रियायाः क्रमिकत्वनियमादत आह—*उच्चरितप्रध्वंसित्वञ्चेति—एतेन यत्र क्षणे उत्पद्यते तत्र क्षणे एव नश्यतीति क्षणिकवादो निरस्तः। *एवञ्चेति—उच्चरितप्रध्वंसित्वे चेत्यर्थः। *प्रत्यक्षेति—प्रत्यक्षः विषयो यस्य सः, प्रत्यक्षबोधक इत्यर्थः। एवम्भूतो यः 'इदम्'शब्दस्तद्घटितो योऽभिलापः 'अयं पूर्वोऽयं परः' इति वाक्यं तेनाभिलप्यमानम् = तज्जन्यबोधविषयीभूतं यत्पौर्वापर्य्यं तस्य ज्ञानं तस्येत्यर्थः। *इको यणिति—तत्सूत्रप्रवृत्त्युपयोगिन इत्यर्थः। तथाच प्रक्रियोच्छेदापत्तिरिति भावः। *प्रत्यक्षविषयेति—प्रत्यक्षार्थबोधकेनेत्यर्थः। *इदमेति—'अयं पूर्वोऽयं परः' इति वाक्यघटकेन'इदम्' शब्देनेत्यर्थः। एवञ्च कालिकं दैशिकं वा पौर्वापर्य्यं न स्याद्, युगपत्स्थितयोरेव 'अयं ज्येष्ठोऽयं मध्यमः' इत्यादिव्यवहारस्य दर्शनात्। यद्यपि 'इकारः पूर्वमुत्पन्नस्तत उकारः' इति पौर्वापर्य्यं सम्भवेत् तथापि तत्र सूत्राप्राप्त्याऽनुपयोग्येव तत्। *नचेति—अस्य 'द्वितीयवर्णोत्पत्तिः' इत्यनन्तरं 'वाच्या' इति शेषेणान्वयः। *यत्नान्तरेण वर्णोत्पत्तेरिति—'पूर्ववर्ण-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाशे सति तज्जनकयत्नस्यापि नाशे वृत्ते यत्नान्तरेण वर्णान्तरमुत्पद्यते' इति नियमः । एवं सति न हि पूर्ववर्णस्थितिकालेऽन्यवर्णोत्पत्तिर्वक्तुं शक्येति भावः । तत्रैव भाष्यं प्रमाणयति—*यावदिति—"एकैकवर्णवर्तिनी वाग् न द्वौ युगपदुच्चारयति । 'गौः' इति गकारे यावद् वाग् वर्त्तते नौकारे न विसर्जनीये, यावद् विसर्जनीये न गकारे नौकारे, उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः" इति तत्र भाष्यम् । एकैकवर्णवृत्तिवागिन्द्रियमेकमेव वर्णमुच्चारयति न द्वौ वर्णौ । उच्चरितश्च वर्णस्तदानीमेव नष्ट इति पौर्वापर्य्यसंहितयोरसम्भव इत्यर्थः । वाग् = वागिन्द्रियम् । विच्छिन्ने = नष्टे । उपसंहृत्य = त्यक्त्वा । पूर्वपूर्ववर्णानुभवजन्यसंस्कारविशिष्टचरमवर्णानुभव एव तावद् वर्णगोचरां स्मृतिं जनयति इति तार्किकोक्तं खण्डयितुमाह—*नचोत्तरेति— । *उपस्थितेति—†उपस्थितो यः स्वाव्यवहितोत्तरत्वसम्बन्धेन वर्णविशिष्टो वर्णः तद्विशिष्टत्वं तेनैव सम्बन्धेनापरवर्णे गृह्यते इति भावः । तज्ज्ञानम् = पदज्ञानम् । विशेषश्च = भेदश्च । पक्षान्तरमाह—*यद्वेति । *शब्दजशब्देति— यथोत्पन्ना वीचिर्वीच्यन्तरमुत्पादयति तथैव शब्दाच्छब्दान्तरोत्पत्तिः । एवं क्रमेण श्रोत्रदेशसन्निधाने उत्पन्नः शब्दः श्रोत्रेण सम्बध्यते । स एव तज्जन्यप्रत्यक्षगोचरः । 'गृहस्थः शब्दः श्रूयते' इति तु साजात्येन व्यवहारः । इयाँस्तु विशेषः यद् वीचयो वीच्यन्तरमुत्पाद्य नश्यन्ति वर्णास्तु चरमवर्णोत्पत्तिपर्य्यन्तं सजातीयं वर्णमुत्पादयन्त एव तिष्ठन्तीति युगपदेव सर्ववर्णोपलब्धिः सुलभेति तार्किकाः । प्रथमं पौर्वापर्यं खण्डयति—*अभि-

---

† यत्तु प्रत्येकवर्णानुभवजनितसंस्कारसहकृतचरमवर्णप्रत्यक्षसामग्र्या स्मृतिप्रत्यक्षज्ञानद्वयीयविषयतावन्तः सन्तः संजातसहभावा वर्णा वाचकाः । एवञ्च सदसदनेकविषया पदप्रतीतिः स्मृतिप्रत्यक्षात्मिकेति, तन्न, क्रम—विपरीतक्रमानुभूतानामविशेषेणार्थबोधकत्वापत्तेः, क्रमस्य संस्काराविषयत्वेन स्मृत्यविषयत्वात् । नचानुभवक्रमोपहितानामेव तेषां स्मृत्या विषयीकरणात् क्रमव्युत्क्रमयोर्विशेष इति देवताधिकरणे मिश्रोक्तरीत्या निर्वाह इति वाच्यम्, प्रपूर्वेद्युरनुभूतस्य स्मृतेः पूर्वेद्युरनुभूतस्यास्मृतेश्च दर्शनादनुभवक्रमस्य स्मृतिक्रमानियामकत्वात् । किञ्च तत्र स्मृतित्वाभावः तत्ताऽनुल्लेखादिति बोध्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लापासम्भवादिति — प्रथमपक्षे नष्टविद्यमानयोः पौर्वापर्यस्य वक्तुमशक्यतया, द्वितीयपक्षे तु युगपदेवोत्पन्नत्वेन तदसम्भव इति भावः । ❀अशक्यत्वाच्चेति— चो हेतौ । यतो वक्तुमशक्यताऽतोऽभिलापासम्भवः । अत्राभिलाप इति भावे घञ् । अभ्युपेत्यवादेनाह — ❀एवं पदेति — । ❀त्वद्रीत्येति — अविद्यमानेऽपि 'घट'पदे वृत्तिमत्त्वस्येवेत्यर्थः । ❀तज्ज्ञानस्येति—नच भ्रमात्मकतादृशज्ञानस्येष्टत्वमेवात आह — ❀प्रमात्वापत्तिरिति— ❀अशाब्द इति — अनित्यत्वपक्षे पदसमुदायरूपवाक्यस्याभावाद् यदि वाक्यार्थः = वाक्यार्थत्वेनाभिमतः संसर्गोऽशाब्दस्तर्हि वर्णसमुदायात्मकपदस्याप्यभावात् पदार्थोऽपि तथा भवेत् = अशाब्दो भवेत् । तथा च पदवाक्ययोरर्थासम्भवाच्छब्दार्थसम्बन्धस्यानित्यत्वं स्यादित्यर्थः । ❀पक्षद्वयेऽपीति — संस्कारवशादव्यवहितोत्तरत्वसम्बन्धेत्यादिना, पूर्वजाः शब्दाः शब्दजशब्दन्यायेनेत्यादिना चोपपादितपक्षद्वयेऽपीत्यर्थः । तादृशसमुदायरूपपदस्याभावादिति भावः । यत्तूक्तं लीलावत्याम्—'एकं पदमिति ज्ञानमेकसुप्तिङन्तत्वावच्छेदेन' इति, तन्न, सुप्तिङन्तयोरनुगतस्यैकस्य पदवृत्तिविषयताऽवच्छेदकस्याभावात् । एकत्वविषयकबुद्धेरौपाधिकत्वे उपाधेर्वक्तुमशक्यतया सर्वत्र तदभावापत्तेश्च । ❀नचैकजातीयेति — घकारटकारयोर्भेदेऽपि घकारटकारबुद्धेरेकार्थबोधकपदघटकविषयकत्वेनैकजातीयत्वादेकत्वव्यवहारः । एवं कालभेदेनोच्चारितयोरपि घटादिपदयोरेकजातीयबुद्धिविषयत्वादेव 'तदेवेदं पदम्' इति बुद्धिरुपपादनीया इत्यर्थः । ❀एकजातीयेति — बुद्धिगता या जातिः तद्गतमेकत्वं पदादिष्वारोप्य एकत्वव्यवहार इति भावः । ❀एकबुद्धीति — बुद्धिविषयत्वगतं यदेकत्वं तदारोप्य 'एकं पदम्' इत्यादि प्रतीतिरिति भावः । ❀तज्जातीयेति — उपाधिगतैकत्वारोपे 'तज्जातीयमिदं पदम्' इति व्यवहारस्याप्यापत्तेरित्यर्थः । ❀नियमेन व्यवहाराच्चेति — 'तदेवेदं पदम्' इति व्यवहारस्यैव नियतत्वेन 'तज्जातीयमिदम्' इति व्यवहारोऽपीष्ट एवेति तु वक्तुमशक्यमिति भावः । ❀एतेनेति – 'तज्जातीयमिदम्' इति व्यवहारापत्तिरूपदोषदानेनेत्यर्थः । ❀अपास्तमिति—तत्राप्यनिष्टस्य 'तज्जातीयमिदम्' इत्यादिव्यवहारस्यापत्तेरिति भावः । दोषान्तरमाह — ❀अवयवैरिति — यथा 'एको घटः स्थूलः' इत्यादिबुद्धेरनुपपत्त्या एकोऽवयवी अवयवातिरिक्तः स्वीक्रियत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यर्थः । तत्राप्यवयवानां बहुत्वेऽप्येकजातीयबुद्धिविषयत्वेन 'एकः पटः' इति बुद्ध्युपपत्तौ तदतिरिक्तोऽवयवी न सिध्येदिति भावः । ॐआनन्त्यव्यभिचारादिति — पदानामानन्त्येनैकत्र शक्तिग्रहेऽन्यत्र शक्तिग्रहाभावाद् बोधो न स्यात् । वृद्धव्यवहारस्थ 'घट' पदस्य तादृशशक्तिमत्त्वेन ज्ञानेऽप्यन्यत्र प्रयुक्तस्य तद्भिन्नत्वेन शक्तिमत्त्वेन ज्ञानाभावादिति भावः । एवञ्च शक्तिज्ञानाभावे पदानामानन्त्यं व्यभिचारश्च बीजम् । आनन्त्यं च व्यभिचारश्चेति समाहारद्वन्द्वः । ननु यत्र पदे शक्तिग्रहस्तस्मादेव बोध इति व्यभिचाराभावोऽत आह — ॐव्यभिचारश्चेति — यत्र यत्र गृहीतशक्तिकत्वं तत्र तत्र बोधजनकत्वमिति बोधजनकत्वनिष्ठव्यापकतानिरूपिता व्याप्यता गृहीतशक्तिकत्वे सर्वसम्मता, सा च पदानामानन्त्ये एकत्र 'घट' पदे गृहीतशक्तिकत्वेऽन्यत्रापि बोधदर्शनेन तत्र च गृहीतशक्तिकत्वाभावेन व्याहन्येतेति भावः । ननु तत्तत्पदगतशक्तताऽवच्छेदकीभूतानुपूर्व्या ऐक्येन तस्या एव शक्तिनियामकतया पदानामेकत्वादिव्यवहारः शक्तिज्ञानञ्चोपपद्येतात आह — ॐआनुपूर्वीत्विति — व्यवहारकारणीभूतकालस्य प्रतिव्यक्तिभिन्नत्वेनैकस्याव्यवहितोत्तरत्वस्य वक्तुमशक्यत्वादिति भावः । ननु कालभेदेऽपि तज्जातीयाव्यवहितोत्तरत्वेनानुगमस्य वक्तुं शक्यत्वेन दोषाभावोऽत आह — ॐतादृशत्वेनेति — एकस्यानुगतस्य तादृशत्वस्यापि दुर्वचत्वमिति भावः । ॐव्यवधानाभावे सतीति — व्यवधानाभावविशिष्टो यः 'घ' ज्ञानविशिष्टज्ञानविषयः 'टः' तत्त्वमेवानुपूर्वी । अत्र वैशिष्ट्यं ज्ञाने सामानाधिकरण्येन । द्वितीयज्ञानञ्च यत्र वर्णेऽव्यवहितोत्तरत्वं चिकीर्षितं तद्विषयकं ग्राह्यमिति तद्विषयत्वं तस्य । वस्तुतस्तु घकारज्ञानध्वंसविशिष्टं यदकारज्ञानं तद्विषयत्वं तस्य । एवमकारज्ञानध्वंसविशिष्टं यट्टकारज्ञानमिति तद्विषयत्वं टकारे । टकारज्ञानध्वंसविशिष्टं यदकारज्ञानं तद्विषयात्वरूपानुपूर्वी 'घट' शब्दवृत्तिर्बोध्या । न तु घकाराकारवर्णद्वयविषयकं यज्ज्ञानं तद्ध्वंसविशिष्टं टकाराकारवर्णद्वयविषयकं ज्ञानम्, एकदा वर्णद्वयोपलब्धेरभावेन तस्यासम्भवात् । तत्परिच्छेदश्च = आनुपूर्वीज्ञानञ्च । ॐज्ञानव्यक्तीति — विषयभेदेन ज्ञानभेदादिति भावः । पक्षान्तरमाह — ॐन च चरमवर्णेति — अयं भावः — घटपटाद्यर्थनिष्ठा यथा घटत्वपटत्वादयोऽनन्ता जातयस्तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदवृत्तयोऽपि घटत्वादयो जातिरूपा अखण्डा एव । ताश्च यद्यपि प्रत्येकवर्णवृत्तयस्तथापि 'कार्य्येण कारणकल्पनम्' इति न्यायेन चरम-वर्णाभिव्यङ्ग्या एव कार्य्यसाधिकाः । तासां सिद्धिश्च शक्यतानिरूपित-शक्तताऽवच्छेदकतया, कारणताऽवच्छेदकतयैव जातिसिद्धिरिति मते शाब्दबोधनिष्ठजन्यतानिरूपितजनकताऽवच्छेदकतया वेत्याह—
❀शक्यताऽवच्छेदकतयेति—एवञ्च तामादाय बुद्धेरेकत्वं तत्त्वप्रत्यभिज्ञा चोपपन्नेति भावः । ❀गौरवादिति—नन्वन्यथाऽनुपपत्त्या गौरवं सोढव्यमत आह—❀उक्तरीत्येति—वर्णसमुदायरूपपदस्योक्तरीत्याऽभावेन वृत्त्याश्रय-त्वासम्भव एव दोष इति भावः । 'शक्तं पदम्' इति व्यवहारदर्शनात् पदेष्वेव शक्तत्वादेरौचित्यात् तत्रैव तदवच्छेदिकाया जातेः कल्पनावश्य-कतया पदानामभावे तत्त्वासम्भवोऽपीति भावः ।

मू०—इति चेत्, अत्रोच्यते—प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रक्षयाल्लीनसर्वजगत्का माया चेतने ईश्वरे लीयते । † लयश्चायमपुनःप्रादुर्भा-वफलको नात्यन्तिको नाशः, उत्तरसर्गा-

शक्त्याश्रयस्फोटनिरूपणाय सृष्ट्यादिप्रक्रियावर्णनम्

---

† प्रलयो नाम—त्रैलोक्यनाशः । स च चतुर्विधः—नित्यः, प्राकृतः, नैमि-त्तिकः, आत्यन्तिकश्चेति । तत्र नित्यः प्रलयः = सुषुप्तिः, तस्याः सकलकार्य्य-प्रलयरूपत्वात् । धर्माधर्मपूर्वसंस्काराणाञ्च तदा कारणात्मनाऽवस्थानम् । तेन सुषुप्तोत्थितस्य न सुखदुःखाद्यनुभवानुपपत्तिः, न वा स्मरणानुपपत्तिः । नन्वन्तः-करणस्यापि तदानीं कारणात्मनाऽवस्थानात् प्राणनक्रियाऽनुपपत्तिरिति चेत्, न, अन्तःकरणे ज्ञानशक्तेः क्रियाशक्तेश्च सत्त्वेन तदानीं ज्ञानशक्तेर्नाशेऽपि क्रियाशक्ति-वैशिष्ट्यसत्त्वात् । प्राकृतप्रलयस्तु—कार्य्यब्रह्मविनाशनिमित्तकः सकलकार्य्यनाशः । यदा तु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्माण्डाधिकारलक्षणप्रार-ब्धकर्मसमाप्तौ विदेहकैवल्यन्तदा तल्लोकवासिनामपि तेन सह विदेहकैवल्यम् ।

तदुक्तम्—ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम् ॥ इति ।
( कूर्मपुरा० अध्या० १२ )

एवं तल्लोकवासिभिः सह कार्य्यब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डान्तर्वर्त्ति-निखिललोकतदन्तर्वर्त्तिस्थावरादीनां भौतिकानां भूतानाञ्च प्रकृतौ = मायायां लयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुपपत्तेः । नापि सर्वथाऽभानम्, प्रतिभासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः । किन्तु सुप्तेव तिष्ठति, कार्य्यप्रवृत्त्यभावात् । स्वप्रतिष्ठेश्वरप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलाद्ध भासमानाप्यभातप्रायैव । ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः । ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते । ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते । इदमेव शक्तितत्त्वम् । तस्य बिन्दोरचिदंशो बीजम् । चिदचिनमिश्रोंऽशो नादः । चिदंशो बिन्दुरिति । अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते ।

(रत्न०)–स्फोटस्यैव वाचकत्वं दर्शयितुं तत्स्वरूपनिर्णयायादौ लयप्रदर्शनपूर्वकं सृष्टिक्रममाह—*प्रलय इति–भौतिकादिप्रलय इत्यर्थः । कस्यचिन्मते महाप्रलये सर्वप्राणिनां सर्वकर्मणां नाशात् कर्महेतुकसृष्टेरभाव एव । *नियतकालेति–अयं भावः—यदा सर्वेषां प्राणिनां नियतकालफलप्रदानां कर्मणामुपभोगेन युगपदेव क्षयः, अवशिष्टानां कर्मणाञ्च प्रलयाधिकरणकालोत्तरकालभावि फलं तदा भौतिकप्रलयो जायते । प्रलयश्च–भुक्तभोग्यानां प्राणिनां मायायां लयः । मायायाश्चेश्वरे यो लयः स एव 'प्रलयः' इत्युच्यते । लयश्चान्तःकरणादीनां वासनाभिः सह सूक्ष्मरूपेणाविद्यायां कार्य्यप्रवृत्तितिरोधानपूर्वकमवस्थानम् । अविद्याया लयश्च ब्रह्मणि सूक्ष्मरूपेणावसानम् । *लीनसर्वजगत्केति–भुक्तभोग्यानां प्राणिनां मायायां लयो मायायाश्चेश्वरे । एतेन 'कारणनाशात्कार्य्यनाशः' इति तार्किकोक्तमपास्तम् । तथा च रज्जूरगादिवदपृथग्भूतत्वेनात्मन्यध्यस्तानां वियदादीनां शुद्धे ब्रह्मणि लयो भवति । स च न मृदि घटस्येवानुपलब्धिरूपः किन्तु रज्ज्वामहेरिव । तथाच बुद्धिवृत्तेरपि लीनत्वाज्ज्ञानाभावः ।

---

कार्य्यब्रह्मणो दिवसावसाननिमित्तकत्रैलोक्यमात्रप्रलयो नैमित्तिकप्रलयः । ब्रह्मदिवसश्चतुर्युगसहस्रपरिमितः कालः । प्रलयकालो दिवसकालपरिमितः । तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्ष इत्यन्यत्र विस्तरः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स च लयः कालविशेषावधिसापेक्षः । सर्वं सुप्तवत् तिष्ठति तस्यामवस्थायाम् । यथा जलसैन्धवरसावेकलीभूतौ पृथक्त्वेन नानुपलभ्येते तथाऽत्र न तमृतेऽन्यज्ज्ञायते रज्ज्वामिव सर्पबाधे तदतिरिक्तवत् । अत एवाहङ्कारशून्यत्वान्न प्रमाता, साक्ष्यभावान्न द्रष्टा, साक्षिवृत्तेरप्यभावान्न ज्ञाता, चरमान्तःकरणवृत्त्या ब्रह्मविद्याख्यया प्रपञ्चं विषयीकरोत्यात्मा । एवञ्च सर्वं जगदुपसंहृत्य शुद्धचिन्मात्रेणावतिष्ठते । तदुक्तं हरिणा—

"प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः ॥"

( वाक्यप० कां० ३ कारि० ४३ ) इति ।

मूलप्रकृत्या ब्रह्मणा वा ये जगतः एकत्वमभेदेन पश्यन्ति तेषां नये निरन्वयविध्वंसाभावान्महासामान्यरूपे मूलकारणे लयमात्रं महाप्रलय इति । शक्तिरूपेषु पदार्थेषु यथायथं शक्तियोगो द्रव्यात्मना । तदानीमपि जातीनां सत्त्वं द्रव्यान्तराभावात् । ❀ईश्वर इति—यथा स्फटिके जपाकुसुमसन्निधानाद्रक्तत्वावभासस्तत्रैव स्फटिकांशप्रमोषे यद् गगनत्वावभासः एवं शुद्धायाश्चिति मायोपाधिसान्निध्यादीश्वरत्वाध्यासः । सोऽयमात्माऽऽवरणविक्षेपशक्त्याऽविद्याया आश्रयः । तत्रावरणांशेन शुद्धरूपतिरोधानम् । विक्षेपांशेनेशादिस्थूलदेहान्तानां प्रतिभासः । तयोर्निवृत्तौ शुद्धचित्स्वरूपेणावतिष्ठते । ❀नात्यन्तिक इति—अस्यैवार्थोऽपुनःप्रादुर्भावफलक इति—एतेन लयानन्तरं पुनः प्रादुर्भावः सूचितः । अत एव "सहस्रयुगपर्य्यन्तं लयः" इत्युक्तम् । आत्यन्तिकलयस्तु मुक्तावेव । ❀प्रतिभासमात्रशरीरस्येति—रज्जूरगादिवदन्यरूपेण भानमित्यर्थः । अद्वैतनये रज्जौ सर्पावभासवन्मिथ्याभूतप्रपञ्चस्यानादिमिथ्याऽवभासनिमित्तिकया कल्पनयैव सत्त्वात् । मायाकल्पितत्वमपि व्यवहारदृष्ट्यैव न वस्तुतः । प्रातीतिकतद्रूपेणैव व्यवहारस्योपपन्नत्वात् । ❀तदभावस्येति—शशशृङ्गवदिति भावः । ननु लयावस्थायां तदभावस्येष्टत्वेन'आपत्तेः'इत्यनुचितमिति चेद्, 'आत्यन्तिकस्य' इति शेषेण दोषाभावो बोध्यः । ❀सुप्तेवेति—कार्य्याजनकत्वात् सुप्तेव तिष्ठतीत्यर्थः । प्रधानांशतमःसमुद्रेकेणान्यानवभासो हि स्वापः । कार्य्याजनकत्वरूपेण स्वापसादृश्यं लयस्य । लये हि अन्तःकरणादयः सूक्ष्मरूपेण=शक्तिरूपेण वासनाभिः सहा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वतिष्ठन्ते । एवञ्च सूक्ष्मरूपेण स्थिता शक्तिः स्थूलरूपेण विवर्तते । एतेन शक्तिमिश्रिताद् ब्रह्मणः पुनः शक्तेरुत्पादासम्भव इत्यपास्तम् । ❀स्वप्रतिष्ठेति — स्वरूपमात्रे प्रतिष्ठितस्येश्वरप्रकाशस्येत्यर्थः । प्रकाश्यत्व-प्रकाशकत्वहीनस्येति यावत् । अनौपाधिकचैतन्यं हि तस्य स्वरूपम् , तदानीं विषयविषयिणोर्भेदाभावाद् धर्मान्तरस्य चाभावादिति भावः । ❀अत्यन्तनिर्विकल्पकेति —तार्किकप्रसिद्धनिर्विकल्पकज्ञानं सविषयकम् केवलं धर्मं धर्मिणञ्च विषयीकरोति, यथा—'घटत्वम्' 'घटः' इति । ब्रह्मात्मकन्तु निर्विकल्पकज्ञानं निर्विषयमेव । प्रातिपदिकार्थमात्रेणावस्थितं निर्विकल्पकम् , अविद्याकृतभेदनिवृत्तौ शुद्धरूपेणावस्थानात् । ❀तद्बलादिति– निर्विकल्पकज्ञानबलादित्यर्थः । मायाया भाने तु चितेः सविकल्पकत्वापत्तौ निर्विकल्पकत्वं भज्येत । ❀अपरिपक्वेति — अभुक्तेत्यर्थः । ❀प्राप्तपरिपाकैरिति — प्राप्तभोगसमयैरित्यर्थः । परिपाकः = भोगः । ननु पूर्वसर्गे कर्मणो भुक्तत्वात् कर्मशेषो विरुद्ध इति चेत् , न, संसारस्यानादितया तस्य तत्त्वसम्भवात् । नन्वीश्वरस्यानादित्वे सृष्टिसमये "तदैक्षत बहुस्यां प्रजायेय" ( छान्दो० उप० ६।२।३ तैत्ति० उप० २।६।१ ) इत्यागन्तुकेक्षणं नोपपद्यत इति चेत् , सत्यम् , यथा विषयेन्द्रियसन्निकर्षाज्जीवोपाध्यन्तःकरणवृत्तिभूतमायायां वृत्तिभेदात् 'इदमिदानीं स्रष्टव्यम्' इत्याकारिकाः बुद्धयो जायन्ते तथा प्राणिकर्मपरिपाकवशेन सिसृक्षावशाद् 'एकोऽहं बहुस्याम्' इति भगवतोऽबुद्धिर्भवति । अबुद्धिः = अविद्या, परमेश्वरस्य स्वभावः, लीला चेति पर्य्यायाः । नन्वसङ्गोदासीनस्य परमार्थतो निरतिशयस्य शक्तिशक्तिमतोरभेदेन शक्तेरप्यभावाच्च स्रष्टृत्वानुपपत्तिरत आह—❀मायापुरुषाविति — तदुक्तं सूतसंहितायाम्—

"ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् ।" इति ।

शक्तिमिश्रितात् = मायोपहितात् मायाशक्तिशबलादिति यावत् । प्राणिकर्मवशान्मायापुरुषावाविर्भवतः । अयं भावः—अद्वितीयस्य ब्रह्मणः क्रीडाया असम्भवादिच्छोत्पद्यते सैव माया इत्युच्यते । तदुक्तं काशीखण्डे—

"यदेकलो न शक्नोषि रन्तुं स्वैरञ्चर प्रभो ।
तदिच्छा तव योत्पन्ना सैषा शक्तिरभूत्तव ।।
त्वमेको द्वित्वमापन्नः शिवशक्तिप्रभेदतः ।" इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमेश्वरान्मायावृत्तिर्जाता । मायावृत्तितो विन्दुरूपमव्यक्तं त्रिगुणम् ( गुणत्रयात्मिका प्रकृतिः ) जायते । तस्य विन्दोः = त्रिगुणात्मकस्य बिन्दोः । *चिदंशो बिन्दुरिति — बिन्दोश्चिदंशोऽपि 'बिन्दुः' इत्युच्यते । सूक्ष्मत्वस्थूलत्वभेदेन भेदः । *बीजमिति — शक्तिरित्यर्थः । चिदंशो ब्रह्मरूपः । अचिच्छब्देन यद्यपि माया प्रसिद्धा तथाप्यत्र न माया, तस्या एतदनंशत्वादत आह— *अचिदिति ।

मू०—अस्माद् विन्दोः शब्दब्रह्मापरनामधेयम्, वर्णादिविशेषरहितम्, ज्ञानप्रधानम्, सृष्ट्युपयोग्यवस्थाविशेषरूपम्, चेतनमिश्रम्, नादमात्रमुत्पद्यते । एतज्जगदुपादानमेव 'रव' 'परा' आदि शब्दैर्व्यवह्रियते—

सृष्टौ परादिवाङ्निरूपणम्

"बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।
स एव (रवः) श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥"
( प्रपञ्चसा० तं० पट० १ श्लो० ४३ )

इत्युक्तेः । एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते । ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनसंस्कारः, तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दम् 'परा वाग्' इत्युच्यते । तदुक्तं हरिणा—

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः" ॥ इति ।
(वाक्यप० कां० १ कारि० १)

(रत्न०)—*अस्मादिति—गुणत्रयात्मकाद् बिन्दोरित्यर्थः । तदुक्तम्—

"सच्चिदानन्दविभवात् सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दुसमुद्भवः ॥
परशक्तिमयः साक्षात् त्रिधाऽसौ भिद्यते पुनः ।
बिन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः ॥
बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ।
समवायः समाख्यातः सर्वागमविशारदैः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिद्यमानात्पराद्बिन्दोरव्यक्तात्मा ततोऽभवत् ।
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः" ॥ इति

समवायः = सम्बन्धः क्षोभ्यक्षोभकभावरूपःसृष्टिहेतुः। अत्र 'पराद् बिन्दोः' इत्युक्त्या प्रथमबिन्दोरेव मूलोक्तरूपो नादोऽजायत इति प्रतीयते। तदुक्तम्—

"कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।
स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥
स बिन्दुनादबीजत्वभेदेन च निगद्यते ।"
( प्रपञ्चसा० तं० पट० १ श्लोक ४२ ) इति ।

मूले'चिदंशो बिन्दुः' इत्यनेन नहि तृतीयप्रकारः कथ्यते किन्तु नादान्तर्गतचित्पदार्थः प्रदर्श्यते । तस्मान्मूले'अस्माद्बिन्दोः' इत्यस्योक्त एवार्थः । कस्यचिन्मते 'त्रिधाऽसौ भिद्यते पुनः, बिन्दुर्नादो बीजम्'इत्युक्तेः 'सूक्ष्मबिन्दोः स्थूलबिन्दुरजायत' इति । मूले'अस्माद्' इत्यस्य द्वितीयबिन्दोरित्यर्थः । ॐएतदिति—तथा च श्रुतिः — "वागेव विश्वा भुवनानि जज्ञे" इति । आदिना शब्दब्रह्मादिपरिग्रहः । ॐरवपरादीति–तदुक्तम् —

"स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते"
( प्रपञ्चसा०तं० पट० १ श्लो० ४३ ) इति ।

ॐसर्वगतमपीति—एतेन पूर्वोक्तावस्थात्रयस्येश्वरशक्तिरूपत्वेन व्यापकत्वेऽपि तत्तत्स्थानाभिव्यक्तेस्तत्तत्स्थानस्थत्वमप्युच्यत इति सूचितम् ।ॐमूलाधार इति—षण्णवत्यङ्गुलो देहायामः । तत्राङ्गुलार्धसहितं सप्तचत्वारिंशदङ्गुलात्मकमधः उपरि च परित्यज्यैकाङ्गुलपरिमितं मध्यं 'मूलाधारः' इत्युच्यते । तदुक्तम् —

"पाय्वन्ताद् द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः ।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते ॥"

मूलाधारः = मूलप्रकृत्यात्मिका कुण्डलिनी । सा महदादिभिर्वेष्टिता सर्पवत्तिष्ठति । 'मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्य्याणि करोति' इति पातञ्जले स्पष्टम् । तदुक्तम्—

"गुदलिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
अस्ति कुण्डलिनी ब्रह्म-शक्तिराधारपङ्कजे ॥
( संगी० रत्ना० १।२।११९–१२० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आधाराद् द्व्यङ्गुलादूर्ध्वं मेहनाद् द्व्यङ्गुलादधः।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ॥
( संगी० रत्ना० १।२।१४५ ) इति।

मूलाधार एव पवनोऽप्युत्पद्यते। तदुक्तम्—
"देहेऽपि मूलाधारे तु समुदेति समीरणः।"
( प्रपञ्चसा० तं० पट० १ श्लो० ९१ ) इति।

अत एव व्यञ्जकत्वमपि तस्य। ॐपवनसंस्कार इति—इच्छया जातेन प्रयत्नेन सह मूलाधारस्थपवनसम्बन्ध एव तत्संकारः। तदभिव्यक्तम् = पवनाभिव्यक्तम्। ॐस्वप्रतिष्ठतयेति—एतेनाधारान्तरं नास्तीति सूचितम्। निःष्पन्दम् = क्रियाशून्यम्। पश्यन्त्यां स्पन्दसामान्यम्, मध्यमायान्तु स्पन्दविशेषः। ॐअनादीति—आद्यन्तरहितम्। शब्दोपग्राह्यतया शब्दतत्त्वम्। स्थिति-प्रवृत्ति-प्रविभागादि शब्देन क्रियते। तच्चाक्षरनिमित्तत्वाद्'अक्षरम्' इत्युच्यते। प्रत्यक्चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेरर्थभावेन विवर्तते। विवर्तश्च—रज्जूरगवदतात्त्विकोऽन्यथाभावः। तत्त्वादप्रच्युतस्य ( अपरित्यक्तपूर्वरूपस्य ) रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत्। एतेन परिणामवादारम्भवादौ निरस्तौ। कारणस्वरूपाविरोधेन च कार्य्यप्रतिभास इति ब्रह्मणो निर्विकारत्वान्न नित्यत्वहानिः। तदाह—
"विवर्ततेऽर्थभावेन † प्रक्रिया जगतो यतः।"
( वाक्यप० कां० १ कारि० १ ) इति।

मू०—तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं

---

† अयम्भावः—यथा विषयेन्द्रियकारणवशेन जीवोपाधेरन्तःकरणस्य वृत्तिभेदा जायन्ते, एवमेव सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतायां मायायां वृत्तिभेदा जायन्ते। एतेन सिसृक्षावशादिति पूर्वोक्तप्रक्रियायां ब्रह्मणो निमित्तकारणत्वावगमाद् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः" ( तैत्ति० उप० २।१।१ ) इति श्रुतौ "जनिकर्तुः"—( पा० सू० १।४।३० ) इत्यपादानलक्षणपञ्चम्यनापत्तिरित्यपास्तम्। "तदैक्षत बहु स्याम् प्रजायेय" ( छान्दो० उप० ६।२।३ ) इति श्रुतौ 'ऐक्षत' इत्यनेन निमित्तत्वस्य 'बहु स्याम्' इति श्रवणेनापादानत्वस्य च बोधनात्। तथा च पञ्चम्यन्ते तन्त्र बोध्यम्। एवञ्च मायायां तादृशत्वेऽपि शुद्धब्रह्मणो निर्विकारत्वमेवेति भावः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनोविषयः 'पश्यन्ती' इत्युच्यते । एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पक—सविकल्पकज्ञानविषय इत्युच्यते ।

ततो हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदेवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा 'मध्यमा वाग्' इत्युच्यते । स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा सा इत्याहुः । एतदवस्थात्रयमपि सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम् ।

सैव चास्यपर्यन्तमागच्छता तेन वायुना कण्ठदेशं गत्वा-मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदेवत्या 'वैखरी वाग्' इत्युच्यते । प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते । अतएव हरिणा व्याकरणस्य त्रिविधा वाग् विषय इत्युक्तम् ।

"वैखर्य्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।
अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्" ॥

( वाक्यप० कां० १ कारि० १४४ ) इति

एतत् = व्याकरणम् । अनेकतीर्थेति । श्लिष्टव्यक्तवर्णरूपा, प्राप्तसाधुभावा, अपभ्रष्टा, दुन्दुभि-वेणु-वीणादिशब्दरूपा चेत्यर्थः॥

(रत्न०)—*तदेवेति—'स्व' 'परा' आदिशब्दवाच्यं शब्दब्रह्मैवेत्यर्थः । *अभिव्यक्तमिति—नाभिदेशे इति शेषः । *एतद्द्वयमिति—परारूपं पश्यन्तीरूपञ्च शब्दब्रह्मेत्यर्थः । *सूक्ष्मतममिति—सूक्ष्मतमा परा सूक्ष्मतरा च पश्यन्तीत्यर्थः । *ईश्वराधिदैवमिति—ईश्वर एवाधिष्ठात्री देवताऽनयोरिति भावः । *समाधाविति—समाधिश्च—

"सोऽहं ब्रह्म न संसारी, न मत्तोऽन्यत्कदाचन ।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्त्तितः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति उक्तरूपः । *निर्विकल्पकेति — तत्त्वञ्च — चिन्मात्रविषयकत्वम् । *ज्ञानविषय इति — पूर्वत्र मनोविषयः इतिवज्ज्ञानविषयः इति पुंलिङ्गः पाठः । उपांशुशब्दश्च — यथा जले निमग्नस्य । *श्रूयमाणेति — अत्र 'स्वयम्' इत्यस्यान्वयः । इयं मध्यमा वाक् सूक्ष्मा, सूक्ष्मप्रणवरूपा च । *सैवेति – मध्यमा वागेवेत्यर्थः । *परश्रोत्रेणापीति – तदुक्तम् – "वैखरी श्रुतिगोचरा" इति । *विराडिति — अपञ्चीकृतभूतकार्य्यसमष्टिः सूक्ष्मशरीरोपहितो हिरण्यगर्भः । † पञ्चीकृतभूतकार्य्यसमष्टिः स्थूलशरीरोपहितो विराट् । एतदुभयविलक्षण ईश्वरः । *व्यानोदानाभ्यामिति–तदुक्तम् —

"हानोपादानचेष्टादि, व्यानकर्मेति चोच्यते ।
उदानकर्म तत्प्रोक्तं, देहस्योन्नयनादि यत्" ॥ इति ।

तथा — "हृदि प्राणो गुदेऽपानः, समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्यात्, व्यानः सर्वशरीरगः" ॥

---

† ननु समुदितपञ्चमहाभूतैरेकमहाभूतोत्पत्तिर्यदि 'पञ्चीकरण'शब्दार्थस्तदा पञ्चतन्मात्राणामेकत्रैवोपक्षयान्महाभूतान्तरोत्पत्तिर्न स्यात् । तानि भूतानि प्रत्येकं पञ्चधा विभज्य तत्तद्भूतांशे पञ्चसमुदायकरणे पञ्चीकरणमित्यभ्युपगतावेकत्र महाभूते पृथिव्यादिपञ्चव्यवहारापत्तिरिति चेत्, अत्रोच्यते—सृष्टिकाले सकलप्राण्यदृष्टवशादीश्वरप्रेरणयाऽऽकाशवायुतेजोऽबन्नानि अविद्यासहायभूतात्परमात्मनोऽनुक्रमेण जातानि । तान्यपञ्चीकृतानि सूक्ष्माणि व्यवहारासमर्थानि इति कृत्वा तदीयस्थौल्यापेक्षायां व्यवहर्तृप्राणिजातधर्माधर्मापेक्षयैव तान्येव भूतानि पञ्चीकृतानि भवन्ति । तत्प्रकारश्च—पञ्चानामप्याकाशादीनां प्रत्येकं भागद्वयं विधेयम् । आकाशादीनां तेषां दशसु भागेषु प्राथमिकान् पञ्चभागान् प्रत्येकं चतुर्धा समं विभज्य स्वकीयार्धपरित्यागेनावशिष्टेषु चतुर्ष्वर्धेषु एकस्मिन्नर्धे कृतानां चतुर्णां भागानामेकैकस्य सम्मेलनात् पञ्चीकृतानि भवन्ति । यथाऽऽकाशस्य समं भागद्वयम्, तत्रैकस्मिन् भागे चत्वारो भागाः कल्पनीयास्तेषाञ्चैकैकस्य स्वार्धं विहाय वाय्वादीनां चतुर्ष्वर्धेषु सम्मेलनेनाकाशांशवैशिष्ट्यं चतुर्णाम् । एवं वाय्वर्धं विहाय वायवीयानां चतुर्णां भागानां मेलनादाकाशस्य वाय्वंशविशिष्टत्वम् । एवमेव पञ्चानामपि स्वकीयार्धे स्वेतरांशवैशिष्ट्येऽपीतरांशापेक्षया स्वार्धांशाधिकसत्त्वेनाकाशादिरूपेण व्यवहार उपपादनीयः, तदुक्तम्–"वैशेष्यात्तु तद्वादस्तद्वादः" ( वे० सू० २।४।२२ ) इति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्नप्रवेशनं मूत्राद्युत्सर्गोऽन्नविपाचनम् ।
भाषणादि निमेषादि तद् व्यापाराः क्रमादमी" ॥
( अमरको० टी० १।१।६३ ) इति ।

*वैखर्य्या इति—अनेकतीर्थभेदायास्त्रय्याः—वैखर्य्याः, मध्यमायाः, पश्यन्त्याश्च वाच एतत् परं पदमित्यद्भुतमित्यर्थः । तीर्थमुपायः प्रकार इति यावत् । प्रकारमेवाह—*श्लिष्टेति—श्लिष्टत्वं व्यक्तत्वञ्चेति धर्मद्वयं वर्णांशे, पदांशे प्राप्तसाधुभावत्वमपभ्रष्टत्वञ्च । ध्वनिभेदमाह—*दुन्दुभीति । अयम्भावः—वैखरी स्वपरप्रत्यक्षा । मध्यमा पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । पश्यन्ती तु व्यवहारातीता योगिनां समाधौ गम्या । परा तु योगिनामप्यगम्या ।

तदुक्तम्—"स्वरूपज्योतिरेवान्तः, परा वागनपायिनी ।
तस्यां दृष्टस्वरूपायामधिकारो निवर्तते" ॥ इति ।
( महाभार० )

ऋग्वेदेऽपि—

"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥" इति ।

अत्र माधवेन ऋग्वेदभाष्ये चत्वारि पदानीत्यनेन वैखरी, मध्यमा, पश्यन्ती, परारूपाणि दर्शितानि । पतञ्जलिना तु "नामाख्यातोपसर्गनिपाताश्चत्वारि" इत्युक्तम् । अभियुक्तव्याख्यानादुभयपरकत्वं प्रामाणिकमेव । पतञ्जलिनाऽपि "गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्तीत्यर्थः" ( महाभा० पस्पशाह्नि० ) इति व्याख्यानं कुर्वता माधवाभिमतं व्याख्यानमपि मन्यत एवेति गम्यते । नन्दिकेश्वरेणाप्युक्तम्—

"अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ।
आद्यमन्तेन संयोगादहमित्येव जायते ॥
इकारादिहकारान्ता वर्णाः समभवंस्ततः ।
सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम् ।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ।
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि" ।। इति ।

मू०—तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेनाक्षतिः । स च यद्यपि एकोऽखण्ड एकैकवर्णेनाप्यभिव्यज्यते तथाऽपि अन्त्यवर्णाभिव्यक्तो बोधहेतुः । अतो नैकवर्णजाभिव्यक्त्युत्तरम् अर्थप्रत्ययः । तत्र च व्यञ्जकरूपप्रतिबिम्बनात्तद्रूपरूषितैव तदभिव्यक्तिरित्येकोऽपि नानात्वमिवापन्नः । यथा जलचाञ्चल्येनेन्दुप्रतिबिम्बस्य चलत्वेन ग्रहणम्, यथा च स्फटिकादेर्जपाकुसुमाद्युपाधिवशात्तद्रूपरूषितस्य भानम्, यथा च मुखे मणि-कृपाण-दर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिभानम् तद्वत् । प्रतिबिम्बसमर्पकाश्च संस्कारास्ते च स्थिरा एव ।

व्यञ्जकरूपरूपितस्य स्फोटस्य वाचकत्वम्

नचैवमनेककालिकतत्तद्वैखर्यभिव्यक्ते औपाधिकनानात्वात्तवाप्यनुगमाय जातिरावश्यकी, सहस्रदीपाभिव्यक्तघटस्येव, अनेकजपाकुसुमाभिव्यक्तस्फटिकस्येव च नानात्वाभावात् । उपाधिभिन्नव्यञ्जकाभावान्न कदापि वर्णराहित्येन तत्प्रत्यक्षम् । येन क्रमेण च चित्ते संस्कारास्तेनैव क्रमेण व्यञ्जकरूपरूषितता तस्येति स्वीकारान्न 'सरो रसः' इत्यनयोरविशेषः । तत्र च तदुत्तरत्वग्रहश्चित्तभित्तौ दैशिक एव । तदुपरागनाशिका च तद्बोध्यार्थाकारवृत्त्यतिरिक्तवृत्तिरेव । अयञ्च आन्तरत्वात् श्रोत्रग्राह्यवैखरीसंस्कृतान्तःकरणग्राह्य एव । व्यञ्जकरूपरूषितस्य तस्यैवार्थे सङ्केतग्रहः । अतो घटकलशादिपर्यायाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसोऽप्रसिद्धपदश्रवणे नार्थबोधः ।

( रत्न० )—*तत्रेति—परादीनां मध्ये इत्यर्थः । परापश्यन्त्योर्योगिज्ञानविषयत्वादाह—*मध्यमायामिति । नादांशः = चेतनः । तदाह—*स्फोटात्मन इति । *अक्षतिरिति—प्रथमान्त एव पाठोऽत्र, हेतुत्वाभावेन पञ्चम्यप्राप्तेः । आनन्त्य-व्यभिचारप्रयुक्तशक्तिग्रहासम्भवादिप्रागुक्तदोषा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाव इत्यर्थः। नन्वेवं तस्य स्वरूपसतो वाचकत्वे सर्वदाऽर्थबोधापत्तिरत आह—*स चेति—नादांश इत्यर्थः। *अन्त्यवर्णाभिव्यक्त इति—यथा रत्नपरीक्षकाः असकृद्रत्नदर्शनेन तज्ज्ञानदार्ढ्यं लभन्ते सकृद्दर्शने हि नावधारयन्ति तथा पूर्वपूर्ववर्णाभिव्यञ्जनया स्फोटस्वरूपज्ञानमात्रं जायते, निश्चयात्मकज्ञानन्त्वन्त्येनैवेति न पूर्वपूर्ववर्णाभिव्यक्तेन बोध इति भावः। प्रथमाक्षरेणाभासमात्रं जायते, तदुत्तरवर्णकलापेन तु स्फुटावभासः, अन्त्येन तु निश्चयात्मकस्फुटावभासः। अन्त्यवर्णेन स्फुटावभासः पूर्वपूर्ववर्णानुभवाहितसंस्कारसहकृत एवेति न तन्मात्राभिव्यक्तेनार्थबोधः। *व्यञ्जकेति—व्यञ्जका वर्णास्तेषां रूपाणां स्फोटे प्रतिबिम्बनात्तद्रूपरूषिता = छुरिता, संभिन्नेति यावत्, तदभिव्यक्तिः = स्फोटाभिव्यक्तिरिति नानात्वं तस्येति भावः। तदुक्तं हरिणा—

यथा रक्तगुणे तत्त्वं कषाये व्यपदिश्यते।
संयोगि-सन्निकर्षात्तु वस्त्रादिष्वपि गृह्यते॥ इति।

(वाक्यप० ३।१।७)

अस्यार्थः—यथा रक्तगुणे विद्यमानं रक्तत्वं स्वाश्रय-समवाय-सम्बन्धेन रक्तगुणवति कषायरूपे द्रव्ये 'रक्तमिदम्' इति व्यपदिश्यते तथा संयोगिकषायरूपद्रव्यसंनिकर्षात् स्वाश्रयसंयुक्तत्वरूपाद् वस्त्रादिष्वपि 'रक्तमिदं वस्त्रम्' इत्येवं प्रतीयते तथा व्यञ्जकवर्ण-पद-वाक्यगतनानाधर्मावभासवशान्नानात्वं नानुपपन्नं तस्य। अतएव वर्णादिभ्यः पृथङ् नोपलभ्यते स्फोटः, शुद्धरूपेण तद्भानस्यासम्भवात्। अतएव 'स्फुट्यते वर्णादिभिरभिव्यज्यते' इति 'स्फुटत्यर्थोऽस्माद्' इति च 'स्फोट' पदनिर्वचनं संगच्छते। अत्रान्यगतधर्मावभासदार्ढ्यायानेकदृष्टान्तमाह—*यथेत्यादिना। ननु वर्णानां युगपदभावात्कथं तेषां प्रतिबिम्बोऽत आह—*प्रतिबिम्बेति। ननु तेऽपि नश्वरा अत आह—*तेचेति। *स्थिरा एवेति—कार्य्यपर्य्यन्तमिति भावः। ननु कालभेदेन वैखर्य्यभिव्यक्तेर्नानात्वादननुगमोऽत आह—*नचैवमिति। *सहस्रदीपेति—एकदीपाभिव्यङ्ग्यस्य पटस्य सहस्रदीपाभिव्यक्तत्वेऽपि यथा नानात्वाभावस्तथा घटपटरूपाया वैखर्य्याः नानात्वेऽपि नहि तत्तद्वैखर्य्यभिव्यक्तस्फोटस्य नानात्वमिति भावः। ननूपाध्यभावे शुद्धस्फटिकबोधवत्केवलस्य स्फोटस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भानं कुतो न ? इत्यत आह — *उपाधिभिन्नेति — स्फटिकादेरुपाधेरभावेऽपि सामग्र्यन्तरेणोपलब्धिः, स्फोटस्य तूपाध्यतिरिक्तोपलम्भकाभावान्नोपलम्भ इति भावः । नन्वेवं प्रतिबिम्बने क्रमाभावात् 'सरो रसः' इत्यादावेकस्यैव स्फोटस्याभिव्यक्तेः समानबोधापत्तिरत आह — *येन क्रमेणेति — संस्काराणामेव प्रतिबिम्बसमर्पकत्वादिति भावः । ध्वनिसमानाकारैव स्फोटाभिव्यक्तिरिति यावत् । ननु घकारस्य नष्टत्वाद्टकारव्यञ्जनदशायां कथन्तदुत्तरत्वग्रहः? अत आह — *चित्तभित्ताविति — चित्तदेश एवेत्यर्थः । तत्र च क्रमिकसंस्कारस्य सत्त्वादुत्तरत्वग्रहः सुलभ इति भावः । ननु घटाकारस्फोटस्याभिव्यक्तत्वे सर्वदाऽर्थबोधापत्तिरत आह — *तदुपरागनाशिकेति — उपरागोऽवभासः, तद्बोध्यो योऽर्थस्तदाकारा या वृत्तिस्सैवेति भावः । अर्थविषयकज्ञानादुपरागो नश्यतीति भावः । क्वचिद् 'अर्थाकारवृत्त्यतिरिक्तवृत्तिरेव' इति पाठः । स च 'वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्य्यन्तं स्थायित्वाभ्युपगमः' इति वासनया । वृत्तेर्वृत्त्यन्तरनाश्यत्वेऽपि उपरागस्यार्थाकारवृत्तेरेव नाश्यत्वे बाधकाभावात् । तत्र च 'तद्ग्रह' इत्याद्युक्तिमुपपादयन् श्रोत्रग्राह्यत्वमस्य निराचष्टे — *अयञ्चेति — उक्तस्फोटश्चेत्यर्थः । *ग्राह्य एवेति — 'एव' शब्देन श्रोत्रग्राह्यत्वनिरासः । अयम्भावः — स्फोटो द्विविधः — आभ्यन्तरो बाह्यश्च । तत्राभ्यन्तरो बुद्ध्यनुसंपातिरूपः । बाह्यस्तु-जातिव्यक्तिभेदाद् द्विविधः । सङ्घातवृत्तिर्जातिरेव वाचिकेत्याद्यः । एकोऽनवयवः शब्दो वाचक इति व्यक्तिस्फोटः । अन्त्यः श्रोत्रग्राह्योऽपीति । *व्यञ्जकेति — व्यञ्जकसमानाकाराभिव्यक्तस्फोट एव शक्तिग्रह इति न 'घट' पदाभिव्यक्तस्फोटे गृहीतशक्तिकस्य 'कलश' पदाभिव्यक्त स्फोटादर्थबोधः । 'कलश' पदसमानाकाराभिव्यक्तस्फोटे शक्तिग्रहाभावादिति भावः । एतेन 'पर्य्यायस्थले एकपदाभिव्यक्तस्फोटे गृहीतशक्तिकस्याप्रसिद्धतत्पर्य्यायश्रवणेऽप्यर्थप्रत्ययापत्तिः, प्रागगृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यक्तेः । नच तत्पर्य्यायाभिव्यक्तस्फोटे शक्तिग्रहस्तत्पर्य्यायश्रवणेऽर्थधीहेतुरिति वाच्यम्, प्रतिपर्य्यायाभिव्यक्तगतशक्तिग्रहत्वस्य बोधकारणताऽवच्छेदकत्वापेक्षया प्रतिपर्य्यायगतशक्तिग्रहत्वस्यैव कारणताऽवच्छेदकत्वे लाघवाद्' इत्युक्तिः परास्ता । स्फोटस्याभिव्यञ्जक-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदेन भेदात्पर्य्यायाभिव्यक्तस्फोटे शक्तिग्रहाभावादेवोक्तापत्तेरभावेन उक्तकार्य्यकारणभावस्यानावश्यकत्वात्।

मू०—वैखरी तु—"वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः" †॥

वैखर्यादीनां वाय्वादिपरिणामत्वम्

(वाक्यप० कां० १ कारि० १०८)

इति हर्युक्तेः, पातञ्जलभाष्ये व्यासेनापि तथोक्तेश्च, "आख्यातोपयोगे" (पा० सू० १।४।२९) इति सूत्रे

---

† ध्वनिरूपा वैखरी वाग् वायोः परिणाम इति केषांचिन्मतम्। तथा हि—शुक्लयजुःप्रातिशाख्ये—"वायुः खात्" (शु० य० प्राति० अ० १सू० ६) इति कात्यायनसूत्रव्याख्याऽवसरे "वायुः कारणभूतः शब्दस्य, स च खादाकाशादुत्पद्यते" इत्युक्त्वा निमित्तकारणत्वेनापि वायोः शब्दकारणत्वमुपपद्येतातः "शब्दस्तत्" (शु० य० प्राति० अ० १ सू० ७) इति द्वितीयसूत्रम्। "शब्दस्तदात्मको वाय्वात्मक इत्यर्थः" इति प्रातिशाख्यम्। "यदि वाय्वात्मकः शब्दः, वायोः सर्वगतत्वात् सदाकालं सर्वत्रोपलब्धिः प्राप्नोतीत्याशङ्क्याह—"सङ्करोप" (शु०य० प्रातिशा० अ० १ सू० ८) इति तृतीयसूत्रम्। सङ्करोपेति—सम्यक् करणैरुपहितो हृदि वायुर्वेणुशङ्खादिभिः शब्दीभवति। अत्र 'वायुः शब्दीभवति' इत्यनेन वायोः परिणामत्वं शब्दस्य स्पष्टमेवोक्तम् "स सङ्घातादीन् वाक्" (शु० य० प्रातिशा० अ० १ सू० ९) इति कात्यायनसूत्रम्। यो वायुः सम्यक् करणैरुपहितो वेणुशङ्खादिभिः शब्दीभवति स एव सङ्घातादीन् प्राप्य वाग् भवति। सङ्घातः = पुरुषप्रयत्नः स आदौ येषां स्थानादीनां ते सङ्घातादयः, तान् प्राप्य वाग् भवति = वर्णो भवतीत्यर्थः' इत्युक्तम्। योगसूत्रे व्यासेनाप्युक्तम् "वागिन्द्रियं वर्णेष्वेवार्थवत्, श्रोत्रं च ध्वनिपरिणाममात्रविषयम्" इति। ध्वनिर्नाम—वागिन्द्रियादावुदानवायोरभिघाताज्जायमानः उदानवायोराकाशस्य परमाणूनां वा परिणामभेदः, स च वर्णरूपोऽप्यवाचकत्वाद् ध्वनिरिति तद्व्याख्यातार इति। "परमाणुपरिणामः शब्दः" इत्यार्हताः। इदमत्र तेषामाकूतम्—वाचकं शब्दाख्यं द्व्यात्मकम्—सामान्यरूपं विशेषरूपञ्च। सर्वशब्दव्यक्तिष्वनुयायि शब्दत्वं सामान्यरूपम्। शाङ्ख-शार्ङ्ग-तीव्रमन्दोदात्तानुदात्तस्वरितादिविशेषभेदादनेकम्। तच्च शब्दस्य सामान्यविशेषात्मकत्वं पौद्गलिकत्वे (परमाणुपरिणामत्वे) एव सङ्गच्छते। तथा हि—'शब्दः, पौद्गलिकः, इन्द्रियार्थत्वात्, रूपादिवत्' 'शब्दः' सामान्यविशेषात्मकः, पौद्गलिकत्वात्, रूपादिवत्।' इति पौद्गलिकत्वेन सामान्यविशेषात्मकत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पतञ्जल्युक्तेश्च, वाय्वादिपरिमाणरूपा कण्ठताल्वाद्यभिघातजन्यैवेति बोध्यम् । वायोः = प्राणादिरूपस्य । अणूनाम् = शब्दतन्मात्रादिरूपपरमाणूनाम्,

"अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः" ( वाक्यप० कां० १ कारि० ११२) इति हर्युक्तेः ।

---

सिद्धम् । न च 'शब्दः, पौद्गलिकत्वाभाववान्, स्पर्शशून्याश्रयकत्वात्' इत्यनुमानात् पौद्गलिकत्वाभावः, शब्दस्य स्पर्शशून्याश्रयकत्वासिद्धेः । तथा हि—'शब्दाश्रयः स्पर्शवान्, अनुवातप्रतिवातयोर्विप्रकृष्टनिकटशरीरिणोपलभ्यमानानुपलभ्यमानेन्द्रियार्थत्वात्, तथाविधगन्धाधारद्रव्यपरमाणुवत्' इति । न चातिनिबिडप्रदेशे प्रवेशनिर्गमयोरप्रतिघाताद्धेतोः पौद्गलिकत्वाभावः साध्यते । गन्धद्रव्येण व्यभिचारात् तस्य हेतोरनैकान्तिकत्वात् । कस्तूरिकादिगन्धद्रव्यं हि पिहितद्वारापवरकस्यान्तर्विशति, बहिश्च निर्याति, न च पौद्गलिकमित्येवमादिशङ्कासमाधानक्रमेण शब्दानां पौद्गलिकत्वं सिद्धान्तितम् । शब्दः, न गगनगुणः, अस्मदादिप्रत्यक्षत्वात्, रूपादिवत्, किन्तु भाषावर्गणागुणः, सा च स्पर्शविशिष्टा, इति सिद्धः पौद्गलिकत्वात् सामान्यविशेषात्मकः शब्द इति । "शब्दो ज्ञानस्य परिणामः" इति वैयाकरणाः "आख्यातोपयोगे" (पा० सू० १।३।२९) इति सूत्रखण्डनाय "अयमपि योगः शक्योऽवक्तुम् । कथमुपाध्यायादधीते इति ? । अपक्रामति तस्मात् तदध्ययनम् । यद्यपक्रामति किं नात्यन्तायापक्रामति ? सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" इत्युक्तम् । अयम्भावः—'उपाध्यायादपक्रामच्छब्दजातमधीयान उपादत्ते' इत्यर्थके 'उपाध्यायादधीते' इत्यत्रापक्रमजन्यविश्लेषाश्रयत्वादुत्सर्गेणापादानत्वं संसाध्य शब्दानामपक्रमणं न युक्तम् । यथा फलं वृक्षादपक्रान्तं न पुनर्वृक्षे भवति, एवं शब्देऽपि प्रसङ्गः, इत्याशङ्क्योक्तम् "सन्ततत्वात्" इति । शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना अपि सादृश्यात् तत्त्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः । अथवा यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात् तत्त्वेनाध्यवसीयमानं सन्ततं तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि सन्ततानीत्युच्यन्त इति । एवञ्चोपाध्यायज्ञानानि भिन्नशब्दरूपतामापद्यमानानि सन्ततानीत्युच्यन्त इति । "सन्ततत्वात्" इत्यनेन ध्वनयता भाष्यकृता शब्दस्य ज्ञानपरिणामत्वं सूचितम् । अत एव कैयटेनोक्तम् "ज्ञानस्य शब्दरूपतापत्तिरिति दर्शनमत्र भाष्यकारस्य" इति । इत्थं पूर्वोक्तं मतत्रयमवलम्ब्य हरिणोक्तम् "वायोरणूनाम्" इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छायाऽऽतपतमांस्यप्येवम्—

"अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः ।
छायाऽऽतपतमःशब्दभावेन परिणामिनः" ॥
(वाक्यप० कां० १ कारि० १११)

इति तदुक्तेः । ज्ञानस्य = वक्तृज्ञानस्य । पराशक्तिसाहित्येन च तत्तत्परिणाम इति बोध्यम् । 'कैश्चिद्' इत्यनेन 'परा शक्तेरेव मध्यमावत्परिणामविशेषोऽन्येषां मते वैखरी' इति सूचितम् । तदाह—प्रवादेषु = शास्त्रेषु, अत्र = विषये, दर्शनभेदः = सिद्धान्तभेदः अनवस्थित इति ।

"आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते" (पा० शि० ६।९)

इति शिक्षाया अपि † पराद्याख्यमन्तःस्थितं शब्दं वर्णत्वे नाभिव्यनक्ति इत्यर्थः । मारुत एव नाभेरूर्ध्वमुद्यन् मूर्ध्न्यभिहत आत्मानं तत्वेनाभिव्यनक्तीत्यर्थो वा । आत्मा = अन्तःकरणं

---

† 'वायोः परिणामः शब्दः' इति मते 'वर्णान् जनयते' इति शिक्षाविरोधमुद्भाव्य प्रवृत्तोऽयं ग्रन्थ इति शिक्षायास्तात्पर्यार्थवर्णनेन विरोधपरिहारसम्भवात्, पराया एव पश्यन्त्यादिक्रमेण परिणामः शब्द इति स्वसिद्धान्ताद्यार्थद्वयवर्णनस्य लाभादत्र "इति शिक्षाया अपि पराद्याख्यमन्तःस्थितं शब्दं वर्णत्वेनाभिव्यनक्ति इत्यर्थः । मारुत एव नाभेरूर्ध्वमुद्यन् मूर्ध्न्यभिहतः आत्मानं तत्वेनाभिव्यनक्ति इत्यर्थो वा" इत्येव पाठः समीचीनः । अत्रापि क्वचित् "मरुदेव नाभेरूर्ध्वमुद्यन् मूर्ध्न्यभिहतोऽन्येन पुनरुद्यतोऽभिहन्यमानः आत्मानं तत्त्वेनाभिव्यनक्ति इत्यर्थो वा" इति पाठभेदः उपलभ्यते, परन्तु शिक्षोक्तश्लोकाननुगुणत्वेन हेय एव । एवञ्चार्थप्रदर्शने तात्पर्यसत्त्वे 'शिक्षायाः अपि' इति षष्ठ्यन्तपाठस्यैवौचित्यम्, 'शिक्षायामपि' इति सप्तम्यन्त पाठे तु 'इत्यर्थः' इत्यस्यान्वयाय 'श्लोकस्य' इति षष्ठ्यन्ताध्याहारे गौरवादित्युपाध्यायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्काररूपेण स्वगतानर्थान् बुद्ध्या = स्ववृत्त्या समेत्य = एकबुद्धिविषयीकृत्य † (मनो युङ्क्ते ।) तद्बोधनेच्छायुक्तमनोऽभिहतकायाग्निप्रेरितो वायुर्मूर्धपर्यन्तं गतस्ततः प्रतिनिवृत्तो वक्त्राभिघातेन वर्णान् जनयति इत्यक्षरार्थः ।

(रत्न०)—'वैखरी तु' इत्यस्य 'कण्ठताल्वाद्यभिघातजन्यैव' इत्यत्रान्वयः । वैखरीविषये विशेषमाह–*वायोरिति—कैश्चिद्वायोः कैश्चिच्छब्दतन्मात्रपरमाणूनां कैश्चिज्ज्ञानस्य शब्दत्वमिष्यत इति । अत्र = विषये प्रवादेषु–शास्त्रेषु, अनवस्थितः=नानाविधो दर्शनभेदः=सिद्धान्तभेद इत्यर्थः। *व्यासेनापीति— तत्र हि "वागिन्द्रियं वर्णेष्वेवार्थवत् । श्रोत्रञ्च ध्वनिपरिणाममात्रविषयमिति" । ध्वनिर्नाम — वागिन्द्रियादावुदानवायोरभिघाताज्जायमानः उदानवायोः, आकाशस्य, परमाणूनां वा परिणामभेदः । स च वर्णरूपोऽप्यवाचकत्वाद् ध्वनिः इति तद्व्याख्यातारः । तथा च कात्यायनसूत्रम् "शब्दस्तत्" (शुक्लयजुःप्राति० अध्या० १ सू० ७) शब्दस्तदात्मको वाय्वात्मक इत्यर्थः । *पतञ्जल्युक्तेश्चेति—तत्र हि–"अयमपि योगः शक्योऽवक्तुम् । कथमुपाध्यायादधीत इति ? अपक्रामति तस्मात्तदध्ययनम् । यद्यपक्रामति किंनात्यन्तायापक्रामति ? सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति (महाभा० १।४।२९) इत्युक्तं भाष्ये । *यद्यपक्रामतीति — "यथा फलं वृक्षादपक्रामन्न पुनस्तद्वृक्षे भवति । एवं शब्देऽपि प्रसङ्ग इत्यर्थः" इति कैयटः । *संततत्वादिति — शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना भिन्ना अपि सादृश्यात् तत्त्वेनाध्यवसीयमाना श्रोतुः पुनः पुनः श्रोत्रदेशं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः । *अथ-

---

† 'समेत्य' इत्यस्य कर्ता अन्तःकरणम्, एवञ्च तदन्वय्युत्तरकालिकक्रियाया अभावादनन्वयः स्यात् इति तद्वारणाय 'विषयीकृत्य' इत्यस्यानन्तरम् 'मनो युङ्क्ते' इति पाठः प्रतीयते, लेखकप्रमादात्तु त्रुटितः । अतएव शब्देन्दुशेखरे "आत्मा—अन्तःकरणम् संस्काररूपेण स्वगतानर्थान् बुद्ध्या = स्ववृत्त्या समेत्य = एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनोयुक्तं करोति" इत्युक्तं नागेशेनैवेत्युपाध्यायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेति — "यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं सन्ततम्, तथैवोपाध्यायज्ञानानि भिन्नानि = भिन्नशब्दरूपतामापन्नानि 'सन्ततानि' इत्युच्यन्ते । "ज्ञानस्य शब्दरूपतापत्तिरितिदर्शनमत्र भाष्यकारस्य" इति कैयटः । 'अन्तःकरणमेव मनोवाय्वादिद्वारा शब्दत्वेन विवर्तते' इति वेदान्तिनः । तदुक्तम्—

"अथायमान्तरो ज्ञाता, सूक्ष्मो वागात्मनि स्थितः ।
व्यक्तये स्वस्वरूपस्य, शब्दत्वेन विवर्तते ॥" इति

*प्राणादिरूपस्येति—यद्यपि बाह्यवायावपि शब्दोऽनुभवसिद्धस्तथाऽप्यनुपयोगात्प्रकृते तदनुक्तिः । अणूनाम् = परमाणूनाम् । *तन्मात्रादीति—आदिना स्पर्शतन्मात्रादिसंग्रहः । *अभ्राणीवेति—मेघा इव प्रचीयन्ते = वर्धन्ते । क्वचिद् 'आम्राणीव' इति पाठः । आम्रफलानीवेत्यर्थः । नायं सम्यक्, वृद्धावाम्रस्य दृष्टान्तत्वाप्रसिद्धेः । वायोः शब्दत्वं हरिणाऽप्युक्तम्—

"लब्धक्रियः प्रयत्नेन, वक्तुरिच्छाऽनुवर्तिना ।
स्थानेष्वभिहतो वायुः, शब्दत्वं प्रतिपद्यते ॥" इति

(वाक्यप० कां० १ कारि० १०९)

'वक्तुरिच्छा' इत्युक्त्यैकस्यैव वायोरनेकशब्दरूपता दर्शिता । *अभ्राणीवेति—अस्य पूर्वार्धन्तु "स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः" इति । छायातमसोस्तेजोऽभावरूपत्वं नैयायिकाभिमतं खण्डयन्नाह—*छायाऽऽतपेति—यथैकरूपेभ्य एव पार्थिवादिपरमाणुभ्यः विलक्षणसम्बन्धवशाद्विलक्षणपाकवशाच्च नानाविधपार्थिववस्तूनामुत्पत्तिरेवं तत्तत्परमाणूनामेव विलक्षणसम्बन्धवशाद्विलक्षणपाकवशाद्वा छायाऽऽतपतमः शब्दरूपा परिणामभेदा इति भावः । अत्र मानमाह—*अणव इति—अणवः परमाणव एव सर्वशक्तिमत्त्वात् भेदश्च संसर्गश्च भेदसंसर्गौ तद्रूपा वृत्तिः व्यापारो येषां तादृशा इत्यर्थः । *छायाऽऽतपतमःशब्दभावेनेति—छाया च, आतपश्च, तमश्च, शब्दश्चेति छायाऽऽतपतमःशब्दास्तेषां भावः = धर्मः, (भावशब्दस्य प्रत्येकं योगः) तेन परिणामिनः परिणमनशीला इत्यर्थः । परमाणूनां विलक्षणसम्बन्धाद्भिन्नकार्य्योत्पत्तिरिति यावत् । ननु एकविधपरमाणुत एव द्व्यणुकादिक्रमेण तज्जातीयानां सर्वेषामुत्पत्तिस्वीकारे दधिदुग्धादिषु भेदो न स्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिति चेत्, न, तत्तत्कार्य्यजनकसम्बन्धभेदात्पाकवैलक्षण्यात् तदुपपत्तेः । यत्तु तार्किकैकदेशीयाः—'परमाणौ द्रव्यत्वव्याप्यजातेरभावः' इति, तन्न, तथा सति द्रव्यत्वव्याप्यमूर्तत्वाभावे तद्व्याप्यपृथिवीत्वादेरपि तत्रासिद्ध्यापत्तेः। ॐवक्तृज्ञानस्येति–'वायोरणूनां ज्ञानस्य' इत्यादिपूर्वोक्तावशिष्टस्य व्याख्यानमिदम् । "आख्यातोपयोगे" (पा० सू० १।४।२९) इति सूत्रे "उपाध्यायादपक्रामत्यध्ययनम्" इति भाष्योक्तेर्वक्तुर्ज्ञानस्यैव परिणामः शब्द इति प्रतीतेः । ननु पराशक्तेरेव पश्यन्त्यादिक्रमेण शब्दरूपपरिणाम इति पूर्वोक्तिविरोधोऽत आह—ॐपराशक्तिसाहित्येनेति—एवञ्च परिणामे साहित्यस्यापि हेतुत्वात् तदुक्तिरिति विरोधाभावः। अत एव वाऽरुचेराह–ॐकैश्चिदित्यनेनेति–अनवस्थितः = नानाविधः । तत्त्वेन = शब्दत्वेन । ॐतद्बोधनेच्छेति—अर्थबोधनेच्छया युक्तं यन्मनस्तेनाभिहतो यः कायाग्निः (जाठराग्निः) तत्प्रेरितः सः = वायुः, उदीर्णः = ऊर्ध्वं गतः शिरःकपालेनावरुद्धः ऊर्ध्वगतिमलभमानः प्रत्यावृत्य वक्त्रमापद्य तत्तत्स्थानान्याहत्य वर्णान् जनयते = अभिव्यनक्तीत्यर्थः। अयम्भावः – वक्तुमिच्छन्नात्मा = अन्तःकरणं स्वभेदरूपं मनःसंज्ञकं प्रेरयति, तन्मनो जठरस्थमग्निं ताडयति, स वन्हिर्वायुं प्रेरयति, वायुश्चोर्ध्वं गच्छन् शिरःकपालेनावरुद्धः पुनः वक्त्रमापद्याघातेन ध्वनिं जनयतीति भावः । ननु "असङ्गो ह्ययं पुरुषः ( वृह. उप. ४।३।१५ )" इति श्रुतेरकर्तृरूपस्यात्मनः प्रेरकत्वासम्भवोऽत आह—ॐआत्मा अन्तःकरणमिति—अन्तःकरणपरिणामरूपा बुद्धिरित्यर्थः । ॐवाक्यार्थविषयस्यान्तःकरणगतत्वाभावादाह––ॐसंस्काररूपेणेति—संस्काराभिप्रायेणैव सूक्ष्मरूपेणावस्थानमित्युच्यते । पूर्वोक्तमेकाङ्गुलं देहमध्यस्थमग्निस्थानम् ।

मू०–तदुक्तम्–"परः सन्निकर्षः–" (पा० सू० १।४।१०९) इति सूत्रे भाष्ये 'उच्चरितप्रध्वस्तानां सन्निकर्षः पौर्वापर्यं चानुपपन्नम्' इत्याशङ्क्य—

वर्णेषु पौर्वापर्य्यादीनां बुद्धिस्थत्वनिरूपणम्

"बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः ।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥

बुद्धिविषयमेव शब्दानां पौर्वापर्यम् । य एष मनुष्यः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रेक्षापूर्वकारी भवति स पश्यति—'अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः अस्मिंश्च शब्देऽयं तावद्वर्णस्ततोऽयं ततोऽयम् इति" (महाभा० १।४।१०९) । तत्वन्नीतिः—सकलविषयव्यापिबुद्धिः धीरः= पण्डितः कर्ता, बुद्धौ=अन्तःकरणे चेष्टाः=कण्ठताल्वाद्यभिघातव्यापारजन्यशब्दान् प्रतिबिम्बितान् कृत्वा शब्देन सहितान् तद्वाच्यानर्थान् बुद्धिरूपे देशे दृष्ट्वा तत्रैव पौर्वापर्य्यव्यवहारं कुर्यादित्यर्थः । 'बुद्धिविषयम्' इत्यस्य 'बुद्धिस्थशब्दविषयमेव' इत्यर्थः । तत्र वक्त्रुद्देशेनैव शास्त्रप्रवृत्तेस्तस्यैव धर्मफलश्रवणाच्च वक्तृबुद्धिस्थत्वमुपपादयति—य इति । अस्मिन्नर्थे इति । एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तम् । श्लोके 'पौर्वापर्य्यम्' इत्युपलक्षणम् । 'अयम्' इति बुद्ध्युपारूढस्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः, अन्यथा इदमः प्रत्यक्षपरामर्शकत्वादेतदनुपपत्तिः । शब्दः प्रयोक्तव्यः=परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यङ्क्तव्यः । 'अस्मिन् शब्दे' इत्यस्य 'व्यञ्जनीये' इति शेषः ।

यत्तु 'बुद्धिगतपौर्वापर्यस्य वर्णेष्वारोपः' एतद्भाष्यार्थ इति, तन्न, तद्वदेव तद्बुद्धीनामप्युत्पन्नविनाशितया प्रत्यक्षपरामर्शकेदमादिघटिताभिलापाभिलप्यमानस्य पौर्वापर्यस्य तत्राप्यसम्भवात् । प्रकृतिविकृतिभावोऽप्यन्तःकरणस्येकारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इति "स्थानिवत्"—(पा० सू० १।१।५६) सूत्रे भाष्ये स्पष्टम् ।

(रत्न०)—प्रागुक्तार्थेषु मानमाह—*तदुक्तमिति—तत्=प्रागुक्तम् । ननु क्रमेणोच्चरितानां पौर्वापर्ये बाधाभावोऽत आह—*प्रध्वस्ताना-मिति—युगपत्स्थितेरभावात्पौर्वापर्याभाव इति भावः । सन्निकर्षः=संहितासंज्ञोपयोगिकालातिरिक्तकालाव्यवधानम् । पौर्वापर्यञ्च व्यवहिताव्यवहितसाधारणम्, इत्यपौनरुक्त्यम् । ननूच्चरितप्रध्वंसित्वस्य स्वोत्पत्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षणवृत्तिध्वंसप्रतियोगित्वरूपस्याश्रयणे क्षणिकत्वापत्तिरिति चेत्, न, स्वोत्पत्तिक्षणोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वरूपस्यैव तथात्वात् । *इत्याशङ्क्येति – तत्र हि भाष्ये – "पौर्वापर्य्यमकालव्यवेतम्, संहिता चेत्, पूर्वापराभावादसंहितम् । पौर्वापर्य्यमकालव्यवेतम्, संहिता चेत्, पूर्वापराभावात्संहितासंज्ञा न प्राप्नोति । न हि वर्णानां पौर्वापर्य्यमस्ति । किं कारणम् ? एकवर्णवर्तित्वाद् वाचः, उच्चरितप्रध्वंसित्वाच्च वर्णानाम् । एकैकवर्णवर्तिनी वाङ् न द्वौ युगपदुच्चारयति । 'गौः' इति गकारे यावद् वाग्वर्तते नौकारे, न विसर्ज्जनीये । यावद् विसर्जनीये न गकारे, नौकारे, उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः । उच्चरितः प्रध्वस्तः । अथापरः प्रयुज्यते, न वर्णो वर्णस्य सहायः" इत्याशङ्क्य "एवं तर्हि बुद्धौ कृत्वा" इत्यादि मूलोक्तमुक्तम् । *चेष्टा इति — चेष्ट्यन्ते इति चेष्टाः = शब्दाः ता इत्यर्थः । "गुरोश्च हलः" (पा० सू० ३।३।१०३) इति 'अ' प्रत्ययः । कृत्वा = प्रतिविम्बितान्कृत्वा । अन्तःकरणस्य स्वच्छतया शब्दस्वरूपस्यान्तःकरणवृत्तित्वेन भानादिति भावः । शब्दान् तदर्थांश्च बुद्धिरूपदेशे दृष्ट्वा तत्रैव पौर्वापर्य्यव्यवहारं कुर्य्यादित्यर्थः । 'तत्वन्नीतिः' इत्येकं पदम् । तननं तत् = सकलविषयव्यापनम्, तदस्त्यस्या इति तत्वती = सकलविषयव्यापिनी नीतिः = बुद्धिः, ये गत्यर्थास्ते ज्ञानार्था इति सिद्धान्तात् । यद्वा 'तन्वन्नीतिः' इति पाठः । तथाच 'तन्वद्' इति शत्रन्तम् । 'तन्वती' इत्यस्यापि स एवार्थः । एवञ्च तत्वती तन्वती वा नीतिरस्य स तत्वन्नीतिः, तन्वन्नीतिर्वा । 'कर्ता' इत्यस्य विशेषणमेतत् । महाभाष्यपुस्तके तु 'तत्वन्नीतिः' इत्येव पाठः । भाष्यकारः स्वयमेव कारिकाफलितार्थमाह–*बुद्धिविषयमिति । *प्रेक्षेति–सदसद्विवेचनी बुद्धिः प्रेक्षा । *ततोऽयमिति–तद्वर्णानन्तरमयं वर्णस्तद्वर्णानन्तरमयमित्यर्थः । *अन्तःकरण इति — एकमप्यन्तःकरणं वृत्तिभेदाच्चतुर्विधम् । संशय-निश्चय-गर्व-स्मरणात्मिकाश्चतस्रो वृत्तयः । तथाच संशयात्मकम् 'मनः' इति, निश्चयात्मकम् 'बुद्धिः' इति, गर्वात्मकम् 'अहङ्कारः' इति, स्मरणात्मकम् 'चित्तम्' इत्युच्यते । तदुक्तम्—

"मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।
संशयो निश्चयो गर्वः स्मरणं विषया इमे" ॥ इति ।

२१

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा च 'बुद्धौ' इत्यस्य 'अन्तःकरणे' इति विवरणं सम्यगेव । तत्रैव = बौद्धशब्द एव । बुद्धिपौर्वापर्य्यस्यापि निराकरिष्यमाणतयाऽऽह—*बुद्धिस्थशब्देति—बुद्धिस्थं शब्दमुद्दिश्येत्यर्थः। न च "ल्यब्लोपे" (पा०सू०वा०२।३।२८) इति पञ्चम्यापत्तिः, बुद्धिविषयशब्दस्यैव तदर्थे लाक्षणिकत्वात् । *वक्तुद्देशेनेति—साधुशब्दोच्चारयितुद्देशेनेत्यर्थः । तस्यैव = साधुशब्दोच्चारयितुरेव। *धर्मफलेति—'एकः शब्दः सम्यग्ज्ञातः" इत्यादि रूपेण श्रवणादित्यर्थः। *उपलक्षणमिति—बोध्यबोधकभावस्यापीत्यर्थः । *अयमिति—बुद्ध्युपारूढत्वेनैव श्रव्यं यत्सूक्ष्ममुच्चारणं तेन व्यङ्ग्यो बुद्धिस्थ एव शब्दो भाष्यस्थेदंशब्देन परामृश्यत इति भावः । तदाह—*अयमिति बुद्ध्युपारूढेति । अन्यथा = बौद्धशब्दपरामर्शाभावे । *व्यञ्जनीयेति — वर्णानां शब्दव्यञ्जकत्वमेवेति भावः । ननु 'एकवर्णविषयकज्ञानानन्तरमपरवर्णविषयकज्ञानं जायते' इति ज्ञानगतपौर्वापर्य्यस्य वर्णेष्वारोपात् तत्र तद्व्यवहारो नानुपपन्न इत्याह — *यत्त्विति — । *तद्वदेवेति — वर्णवद् वर्णविषयकबुद्धीनामप्यनित्यतया प्रत्यक्षपरामर्शकेन 'इदम्' शब्देन बुद्धीनामपि पौर्वापर्य्यस्य विषयीकरणासम्भवादिति भावः । *इदमादिघटितेति—'अयं पूर्वोऽयं परः' इतीदमादिघटितो योऽभिलापः = वाक्यं तदभिलप्यमानस्य = तदुच्यमानस्येत्यर्थः । ननु शब्दानां बुद्धिस्थत्वे तत्र प्रकृतिविकृतिभावानुपपत्तिरत आह — *प्रकृतिविकृतीति — सत्कार्य्यवादे यथा कार्य्यकारणयोरभेदाद् बुद्धिस्थत्वेन प्रकृतित्वं बाह्यरूपेण विकृतित्वं तथाऽत्रापि । बुद्धिपरिकल्पितमेव पौर्वापर्य्यादि, नापि तात्त्विकं नापि बुद्ध्यादिगततदारोप इति भावः । *स्थानिवत् सूत्र इति—तत्र हि 'नित्येषु शब्देषु स्थान्यादेशभावोऽनुपपन्नः' इत्याशङ्क्य "कार्य्यविपरिणामाद्वा" इति समाहितम् । कार्य्या = बुद्धिस्तस्या विपरिणामः । औत्तरपदिकोऽत्र ह्रस्वः । यद्वा कार्यः = सम्प्रत्ययस्तस्य विपरिणाम इति तदर्थः । प्रकरणादत्र बुद्धिरेव 'कार्य' शब्देन गृह्यते, न तु 'कार्य्य' शब्दो बुद्धिपर्य्यायः। अस्याभिप्रायः स्वयमेवोक्तो भाष्यकृता—"तद्यथा कश्चित् कञ्चिदुपदिशति 'प्राचीनं ग्रामादाम्राः' इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधाश्चा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धीयमानान् । नित्या एव च स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः" । अत्र नित्या इत्यस्य सिद्धा इत्यर्थः । "बुद्धिस्त्वस्य विपरिणम्यते । एवमिहापि 'अस्तिः' अस्मै अविशेषेणोपदिष्टस्तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता "अस्तेर्भूः" ( पा० सू० २।४।५२ ) इत्यनेन 'अस्ति' बुद्ध्या 'भवति' बुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्याऽस्तिं चापकृष्यमाणं भवतिं चोपादीयमानम् । नित्य एव स्वस्मिन् विषयेऽस्तिर्नित्यो भवतिश्च । बुद्धिस्तु विपरिणम्यत इति" । अनेन भाष्येण स्पष्टमेव पौर्वापर्यादीनामपि बुद्धिपरिकल्पितत्वं ध्वनितम् ।

सू०—अयं च शब्दस्तत्तत्प्राणि-हृदयदेशावच्छिन्नाकाशदेशस्थः, सर्वसमष्टेर्विराजो हृदयरूपबाह्याकाशदेशस्थश्च ।

'शब्द आकाशदेशो विभुरेकश्च' इति निरूपणम्

सच लाघवादेक एव विभुः । यथैकत्र श्वेतद्रव्ये रूपं व्यापकं तथा अस्याप्याकाशदेशस्थस्य तथात्वमुचितम् , 'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवति' इति "सरूप"-( पा० सू० १।२।६४) सूत्रे भाष्यात् । प्रादुर्भूतोऽभिव्यक्तः । स एव कत्वादिनाऽभिव्यक्तः श्रोत्रग्राह्यः, पदादिरूपेण तु बुद्धिग्राह्य इति 'अइउण्' सूत्रे ( मा० सू० १ ) भाष्ये स्पष्टम् । तत्र हि—"श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः" इत्युक्तम् । तत्र श्रोत्रोपलब्धित्वं कत्वादिनाऽभिव्यक्तस्य, पदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम् । स च प्रयोगेण वैखरीरूपेणाभिज्वलितः = स्वरूपरूषितः कृत इत्यर्थः । अन्यथा कदम्बमुकुलादिन्यायेनानन्त शब्दजशब्दानां तत्प्रागभावध्वंसानाञ्च तत्प्रत्यक्षानुपपत्त्या कल्पने गौरवं स्यात् । तव किञ्चिद्दूरदेशपर्यन्तमुत्पत्तिवन्ममाभिव्यक्तिरपि तावद्दूरदेशपर्य्यन्तमेवेति न दोषः । अत एव कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रेण तद्ग्रहः, स्व—समवेतशब्दस्यैव तेन ग्रहात् ।

(रत्न०)—शब्दस्याकाशदेशस्थत्वमुपपादयति — *अयं च शब्द

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति — ध्वनिव्यङ्ग्यो वाचकशब्द इत्यर्थः । ❀समष्टेरिति — 'वनम्' इत्याद्याकारिका एकताबुद्धिः समष्टिः । मायादिभुवनान्तं विराट्पुरुषस्य शरीरम् । स्थूलदेहसमष्ट्या विराडुच्यते । विराजो हृदयदेश एव बाह्याकाश इत्युच्यते । ❀बाह्याकाशदेशस्थश्चेति — व्यापकत्वादुभयदेशस्थत्वं तस्येति भावः । ❀सचेति — तदुभयदेशस्थशब्दश्चेत्यर्थः । विभुः = व्यापकः । ❀यथैकत्रेति — यत्र तु भिन्नावयवावच्छेदेन रूपभेदस्तत्र रूपमव्याप्यवृत्त्येव, न तु तत्र चित्ररूपमिति भावः । चित्ररूपाभावादेव "लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः" इति स्मृतिः सङ्गच्छते । किञ्चैवं सुरभ्यसुरभिकपालारब्धघटस्य निर्गन्धत्वमेव स्यात् । तथा च गन्धं प्रति पृथिवीत्वेन हेतुत्वस्य व्यभिचार एव स्यात् । ❀रूपं व्यापकमिति — सर्वावयवावच्छेदेन सम्बद्धमित्यर्थः । ❀तथेति — रूपवदित्यर्थः । अस्य = शब्दस्य । ❀तथात्वमिति — स्वसमवायिवृत्त्यत्यन्ताभावाप्रतियोगित्वमित्यर्थः । नतु व्यापकत्वम्, वैयधिकरण्यात् । ननु व्यापकत्वे सर्वत्रोपलम्भापत्तिरिति चेत्, न, व्यापकस्यापि रूपस्य चक्षुःसंयोगसमानाधिकरणस्यैव प्रत्यक्षत्वमिव तत्तत्कर्णशष्कुल्यवच्छिन्नाकाशसम्बद्धस्यैव तस्य प्रत्यक्षत्वात् । ❀इन्द्रशब्द इति — ननु भाष्ये — "एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत्सर्वत्र भवति" इत्युक्तम्, तथा चेन्द्रदेवताया युगपदनेकेषूपस्थानं लभ्यते न तु शब्दस्येति चेत्, न, मीमांसकानां मते चतुर्थ्यन्तपदस्यैव देवतात्वस्वीकारात् । 'इन्द्राय' इति चतुर्थ्यन्तशब्द एव देवता, न तु तदर्थभूता काचन देवताऽस्तीति यावत् । शाब्दिकनयेऽपि शब्दार्थयोस्तादात्म्याद्देवतारूपत्वं मन्त्रस्य । विग्रहवत्त्वं स्वीकृत्य तु देवतानां कर्माधिकार उक्तो मीमांसायाम्, शब्दानामर्थपरत्वस्यौत्सर्गिकतया प्रयोगसमवेतार्थस्य स्मृतावेव तात्पर्य्ये नाज्ञातदेवताविग्रहादावपीति मन्त्राधिकरणाशयः । युगपदनेकेषूपस्थानञ्च व्यापकत्वादेव । ननु शब्दानां नित्यत्वात् 'प्रादुर्भूतः' इत्यनुपपन्नमत आह — ❀प्रादुर्भूत इति । ❀कत्वादिनेति — ध्वनिगतकत्वाद्यारोपेणेत्यर्थः । ❀पदादिरूपेणेति — पदे वर्णाभावाद् बुद्धिपरिकल्पितपदत्वादिरूपेणेत्यर्थः । ❀भाष्ये स्पष्टमिति स्पष्टत्वमेवाह — ❀तत्रेति । ❀श्रोत्रोपलब्धीति — श्रोत्रे उपलब्धिर्यस्येत्यर्थः । श्रोत्रोपलब्ध्या च तस्याकाशदेशत्वं सूचितम् । नन्वाकाशदेशः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यसङ्गतम्, देशस्याकाशभिन्नत्वादिति चेत्, न, कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वादाकाशदिशोरैक्यमेवेत्यभिप्रायेण 'देश' शब्दप्रयोगात् । न च दिश एव श्रोत्रत्वमस्त्विति वाच्यम्, चक्षुरादिवच्छ्रोत्रस्यापि भौतिकत्वस्यौचित्येन कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वस्यावश्यकत्वात् । एतेन 'अकाशो नातिरिक्तः पदार्थः किन्तु दिश्येव तस्यान्तर्भावः' इति वदन्तः परास्ताः, प्रत्युत दिश एवाकाशानतिरिक्तत्वमिति । नन्वनेनैव 'बुद्धिनिर्ग्राह्यः' इति विशेषणस्यापि क्रोडीकारात्तत्पुनरुक्तमिति चेत्, न, आशुतिरोधीयमानानेकवर्णविशिष्ट 'घट' 'कलश' आदिशब्दग्रहणसम्भवप्रदर्शनाय तदुक्तेः । स च पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्परासहकृतान्त्यवर्णबुद्ध्या निःशेषतः स्वरूपतोऽर्थतश्च ग्राह्य इत्यर्थः । एवञ्च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृशसंस्कारविशिष्टेनान्त्यवर्णसम्बद्धेन श्रोत्रेण वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूपपदादिप्रत्यक्षमिति तद्विशेषणतात्पर्य्यम् । नन्वेवं सर्वदा शब्दप्रत्यक्षमत आह—*प्रयोगेणाभिज्वलित इति—प्रयुज्यते इति प्रयोगः = वर्णस्तेनाभिव्यक्त इत्यर्थः । यद्वा प्रयोगः = उच्चारणं तेनाभिव्यक्तः । *एकश्चेति—एवञ्चैकस्मिन् फले एक एव यथा रसगन्धादिस्तथा एकस्मिन्नाकाश एक एव शब्दोऽपीति भिन्नदेशोपलम्भो न शङ्कनीयः । नन्वेकत्वे 'अयं पूर्वः' 'अयंपरः' 'इदं राजगृहम्' 'इदं देवगृहम्' इति भेदव्यवहारो न स्यादिति चेत्, न, औपाधिकभेदमादाय तदुपपत्तेः । 'नीलं नभः' इतिवत्संसर्गानित्यता तत्रापि बोध्या । अत्र 'शब्दः' इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वञ्च ध्वनितम् । तदेतत्सर्वमभिप्रेत्य निष्कर्षमाह— *तत्रेति—श्रोत्रोपलब्धित्व-बुद्धिनिर्ग्राह्यत्वयोर्मध्य इत्यर्थः । *अन्यथेति— नित्यत्वानङ्गीकारे इत्यर्थः । *कदम्बेति—कदम्बपुष्पवद्दशदिक्संचारिणो दश शब्दा जायन्ते । ते च श्रोत्रेण सम्बद्धा गृह्यन्त इत्यर्थः । आदिना—वीचितरङ्गन्यायसंग्रहः । तद्यथा—वीचिः प्रथममुत्पन्ना वीच्यन्तरमुत्पादयति । एवं शब्दोऽपि शब्दान्तरं जनयति, तदपि शब्दान्तरमित्येवं श्रोत्रसन्निकर्षो जायते । *तत्प्रागिति—यदा वर्णादीनां प्रत्यक्षं न जायते तदाऽनित्यत्ववादिनये तत्प्रागभावो ध्वंसो वा कल्पनीयः स्यादिति गौरवं स्यादिति भावः । ननु विभुत्वेऽतिदूरस्थस्यापि प्रत्यक्षत्वापत्तिरत आह— *तत्र किञ्चिदिति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथाऽनित्यत्वपक्षे नियतदेशपर्य्यन्तमेवोत्पत्तिस्तथा नित्यत्वपक्षेऽभिव्यक्तिरपि नियतावधिकैवेति भावः। *अत एवेति—शब्दस्य व्यापकत्वादेवेत्यर्थः । *स्वसमवेतेति —स्वं श्रोत्रं तत्समवेतेत्यर्थः । तेन = श्रोत्रेण ।

मू०—न्वाकाशदेशः शब्द इत्यसङ्गतम्, आकाशसत्त्वे मानाभावात् । न च शब्दगुणितया †1 तत्सिद्धिः, शब्दस्याकाशगुणत्वासिद्धेः । स्पर्शवद्द्रव्यविशेषगुणत्वस्यैव शब्देऽङ्गीकारात् । नचायावद्द्रव्यभावितयाऽऽश्रयादन्यत्रानुपलम्भापत्तिः, तादृशनियमानङ्गीकारात् । तत्राप्यन्यदेशावच्छिन्नाकाशाश्रयस्य कर्णशष्कुल्यवच्छिन्न उपलम्भात् । न च द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणयोगित्वमेव स्पर्शवतामिति वाच्यम्, तस्य नियमस्य स्ववासनाकल्पितत्वात् । अतएव भाष्येऽपि "आकाशदेशः" इत्येवोक्तम्, न त्वाकाशगुण इति, इति चेत्, न,

(आकाशसाधनपूर्वकं तस्य शब्दगुणकत्वनिरूपणम् ।)

"आधारशक्तिः प्रथमा सर्वसंयोगिनामयम् †२ ॥
इदमत्रेति भावानामभावानां च कल्पते ।
व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते ॥

---

† १ अत्र 'शब्दगुणतया' इति पाठ उचितः, लाघवमूलकात् "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इतिन्यायादत्र मत्वर्थीयाप्राप्तेः । यद्वा "प्रत्ययस्थात्"—( पा० सू० ७।३।४४ ) इति सूत्रे 'असुब्वतः' इति भाष्यप्रयोगेण क्वचिल्लाघवानादरस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोऽपि क्वचिदित्यदोषः । केचित्तु—शब्दस्य गुणितेति षष्ठीतत्पुरुषेण शब्दनिष्ठगुणतानिरूपितगुणितयेत्यर्थमाहुः ।

† २ "आकाशमेवकेषाञ्चिद्देशभेदप्रकल्पनात् ।
आधारशक्तिः प्रथमा सर्वसंयोगिनां मता" ॥

इति तु वाक्यपदीयपुस्तके पाठः । मञ्जूषाकारमते 'मता' इत्यस्य स्थाने 'अयम्' इति पाठे 'आकाशमेव' इत्यस्यानन्वयापत्तिः तथा च तत्र पाठे कारिकायाम् 'आकाश एव' इति पाठः कल्पनीयः । यद्वा, पुल्लिङ्ग एव पाठ आसीदित्युत्प्रेक्ष्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कालात् क्रिया विभज्यन्ते आकाशात्सर्वमूर्त्तयः ।
एतावानेव भेदोऽयमभेदोपनिबन्धनः"
( वाक्यप० कां० ३ अधिकरणाधिका० ४–६ ) ॥

इति हरिणैव समाधानात् । 'इदं नक्षत्रचक्रम् अत्र तिष्ठति' 'अत्रैतदभावः' इति निर्दिष्टवस्तुविषये पृथ्व्यादेराधारत्वासम्भवेन तदाधारस्यैवाकाशसंज्ञकत्वात् । एवं च पृथ्व्यादीनामपि परमाणुद्वारा स एवाधार इति सर्वभावानामाधारशक्तिराकाशाश्रया 'आधारशक्तिरयम्' इति तु शक्तिशक्तिमतोरभेदादुक्तम् । एवञ्चाधारशक्त्यैवान्यथाऽनुपपन्नयाऽऽकाशसद्भावावगमः । इदमाकाशस्याधारत्वं सिद्धस्वभाववस्तुविषयम् । साध्यस्वभावक्रियाविषयं तु कालस्याधारत्वमित्याह—कालादिति । जन्मस्थितिनिरोधेषूपकुर्वन् कालः क्रियाधार इति । एतच्चोपरिष्टात् स्फुटीभविष्यति । 'मूर्त्ति'पदं क्रियाऽतिरिक्तसर्वपदार्थबोधकम् । अयम्भेदः=आकाशः काल इतिभेदः । एतावानेव=व्यावहारिक एव । ननु किं तर्ह्ययं निर्निबन्धन एव, न, इत्याह – अभेदेति – भेदरहितं यद् ब्रह्म तदुपनिबन्धनम्=वस्तुभूतं यस्य स इत्यर्थः । ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञां लभते इति तात्पर्यम् । 'अखण्डः कालः' इति मते तस्येश्वरातिरिक्तत्वखण्डनमिदं बोध्यम् । एवञ्च सर्ववस्त्वाधारदेशत्वेन शब्दस्यापि तद्देशत्वं श्रोत्रोपलब्धिगुणेन भाष्ये उक्तम् । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वेनेन्द्रियाणामसम्बद्धविषयाग्राहकतया तत्तद्भूतसम्बद्धगुणस्यैव तत्तदिन्द्रियग्राह्यतया च आकाशदेशस्थत्वमेव शब्दस्येत्याशयात् ।

(रत्न०)—पूर्वम् "अइउण्" सूत्रे 'आकाशदेशः शब्दः' इत्युक्तं तत्र शङ्कते—नन्विति । *शब्दाश्रयतयाऽऽकाशरूपातिरिक्तं द्रव्यं सिद्धमिति तार्किकमतं प्रदर्शयन्निराकरोति—*नचेति । *शब्दगुणितयेति—अनुमाना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दित्यर्थः । अनुमानप्रयोगश्चेत्थम् — शब्दः, गुणः, चक्षुर्ग्रहणायोग्य-बहिरिन्द्रियग्राह्यजातिमत्त्वात्, स्पर्शवत् । घटादौ व्यभिचारवारणाय 'चक्षुर्ग्रहणायोग्य' इति । आत्मनि व्यभिचारवारणाय 'बहिरिन्द्रिय-ग्राह्य' इति । रसत्वादौ व्यभिचारवारणाय 'जातिमत्' इति । एवं शब्दस्य गुणत्वे सिद्धे 'शब्दः, विशेषगुणः, लौकिकप्रत्यासत्त्या इन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वात्, रूपवत् । प्रभात्वेऽतिव्याप्तिवारणाय 'गुणत्व' इति । गुरुत्वत्वेऽतिप्रसङ्गवारणायाद्यं सत्यन्तम् । संख्यात्वे व्यभिचारवारणाय द्वितीयं सत्यन्तम् । अनेनानुमानेन विशेषगुणत्व-सिद्ध्याऽग्रिमानुमाने हेतौ स्वरूपासिद्धिनिरासे सिद्धे 'शब्दः, द्रव्य-समवेतः, गुणत्वात्' । अनेन परिशेषानुमाने हेतौ विशेष्यासिद्धौ निर-स्तायां विशेषणासिद्धिनिरासाय स्वीक्रियमाणेन 'शब्दः, न स्पर्शवद्-विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुण-पूर्वकत्वे च सति प्रत्यक्षत्वात्, सुखवत्' । पाकजरूपादौ व्यभिचार-वारणाय प्रथमं सत्यन्तम् । पटरूपादौ व्यभिचारवारणाय द्वितीयं सत्य-न्तम् । जलपरमाणुरूपादौ व्यभिचारवारणाय 'प्रत्यक्ष' इति । इत्य-नुमानेन पृथिव्यादिचतुष्टयगुणत्वे निरस्ते 'शब्दः, न दिक्कालमनसां गुणः, विशेषगुणत्वात्, रूपवत्' इति कालादित्रितयगुणत्वनिरासे 'शब्दः, न आत्मविशेषगुणः, बहिरिन्द्रिययोग्यत्वात्, रूपवत्' । अत्र मनो-भिन्नमिन्द्रियं बहिरिन्द्रियम् । एतेन अनात्मगुणग्राहकेन्द्रियत्वं बहिरिन्द्रि-यत्वम्, तच्च मनस्यतिप्रसक्तम्, तेनापि रूपादिग्रहणादिति निरस्तम् । इत्यात्म-विशेषगुणत्वनिरासे सिद्धे 'शब्दः, पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्या-श्रितः, पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्' इति परि-शेषानुमानेन नवमस्य शब्दाधिकरणात्मकाकाशरूपद्रव्यस्य सिद्धिः । *असिद्धेरिति — उक्तानुमानस्य बाध-स्वरूपासिद्धिभ्यां पराहतत्वात् । तथाच विशेषगुणवत्त्वं सुतरां नेति भावः । तदेवाह — *स्पर्शवद् द्रव्येति — स्पर्शवांश्चासौ द्रव्यविशेषश्चेति स्पर्शवद्द्रव्यविशेषो वायुस्तद्गुणत्वस्यैवेत्यर्थः । पवनावयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकशब्दोत्पत्तेः स्पर्शवद्विशेषगुणवत्त्वस्य तत्र सत्त्वेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुक्तानुमानेन तदभावसाधने बाधरूपदोषापत्तिरिति भावः। तार्किकोक्तानुमानसाधने कारणेत्युक्त्या तद्घटितहेतोरसिद्धिः। अत्र वैशिषकाः—'शब्दः, न स्पर्शवद्विशेषगुणः, अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वात्'। पृथिव्यादेर्गुणस्त्वग्निसंयोगजन्यः, समवायिकारणगुणपूर्वको वा, न च शब्दस्तथा। नापि वायुगुणः, आश्रयनाशजन्यनाशाप्रतियोगित्वादिति। तन्निराचष्टे–*नचेति। *अयावद्द्रव्येति—यावद्द्रव्यम् = सकलद्रव्यम्। तत्रभवतीति यावद्द्रव्यभावी = सकलद्रव्यभावी। स न भवतीत्ययावद्द्रव्यभावी। स्वाश्रयमात्रवृत्तिरिति यावत्। अयम्भावः—पृथिव्यादिस्पर्शवतां गुणाः स्वाश्रयादन्यत्र नोपलभ्यन्ते। नच वाय्वादिषु गन्धादिदर्शनान्नियमासिद्धिः, तत्र सूक्ष्मपार्थिवादिपरमाणूनामेव सत्त्वात्। यदि च शब्दो वायुगुणः स्यात्तदाऽऽश्रयादन्यत्रोपलब्धिर्न स्यात्। तथा च पृथिव्यादिषु शब्दोपलब्धिर्विरुध्येतेति नायं वायुगुणो भवितुमर्हतीति। *तादृशेति—पृथिव्यादिगुणाः स्वसमवायिवृत्तयः एवेत्यत्र प्रमाणाभावेन तादृशनियमानङ्गीकारादित्यर्थः, पुष्पसौरभस्य वाय्वादिषूपलब्धेः। नच तत्र पुष्पावयवा अप्यायान्तीति वाच्यम्, पुष्पस्य लघुत्वापत्तेः। नचावयवेभ्योऽवयवान्तरोत्पत्तेः लघुत्वाभावः, अनन्तावयवोत्पत्तिकल्पनाऽपेक्षया स्वाश्रयादन्यत्रोपलब्धिस्वीकार एव लाघवात्। एवञ्च वायुगुणस्यापि शब्दस्य जलादावुपलब्धौ बाधकाभाव इति भावः। यत्तु आश्रयादन्यत्रेत्यस्याकाशे इत्यर्थस्तदसङ्गतम्, आकाशमस्वीकृत्य ग्रन्थप्रवृत्तेः। 'यावद् द्रव्यभावितया' इति त्वपपाठः, तार्किकमते 'यावद्द्रव्यभावितया' इत्यस्य आश्रयनाशजन्यनाशप्रतियोगितयेत्यर्थकत्वेनाश्रयादन्यत्रेत्युत्तरग्रन्थाद्यरस्वारस्यभङ्गात्। *तवापीति—शब्दगुणकमाकाशमिति वादिनोऽपीत्यर्थः। *अन्यदेशावच्छिन्नेति—गृहादिदेशावच्छिन्नाकाशाश्रयस्य शब्दस्य कर्णशष्कुल्यवच्छिन्नश्रोत्ररूपाकाशे उपलम्भात्तादृशनियमाभाव एवेति भावः। शब्दस्य वायुगुणत्वे बाधकान्तरमाशङ्कते–*नच द्रव्येति–द्रव्यग्राहकं यदिन्द्रियं तद्ग्राह्यो यो विशेषगुणस्तद्योगित्वमेव स्पर्शवद्द्रव्याणाम्। यथा घटरूपद्रव्यग्राहकं चक्षुः, तेनैव स्व-संयुक्त-समवाय-सम्बन्धेन रूपं गृह्यत इति तादृशविशेषगुणयोगित्वं घटस्य। एवञ्च

२२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नहि श्रोत्रेन्द्रियं वायुग्राहकम्, तद्ग्राह्यत्वं तु शब्दस्यास्तीति स्पर्शवद्द्रव्य-गुणत्वाभावस्तत्र । *वासनाकल्पितत्वादिति — त्वगिन्द्रियेण वायोरग्रहणेऽपि तद्गुणस्य स्पर्शस्य ग्रहणदर्शनाद्वासना-कल्पित एव नियमो नतु तत्र व्याप्तिरस्तीति भावः। शब्दस्याकाशगुणत्वाभावे भाष्यं प्रमाणयति-*अत एवेति — अन्यगुणस्याप्यन्यत्रोपलम्भादाकाशदेशः शब्द इत्येवोक्तं नत्वाकाशगुण इति । वायुगुण एव शब्द इत्याशङ्क्य खण्डयति – *इति-चेन्नेति । आकाशसत्त्वे प्रमाणमाह — *आधारशक्तिरिति — अस्य पूर्वांशस्तु "आकाशमेव केषाञ्चिद्देशभेदप्रकल्पनात्" इति। उत्तरार्धेन सर्वसंयोगिनामाकाशस्यैवाधारत्वं वक्ष्यते इति सर्वेषां सामानाधिकरण्यं स्यादत उच्यते — देशभेदप्रकल्पनादिति–संयोगिद्रव्याणां देशतया व्यवह्रियमाणस्याकाशभेदस्य तैरेव संयोगिभिरव्यापकैः प्रकल्पनात् सर्वेषामसङ्करेणाधिकरणमाकाश इत्यर्थः । संयोगिद्रव्यरूपोपाधिभेदेनाकाशस्यापि भेदप्रकल्पनात् नास्ति सर्वेषां सामानाधिकरण्यव्यवहारापत्तिरिति भावः । *प्रथमेति — अयम्भावः — यथा नक्षत्रादीनामधिकरणमाकाशं तथा पृथिव्यादिस्थरथादीनामपि मुख्यमधिकरणमाकाशमेव । अवयविनान्तु स्वावयवद्वारा परमाणौ विश्रान्तिः । परमाणूनाञ्चाकाशमेवाधिकरणमित्याह — घटपटादीनामयमाकाशः प्रथमा मुख्याऽऽधारशक्तिरित्यर्थः । आधारशक्तौ मुख्यत्वञ्च-सर्वसंयोगिनिष्ठाधारशक्तीनामुपजीव्यत्वेन । अत्र लोकप्रसिद्धिमपि प्रमाणयति — *इदमत्रेति — 'अत्रेदं नक्षत्रचक्रम्' इति भावरूपाणाम् 'अत्र एतन्नक्षत्रचक्राभावः' इत्यभावरूपाणाञ्च निर्दिष्टवस्तूनां विषये इत्यर्थः । *आधारत्वासम्भवेनेति — पृथिव्यादिना सहाधारतानियामकसम्बन्धाभावात् । *तदाधारस्यैवेति — निर्दिष्टानां भावाभावरूपाणामाधारस्यैवेत्यर्थः । इदमत्रेतिभावानामभावानाञ्च व्यपदेशः = 'इह पक्षी वर्तते, इह पक्षी न वर्तते' इत्यादिव्यवहारः आकाशस्याधारत्व एव प्रकल्पते । तम् = व्यपदेशम् । आकाशं निमित्तं यत्र तादृशं प्रचक्षते । अस्य वृद्धा इति शेषः । वस्तु द्विविधम्-सिद्धरूपं साध्यरूपञ्च । तत्र सिद्धस्वभाववस्तूनां सर्वेषामाधार आकाशः । साध्य स्वभावानां तु काल एवाधार इत्याह — *कालात्क्रियेति — काल एवाधारतया क्रियाया भेदकः । आकाशस्त्वाधारतया सर्वमूर्तीनाम् = सर्व

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदार्थानां भेदकः । अभेदः उपनिबन्धनम् = निमित्तं यत्र तादृशोऽयमाकाशः कालश्च वस्तुतोऽभिन्नौ एव । ॐएतावानेव — व्यावहारिक एव भेद इत्यर्थः । निर्दिष्टं यन्नक्षत्रादि तन्निरूपितमाधारत्वं पृथिव्यादेर्न सम्भवतीत्यर्थः । ॐएवञ्चेति—आकाशस्य सर्वाधारत्वे चेत्यर्थः । पृथिव्यादीनामवयवद्वारा परमाणव आधारभूताः, परमाणूनान्तु साक्षादाधारः आकाश एव । आकाशनिष्ठाधारशक्तिप्रयोज्यैव सर्वत्राधारशक्तिरितिभावः । 'आधारशक्तिराकाशः' इत्युक्तिस्तु शक्तिशक्तिमतोरभेदोपचारात् तदाह — ॐआधारशक्तिरिति । ॐअन्यथाऽनुपपन्नयेति— 'परममहत्परिमाणवद्भिन्नपदार्थनिष्ठाधारशक्तिः, किञ्चित्पदार्थान्तरवृत्त्याधारशक्तिप्रयोज्या,आधेयतासामानाधिकरण्यात् । एवञ्च परमाणुनिष्ठाधारताप्रयोजकाधारशक्त्याश्रयतया आकाशः सिध्यतीति भावः । ॐजन्मेति — आद्यक्षणसम्बन्धो जन्म । क्षणे आद्यत्वञ्च-यस्य जन्म विवक्षितं तद्विशिष्टत्वम्—वै० स्वाधिकरणत्व-स्वाधिकरणक्षणध्वंसानधिकरणत्वोभयसम्बन्धेन । तदुक्तम्—

"आदित्य-ग्रह-नक्षत्रपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥"

( वाक्यप० कालसमुद्दे० ) इति ।

केचित्क्रियात्मकं कालमिच्छन्ति तन्निराकरोति — ॐक्रियाधार इति — न तु क्रियारूप इति भावः । 'अयं घटो भविष्यति' इत्यादौ कालस्यैवाधारत्वं न तु सूर्य्यपरिस्पन्दादेः, तस्य सूर्य्यनिष्ठतया घटाद्याधारत्वासम्भवात् । 'मूर्ति'पदस्य मूर्तधर्मे एव तार्किकाणां प्रसिद्धत्वादाह — ॐमूर्तिपदमिति । ॐव्यावहारिक एवेति — अत एवोक्तं दीधितौ "दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात्" इति । 'इदानीं घटः' 'तदानीं घटः' इत्यादि व्यवहारस्तु त्वन्मत इव ममाप्यौपाधिक एवेति भावः । ॐईश्वर इति — श्रोत्रमपि कर्णशष्कुल्यवच्छिन्न ईश्वर एवेति भावः । कार्यमात्रं प्रतीश्वरस्य कारणता क्लृप्तैव । तत्र १† शब्दसमवायित्वमात्रं स्वीक्रियते ।

---

१† न चेश्वरे शब्दसमवायस्वीकारे मनःसंयुक्तेश्वरसमवायसन्निकर्षेण शब्दस्यापि मानसत्वापत्तिरिति वाच्यम्, परकीयज्ञानादिमानसप्रत्यक्षवारणाय परव्यावृत्तसंयोगस्य हेतुतया प्रकृते परसाधारणेश्वरसंयोगसत्त्वेऽपि तादृशस्याभावेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*अखण्ड इति — क्षणादिरूपस्तु कालो व्यवहारान्यथाऽनुपपत्त्या कल्प्यत इति भावः । नन्वाकाशस्येश्वररूपत्वे शब्दाधिकरणस्य नवमद्रव्यस्यासिद्धिरत आह — *अखण्डः काल इति — 'अखण्डः कालः कश्चनातिरिक्तः पदार्थः' इति मतखण्डनायैव कारिकायामीश्वराभेदत्वं कालस्योक्तं नत्वाकाशखण्डनायेति भावः । तस्य = कालस्य । एवञ्च = आकाशसिद्धौ च । तस्य सर्ववस्त्वाधारत्वाच्छब्दस्यापि सर्वपदार्थान्तर्गततया आकाशदेशत्वं सिद्धमिति भावः । *कर्णेति — शब्दस्याकाशगुणत्वे आकाशरूपश्रोत्रेन्द्रियसम्बद्धस्य तस्य ग्रहणं सिद्ध्यतीति भावः । *तत्तद्भूतेति—तत्तदिन्द्रियात्मकतत्तद्भूतसम्बद्धगुणस्यैवेत्यर्थः । शब्दस्याकाशधर्मत्वे सत्येवाकाशात्मकश्रोत्र † सम्बद्धस्य तस्य ग्रहणं सम्भवतीत्यर्थः । इत्थञ्चाकाशं शब्दगुणवत्त्वञ्च तस्य सिद्धम् ।

मू०—केचित्तु तन्न श्रोत्रम्, तस्य च्छिद्रे नित्यतया रोगादिना

---

शब्दे मानसप्रत्यक्षत्वापत्तेरभावात् । न च "आकाशशरीरं ब्रह्म" ( तैत्तिरी० उप० १।६।२ ) इति श्रुतेराकाशस्य ब्रह्मात्मकत्वे कथं ब्रह्मणोऽवस्थितिरिति वाच्यम्, परममहत्परिमाणवद्भिन्नस्यैव सर्ववस्तुनस्तत्राधारत्वस्वीकारात् । यत्त्वन्तराकाशस्याकाशमिव ब्रह्मणोऽप्यवस्थितिरिति, तन्न, ब्रह्मणः सावयवत्वप्रसङ्गात् 'आकाश शरीरं ब्रह्म' इत्यस्याकाशवच्छरीरं यस्येत्यर्थकत्वाद्वा ब्रह्मणो नानवस्थितिरिति ।

† अत्र बौद्धाः—गोलकमेव चक्षुः, अप्राप्यप्रकाशकारित्वात् । चक्षुषः प्राप्यप्रकाशकारित्वे स्वतोऽधिकपरिमाणवद्ग्रहणासम्भवः । न खलु नखरञ्जनिका परशुच्छेद्यं छिनत्ति, शाखा-चन्द्रमसोस्तुल्यकालग्रहणानुपपत्तिश्चेति, तन्न, अधिष्ठानासम्बद्धग्राहिण्या दीपप्रभाया इव चक्षुषोऽपि प्राप्यकारित्वे सम्भवात्, गोलकनिर्गतस्य महतश्चक्षुषः पृथ्वग्रत्वेन प्रदीपप्रभाया इव पृथुतरग्रहणस्य चोपपत्तेः । तस्मात्प्राप्यप्रकाशकारित्वाद् गोलकातिरिक्तमेव चक्षुः । तच्च न भौतिकं किन्त्वाहङ्कारिकमिति साङ्ख्याः । एतच्च भूतविकारत्वबोधिकाभिः "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्" (ऐत० उप० २।४) इत्यादिश्रुतिभिः विरुद्धम् । तस्मात्तैजसमेव चक्षुः । अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशय इति शाखाचन्द्रमसोर्भिन्नकालग्रहणेऽपि तुल्यकालप्रतीतिर्नानुपपन्ना । नाप्यणुत्वं तेषाम्, शरीरव्यापिशैत्योपलम्भात् । नापि विभुत्वम्, सर्वेषां युगपद्ग्रहणप्रसङ्गात् । एवञ्च मध्यमपरिमाणमेव तेषां स्वीकार्य्यम् । अणुत्वेऽपि तन्निर्गतस्य पृथ्वग्रत्वान्न दोष इत्यन्ये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाशासंभवेन बाधिर्यानापत्तेः । न च धर्मविशेषविशिष्टं नभः श्रोत्रम् ,तस्य च धर्मस्य रोगादिनाऽभिभवः, औषधेन च तदुद्भव इति वाच्यम् ; लाघवेन नभोऽधिष्ठानकधर्मविशेषस्यैवाहङ्कारिकस्य श्रोत्रत्वौचित्यात् । एवमन्यान्यपि घ्राणादीनि तदैकरूप्याय पृथ्वी-जल-वायु-तेजोऽधिष्ठानकान्याहङ्कारिकाण्येव । अत एव योगीन्द्रियाणामत्यन्तदूरदेशस्थविषयोपलब्धिजनकत्वम्, पृथ्व्यादिविकाराणां तावद्दूरदेशगमनासम्भवात् । अहङ्कारस्य तु अन्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनाऽपि बहुदूरदेशगमनानुभवात् तद्विकाराहङ्कारविकाराणां तत्सम्भवात् । योगस्तु प्रतिबन्धकतमोनिवर्त्तक एवेत्यग्रे निरूपयिष्यामः । तत्तद्ग्राह्यगुणाधिष्ठानानि च तानि भूतानि । तेषु च ते गुणा अनुद्भूताः । तत्तद्गुणसामानाधिकरण्यात् पृथ्व्यादिगतगुणग्रहणमिन्द्रियैः । एवञ्च श्रोत्रमेव चित्तवृत्तिसहकृतं स्ववृत्तिपरम्परया शब्ददेशमागतं शब्दं गृह्णाति । अत एव तत्तद्देशवर्तित्वेन शब्दप्रतीतिः ।

इन्द्रियाणामाहङ्कारिकत्वस्य परमाणुपरिणामत्वस्य च प्रदर्शनम्

यद्वा अणूनां सर्वशक्तीनां सर्वदेशव्यापितया तेजोनभआदिपरमाणूनां विषयदेशपर्य्यन्तं तत्तदिन्द्रियस्य तत्तद्विषयोन्मुख्ये तत्तदिन्द्रियरूपेण परिणामात् तत्तद्देशे प्रत्यक्षमिति वदन्ति ।

(रत्न०)—*केचिदिति— साङ्ख्या इत्यर्थः । तत् = आकाशम् । तस्य = आकाशस्य । छिद्रे = अवकाशविशेषे । *नित्यतयेति — श्रोत्रस्य नभोरूपत्वे रोगादिना नाशो न स्यादित्यर्थः । *धर्मविशेषेति — तत्तद्भूतविकारेत्यर्थः । *तदुद्भव इति—एवञ्च नास्ति पूर्वोक्तदोषावकाशः । *लाघवेनेति — धर्मविशेषविशिष्टे नभसि श्रोत्रेन्द्रियत्वकल्पनाऽपेक्षया विशेषणीभूतधर्ममात्रे तत्कल्पनायामेव लाघवमिति भावः । *नभोऽधिष्ठानकेति — कर्णशष्कुल्यवच्छिन्ननभोऽधिष्ठानकेत्यर्थः । *धर्मविशेषस्येति—भूतविकारविशेषस्येत्यर्थः । भूतविकारस्य तत्त्वे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्ष्यमाणदोषात् सांख्यमतमाह—*आहङ्कारिकस्येति—सात्विका † हङ्कारविकारस्येत्यर्थः । साङ्ख्यमते इन्द्रियाणां स्वाधिष्ठानभूतं यत्पृथिव्यादि तद्वृत्तिगुणग्राहकत्वमिति श्रोत्रेन्द्रियाधिष्ठानभूतमाकाशमिति शब्दस्य श्रोत्रोपलब्ध्याऽऽकाशगुणत्वम् । *घ्राणादीनीति—पृथिव्यादिविकारविशेषरूपाणि आहङ्कारिकधर्मविशेषरूपाणि वा सावच्छिन्नपृथिव्यादिवृत्तीनि सर्वाणीन्द्रियाणीत्यर्थः । अयं भावः—न्यूनपरिमाणेन चक्षुरादीन्द्रियेण महापरिमाणं गृह्यते । भौतिकत्वे चैषां महतो व्यापनासम्भवः । अव्याप्यग्रहणेऽतिप्रसङ्ग इत्याहङ्कारिकत्वमेवोचितमिति । *अत एवेति—आहङ्कारिकत्वादेवेत्यर्थः । *तावद्दूरेति—अत एव 'गोलकं चक्षुः' इति बौद्धमतमपास्तम् । 'अहङ्कारोऽहम्' इति प्रथमाध्यासः । स्वप्नावस्थायां नरस्य व्याघ्रत्वाभिमाने 'न नरः, व्याघ्रोऽहम्' इत्यभिमानो जायते । अतस्तन्नियमाय नियतविषयव्यापकोऽहङ्कारः स्वीकार्य्यः । स च बुद्धितत्त्वस्य परिणामः । जाग्रत्स्वप्नसुषुप्तिषु सव्यापारं यदनुवर्तते तद् बुद्धितत्त्वम् । *अंतःकरणपरिणामत्वादिति—वेदान्तिमतेनेदम् । तन्मते संशय-निश्चय-गर्व-स्मरणवृत्तीनि मनोबुद्ध्यहङ्कारचित्तानि अंतःकरणभेदभूतानि । तथा चान्तःकरणस्यातिदूरदेशगमनानुभवस्य सर्वसम्मतत्वेन तद्विकाराहङ्कारविकारधर्मविशेषस्येन्द्रियस्य स्वप्रकृतिप्रकृतिवृत्तिधर्मानुगमनमुचितमेवेति भावः । वस्तुतस्तु—अहङ्कारस्यान्तःकरणभेदत्वेऽपि अन्तःकरणविकारत्वास-

---

* † इत्थं हि साङ्ख्यमते सृष्टिक्रमः—मूलकारणं सत्वरजस्तमोगुणानां साम्यावस्था प्रकृतिः। सैव 'अव्यक्तम्' 'प्रधानम्' इति चोच्यते। प्रकृतेर्महत्तत्त्वम् जायते, तदेव 'बुद्धिः' इत्युच्यते। महतोऽहङ्कारस्तस्माच्चक्षुः-श्रोत्र-घ्राण-रसन-त्वगाख्यानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि च। तत एव बुद्धीन्द्रियत्वकर्मेन्द्रियत्वोभयधर्मविशिष्टं मनो जायते। अहङ्कारादेव शब्दतन्मात्र-स्पर्शतन्मात्र-रूपतन्मात्र-रसतन्मात्र-गन्धतन्मात्राणि, इत्यहङ्कारात् षोडशानामुत्पत्तिः। तत्र शब्दतन्मात्रादाकाशः। शब्द-स्पर्शतन्मात्राद्वायुः। शब्द-स्पर्श-रूपतन्मात्रात्तेजः। शब्द-स्पर्श-रूप-रसतन्मात्राज्जलम्। शब्द-स्पर्श-रूप-रस-गन्धतन्मात्रात्पृथिवी। पञ्चविंशतितम उदासीनः पुरुषः। स च न कस्यचिद् विकृतिर्न प्रकृतिरपि, इति पञ्चमहाभूतेभ्यः क्रमेण सृष्टिविस्तर इति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्भवः । यद्वा सांख्यमतेऽन्तःकरणं बुद्धिस्तस्य विकारोऽहङ्कारस्तद्विकारश्च धर्मविशेष इन्द्रियमित्थेवं क्रमेण तद्विकारविकारत्वं बोध्यम् । नन्विन्द्रियाणां भौतिकत्वेऽपि योगजधर्मबलादतिदूरदेशस्थविषयाणां योगिप्रत्यक्षेऽतिदूरस्थत्वं न बाधकमत आह—*योगस्त्विति— प्रतिबन्धकतमोनिवर्तकत्वमेव योगस्य न तु सहकारित्वम्, सुषुप्तौ वृत्तिप्रतिबन्धकत्वदर्शनादिति भावः । तथा च योगिनामपीन्द्रियसम्बन्धादेव भूतभविष्यतोरपि प्रत्यक्षम् । योगश्च—व्यवस्थितानामिन्द्रियाणामन्तर्बहिर्भावस्य स्थिरोऽविचाली धारणैकाग्र्यलक्षणः । यद्वा—

"परेण ब्रह्मणा सार्धमेकत्वं यन्नृपात्मनः ।
स एव योगो विख्यातः किमन्यद्योगलक्षणम् ॥"
प्रत्यगात्मपरमात्मनोरैक्यं वा योगः ।

"योगश्चित्तवृत्तिनिरोधः" ( पातञ्ज० द० १।२ ) इति पातञ्जलसूत्रम् । यथेन्द्रियाणां तत्तद्भूतान्यधिष्ठानानि तथा तत्तदिन्द्रियग्राह्यगुणाधिनानि च तानि भूतानि । यथा घ्राणेन्द्रियस्याधिष्ठानं पृथिवी तथा घ्राणेन्द्रियग्राह्यगन्धरूपगुणस्यापि । एतेन श्रोत्रेन्द्रियाधिष्ठानभूताकाशस्य शब्दगुणत्वं सूचितम् । नन्विन्द्रियाधिष्ठानभूतेषु सावच्छिन्नपृथिव्यादिभूतेषु ये गुणास्तेषामपि घ्राणेन्द्रियादिजन्यप्रत्यक्षत्वापत्तिरत आह—*तेषु चेति— इन्द्रियाधिष्ठानभूतेषु भूतेषु इत्यर्थः । ते गुणाः = गन्धादयो गुणाः । अनुद्भूताः = तत्तदिन्द्रियग्रहणायोग्याः । नन्विन्द्रियस्य स्वाधिष्ठानेन सह सम्बन्धो न तु गन्धादिना तत्कथं प्रत्यक्षम् ? अत आह—*तत्तद्गुणसामानेति— सामानाधिकरण्यसम्बन्धेन गन्धादेरपीन्द्रियसम्बन्धोऽस्तीति भावः । ननु एतन्मते श्रोत्रस्य जन्यत्वेन विभुत्वाभावात् दूरस्थशब्दग्रहणनियमो न स्यादत आह—*एवञ्चेति—इन्द्रियाणामाहङ्कारिकत्वे चेत्यर्थः । *श्रोत्रमेवेति—अतःकरणमेवेन्द्रियद्वारा विषयदेशे गत्वा विषयं गृह्णातीत्यर्थः । यद्वा श्रोत्रमेवेत्यस्य श्रोत्रेन्द्रियमेवेत्यर्थः । इन्द्रियसन्निकर्षेऽन्तःकरणस्य सन्निकर्षस्य तत एव लाभात् । 'श्रोत्रमेव' इत्यस्य 'शब्ददेशमागतम्' इत्यत्रान्वयः । तार्किकमते मनःसंयोगस्यापि ज्ञानहेतुत्वादुक्तं—*चित्तवृत्तीति । *स्ववृत्तीति— स्वम् = इन्द्रियं तस्य वृत्तिः = सन्निकर्षस्तद्रूप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परम्परयेत्यर्थः । अत एव = शब्ददेशे इन्द्रियाणां गमनादेव । *तत्तद्देश-वृत्तित्वेनेति — यदि हि श्रोत्रदेश एव प्रत्यक्षं स्यात् तदा 'ग्रामान्तरे शब्दः श्रूयते' इति प्रतीतिर्न स्यादिति भावः । यद्वा आहङ्कारिकत्वा-भावेऽपीन्द्रियाणामणुपरिमाणतया गोलकाद्यतिरिक्तमिन्द्रियमेव शब्ददेशं गत्वा शब्दं गृह्णाति । वीचितरङ्गन्यायेन श्रोत्रगतशब्दान्तरं गृह्यते इति तु न युक्तम्, 'भेरीशब्दो मया श्रूयते' इति प्रतीतिविरोधात् । न च भ्रमः, बीजाभावात् । एवञ्च सांख्यमते आहङ्कारिकमिन्द्रियं शब्दादिदेशे गत्वा विषयं गृह्णाति । तार्किकमते भौतिकमेवेन्द्रियमणुपरिमाणं विषय-देशे गत्वा विषयान् गृह्णाति । न चाणुपरिमाणेन महतो व्याप्तिर्न स्यादिति वाच्यम्, अणुपरिमाणविशिष्टचक्षुरादेः दीपप्रभाया प्रभान्तरस्येवान्यस्य पृथ्वग्रचक्षुरादेर्निर्गमनात्, तेन च विषयस्य व्यापनात् प्रत्यक्षमिति नि-ष्कर्षात् । नाहङ्कारपरिणामत्वमिन्द्रियाणाम्, तथा सति तत्तदधिष्ठान-कत्वनियमनस्य दुर्वचत्वाल्लाघवाद्वा आह — *यद्वेति – अणूनाम् = अणुपरि-माणवताम् । सर्वशक्तीनाम् = सर्वरूपपरिणमनशक्तिशीलानाम् —

"अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः"

( वाक्यप० कां० १ कारि० १११ )

इति हर्युक्तेः । *नभ आदीति — आदिना पृथिव्यादीनां संग्रहः । *पर-माणूनामिति — अस्य 'तत्तदिन्द्रियरूपेण परिणामात्' इत्यत्रान्वयः । ननु परमाणूनामिन्द्रियत्वेऽसन्निकृष्टस्यापि प्रत्यक्षत्वापत्तिः, तेषां सर्वदेश-व्यापितया सर्वदा सर्वत्रैवेन्द्रियरूपेण परिणामापत्तिश्चात आह — *तत्तदिन्द्रियस्येति — चक्षुरादीन्द्रियस्येत्यर्थः । *तत्तद्विषयेति — तत्तद्-भूतगतगुणादिरूपविषयेत्यर्थः । औन्मुख्ये = तत्तद्विषयविषयककृतव्यापारे । *परिणामादिति — विषयदेशपर्यन्तमेव परमाणूनामिन्द्रियरूपेण परिणा-मान्नातिप्रसङ्ग इति भावः । असन्निकृष्टविषयदेशे परिणामे तु दूरस्थ-त्वादिकमेव प्रतिबन्धकम् ।

मू०—तन्मतेऽप्युक्तयुक्त्याऽऽकाशदेशत्वमेव । किञ्चानन्त-श्रोत्रवृत्तिकल्पनाऽपेक्षयाऽनन्तपरमाणुपरिणामकल्पनाऽपेक्षया च तस्यैकस्य कल्पने लाघवम् । तत्तद्देशव्याप्यभिव्यक्तिमतश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन ग्रहणमिति तत्तद्देशवर्तित्वानुभवो न विरुद्धः । यथा चैकस्याप्याकाशस्य 'घटाकाशो मठाकाशः' इत्यौपाधिकभेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानाञ्च परस्परं भेदः, एवमौपाधिकं भेदं लोकसम्मतमाश्रित्य "आकृतिग्रहणात् सिद्धम्" ( महाभा० मा० सू० १ ) इति तत्सूत्रे भाष्ये उक्तम् ।

स्फोटस्यैकत्वसमर्थनम्, साङ्ख्यादिमतनिराकरणञ्च

किञ्च –'जातिरपि माऽस्तु, रूपसामान्यादेव स्थूलकृशाल्पमहद्ध्रस्वदीर्घगोघटादिषु गौरित्यादिवत्सर्वत्रैकाकारव्यवहारः । अन्यथा संस्थानभेदात् अनुगतसंस्थानव्यङ्ग्या जातिरपि तत्र न स्यात्' इत्याशयेन "रूपसामान्याद्वा सिद्धम्" (महाभा० मा० सू० १) इति तत्रैव भाष्ये उक्तम् । रूपसादृश्यादिति तदर्थः ।

एतेन वर्णानां गृहीतसङ्केतानां व्यञ्जकत्वमगृहीतसङ्केतानां वा ? आद्ये तैरेवोपपत्तौ किं तेन ? नान्त्यः, सर्वस्याप्यर्थबोधापत्तेः । तदुक्तं साङ्ख्यसूत्रे † "प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः" इति । यदि वर्णसमुदायेन तत्प्रतीतिस्तदोक्तरीत्या तद्वैयर्थ्यम्, अथ न प्रतीयते, तदाऽज्ञातस्यार्थप्रत्यायकत्वाद् व्यर्था तत्कल्पनेति तदर्थ इति साङ्ख्योक्तं तदनुसार्य्युपवर्षोक्तिश्च स्फोटखण्डनमपास्तम् ।

अगृहीतसम्बन्धैरपि तस्य व्यञ्जनमस्त्येव । अत एवागृहीतार्थकेऽपि 'इदमेकं पदम्' इत्यनुभवः । अत एव वाचस्पतिमिश्राः तत्त्वबिन्दौ 'गकारादतिरिच्यमानमूर्त्तेः ककारस्याभावात्' इति स्फोटवादिमतमुपन्यास्थन्नित्यलम् ।

(रत्न०)—ननूक्तापसिद्धान्तभूतमतद्वयप्रदर्शनमसङ्गतमत आह—

*तन्मतेऽपीति—तन्मतेऽपि शब्दस्याकाशगुणत्वंप्रदर्शनं तावन्मात्रांशे

† साम्प्रतमुपलभ्यमाने सांख्यदर्शनपुस्तके एतत्सूत्रं तद्विषयिणी चर्चा वा नोपलभ्यते ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)—ननूक्तापसिद्धान्तभूतमतद्वयप्रदर्शनमसङ्गतमत आह—*तन्मतेऽपीति—तन्मतेऽपि शब्दस्याकाशगुणत्वप्रदर्शनं तावन्मात्रांशे मतैक्येन स्वमतं द्रढयितुमुक्तमिति भावः । *किञ्चेति—अस्य 'शब्दानामनित्यत्वे' इत्यादिः । इन्द्रियाणामाहङ्कारिकत्वे आह—*अनन्तश्रोत्रवृत्तीति । परमाणुपरिणामत्वे आह—*अनन्तपरमाणुपरिणामेति । तस्य = वाचकशब्दस्य । *एकस्येति—एको नित्यो विभुश्च शब्द इति भावः । यत्तु किञ्चेत्यादिनेन्द्रियविषयकमतद्वयखण्डनपरोऽयं ग्रन्थ इति, तन्न, समाधानपरग्रन्थास्वारस्यात् । ननु शब्दस्यैकत्वे दूरवर्तित्वानुभवो न स्यादत आह—*तत्तद्देशव्यापीति—तत्तद्देशव्यापिनी याऽभिव्यक्तिस्तद्वतः शब्दस्येत्यर्थः । अभिव्यक्तिरेव दूरदेशं व्याप्नोतीति भावः । तेन = श्रोत्रेण । तथा च न दूरदेशस्थशब्दानुभवविरोध इति भावः । ननु शब्दस्यैकत्वे नित्यत्वे च सत्यनेकसमवेतत्वरूपजातेरभावात् "आकृतिग्रहणात्सिद्धम्" इति भाष्यासङ्गतिरत आह—*यथा चेति । *जीवेश्वरभेद इति—अन्तःकरणावच्छिन्नचैतन्यं जीवः । मायाऽवच्छिन्नचैतन्यमीश्वरः । माया च सत्वरजस्तमोगुणात्मिका प्रकृतिरेव । *परस्परमिति—शरीरभेदाद् भेद इति भावः । *औपाधिकभेदमिति—ध्वनिगतकत्वखत्वादिभेदस्य वर्णेष्वारोपादितिभावः । आकृतिग्रहणात् = जातिग्रहणात् । वस्तुतः साऽपि माऽस्त्वितिलाघवाभिप्रायेणाह—*किञ्चेति । *रूपसामान्यादिति—यद्यपि रूपमवयवसन्निवेशः, तत्सामान्यात्तत्सादृश्यादित्यर्थः, रूपसामान्यञ्च नित्ये निरवयवे वर्णे न सम्भवति, तथाऽपि ध्वनिगतरूपस्य वर्णेष्वारोपात्तत्सामान्यं बोध्यम् । अन्यथा = रूपसामान्याभावे । अस्य 'वर्णादिषु' इति शेषः । *एतेनेति—रत्नपरीक्षणरीत्याऽन्त्यवर्णाभिव्यक्तस्फोटस्यैव वाचकत्वव्यवस्थापनेनेत्यर्थः । *गृहीतसङ्केतानामिति—ज्ञातशक्तिकानामित्यर्थः । आद्ये = गृहीतसङ्केतानां व्यञ्जकत्वे । तैरेव=वर्णैरेव । उपपत्तौ = बोधसिद्धौ । तेन=वर्णाभिव्यङ्ग्यस्फोटेन । *नान्त्य इति—अगृहीतसंकेतानां व्यञ्जकत्वं नेत्यर्थः । सर्वस्य=अज्ञातसङ्केतस्यापि । *तदुक्तमिति—पूर्वोक्तदूषणद्वयमुक्तमित्यर्थः । *प्रतीत्यप्रतीतिभ्यामिति—उक्तरीत्या संकेतज्ञानाज्ञानयोर्वक्तुमशक्यतया न स्फोटात्मकः शब्द इत्यर्थः । तदेवाह—*यदि वर्णसमुदायेनेति—स्फोटस्य बोधको यदि वर्णसमुदायस्तदा वर्णसमुदाय एव बोधकोऽस्तु किं स्फोटेन ? यदि वर्णसमुदायेनान-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिव्यक्त एव स्फोटो बोधकस्तदाऽज्ञातस्य स्फोटस्यार्थबोधकत्वासम्भव इति स्फोटो व्यर्थ एवेति भावः । पूर्वोक्तं विकल्पद्वयं खण्डयति—*अगृहीतेति—अज्ञातसङ्केतैरपि वर्णैरित्यर्थः । अपिना—ज्ञातसङ्केतकस्य संग्रहः । उभयविधैरपि वर्णैः स्फोटाभिव्यक्तिरिति भावः। अत एव = अगृहीतसम्बन्धैरपि वर्णैः स्फोटाभिव्यक्तेरेव । *एकं पदमिति—एतद्व्यवहारस्य स्फोटविषयकत्वात् । अयम्भावः – यत्रागृहीतसम्बन्धैर्वर्णैः स्फोटाभिव्यक्तिस्तत्र पदादिप्रत्यक्षमात्रं न त्वर्थबोधः । यत्र तु गृहीतसम्बन्धैस्तैः स्फोटाभिव्यक्तिस्तत्र पदादिप्रत्यक्षमर्थबोधश्चेत्युभयम् । न च गृहीतसम्बन्धैर्वर्णैरेवोपपत्तौ स्फोटवैयर्थ्यम्, समुदायप्रत्यक्षासम्भवस्योपपादितत्वात् । *अत एवेति—वर्णातिरिक्तस्फोटस्य सत्त्वादेवेत्यर्थः । *तत्त्वबिन्दाविति—तत्र हि—वर्णसमुदायः पदं भवितुं नार्हति, वर्णानामाशु विनाशित्वादित्याशङ्क्य "स्यादेतदनवयवमेव हि वाक्यं वाक्यार्थस्य वाचकम्, नच वर्णा एवानुभूयन्ते न तदतिरिच्यमानशरीरमपि वस्त्विति वाच्यम्, पदमिति वाक्यमिति चानुसंहारबुद्धावभिन्नस्य वस्तुन उपारोहात्। न खल्वियं बुद्धिरभिन्नवस्तुनिर्भासा परस्परव्यतिरिच्यमानात्मनो वर्णानेव गोचरयितुमर्हति, एकत्वनानात्वयोरेकत्रासमवायात् । न च वर्णात्मनस्तत्समवायिनो वाक्यस्य कुतस्तदुपरागवती प्रख्या ? इति वाच्यम्, तदतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावात्" इत्युक्तम् । अयं भावः—वर्णातिरिक्तं पदं वाक्यं वा नोपलभ्यत इत्याशङ्क्यानुसंहार बुद्धौ ( साहित्यावगाहिज्ञाने ) पदमिति वाक्यमिति प्रतीत्या वर्णाभिन्नं तत्सत्त्वमिति समाधाय पुनर्नानावर्णात्मकं पदादि भवितुं नार्हति नाना वर्णा एकं पदमिति नानात्वैकत्वयोरेकत्र समवायस्य वक्तुमशक्यत्वात् । नन्वेवं वर्णात्मनो वाक्यस्य 'वाक्यम्' इति प्रख्या ( बुद्धिः ) कथम् ? इत्याशङ्क्य वाक्यादतिरिच्यमानमूर्तीनां परमार्थसतां वर्णानामभावादिति समाहितम्। अनेन स्फुटमेव वाक्यस्फोटमतमुपन्यस्तम्, स्फोटास्वीकारे 'वाक्यभिन्नानां परमार्थसतां वर्णानामभावाद् इत्युक्त्यसङ्गतेरिति। किञ्च प्रागुक्ते 'अइउण्' सूत्रभाष्ये 'आकाशदेशः शब्दः' इत्येकवचनोक्तिस्वारस्येनाद्यध्वनिमारभ्यान्तध्वन्यन्तेनैकस्यैव व्यङ्ग्यता लभ्यत इति स्फोटस्यैकत्वमखण्डत्वञ्च स्पष्टमेव प्रेक्षावताम् । न च वर्णातिरिक्तप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दादिविषयकं तदिति भ्रमितव्यम्, 'अकारमपि नोपलभते' इत्युपक्रम-ग्रन्थविरोधात् । अयं भावः—"नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते । अकारं पुनरुपलभते" अनेनाकारस्य नाना-त्वमाशङ्क्य "अकारमपि नोपलभते । किं कारणम् ? श्रोत्रोपलब्धि-बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलितः आकाशदेशः शब्दः" इत्युक्तम् । 'अकारमपि नोपलभते' इत्युक्त्या 'आकाशदेशः शब्दः' इत्येकवचनस्य पदाद्यविषयकत्वम् स्फोटविषयकत्वञ्च सूचितम् । पदवाक्ययोरकार-स्योपलभ्यमानत्वात् 'अकारमपि नोपलभते' इत्युक्त्यसङ्गत्यापत्तेरिति ।

मू०—परे तु—अवर्णादीनामेकत्वं नित्यत्वं विभुत्वं च । तदवयवकपदादेरपि तत्त्वम् । कण्ठताल्वाद्यभिघातस्तद्व्यञ्जकः ।

वर्णादीनां नित्यत्वादि-प्रदर्शनम्

देशभेदेऽपि पटादीनां देशघटितसन्निवेशाभेद-वत्कालभेदेऽपि तद्घटितानुपूर्व्या अभेदः ।

"प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् ।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते" ।। इत्युक्तेः ।
( वाक्यप० कां० कारि० )

दिनान्तरानुभूतेऽधुनाऽनुभूयमानस्य 'सोऽयम्' इति प्रत्यभिज्ञया तावत्कालं स्थिरत्वे सिद्धे 'तावत्कालं स्थिरं चैनं कः पश्चान्नाश-यिष्यति' इति न्यायात्पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम् । सर्वदेशेषु तदुपलम्भाद्विभुत्वम् । लाघ-वाच्चैकत्वम् । आनुपूर्वीघटकम् अव्यवहितोत्तरत्वं चैतत्पक्षे उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञानविषयत्वम् । यथाऽत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वं तद्वद् ज्ञानानामप्येतद्विषये स्थिरत्वम् ।

(रत्न०)—बाह्यवैखरीरूपाखण्डस्फोटमाह—*परेत्विति । *अवर्णादीना-मिति—आदिना-इकारादिसंग्रहः । *पदादेरिति-आदिना-वाक्यस्य ग्रहणम् । *तत्त्वमिति—विभुत्वं नित्यत्वमेकत्वञ्चेत्यर्थः । नन्वकारादेर्नित्यत्वे सर्वदा तदुपलब्ध्यापत्तिरत आह—*कण्ठेति । ननु वर्णानामुक्तधर्मत्रयाक्रान्तत्वेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न पदादेरेकत्वम्, कालभेदेन तद्घटितानुपूर्व्या भेदात्, तथा चानन्त्य-व्यभिचारदोष एवात आह—※देशेति—यथा 'प्रयाग' नगरवृत्तित्ववैशिष्ट्येन दृष्टं यच्छाटकं तदेव यदि 'काशी' वृत्तित्ववैशिष्ट्येन दृष्टं स्यात्तदाऽपि 'तदेवेदं शाकटं यत्प्रयागे दृष्टम्' इत्यभेदव्यवहारो जायते । न हि तत्र देशो भेदकस्तथा कालभेदेऽपि नह्यानुपूर्व्या भेदः, कालस्यानुपूर्व्यभेदकत्वात्तथैवानुभवात् । तत्र हरिसम्मतिमाह—※प्रत्यक्षमिति—प्रत्यक्षञ्च प्रत्यभिज्ञानञ्चेति समाहारद्वन्द्वः । श्रावणप्रत्यक्षविषयत्वात् 'सोऽयं ककारः' इति प्रत्यभिज्ञानाच्च वर्णाद्यैक्यम् । शब्दानां नित्यत्वं साधयति—※दिनान्तरेति । ※सोऽयमिति—शब्दान्तरे 'तादृशोऽयम्' इति प्रत्यभिज्ञायाः सम्भवेऽपि 'सोऽयम्' इति प्रत्यभिज्ञा न स्यादिति भावः । व्यतिरेके = अभावे । ※नित्यत्वेति—विनाशित्वाभावस्यैव नित्यत्वात् । ननु वर्णानां विभुत्वनित्यत्वयोः सत्त्वे तदव्यवहितोत्तरक्षणोत्पत्तिकत्वरूपानुपूर्वी न सिध्येदत आह—※अव्यवहितोत्तरत्वेति । एतत्पक्षे = नित्यत्वपक्षे । ※स्वज्ञानेति – उत्पत्त्यनवच्छिन्नः = उत्पत्त्यनधिकरणीभूतः यः 'घ'ज्ञानाधिकरणकालस्तत्कालोत्पत्तिकं यत् 'ट'ज्ञानं तद्विषयत्वरूपम् । तादृशञ्चाव्यवहितोत्तरत्वं टादौ सुलभम् । ननु ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वादनित्यत्वेन ज्ञानानामानन्त्येनानुपूर्व्या अप्यानन्त्यम्, अत आह—※ज्ञानानामिति—अयम्भावः—रागिणः पुरुषस्य कामेन ज्ञानस्थले एकमेव ज्ञानं बहुकालस्थायि प्रतीयते, तच्च नोपपद्यते, ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वादतस्तत्र ज्ञानधारा वीचितरङ्गन्यायेन कल्प्यते । तत्कल्पने गौरवादनधिगताबाधितार्थविषयकज्ञानत्वरूपप्रमात्वलक्षणस्याव्याप्तेश्च ज्ञानस्य स्वविरोधिज्ञानोत्पत्तिनाश्यत्वं स्वीकृत्य, तत्र च विरोधिज्ञानाभावेन तावत्कालमेकमेव कामिन्यादिज्ञानं यथा स्वीक्रियते तथाऽऽनुपूर्वीघटकवर्णविषयकज्ञानानामपि चरमवर्णज्ञानक्षणपर्य्यन्तमेकमेव ज्ञानमिति । नचैवमपि स्वविरोधिज्ञानोत्पत्तिपर्य्यन्तमेव तस्य स्थिरत्वेनानित्यतयाऽऽनुपूर्व्यानन्त्यं तदवस्थमेव, ऊर्ध्वाधःस्थानभेदेऽपि संस्थानाभेदवज्ज्ञानस्याप्यानुपूर्वीभेदकत्वाभावात् ।

मू०—शब्दबुद्धिकर्मणां क्षणिकत्वमिति तु न युक्तम्, 'इदानीं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जानामि उच्चारिताः' इति व्यवहारात् । अन्यथा क्षणस्यातीन्द्रियतया 'इदानीम्' इति ज्ञानासम्भवः । परस्य तूत्पत्त्यादीनां भेदव्याप्यानां विरोधिनां सत्त्वेन प्रत्यभिज्ञाऽनुत्पत्त्यापत्तिः । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयः, द्वयोर्घटयोः 'सोऽयम्' इति प्रत्यभिज्ञाऽऽपत्तेः, प्रत्यभिज्ञायाः व्यक्तिविषयकत्वे बाधकाभावाच्च । न च 'गकार उत्पन्नः' इति प्रतीतिर्बाधिका, 'श्यामो नष्टो रक्त उत्पन्नः' इति प्रतीते रूपगतोत्पत्तिविनाशारोपेण परम्परासम्बन्धेन वोपपत्तिवद् ध्वनिनिष्ठोत्पत्तेरारोपेण परम्परासम्बन्धेन वा तदुपपत्तेः ।

शब्दस्य नित्यत्वादि-निरूपणम्

(रत्न०)—योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नविभुविशेषगुणनाश्यत्वमिति तार्किकमतं खण्डयति—*शब्देत्यादिना । *न युक्तमिति—यथा द्वित्वादिप्रत्यक्षानुरोधेनापेक्षाबुद्धेः (अयमेकोऽयमेकः) क्षणत्रयावस्थायित्वं नैयायिकैरपि स्वीक्रियते तथेहापि स्वीकारे बाधकाभाव इति भावः । अन्यथा = वर्णादीनामस्थिरत्वे । *इदानीमिति—अस्य 'जानामि' 'उच्चारिताः' इत्युभयत्र सम्बन्धः । 'इदानीं जानामि' इत्यादेरस्मदभिन्नकर्तृवृत्तिवर्तमानकालिकैतल्लक्षणावच्छिन्नावरणभङ्गानुकूलो व्यापार इत्यर्थः । अत्र क्षणरूपकालस्य सूक्ष्मत्वेन तस्य तद्वृत्तिज्ञानस्य च ज्ञानं न स्यात् । "यावता समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः" इति पातञ्जलभाष्यम् । "निमेषस्य चतुर्थो भागः क्षणः" इति तट्टीकाकृतः । कर्म तज्जनितविभागादिश्च तदुपाधिः । तदुक्तं वल्लभाचार्यैः—

रवेः स्पन्दः क्षणस्तस्य, नानाक्षणविशिष्टता ।
क्रमो नानाविधोपाधिसम्बन्धः परिकीर्त्यते ॥ इति ।

शब्दोत्पत्तिवादिमते दूषणमाह—*परस्येति । *भेदव्याप्यानामिति—यद्यपि "यावद्विकारं तु विभागो लोकवत्" (वे० सू० २ । ३ । ७) इति वेदान्तसूत्राद्यद्यद्विभक्तं तत्तदुत्पत्तिमदिति उत्पत्तेर्व्यापकत्वं भेदस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्याप्यत्वमुपलभ्यते, तथापि समव्याप्तिस्थले उभयत्र व्याप्यत्वस्य व्यापकत्वस्य च सत्त्वेनादोषात् । *विरोधिनामिति — अभेदविरोधिनामित्यर्थः । नन्वभेदविरोधी भेदः, न तूत्पत्त्यादिरिति तत्सत्त्वेऽपि न क्षतिरिति चेत्, न, भेदोत्पत्त्योः समनियतत्वेनोत्पत्तिसत्त्वे भेदस्यापि सत्त्वेनादोषात् । *प्रत्यभिज्ञेति — 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञा न स्यादिति भावः । 'सोऽयं गकारः' इति प्रत्यभिज्ञा गकारे तद्व्यक्तित्वेन गकारप्रतियोगिकभेदाभावमवगाहते । गकारस्यानित्यत्वे तु तस्य प्रतिव्यक्तिभिन्नत्वेन व्यक्त्यन्तरे भेदाभावो वक्तुमशक्यः । *तद्विषय इति — तथा च भेदस्य प्रतियोगिताऽवच्छेदकेन सह विरोधाद् गकारे गत्वस्य सत्त्वेन तादृशभेदाभावात्प्रत्यभिज्ञा सुवचेति भावः । अत एव 'तदेवेदं शाटकं यत्काश्यां क्रीतम्' इति व्यक्तिभेदेऽपि प्रत्यभिज्ञा संगच्छते । *घटयोरिति — तद्व्यक्तित्वेन भिन्नयोरपि घटयोर्घटत्वसत्त्वात्तादृशप्रत्यभिज्ञापत्तिरिति भावः । 'तदेवेदं शाटकम्' इत्यादिस्तु सादृश्यमूलकाभेदारोपेण । सामान्यधर्मावच्छिन्नवाचकपदघटितप्रत्यभिज्ञावाक्यस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावावगाहित्वस्यैवौत्सर्गिकत्वात्तदाह — *प्रत्यभिज्ञाया व्यक्तिविषयकत्व इति । ननु वर्णानां नित्यत्वे 'गकार उत्पन्नः' इति प्रतीतिविरोधोऽत आह — *नच गकार उत्पन्न इति । *श्यामो नष्ट इति — श्यामगुणमात्रस्य नाशे रक्तगुणमात्रस्योत्पत्तौ गुणगतोत्पत्तिविनाशयोर्घटे आरोपात् स्वाश्रयसमवायित्वसम्बन्धेन सत्त्वाद्वा तादृशप्रतीतिवद् वर्णाभिव्यञ्जकध्वनिगतोत्पत्तिविनाशयोर्वर्णे आरोपात् स्वाश्रयध्वनिव्यङ्ग्यत्वसम्बन्धेन सत्त्वाद्वा 'गकार उत्पन्नः' इत्यादिप्रतीतेरुपपत्तेरिति भावः ।

मू०—वर्णोच्चारणस्थलेऽपि तत्तत्स्थाने जिह्वाया ईषदन्तरपाते वर्णानुपलब्धेर्ध्वन्युपलब्धेश्चानुभवेन हसितरुदितादौ जिह्वाभिघातवायुकण्ठसंयोगादेस्तज्जनकत्वस्यावश्यकत्वेन च वर्णोत्पत्तौ तदनङ्गीकारे प्रतिबन्ध्यप्रतिबन्धकभावकल्पनागौरवेण तत्सत्त्वावश्यकत्वात् । अत एव बहुषु शब्दमुच्चारयत्सु महाध्वनिः श्रूयते इति प्रतीतिः । यदि तु 'स एवायं शङ्खध्वनिः'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिप्रत्यभिज्ञया ध्वनीनामपि नित्यत्वं तर्हि तज्ज्ञानकारणीभूतवायुसंयोगनिष्ठं तत् तत्रारोप्यते, परम्परया बुध्यत इति वा बोध्यम् । एवमेव 'शब्दं कुरु' इत्यादिव्यवहारः । 'उच्चारय' इति तदर्थो वा । 'लोहितः स्फटिकः' इत्यादावारोप एव न तु परम्परया तत्प्रतीतिः । उक्ते स्वसमवायि-संयुक्तत्वं सम्बन्धः, 'स्फटिकस्य लौहित्यम्' इत्यत्र स्वसंयुक्तसमवेतत्वं सम्बन्ध इत्युभयोः सम्बन्धत्वकल्पने गौरवात् ।

(रत्न०)—ननु वर्णोच्चारणस्थले ध्वनिसत्त्वे मानाभावोऽत आह— ❀वर्णोच्चारणस्थलेऽपीति । ❀ईषदन्तरपात इति—किञ्चिद्दूरपतने सतीत्यर्थः । यत्र सम्यग्जिह्वासंयोगाभावाद्वर्णस्य नाभिव्यक्तिस्तत्र ध्वन्युत्पत्तिदर्शनाद्वर्णस्थलेऽपि कारणसत्त्वाद् ध्वनिः स्वीकार्य इति भावः । ननु ध्वन्युत्पत्तिं प्रति वर्णोत्पत्तिसामग्र्याः प्रतिबन्धकत्वाद्वर्णस्थले ध्वनेरभावोऽत आह—❀वर्णोत्पत्तौ तदनङ्गीकार इति । तत्सत्त्वस्य = ध्वनिसत्त्वस्य । ❀अत एवेति—वर्णोच्चारणस्थलेऽपि ध्वनिसत्त्वादेवेत्यर्थः । ❀महाध्वनिः श्रूयत इति—अस्य 'दूरस्थस्य शब्दाज्ञानेऽपि' इत्यादिः । ननु 'स एवायं शङ्खध्वनिः' इति प्रत्यभिज्ञया ध्वनेरपि नित्यत्वे उक्तरीत्या गकारादिगतोत्पत्तिविनाशयोरुक्तप्रतीत्यनुपपत्तिरत आह—❀यदित्विति । ❀तज्ज्ञानेति—ध्वनिज्ञानेत्यर्थः । तत् = उत्पत्तिविनाशादि । तत्र = वर्णे । परम्परया = स्वाश्रयव्यङ्ग्यव्यङ्ग्यत्वसम्बन्धेन । स्वम् = उत्पत्त्यादि ।❀एवमेवेति—वायुसंयोगगतामुत्पत्तिमारोप्य स्वाश्रयव्यङ्ग्यव्यङ्ग्यत्वसम्बन्धेन तत्सत्तामादाय वा व्यवहार उपपादनीय इति भावः । उच्चारय = कण्ठताल्वाद्यभिघातेनाभिव्यञ्जय । ❀लोहितः स्फटिक इति—अत्र जपाकुसुमादिगतलौहित्यस्य स्फटिके आरोप एव । परम्परया—स्वसमवायि-संयुक्तत्वसम्बन्धेन । उक्ते = 'लोहितः स्फटिकः' इत्यत्र । ❀स्फटिकस्य लौहित्यमिति—पूर्वत्र स्फटिकस्य विशेष्यत्वमत्र तु लौहित्यस्य । तथा चात्र स्वः स्फटिकस्तत्संयुक्तत्वं जपाकुसुमादौ तत्समवेतत्वं लौहित्य इति सम्बन्धद्वयप्रतीतिकृतगौरवमिति भावः ।

मू०—वस्तुतः सर्वत्रारोप एवोचितः, 'रसो रूपवान्' इत्याद्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतीत्या परम्परासम्बन्धस्य विशिष्टबुद्ध्यनियामकत्वात् । एवमुदात्तत्वादिकमपि तन्निष्ठमेव तत्रारोप्यत इति नोदात्तादिगुणभेदादनेकत्वं वर्णानाम् । किञ्च प्रागनुपलभ्यमानत्वे सत्युपलभ्यमानत्वादिरूपेणोत्पन्नविनष्टसादृश्येन तत्रोत्पत्तिविनाशयोरारोपः ।

किञ्च प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्न वर्णेष्वनुभवः, 'वर्णमुच्चारयति'इत्येव प्रत्ययात् । उच्चारितत्वञ्च-कण्ठताल्वाद्यभिघातजन्याभिव्यक्तिविशिष्टत्वम् । स्त्रीशुकाद्यनुमापकं तज्जन्यताऽवच्छेदकवैजात्यं च ध्वनिनिष्ठं वायुसंयोगनिष्ठं वा वर्णेष्वारोप्यत इति तदुपपत्तिः । तारत्वाद्यपि तन्निष्ठमेव । अत एव भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इति देवताऽधिकरणे ( वे० सू० १।३।२६ ) अभिहितम् ।

(रत्न०)—तत्त्वारोपेऽपि सम्बन्धस्यैव नियामकतया सम्बन्धज्ञानपूर्वकारोप एव गौरवमत आह—*वस्तुत इति । *'रसो रूपवान्' इति—रस-समवायि-समवेतत्वरूपवैशिष्ट्यस्य रूपे सत्त्वात् । तन्निष्ठमेव = वायुसंयोगनिष्ठमेव । तत्र = वर्णे । *आरोप्यत इति = इतिर्हेतौ । ननु वाहीके गोत्वारोपे यथा जाड्यादिप्रयोज्यसादृश्यं हेतुस्तथा प्रकृते आरोपनिमित्ताभावोऽत आह—*किञ्चेति । *उत्पन्न विनष्टेति—उत्पादविनाशशालिनि वायुसंयोगे नित्ये वर्णे च प्रागनुपलभ्यमानत्वे सत्युपलभ्यमानत्वरूपधर्मसत्त्वेन तत्प्रयोज्यमेव तयोः सादृश्यमारोपनिमित्तमिति भावः । *इत्येव प्रत्ययादिति—एवेन 'उत्पादयति' इति प्रतीतेर्व्यवच्छेदः । ननूच्चारितत्वमुत्पादितत्वमेवेति तत्रोत्पत्तिसिद्धिरत आह—*उच्चारितत्वञ्चेति । ननु शब्दानां नित्यत्वे 'इदं पदम् , स्त्र्युच्चरितं शुकाद्युच्चरितं वा, स्त्रीशुकादिकण्ठताल्वादिनिष्ठजनकतानिरूपितजन्यताऽवच्छेदकविलक्षणधर्मवत्त्वाद्' इति लोकप्रतीतिसिद्धानुमित्यसिद्धिरत आह—*स्त्रीशुकादीति । तदुपपत्तिः = अनुमित्युपपत्तिः । तारत्वादि = उच्चैस्तरत्वादि । तन्निष्ठमेव = वायुसंयोगनिष्ठमेव । *भामत्यामिति—तत्र हि—"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" (वे० सू०१।३।२८) इति सूत्रव्याख्याऽवसरे गकारादिवर्णानां नित्यत्वं स्वीकृत्याशङ्कितम् "यद् युगप-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विरुद्धधर्मसंसर्गवत्, तन्नाना, यथा गवाश्वादिर्द्विशफैकशफकेसरगलकम्बलादिमान्, युगपदुदात्तानुदात्तादिविरुद्धधर्मसंसर्गवांश्चायं वर्णस्तस्मान्नाना भवितुमर्हति। नचोदात्तादयो व्यञ्जकधर्मा न वर्णधर्मा इति साम्प्रतम्, व्यञ्जका ह्यस्य वायवस्तेषामश्रावणत्वे कथं तद्धर्माः श्रावणाः स्युः। इदं तावदत्र वक्तव्यम्—न हि गुणगोचरमिन्द्रियं गुणिनमपि गोचरयति, मा भूवन् घ्राणादीनां पृथिव्यादयो गोचराः। एवञ्च मा नाम भूद् वायुगोचरं श्रोत्रम्, तद्गुणाँस्तूदात्तादीन् गोचरयिष्यति। ते च शब्दाः संसर्गग्रहाच्छब्दधर्मत्वेनाध्यवसीयन्ते। न च शब्दस्य प्रत्यभिज्ञादिनाऽवधृतैकत्वस्य स्वरूपत उदात्तादयो धर्माः परस्परविरोधिनोऽपर्य्यायेण सम्भवन्ति। तस्माद्यथा मुखस्यैकस्य मणिकृपाणदर्पणाद्युपधानवशान्नानात्वादिविभ्रमः, एवमेकस्यापि वर्णस्य व्यञ्जकध्वनिनिबन्धनोऽयं विरुद्धनानाधर्मसंसर्गविभ्रमः, न तु स्वाभाविकः" इत्युक्तम्। एतेन तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यत इति स्पष्टमेवाभिहितं भवतीति।

मू०—यद्वा, तारत्वादयो गुणाः शब्दनिष्ठास्तदाश्रयत्वाच्छब्दस्य द्रव्यत्वम्, आकाशरूपद्रव्याश्रितत्वाद् गुणत्वं च। कस्यचित्कश्चिद्वायुसंयोगस्तारत्वव्यञ्जकः, अपरस्य तु मन्दत्वव्यञ्जकः, तयोर्विरोधव्यवहारोऽपि येन वायुसंयोगेन यं प्रति तारत्वं व्यज्यते तम्प्रति मन्दत्वाऽव्यञ्जनमूलकः। परैस्तु कण्ठताल्वाद्यभिघातोत्पन्नस्य केनचिन् मन्दत्वेन ग्रहणं केनचित्तारत्वेन ग्रहणमित्यत्र वीजं निर्वक्तुमशक्यम्। एतत् "उच्चैरुदात्तः" (पा० सू० १।२।२९) इत्यत्र भाष्ये स्पष्टम्। शुक-सारिका-नवनार्याद्युच्चारणव्यङ्ग्येषु तत्तदुच्चारितत्वानुमापकानि वैजात्यान्यपि वर्णनिष्ठानि विजातीयवायुसंयोगव्यङ्ग्यान्येव।

प्रकृतिविकृतिभावस्तु बुद्धिविपरिणामेनैवोक्तरीत्या निर्वाह्यः। अन्यगतोत्पत्त्यादेरन्यत्रारोपे बीजं तु अन्तःकरणस्य रागादिदोष एव। 'सेयं दीपकलिका' इत्यादौ क्षणान्तरेण नाशसिद्धेः 'सेयम्' इत्यंशे भ्रमत्वम्। न च नित्यत्वे वायुसंयोगादेः ककारादि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्यक्षत्वं कार्यताऽवच्छेदकं वाच्यम्, मम तु कत्वमेवेति लाघवमिति वाच्यम्, अनन्तप्रागभावध्वंसादिकल्पनाऽपेक्षया लघुत्वात्, प्रत्यक्षत्वावच्छिन्नविषयतया कत्वस्यैव कार्यताऽवच्छेदकत्वाच्च । न चैवं घटाद्यपि नित्यं स्यात् कपालसंयोगादिकं व्यञ्जकं भविष्यतीति वाच्यम्, वर्णवदत्र तद्ग्रह–विपरीतग्रहयोरभावेनोत्पत्तिप्रतीतेर्विना बाधकं भ्रमत्वायोगात् ।

(रत्न०)–पूर्वं भामत्यां तारत्वादीनां विरोधं स्वीकृत्यारोप उक्तः, वस्तुतः स एव नेत्याह – *यद्वेति । *निष्ठा इति – अविरोधादिति भावः। *द्रव्यत्वमिति—गुणाश्रयस्यैव द्रव्यत्वादिति भावः । *द्रव्याश्रितेति—क्वचित्—'द्रव्याश्रयत्वात्' इति पाठस्तत्पक्षे आकाशरूपं द्रव्यमाश्रयो यस्येति बहुव्रीहिः । ननु न हि द्रव्याश्रितत्वं गुणत्वप्रयोजकम्, क्रियायामपि सत्त्वादिति चेत्, न, विभुत्वविशिष्टद्रव्याश्रितत्वस्य साधनत्वात् । स्वमते "उच्चैरुदात्तः" इति सूत्रस्थं भाष्यं प्रमाणयन् परमते विरोधमाह — *कस्यचिदित्यादिना—तत्र हि भाष्ये—"उच्चनीचस्यानवस्थितत्वात् संज्ञाऽप्रसिद्धिः" इदमुच्चनीचमनवस्थितपदार्थकम्, तदेव हि कश्चित् प्रत्युच्चैर्भवति कश्चित्प्रति नीचैः । एवं हि कश्चित्कञ्चिदधीयानमाह 'किमुच्चै रोरूयसे, अथ नीचैर्वर्तताम्' इति । तमेव तथाऽधीयानमपर आह 'किमन्तर्दन्तकेनाधीषे उच्चैर्वर्तताम्' इति । एवमुच्चनीचमनवस्थितपदार्थकं तस्यानवस्थितत्वात्संज्ञाया अप्रसिद्धिः" इत्युक्तम् । *तारत्वव्यञ्जक इति—'व्यञ्जक' इत्युक्त्या तारत्वादीनामपि नित्यत्वं सूचितम् । ननु वर्णस्य तारत्वादेश्च नित्यत्वे उदात्तत्वानुदात्तत्वयोर्विरोधोऽनुपपन्नोऽत आह—*तयोर्विरोधेति । *येन वायुसंयोगेनेति—यो हि वायुसंयोगो यं प्रति तारत्वस्य व्यञ्जकः स तं प्रति मन्दत्वव्यञ्जको न भवतीति मन्दत्वव्यञ्जकत्व–तारत्वव्यञ्जकत्वरूपधर्मगतं विरोधमादाय व्यङ्ग्ययोरपि तयोर्विरोधः । *परैस्त्विति — अस्य 'वक्तुमशक्यम्' इत्यत्रान्वयः । अनित्यत्ववादिनये एकत्रैकस्यैव धर्मस्य सत्त्वात् तादृशव्यवहारानुपपत्तिरेवेति भावः । *वैजात्यानीति — विलक्षणधर्माणीत्यर्थः । *विजातीयेति — केनचिद्वायुसंयोगेन स्त्र्युच्चारितत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधकं वैजात्यं द्योत्यते, केनचिच्छुकाद्युच्चारितत्वबोधकमित्यभिव्यक्ताद्वैजात्यात्तत्तदनुमानम् । ननु नित्यत्वे प्रकृतिविकृतिभावोऽनुपपन्नोऽत आह—*प्रकृतिविकृतिभावेति । नन्वारोपे प्रागनुपलभ्यमानत्वे सति उपलभ्यमानत्वमूलकसादृश्यरूपं बीजमुक्तमेवेति चेत्, न, यथाकथञ्चित्सादृश्यस्य सर्वत्रैव सत्त्वेनातिप्रसङ्गादिति बीजान्तरमाह—*रागादिदोष इति—ननु दीपकलिकाया अनित्यत्वेऽपि 'सेयं दीपकलिका' इति भ्रमात्मिका यथा प्रत्यभिज्ञा तथा प्रकृतेऽपि स्यादत आह—*सेयमिति—तत्र वातादिना प्रत्यक्षतोऽनित्यत्वदर्शनरूपबाधसत्त्वाद् भ्रमत्वमिति भावः । *वायुसंयोगादेरिति—अनित्यत्ववादिनये वायुसंयोगनिष्ठजनकतानिरूपिता जन्यता ककार इति कत्वमेव तन्निष्ठजन्यताऽवच्छेदकमिति लाघवम् । नित्यत्वनये ककारस्य नित्यत्वात् तत्र जन्यताया वक्तुमशक्यत्वात् तद्विषयकज्ञाने जन्यता वाच्या, तदवच्छेदकञ्च ककारविषयकज्ञानत्वं वाच्यमिति कत्वापेक्षया तत्र धर्मे शरीरकृतमुपस्थितिकृतञ्च गौरवं स्पष्टमेवेत्यनित्यत्वपक्ष एव ज्यायानित्यत आह—*अनन्तप्रागभावेति—तथा च जन्यताऽवच्छेदकमात्रे लघुत्वेऽपि गौरवमेव तत्पक्ष इति भावः । तत्रापि लाघवमाह—*प्रत्यक्षत्वेति—अयं भावः—नित्यत्वपक्षे वायुसंयोगनिष्ठजनकतानिरूपिता ककारविषयकप्रत्यक्षनिष्ठा या जन्यता तदवच्छेदकं न हि तादृशप्रत्यक्षत्वं किन्तु लाघवात्कत्वमेव । ननु समानाधिकरणधर्मस्यैवावच्छेदकत्वनियमाज्ज्ञानवृत्तिजन्यतायाः कत्वे तदसम्भव इति चेत्, न, स्वनिष्ठविषयतानिरूपकत्वसम्बन्धेन कत्वस्यापि प्रत्यक्षज्ञानवृत्तित्वात् । तथा च जन्यताऽवच्छेदकताऽवच्छेदकसम्बन्धः स्वनिष्ठविषयतानिरूपकत्वरूपः न तु समवाय इति भावः । *वर्णवदिति—वर्णे यथा 'उत्पादयति' इति व्यवहाराभावेनोत्पत्त्यग्रहः 'सोऽयम्' इति प्रत्यभिज्ञया नित्यत्वग्रहश्च तथाऽत्र घटादावुत्पत्त्यग्रहस्य नित्यत्वग्रहस्य चाभावेन तत्र बाधकाभावादुत्पत्तेरभ्रमत्वमेव । *तदग्रहेति—तस्या उत्पत्तेरग्रहस्तदग्रहः, उत्पत्तेरग्रह इति यावत् । विपरीतम्=उत्पत्तेर्विपरीतं नित्यत्वं तस्य ग्रहो विपरीतग्रहः=नित्यत्वग्रहः । एवञ्च तदग्रहश्च विपरीतग्रहश्चेति द्वन्द्वे षष्ठी । 'अभाव' पदस्योभयत्र सम्बन्ध इति । उत्पत्तिज्ञानाभावाभावेनेत्यस्योत्पत्तिज्ञानेनेत्यर्थः । विपरीतज्ञानाभावेनेत्यस्यानित्यत्वज्ञानेनेत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—किञ्च तत्कुलालव्यापारानन्तरमनुभूयमानस्य तद्व्यापारतः प्रागनुभूतेन घटेन नाभेदप्रत्यभिज्ञा, अत्र त्वेतत्कण्ठताल्वादिव्यापारानन्तरमनुभूयमानस्य ततः प्रागनुभूतेनैवाभेदप्रत्यभिज्ञेति विशेषात् । नित्यत्वं चैषां सृष्ट्याद्यकालोत्पत्तिकत्वं प्रलयकालनाश्यत्वं चेत्येतावदेव ।

अत एव "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः"–( मीमां० द० १।१।५ ) इत्युक्तं जैमिनिना । 'औत्पत्तिक'शब्देनेदमेव नित्यत्वं वक्तुं शक्यम् , नान्यादृशम् । एवमत्राधिकरणे उक्तेन शब्दार्थसम्बन्धनित्यत्वेन वेदस्य निरपेक्षबोधकत्वरूपं प्रामाण्यं समर्थ्य शब्दार्थसम्बन्धनित्यत्वमयुक्तम् , शब्दानामनित्यत्वादिति तदाक्षेपसमाधानाय शब्दनित्यतासिद्धान्तसूचकं शब्दाधिकरणमारब्धम् । तच्च वाचकनित्यतापर्यन्तं तात्पर्यमवगमयति, न तु वर्णनित्यतामात्रे इति बोध्यम् ।

(रत्न०)—ननु तदग्रहविपरीतग्रहयोरभावः स्ववासनाकल्पित एवात आह—*किञ्चेति । *व्यापारानन्तरमनुभूयमानस्येति—उत्पत्त्यनन्तरमनुभवविषयीभूतस्य घटस्य तद्व्यापारात्प्रागनुभूतेन घटान्तरेण भेदप्रत्यभिज्ञा न जायते । वर्णस्थले तु कण्ठताल्वादिव्यापारानन्तरमनुभूयमानस्य गकारस्य ततः प्रागनुभूतेन गकारेण 'सोऽयं गकारः' इति प्रत्यभिज्ञा जायते इति विशेषात्=भेदान्नित्यत्वं तस्य । ननु वर्णानां पारमार्थिकनित्यत्वे 'ब्रह्म सत्यं जगन्मिथ्या' इति सिद्धान्तभङ्गः, वर्णानामपि सत्यत्वादित्यत आह—*नित्यत्वञ्चेति—सृष्ट्याद्यकालिकोत्पत्तिकत्वे सति प्रलयाव्यवहितप्राक्क्षणोत्पत्तिकध्वंसप्रतियोगित्वरूपं नित्यत्वं पारिभाषिकमेव, घटाद्यपेक्षया चिरकालस्थायित्वादारोपितं वा । *औत्पत्तिकस्त्विति—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धेस्तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" ( मीमां० द० १।१।५ ) इति मीमांसासूत्रम् । प्रत्यक्षाद्यगम्यत्वाद्धर्मज्ञानं कथं स्यादिति तदुपन्यासः । अस्यार्थश्च—शब्दार्थयोः सम्बन्ध औत्पत्तिकः=

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्पत्तिर्भावस्तेनावियुक्तः, उत्पत्तिकालमारभ्य प्रलयपर्य्यन्तस्थायी। नोत्पन्नयोरनयोः पश्चात्सम्बन्ध इति भावः। नित्य एव सम्बन्ध इति यावत्। ज्ञायतेऽनेनेति ज्ञानम्, करणे ल्युट्। उपदिश्यतेऽनेनेति 'उपदेशः' करणे घञ् बाहुलकात्। तस्येत्यस्य ज्ञानैकदेशे 'ज्ञा' धात्वर्थेऽन्वयः, तथा च तस्य धर्मस्य ज्ञाने करणमुपदेशः = वाक्यम्। विधिवाक्यबोधित एव धर्म इत्यर्थः। अस्य ज्ञानकरणस्य शब्दस्यार्थेऽव्यतिरेकः = व्यभिचाराभावः। प्रकारान्तरेण धर्मानुपलब्धेर्विधिवाक्यमेव धर्मे प्रमाणम्, ज्ञानान्तरे तस्यानपेक्षत्वाद्। बादरायणस्यापि सम्मतमेतत्। शब्दार्थसंकेतस्य पौरुषेयत्वात्तस्य सापेक्षत्वाद्विधिवाक्यानामप्रामाण्यमिति पूर्वपक्षः। शब्दार्थसम्बन्धस्य पुरुषप्रयत्नानपेक्षत्वान्नाप्रामाण्यमिति राद्धान्तः। शब्दनित्यतासिद्धान्तकमधिकरणमप्यत्र प्रमाणयति—॰अत्राधिकरण—इत्यादिना। तस्मात्प्रवाहानादित्वमेव शब्दे नित्यत्वं न तु प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपम्, उक्तसूत्रविरोधात्। ननु वर्णानां नित्यत्वाभिप्रायकं तदत आह—॰तच्च वाचकेति।

मू०—अत एवानेककर्तृकोच्चारणविषयेऽपि 'एकमिदं घटपदम्' इति प्रत्ययः। 'एक इन्द्रशब्दोऽनेकेषु क्रतुष्वाविर्भवति' इत्यादिना 'सरूप'सूत्रे (पा० सू० १।२।६४) भाष्ये स्फुटमेतत्। नहीयमेकत्वधीर्वर्णविषया, तेषामनेकत्वात्। वनराश्याद्यप्यतिरिक्तमेव। नचैकार्थबोधहेतुत्वेनैकत्वम्, 'तेनैकत्वमेकत्वेन चैकार्थधीहेतुता' इत्यन्योऽन्याश्रयापत्तेः, किञ्चार्थबोधाभावेऽपि 'एकं पदम्' इत्यादेरप्रसिद्धार्थपदश्रवणे दर्शनाद्। एकबुद्धिविषयत्वेन तु न तत्त्वम्, सर्वोच्चारणविषयेन्द्रशब्दानामेकज्ञानविषयत्वासम्भवात्। नचैकजातीयबुद्धिविषयत्वम्, 'विषयैक्ये बुद्धीनामेकजातीयत्वं तदेकजातीयत्वेन च विषयैक्यम्' इत्यन्योऽन्याश्रयात्। किञ्चैवम् 'एकः पटः' इति व्यवहारस्याप्येकबुद्धिविषयतत्समूहेनैवोपपत्तौ तत्राप्यतिरिक्तावयव्यसिद्ध्यापत्तिः। यदि तत्र 'एकः' इति व्यवहारात्तत्सिद्धिस्तर्हि प्रकृतेऽपि समम्। न च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'एक इन्द्रशब्दः' इत्यस्य एकजातीय इत्यर्थः, तावच्छब्दकल्पनं तत्र चैकजातिकल्पनमित्यपेक्षया तदेकत्वस्यैवौचित्यात्, घटत्व-जात्यैक्येन दशसु घटेषु 'एको घटः' इति प्रतीत्यापत्तेश्च, 'एक-जातीय इन्द्रशब्दः' इत्यव्यवहाराच्च ।

(रत्न०)—अत एव = वाचकशब्दानां नित्यत्वादेव । अनेककर्तृको-च्चारणकर्म्मीभूतेऽपि घटादिपदे 'एकमेव पदमुच्चारयन्त्येते' इति व्यवहारः । ननु 'एक इन्द्रशब्दः' इत्यत्र वर्णविषयिण्येवैकत्वधीरत आह—*न हि एकत्वधीरिति । ननु यथा 'वन' शब्दस्यैकत्ववैशिष्ट्येनैव वृक्षसमूहबोध-कत्वं तथा पदानामनेकत्वेऽप्येकत्वबुद्धिः स्यादत आह—*वनराश्या-द्यपीति—यथा न हि कपालद्वयरूपो घटः किन्त्ववयवादवयव्यन्तरमुत्पद्यते एवं न हि वृक्षसमूहरूपं वनम् 'वन' शब्देनोच्यते किन्तु वृक्षसमूहरूपाद-वयवादुत्पन्नमवयव्यन्तरम्, तच्चैकमेवेति दृष्टान्तासङ्गतिः । अन्यथाऽ-नित्यत्ववादिनयेऽवयवापेक्षयाऽवयविनोऽतिरिक्तत्वं न सिद्ध्येत् । *न चैकार्थेति—एकत्वविशिष्टार्थविषयकबोधजनकत्वेन पदेऽप्येकत्वव्यवहार इत्यर्थः । *तेनेति—एकार्थबोधहेतुत्वेनेत्यर्थः । *एकत्वमिति—एकपदजन्य-बोधविषयत्वस्यैवैकार्थत्वेनार्थे एकत्वं पदगतैकत्वप्रयोज्यं पदे एकत्वञ्चार्थ-गतैकत्वप्रयोज्यमित्यन्योऽन्याश्रयः । ननु न ह्यर्थप्रत्ययात् पूर्वमेतावन्तो वर्णा एकस्मृतिसमारोहिणो न भवन्ति । न च तत्प्रथाऽनन्तरं मध्यमवृद्ध-स्यार्थधीर्नोन्नीयते तदुन्नयनाच्च तेषामेकार्थधियं प्रति कारणत्वमेकमव-गम्यैकं पदत्वाध्यवसानमिति नान्योऽन्याश्रय इत्यरुचेराह—*किञ्चैकार्थेति-अर्थबोधाभावेऽपि 'एकं पदम्' इति व्यवहारदर्शनादेकार्थधीहेतुत्वस्य न पदैकत्वप्रयोजकत्वम् । ननु बुद्धिगतैकत्वमादाय पदे एकत्वव्यवहारोऽत आह—*एकबुद्धिविषयत्वेनेति । *एकज्ञानेति—शब्दरूपविषयभेदेन ज्ञानस्यापि भेदादिति भावः । ननु शब्दरूपविषयभेदेन बुद्धिभेदेऽपि बुद्धि-गतसाजात्यवृत्त्येकत्वमादाय तथा व्यवहारोऽत आह—*न चैक-जातीयेति । *विषयैक्य इति—'विषयैक्येन बुद्धेरेकजातीयत्वं तेन च विषयैक्यम्' इत्यन्योऽन्याश्रयात् । तत्समूहेन = तन्तुसमूहेन । समूहस्यै-वैकबुद्धिविषयतया 'एकः पटः' इति व्यवहारोपपत्ताववयवसमुदायाति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रिक्तोऽवयवी न सिद्ध्येदिति सिद्धान्तभङ्ग एव स्यादिति भावः । ॐताव-च्छब्देति — अनन्तशब्देत्यर्थः । ॐतदेकत्वेति — पदैकत्वेत्यर्थः । जाति-गतैकत्वमादाय व्यक्तावेकत्वव्यवहारेऽतिप्रसङ्गः स्यादित्याह — ॐघटत्व-जात्यैक्येनेति । तत्र हि 'दश घटाः'इत्येव व्यवहारो न तु 'एको घटः' इति । ॐएकजातीय इति — अनेकेष्विन्द्रशब्देषूच्चारितेषु 'एकमिन्द्रशब्द-मुच्चारितवन्तः'इत्येव व्यवहारो न त्वनेकमिति ।

मू०-तच्चेदं पदं प्रकृतिप्रत्ययविभागवत् । प्रकृत्यादिकमपि नित्यमेव । यद्वाऽखण्डमेव तत् । अन्यथा वर्णानामपि "तस्यादित—" ( पा० सू० १।२।३२ ) इति शास्त्रबलादृकारादिषु च रेफलकाराकारेकारोकारादिभागानामनुभवसिद्धत्वाच्च भागवत्त्वे भागानामपि तुल्यन्यायादवयवकल्पनायां परमाणुतुल्यानामवशेषः स्यादिति यैव घटादीनामवयवसमुदायरूपत्वे दुरवस्था सैवात्रापि । एवं च पदपदार्थव्यपदेशरहितं निरीहमेव जगत्स्यात् । किञ्च सावयवत्वे, नित्यताभङ्गश्चेति । वाक्यमपि पद-विभागरहितमखण्डमेव, "वाक्यादपोद्धृत्य पदान्यन्वाख्यायन्ते" इति भाष्यात् । तत्र क्वचिद्वाक्यस्यैव विभज्यान्वाख्यानं क्वचित्पदस्यैवेति लक्ष्यानुरोधाद् व्यवस्था । न च वर्णेषु नावयवाः, तद-वभासस्तु तत्तदुच्चारणविशेषव्यङ्ग्यतत्तद्वर्णसमानाकारक्रमिक-ध्वनिविशेषोपरागोपाधिरिति वाच्यम् , पदे वर्णावभासस्य वाक्ये पदावभासस्याप्येवमेवोपपत्तेः । शास्त्रं तु 'रेखागवय'न्यायेनेत्याहुः ।

(रत्न०)—शास्त्रस्वारस्यानुरोधेन सखण्डत्वपक्षमाह—ॐतच्चेति — नित्यम्, विभु, एकञ्चेत्यर्थः । ॐनित्यमेवेति — पदानां नित्यत्वात्तेषामपि नित्यत्वमेवोचितमिति भावः । अनवस्थाभयादखण्डपदपक्षमाह — ॐयद्वेति । ॐतस्यादित इति—'अर्धह्रस्वम्' इति श्रवणाद्वर्णानां सावयवत्व-मिति भावः । वर्णानां सावयवत्वे लोकानुभवमाह — ॐऋकारादिषु चेति — 'ऋ' 'ऌ' वर्णयो रेफलकाररूपभागस्य 'ऐ' 'औ' इत्यत्रेकारो-कारयोर्भागयोर्दर्शनाद् भागस्यापि सभागत्वे तस्यापि सभागत्वमित्येव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मनवस्था स्यादिति भावः । ॐदुरवस्थेति — अप्रत्यक्षादिरूपा दुरवस्थे-त्यर्थः । परमाणुपुञ्जात्मकस्य घटस्योत्पाद्यमानत्वाभावादिति भावः । किञ्च परमाणूनां निरवयवत्वेऽवयवसंयोगाभावाद् द्व्यणुकाद्युत्पत्तिर्न स्यात् । तदुक्तं हरिणा—

"भागानामनुपश्लेषान्न वर्णो न पदं भवेत् ।
तेषामव्यपदेश्यत्वात्किमन्यदुपदिश्यताम्" ।। इति ।
(वाक्यप० कां० २ कारि० २९)

अस्यार्थः—वर्णानामनुपश्लेषान्न वर्णः कश्चनैकः स्यात् । तदभावे पदं न स्यात् । पदाभावे वाक्यं न स्यादिति किं तदेकं वाचकत्वेन व्यवह्रियेत ? इति निरीहमेव जगत्स्यात्, व्यवहारप्रयोजकशब्दाभावादिति भावः । अत्रापि = पदादिविषयेऽपि । एवञ्च = पदाद्यसिद्धौ च । निरीहमेव = निष्क्रियमेव । ॐनित्यताभङ्गश्चेति — सावयवस्य नाशदर्शनादिति भावः । ॐअखण्डमेवेति—उक्तरीत्या लाघवाच्चेति भावः । वाक्यस्याखण्डत्वे भाष्यप्रमाणमाह— ॐवाक्यादिति । ॐअपोद्धृत्येति–सखण्डत्वे 'अपोद्धृत्य' इति न वदेत्, अपोद्धरणस्य कल्पनारूपत्वात्कल्पनायाश्चासत्त्वे एवावश्यकत्वात् । नन्वेवम् 'वाक्यसंस्कारपक्षः' इत्याद्युक्तिरसङ्गतैव स्यादित्याह— ॐक्वचिदिति । ॐवाक्यस्यैवेति—अत्र केचित्–'कानि सन्ति' इत्यादौ युगपत्संस्कारो नोचितः, सर्वेषां युगपद्बुद्धिविषयत्वस्यानुभवविरुद्धत्वात्तस्माद्वाक्यस्य प्रविभज्यान्वाख्याने वाक्यसंस्कार इत्येवार्थ इति । सिंहावलोकनन्यायेन पूर्वप्रदर्शितं वर्णेष्ववयवं खण्डयति— ॐन च वर्णेष्विति । ॐएवमेवेति — रेफसदृशध्वन्युपरागवशाद् रेफावभास इव पदे वर्णावभासः वाक्ये पदावभासः कल्पित एवेति भावः । ननु पदानां नित्यत्वे शास्त्रवैयर्थ्यमत आह—ॐशास्त्रं त्विति । ॐरेखेति--रेखाकल्पितगवयेन यथा वास्तविकगवयस्य ज्ञानं तथा कल्पितेन प्रकृत्यादिनाऽखण्डपदादिज्ञानं स्यादिति भावः ।

**मू०—तन्न, अनेकवर्णध्वनिकल्पने मानाभावात्, अवर्णानामैक्यमवर्णककारादीनां चानेकत्वमित्यर्धजरतीय१†स्यान्याय्य-**

---

१ † अर्द्धं जरतीवार्द्धजरतीयम् । "समासाच्च तद्विषयात्" (पा० सू० ५।३।१०६) इति सूत्रेणेवार्थे छप्रत्यये साधु । "अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे"



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आरोपितकत्वादिरूपेण एकस्य स्फोटस्यैव श्रोत्रग्राह्यत्वम्, कैयटसम्मतसाधारणजातिखण्डनञ्च

त्वाच्च । तस्मादुक्तरीत्याऽऽकाशवृत्तिरेकः स्फोट एव श्रोत्रग्राह्यः । अत एव च 'एको गकारः' इति प्रत्ययः । कत्वादिकं चाभिव्यञ्जकवायुनिष्ठं तत्तत्स्थानाभिघातव्यङ्ग्यम् । कत्वादिवैजात्याक्रान्तैः स्वरूपरूषितस्य भानं तदनाक्रान्तैस्तु ध्वनिरूपेण । 'ककार उत्पन्नः' इत्यादिप्रत्ययस्तु प्राग्वदेव ज्ञाननिष्ठोत्पत्त्याद्यारोपेण । न च वायुनिष्ठकत्वादेः श्रोत्रेण ग्रहे 'येन यस्य धर्मो गृह्यते तेन तदपि' इति न्यायेन वायूनामपि श्रोत्रेण ग्रहणापत्तिरिति वाच्यम्, यद्वृत्तितया धर्मग्रहणं तस्यैव धर्मिणस्तेन ग्रहणस्य चक्षुरादौ क्लृप्तत्वात् । स्फोटवृत्तितया च तस्य श्रोत्रेण ग्रहणं न वायुवृत्तितया ।

रसनाऽऽदौ रसादिमात्रग्राहकताया दृष्टत्वाच्च । व्यञ्जकगतवैजात्यमादायैव ककारहकारयोर्भेदव्यवहारः । अद्वैतसिद्धान्ते विषयसम्बन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे भेदव्यव-

---

( पा० सू० ४।१।७८ ) इति सूत्रभाष्येऽस्य स्वरूपं भगवता पतञ्जलिना संक्षेपतः प्रदर्शितम् । तथा हि—ष्यङ आदेशत्वं प्रत्ययत्वं वेति विकल्प्यादेशपक्षे ञित्वादाद्युदात्तत्वमाशङ्क्य अकृतेत्संज्ञकञकारविशिष्टस्यादेशत्वेन परिहृत्य ञित्वाभावाद् वृद्ध्यभावमाशङ्क्य उक्तम् "न चेदानीमर्द्धजरतीयं लभ्यम् । वृद्धिर्सम भविष्यति स्वरो नेति । तद्यथा अर्द्धं जरत्याः कामयन्ते अर्द्धं नेति" इति । अत्र कैयटः—"मुखं न कामयन्ते अङ्गान्तरन्तु कामयन्ते जरत्याः" इति । अन्ये तु—अर्द्धं कुक्कुट्याः पाकाय अर्द्धं प्रसवाय यथा न भवति, एवमेकभागस्य अन्यपरत्वम्, अन्यभागस्यान्यपरत्वं न युक्तमित्येवंपरो न्यायः । "न च जानीमो विषयसन्धायामिवान्तरालेऽवस्थानम् अर्द्धजरतीयकौशलम्" ( बृह० उप० भा० ) "यथा न जागर्ति न स्वपिति इति विषयग्रहणमिति अन्तरालेऽवस्थानं दुर्घटम् । यथा चार्द्धं कुक्कुट्याः पाकार्थमर्द्धञ्च प्रसवायेति कौशलं नोपलभ्यते" ( आ० गि० ) । जरत्या एव पाको युवत्यास्तु प्रसवार्थत्वं न त्वेकस्या एव द्विविधकार्यकरत्वमिति । एकत्र किञ्चिद्देशावच्छेदेन अन्यकार्यकरत्वमपरदेशावच्छेदेनान्यकरत्वं नोचितमित्यत्रैवायं न्यायः प्रयुज्यते—इति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हारवत्। विशेष्यांशमादायाभेदेऽपि तत्प्रतीतिर्नापाद्या, उपाध्यनालिङ्गिततत्प्रतीत्यभावात्। देशकालभेदप्रत्ययोऽप्यौपाधिक एव, स एव च पदादिरूपेणापि व्यङ्ग्य इति बोध्यम्। अत्रापि काल्पनिकः प्रकृतिप्रत्ययविभागः पदे, वाक्ये च पदविभागः। भेदेन कल्पिता अपि ते पदवदेव नित्याः। तदुक्तम् "आद्यन्तौ" ( पा० सू० १।१।४६ ) इति सूत्रे भाष्ये "नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्" इति। 'वर्ण' शब्देन प्रकृतिप्रत्ययागमादयः।

यद्वा, अखण्डान्येव पदानि वाक्यानि च। रेखागवयन्यायेन तदन्वाख्यानार्थं कल्पिते पदादौ प्रकृत्यादिविभागकल्पना पदविभागकल्पना च। इदमपि "आद्यन्तौ"—(पा० सू० १।१।४६) इत्यत्र भाष्ये। स्फोट एव कत्वादिना व्यज्यत इति "एओङ्" (मा० सू० ३) इति सूत्रे भाष्ये ध्वनितम्। तत्र हि नरसिंहवज्जात्यन्तरत्वाद्वर्णैकदेशानां वर्णग्रहणेनाग्रहणमिति पक्षे 'क्लृप्तः' इत्यत्र "कृपो रो लः" ( पा० सू० ८।२।१८ ) इति लत्वाप्राप्तिमाशङ्क्य "अथवोभयतः स्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवति" इत्युक्तम्। तस्यायम्भावः—वस्तुतो रत्वादिमान्न कश्चित् किं तु अन्यगततत्तद्रूपेण स्फोटस्यावभासमात्रम्। एवं च 'कल्पते' इत्यादावस्याप्रवृत्तिः स्यात्, अतो रेफावभासिस्फोटप्रसङ्गे लकारावभासः स्फोट इत्यर्थः। एवं च सर्वत्र सिद्धम्, कृपावपि रेफावभाससत्त्वात्। आकारादौ तु नैव ह्रस्वावभास इति न तत्र ह्रस्वाकारावभासप्रयुक्तं कार्यम्।

यत्तु कैयटेन "अन्तर्भूतानन्तर्भूतसाधारणी जातिर्निर्दिश्यते" इति व्याख्यातम्, तन्न, तादृशजातिसत्त्वे मानाभावात्, "नरसिंहवद्वर्णान्तरम्" इति स्वोक्तिविरोधाच्च, "सादृश्यात्तु प्रत्यभिज्ञा" इति स्वोक्त्यसङ्गतेश्च, श्रुतिपदास्वारस्याच्च, रजातेर्लजातिरित्यनुक्तेश्च,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन 'वर्णग्रहणेन ग्रहणम्' इति पक्षस्यैव सिद्ध्या ग्रहणपक्षमुक्त्वा 'अथवा न गृह्यन्ते' इति पक्षे तत्समाधानपरभाष्यासङ्गतेश्च । अत एवाष्टमे "रषाभ्याम्" (पा० सू० ८।४।१) इति सूत्रे कैयटः—"यथा च नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः, एवं वर्णैकदेशयोरपि" इति । 'स्फोट'पदस्य च तत्तद्वर्णपदादिरूपेण ताल्वाद्यभिघाताज्ज्ञानविषयो मध्यमावस्थोऽर्थ इत्यलम् ।

(रत्न०)—पूर्वं परेत्वित्यादिना अकारककाराद्यनेकेषां वर्णानां घटपटाद्यनेकेषां पदानां सत्त्वेऽपि 'अकार एक एव' 'ककार एक एव' 'घटपदमेकमेव' इति परस्परं भेदसत्त्वेऽपि सजातीयभेदो नास्तीति व्यवस्थापितम् । साम्प्रतमेक एव स्फोटात्मकः शब्दः श्रोत्रग्राह्यः उपाधिगतधर्मोपरागवशादनेकरूपेणावभासत इति निर्णेतुं पूर्वोक्तं खण्डयन्नाह—॥तन्नेति । ॥अनेकेति—अनेकवर्णाश्च ध्वनयश्च तेषां कल्पन इत्यर्थः । ॥अवर्णानामिति—अकार एक एव, ककारादिरेक एव, परन्तु परस्परं भिन्ना अनेके वर्णा इत्यर्धजरतीयस्यान्याय्यत्वादित्यर्थः । यया युक्त्या एक एवाकारादिस्तयैव स्फोटात्मकस्यैकस्यैव स्वीकारो न्याय्य इति भावः । ॥अत एवेति—स्फोटात्मकस्यैकस्य शब्दस्य सत्त्वादेवेत्यर्थः । ननु कत्वगत्वादिभेदकधर्मोपलब्धेरेकत्वासम्भवोऽत आह—॥कत्वादिकं चेति । ॥वैजात्याक्रान्तैरिति—कत्वादिरूपवैजात्यविशिष्टैर्वायुभिः स्वरूपरूषितस्य स्फोटस्य भानम् । तदनाक्रान्तैः = कत्वाद्यनाक्रान्तैः वायुभिः । ॥ध्वनिरूपेणेति—न तु कत्वादिनेति भावः । ॥आरोपेणेति—स्वाश्रयविषयत्वसम्बन्धेनेत्यर्थः । ॥वायूनामिति—कत्वादेस्तद्धर्मत्वादिति भावः । ॥यद्वृत्तितयेति—यन्निष्ठाधारतानिरूपिताधेयतया धर्मग्रहणं तस्यैव धर्मिणस्तेनेन्द्रियेण ग्रहणात् । न हि वायुवृत्तितया कत्वादेर्ग्रहणं किन्तु स्फोटवृत्तितयैवेति स्फोटस्य ग्रहणं भवत्येवेति भावः । "येनेन्द्रियेण यस्य धर्मः"—इति न्याये व्यभिचारमाह—॥रसनादाविति । ॥रसादिमात्रेति—न तु जलस्येति तादृशनियमो नास्तीति भावः । मात्रेण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जलस्यैव व्यावृत्तिः, रसत्वादेर्ग्रहणात् । ननु वर्णैक्ये ककारहकारयोरप्यैक्यं द्वयोर्गकारयोरिव स्यादत आह—*व्यञ्जकगतेति— न चोभयोः स्थानैक्येनाभिव्यञ्जकवायोरभेदाद्वैषम्याभावः, स्थानैक्येऽपि प्रयत्नभेदेन वायोरपि भेदात् । तत्र दृष्टान्तमाह—*अद्वैतसिद्धान्त इति—विषयबाह्येन्द्रियाणां मिथो यः सम्बन्धः संयोगादिस्तज्जन्यं यत्तत्तद् वृत्तिवैचित्र्यं तेनेत्यर्थः । अन्तःकरणस्य मूलावच्छिन्नचैतन्यं प्रमाता, मध्यावच्छिन्नचैतन्यं प्रमाणम्, अग्रावच्छिन्नचैतन्यं वृत्तिः । एवञ्च सा वृत्तिर्विषय-सम्बन्धभेदेन भिन्नेति अन्तःकरणस्य सुखात्मना परिणामे 'अहं सुखी' इति प्रत्ययः । तद्व्यङ्ग्ये स्वरूपसुखे = ब्रह्मरूपे । ब्रह्मस्वरूपविशेष्यांशमादायाभेदेऽपि यथोपाधिकृतो भेदस्तथाऽत्रापि व्यङ्ग्यस्य स्फोटस्यैक्येऽपि नाभेदप्रतीतिरिति भावः । *स्वरूपसुखेति— 'स्वरूप' पदं विषयसुखनिरासाय, अत एव तन्नित्यमेकञ्च । विषयसुखन्तु स्रगादिविषयसम्पर्केण सत्त्वावच्छिन्नान्तःकरणे चेतनप्रतिविम्बः । स एव 'वृत्तिः' अप्युच्यते । तच्चानित्यं ज्ञानस्वरूपम् । *अभेदेऽपीति— अनेन विशेष्यांशमादायाभेदस्येष्टत्वं सूचितम् । वस्तुतस्तदसम्भव एवेत्याह— *उपाध्यनालिङ्गितेति— एतेनोपाध्यनालिङ्गितस्फोटस्यापि प्रतीतिर्निरस्ता । एवं वर्णे देशकालकृतभेदोऽप्यौपाधिक एवेत्याह— *देशेति । *पदादिरूपेणापीति— अपिना कत्वादिसमुच्चयः । एकैकविजातीयवायुभिः कत्वादिनैतस्य व्यञ्जनम्, क्रमोत्पन्नैर्बहुभिस्तु पदादिरूपेणेति भावः । सखण्डपक्षमाह— *अत्रापीति—सखण्डपक्षेऽपीत्यर्थः । नन्वेवं स्फोटस्यानित्यत्वापत्तिरत आह— *भेदेनेति । तत्र प्रमाणमाह— *तदुक्तमाद्यन्ताविति । *नरसिंहवदिति— साङ्कर्यान्नृसिंहे भगवति नापि नरत्वं नापि सिंहत्वं किन्तु जात्यन्तरमेव, तथैव 'ऋ' 'ऌ' घटकरेफलकारयोर्नापि रत्वम्, नापि लत्वम्, नाप्यच्त्वं किन्तु जात्यन्तरमेवेति "कृप"—इत्यस्याप्राप्तिमाशङ्क्य उभयतः = स्थानिदले आदेशदले च स्फोटमात्रं निर्दिश्यते "रश्रुतेर्लश्रुतिर्भवति" इति । *रत्वादीति— रत्वादयो धर्मा नहि स्फोटे सन्ति किन्तु वायुगतानां ध्वनिगतानां वा तेषां स्फोटेऽवभासमात्रम् । यदि तु वस्तुतः सूत्रे रत्वाद्यवच्छिन्नस्यैव निर्देशः स्यात्तदा 'कल्पते' इत्यादावपि प्रवृत्तिर्न स्यात्, रत्वादिविशिष्टस्य शब्दस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावात्। सर्वत्र = ऋकारघटके, रेफे च। नन्वेवमवभासमात्रेण शास्त्रप्रवृत्तिस्वीकारे आकारादावपि ह्रस्वावभासप्रयुक्तं कार्यं स्यादत आह —*आकारादौ त्विति। *न ह्रस्वावभास इति — तत्र लोके ह्रस्वावभासस्यानुभवविरुद्धत्वात्। *साधारणीति – अन्तर्भूतानन्तर्भूतरत्वादिजातिरित्यर्थः। स्वतन्त्रास्वतन्त्रोभयरेफवृत्तिर्जातिः स्थानित्वेनाश्रीयते इति भावः। एवञ्चोभयत्र लत्वं सिध्यति। *तादृशेति — प्रत्येकरेफवृत्तिर्भिन्ना, रेफद्वयसाधारणी चैका इत्यत्र मानाभाव इति भावः। *नरसिंहवदिति — उभयसाधारणरत्वादिजातिसत्त्वे वर्णान्तरत्वोक्तिविरुद्धा स्यादिति भावः। *श्रुतीति–श्रवणस्य व्यक्तिमात्रविषयकत्वात्। ननु 'येनेन्द्रियेण यद् गृह्यते तद्वृत्तिर्जातिरपि तेन' इति 'श्रुति'–पदोक्तिर्न विरुद्धाऽत आह — *रजातेरिति। *मृगराजेति — सिंहेत्यर्थः। ननु स्फोटे वर्णविभागाभावाद् "रश्रुतेः" इति पूर्वोक्तभाष्यविरोधोऽत आह — *स्फोटपदस्येति — तथा च स्फुटत्यर्थोऽस्मादिति स्फोटः, स्फुट्यते यः सोऽपि स्फोट इति भावः।

मू०—किञ्चैवं द्रुतमध्यमविलम्बितासु प्रयत्नभेदेन चिराचिरकालोच्चारणजन्यत्वाद्भिन्नकालत्वभेदयोरापत्तौ ह्रस्वाकारस्यापि भेदे भिन्नकालत्वे चान्यतमवृत्तौ तपरकरणेऽन्यतमवृत्तावतोभिस ऐसोऽनापत्तिः। स्फोटाङ्गीकारे तु न दोषः, तदभिव्यक्त्यनन्तरं जायमानेन चिरकालेन वैकृतध्वनिना तस्य चिरकालमुपलब्धावपि स्फोटे कालभेदाभावात्। 'तमेवायं द्रुतमुच्चारितवानन्यो विलम्बितम्' इति प्रत्यभिज्ञासत्त्वात्। ह्रस्वदीर्घादौ तु नैवमभेदप्रत्यभिज्ञा।

आन्तरस्फोटनिरूपणम्
वैकृतध्वनिप्रयुक्तधर्मेण स्फोटभेदाभावश्च

एतेन ह्रस्वदीर्घप्लुतैरभिव्यक्तस्फोटे तदुपरागवशाद्यथा तावत्कालत्वारोपस्तथाऽत्रापि स्यादिति परास्तम्, ह्रस्वदीर्घादीनां परस्परमैक्यप्रत्यभिज्ञाभावेन तत्कालारोपेऽप्युच्चारयित्राऽऽलस्यादिकृतस्यास्य वैकृतगतस्य कालस्योपलब्धिचिराचिरत्वकरस्यारोपे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मानाभावात्, 'आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः' इति न्यायात् । अत एव तिसृष्वपि वृत्तिषु 'ह्रस्वोऽयमकारः' इत्यादिरनुभवः । जन्यत्वे तु वर्णानां क्षणस्थायित्वाभ्युपगमात् कस्य चिरमुपलब्धिः स्यादिति बोध्यम् ।

तदुक्तं तपरसूत्रे ( पा० सू० १।१।७० ) भाष्यकृता-वृत्त्यन्तरे ऐसोऽनापत्तिः, तत्तद्वृत्तिजनकयत्नभेदेन वर्णानां तत्तत्कालत्वस्यैवौचित्यादित्याङ्शक्य "एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः । कथम्? यथा भेर्याहन्ता भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव, ध्वनिकृता वृद्धिः ।

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः ॥

( महाभा० १।१।७० ) इति ।

स्फोटः शब्द इति=श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थः शब्दः, ध्वनिस्तदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपः शब्दस्य चिराचिरोपलब्धिकरत्वाद् गुणः=उपकारकः । 'भेरीमाहत्य' इत्यस्य 'तं शब्दमुपलभमानः' इति शेषः । ध्वनिरूपेणापि स्फोट एव गृह्यत इति दृष्टान्तदार्ष्टान्तिकोभयसाधारणमाह — स्फोटस्तावानेवेति । ध्वनिकृता=वैकृतध्वनिकृता । ध्वनिः स्फोटश्च 'स्तः' इति शेषः । शब्दानां सम्बन्धी ध्वनिः । वैकृतध्वनिस्तु केषाञ्चिदल्पः=अल्पकालमुपलब्धिजनकः, केषाञ्चिन्महान्=बहुकालमुपलब्धिजनको लक्ष्यते । तत्र प्रमाणमाह — उभयं तत्स्वभावतः 'सिद्धम्' इति शेषः । तदुक्तं हरिणा—

"स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।

( वाक्यप० कां० १ कारि० ७५ )

स्वभावतस्तु नित्यत्वाद्ध्रस्वदीर्घप्लुतादिषु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥
( वाक्यप० कां० १ कारि० ७६ )

अभिन्नकालत्वोपपादकम् 'स्वभावतस्तु नित्यत्वाद्' इति। 'प्राकृतध्वनि' शब्देन स्फोटव्यञ्जकमत्रोच्यते ।

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।

ग्रहणे=अभिव्यक्तौ ।

स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ।
( वाक्यप० कां० १ कारि० ७७ )

स्थितिभेदे = चिराचिरोपलब्धिविशेषे ।

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥
( वाक्यप० कां० १ कारि० ७८ )

शब्दस्याभिव्यक्तेरूर्ध्वम् 'वैकृता ध्वनयो जायन्ते' इति शेषः। ते तु वृत्तिभेदे = द्रुतादिवृत्तिभेदे समुपोहन्ते = तत्र कारणं भवन्ति १† । स्फोटस्तु तैर्न भिद्यत इति तदर्थः। वैकृतत्वं चैषामालस्यादिकृतत्वात् । कैयटेऽप्यत्र †२ 'व्यञ्जक' शब्दो वैकृतध्वनिपरस्तस्याप्युपलब्धिजनकत्वेन व्यञ्जकत्वव्यवहारादिति दिक् ।

---

†१ प्रकृतिविकृतिभावस्थले विकृत्यनुरोधेन क्रियावाचकप्रयोगः । एवञ्च 'एकः वृक्षः पञ्च नौकाः भवन्ति' इत्युपपद्यते । अत एव पस्पशायाम् "पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः" इति पतञ्जलिभगवत्पादोक्तं च संगच्छते । यत्र विकृतिवाचकस्यारोपितविकारविशिष्टप्रकृतिबोधकता तत्र विकृतेः पृथगनुपलब्ध्या प्रकृतेरेव समभिव्याहृतक्रियाकर्तृत्वम् । यत्र वाचकमनारोपितमेव स्वार्थं प्रत्याययति तत्र प्राधान्याद् विकृतेरेव कर्तृत्वम् । अत एव 'अत्वं त्वं सम्पद्यते' 'सङ्घीभवन्ति ब्राह्मणाः' इत्युभयविधप्रयोगसिद्धिः । एवञ्च 'ध्वनयः......कारणं भवन्ति' इत्येव पाठः समीचीनः, प्रकृतेः पृथग् विकृतेरनुपलम्भेन ध्वनिरूपप्रकृतेरेव कर्तृत्वाद्दिति दिक् ।

† २ 'कैयटेऽप्यत्र' इत्येव पाठः, 'व्यञ्जकशब्दो वैकृत......' इत्यादीनां कैयटेनानुक्तत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवञ्च पदादिरूप आन्तरः स्फोटो वाचक इति सिद्धम् ।

(रत्न०)—श्रावणप्रत्यक्षविषयीभूतस्य जन्यस्य वैखरीरूपस्य न वाचकत्वं किन्त्वान्तरस्फोटस्यैवेति व्यवस्थापितम् । तदेव सिंहावलोकनन्यायेन भाष्यसम्मत्या द्रढयति—*किञ्चेत्यादिना । *भिन्नकालत्वेति—प्रयत्नभेदेन वृत्तिभेदाद् भिन्नकालत्वभेदयोरापत्तौ यत्र वृत्तौ तपरकरणं तद्वृत्त्युच्चारिताकारादिष्वेव "अतो भिस–" (पा० सू० ७।१।९) इत्यादि–शास्त्राणां प्रवृत्तिः स्यान्नान्यत्रेति स्फोट आवश्यक इत्याह—*स्फोटाङ्गीकार इति । *तदभिव्यक्तीति—प्राकृतध्वनिना स्फोटाभिव्यक्त्यनन्तरमित्यर्थः । *वैकृतध्वनिनेति—स्फोटस्वरूपमभिव्यज्य पुनः पुनरविच्छेदेन दीर्घकालमुपलभ्यमानो ध्वनिर्वैकृतः । तस्य = वैकृतध्वनेः । *तमेवेति–'तमेव स्फोटमयं द्रुतमुच्चारितवान् तमेवान्यो विलम्बितम्'इति प्रत्यभिज्ञया वृत्तिभेदेऽपि स्फोटे भेदाभाव इति भावः । *ह्रस्वदीर्घयोरिति—ह्रस्वाकारस्य दीर्घाकारेण सह तादृशाभेदप्रत्यभिज्ञाया अभावान्नैक्यम् । *एतेनेति—स्फोटाभिव्यञ्जकप्राकृतध्वनिगतकालस्यैवारोपस्य वक्ष्यमाणत्वेनेत्यर्थः । *ह्रस्वदीर्घप्लुतैरिति—तद्भेदविशिष्टैः प्राकृतध्वनिभिरित्यर्थः । तदुपरागवशात्=ह्रस्वाद्युपरागवशात् । अत्रापि = वृत्तिभेदेऽपि । *स्यादिति—'वृत्तिगतकालारोपः' इति शेषः । *परस्परमैक्येति—ह्रस्वस्य ह्रस्वेन दीर्घस्य दीर्घेण सहैक्यमित्यर्थः । प्रत्यभिज्ञाभावेन = प्रत्यभिज्ञासत्त्वेन । तत्कालारोपेऽपि = प्राकृतध्वनिगतकालारोपेऽपि । आलस्यादिकृतस्य वर्णोपलब्धिचिराचिरत्वकरस्य वैकृतगतस्यास्य कालस्यारोपे मानाभावादित्यन्वयः । ननु स्फोटस्थले वैकृतध्वनिसत्त्वे कुतो नारोपः ? इत्याह–*आरोपे सतीति–सति आरोपे निमित्तानुसरणमित्यन्वयः । *न्यायादिति—'सिद्धस्य गतिश्चिन्तनीया' इति न्यायमूलकोऽयम् । अत एव = वृत्तिकृतकालस्यारोपाभावादेव । *चिरमुपलब्धिरिति—चिरं स्थिरस्यैव तत्सम्भव इति भावः । *वृत्त्यन्तर इति—यद्वृत्तिमाश्रित्य पाणिनिना तपरोच्चारणं कृतं तदन्यवृत्तावित्यर्थः । 'वर्णमुच्चारयति वक्तरि ब्रह्माण्डसम्बद्धा सुषुम्ना नाडी अमृतबिन्दुस्राविणी भवति' इति योगिप्रसिद्धिः । एवञ्च द्रुतमुच्चारणे पूर्वोक्तनाड्या नव बिन्दवः स्रवन्ति, मध्यमायां वृत्तौ द्वादश, विल-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्बितायां षोडश इति पूर्वपूर्वतस्त्रयो भागा अधिका इत्येकस्यां वृत्तौ तपरत्वे वृत्त्यन्तरे कार्यानुपपत्तिरिति भावः । ❀ऐसोऽनापत्तिरिति — नेयं भाष्योक्तिः किन्तु तदाशयवर्णनमिदम् । ❀एवं तर्हीति — भाष्ये तु एवं पाठः—"एवं तर्हि स्फोटः शब्दः । ध्वनिः शब्दगुणः । कथम्? भेर्य्याघातवत् । तद्यथा — भेर्य्याघातो भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्, स्फोटस्तावानेव भवति, ध्वनिकृता वृद्धिः ।

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महाँश्च केषाञ्चिदुभयं तत्स्वभावतः" ॥ इति ।

❀उपकारक इति — शब्दस्य व्यञ्जकत्वेनेति भावः । तद्यथा घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते तथा विलम्बितायां वृत्तावकार एव पुनः पुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यते इति सर्व-वृत्तिषु समानकालत्वम् । ❀उपलभमान इति—एतेनोपलब्धिकालभेदो दर्शितः । ननु भेर्य्याघातस्थले स्फोटाभावात् 'स्फोटस्तावानेव' इति दृष्टा-न्तासङ्गतिरत आह—❀ध्वनिरूपेणापीति — तत्रापि स्फोट एवोच्यत इति भावः । ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादिवृत्ताविति वैषम्यमत आह — ❀दृष्टान्तेति — तावत्कालमुपल-ब्धिविषयत्वमेव दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यमिति भावः । यद्वा उभयत्राप्येकरूपः स्फोट एवेति तयोः साम्यम् । ❀ध्वनिरिति — कण्ठ-ताल्वाद्यभिघातस्थले ध्वनिः स्फोटश्च स्तः । तत्र व्यङ्ग्यानां शब्दानां व्यञ्जको ध्वनिः, वैकृतध्वनिस्तु केषांचिदल्पः — अल्पकालमुपलब्धि-जनकः, केषाञ्चिन्महान् = बहुकालमुपलब्धिजनको लक्ष्यते = प्रती-यते । तत्र = ध्वनिस्फोटयोः, यद्वा तत्र = अल्पत्वमहत्त्वयोः । ❀उभयमिति — ध्वनिः स्फोटश्चेत्युभयमित्यर्थः । अल्पत्वमहत्त्वोभयं वा । यद्वा केषाञ्चिद् व्यक्तवाचामुच्चारणे ध्वनिः स्फोटश्च स्तः । अव्यक्तवाचामुच्चारणे ध्वनिरेव प्रतीयत इत्यर्थः । ❀स्वभावत इति — तदुभयं स्वभावतः सिद्धमिति न प्रमाणान्तरापेक्षाऽस्तीति भावः । ❀स्फोटस्येति — नित्यत्वात्स्फोटस्य स्थितौ कालपरिमाणवृत्तेः स्वल्पोऽपि व्यापारो नास्ति, ध्वनिना तु संसृष्टं तस्य स्वरूपमुपलभ्यते,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्माद् ध्वनिकालः स्फोटोपलब्धिप्रयोजकः, तदाह — *ध्वनिकालानुपातिन इति —। नन्वेवं ह्रस्वदीर्घप्लुतादिष्वपि ध्वनिरेव कालहेतुरिति स्फोटकालाप्रतीतेर्दीर्घप्लुतयोरपि "तपरस्तत्कालस्य" (पा० सू० १।१।७०) इति तत्कालताप्रसङ्ग इत्यत आह — *स्वभावतस्त्विति — "प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्य्यते" इत्युक्तेर्ह्रस्वादिषु प्राकृतस्य काल उपचर्य्यत इति भावः। ननु अत्र कारिकायां ध्वनिर्व्यञ्जकः स्फोटो व्यङ्ग्य इत्युक्तं कैयटेन, तत्र ध्वनिपदेन वैकृतस्य ध्वनेर्ग्रहणमितिचोक्तम्, तच्चासङ्गतम्, वैकृतध्वनेर्व्यञ्जकत्वाभावादत आह—*कैयटेऽप्यत्रेति — एतद्व्याख्यानभूते कैयटेऽपीत्यर्थः। निष्कर्षमाह — *एवञ्चेति — स्फोटो द्विविधः — आन्तरो बाह्यश्च, तत्रान्तरस्यैव मुख्यं वाचकत्वमिति भावः। बाह्यस्तु जातिव्यक्तिभेदेन द्विविधः।

मू०—एवं शक्योऽर्थोऽपि बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्ताऽऽविष्टः, 'घटः' इत्यत एव सत्ताऽवगमेन 'घटोऽस्ति' इति प्रयोगे गतार्थत्वाद् 'अस्ति' इति प्रयोगानापत्तेः, सत्तया विरोधात् 'घटो नास्ति' इत्यनापत्तेश्च। मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय 'अस्ति' 'नास्ति' इति प्रयोगः। किञ्च, 'शशशृङ्गं नास्ति' 'अङ्कुरो जायते' इत्यतो बोधानापत्तिः। मम तु बुद्धिसन्नङ्कुरो बाह्यरूपेण जायत इत्यर्थः। सा सत्ताऽपि शब्दवाच्येति तद्भावः।

शक्यार्थस्यापि बौद्धत्वनिरूपणम्

किञ्च, इच्छादीनामन्तःकरणनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्ताऽऽवश्यकी। यत्तु वैशेषिकाद्यनुसारिणः—'विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणम्' इति वदन्ति, तन्न, तदीयतादात्म्यस्य वृत्त्यनियामकतया सामानाधिकरण्यानिर्वाहकत्वात्। अतीतानागतस्थले† सतोरेव सम्बन्धेनैवं सम्बन्धस्य वक्तुमशक्यत्वाच्च।

† 'भूतभाविविषये' इति पाठो हस्तलिखितपुस्तके।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटसामग्र्या अप्यवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतया देशविशेषे सामानाधिकरण्यं द्रष्टव्यम् । 'शिरसि मे वेदना' 'अत्र घटः' इत्यादिव्यवहारादाधारतानियामकत्वम् । 'अवच्छेदकत्वं सप्तम्यर्थः' इति तु चिन्त्यमेव, अनुशासनाभावात्, सुब्विधौ लक्षणाऽभावस्य भवदीयसम्मतत्वाच्च । द्रव्यरूपादीनामपि द्रव्यदेश एव देश इति बोध्यम् । भ्रमेऽधिष्ठानत्वमपि बौद्धस्यैव न बाह्यस्येति सर्वं समञ्जसम् ।

अत एव "उपदेशेऽजनुनासिकः" ( पा० सू० १-३-२ ) इति सूत्रे भाष्ये उक्तम् 'को देवदत्तः ?' इति प्रश्ने 'अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्तः' इति । तत्र तु एकव्यक्तौ भेदाभावाद् 'ईदृशः' इत्यस्यासङ्गतिः, मम तु एतैः शब्दैर्यादृशोऽर्थो बुद्धौ प्रतिभासते तादृशो बाह्य इत्यर्थः । अत्र 'ईदृश' 'तादृश' शब्दाभ्यां तत्त्वेन प्रत्यभिज्ञाविषयत्वमुपलक्ष्यत इति बोध्यम् । "हेतुमति च" (पा० सू० ३-१-२६) इति सूत्रे, "पङ्क्तिविंशति" (पा० सू० ५-१-५९) इति सूत्रे, मतुप्सूत्रे (पा० सू० ५-२-९४) च भाष्यकैयटयोः स्पष्टमिदम् ।

गौतमोऽप्यसत एवोत्पत्तिकर्तृत्वं कथम् ? इत्याशङ्क्य सूत्रितवान् "बुद्धिसिद्धं तु तदसत्" ( न्या० द० ४-१-५० ) इति । तत्कार्यमुत्पत्तेः प्राङ् नाशोत्तरं चासदपि बुद्धिविषयतया ( तु ) सिद्धमिति तदर्थः ।

(रत्न०)-*एवं शक्योऽर्थोऽपीति—यथा—आन्तरः स्फोटो निर्विभागो वाचक एवं शक्यार्थोऽपि निर्विभाग आन्तर एव । स च प्रतिभारूपः । प्रतिभा च—बुद्धिविषयतारूपा । *बुद्धिसत्तेति — बौद्धसत्तायुक्त एवेत्यर्थः । तदुक्तम् "मतुप्" सूत्रे ( पा० सू० ५।२।९४ ) भाष्ये "न सत्तां पदार्थो व्यभिचरति" इति । *गतार्थत्वादिति—घटपदस्यैवोक्तभाष्यात् सत्ताविशिष्टघटार्थकत्वात् । ननु सूत्रे 'अस्ति' इति व्यर्थम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्तासमाविष्टस्य प्रथमान्तार्थत्वादिति चेत्, न, भूतभविष्यतोः 'गोमानासीत्' 'गोमान् भविता' इत्यादौ न बाह्यसत्ताऽस्ति किन्तु बुद्धिकल्पितैव । एवञ्च बुद्धिकल्पितसत्ताव्युदासाय बाह्यसत्तापरिग्रहार्थञ्च 'अस्ति' ग्रहणस्य सार्थक्यात् । ❀सत्तया विरोधादिति — घटपदस्य सत्ताविशिष्टघटार्थकत्वे सत्ताऽभावविशिष्टघटार्थबोधो न स्यादिति भावः । ❀बाह्यसत्तेति–'बाह्यसत्ता च (तस्याः = बाह्यसत्ताया अभावः) तदभावश्च' इति द्वन्द्वः । तथा च बाह्यसत्ताया बाह्यसत्ताऽभावस्य च बोधनाय 'अस्ति' 'नास्ति' इति प्रयोग इति भावः । बाह्यार्थमात्रस्वीकर्तृनये तु सत्ताविशिष्ट-स्यैव पदार्थत्वेन विरोधात् 'नास्ति' इति प्रयोगो न स्यात् । शब्दत एव सत्तायाः प्रतीतेः 'अस्ति' इति प्रयोगो न स्यादिति भावः । ❀शशशृङ्गं नास्तीति—बौद्धार्थस्वीकारादेव 'शशशृङ्गं नास्ति' इत्यत्राहार्य्यमेव प्रति-योगिज्ञानं कारणम्, इत्युक्तं लीलावती-शिरोमणौ । अन्यथा 'नीलं सरोजं भवत्येव' इत्यादौ नीलत्वायोगस्य सरोजेऽप्रसिद्धतयाऽप्रसिद्ध-प्रतियोगिकाभावस्य तार्किकैरस्वीकृतत्वादत्ययोगव्यवच्छेदरूपार्थस्यानन्व-यापत्तिः । ❀अङ्कुरो जायत इति—एतेन बुद्धिसत् शशशृङ्गं बहिर्नास्तीति तदर्थः सूचितः । ❀सा सत्ताऽपीति–बौद्धसत्ताऽपीत्यर्थः । ❀तद्भाव इति–बुद्धिस्थपदार्थस्वीकर्त्राशय इति भावः । ❀अन्तःकरणनिष्ठतयेति-वेदान्ति-मतेनेदम् । तन्मते हि–इच्छादयो धर्माः स्वरूपसम्बन्धेनान्तःकरण-निष्ठास्तथा च 'स्वरूपसम्बन्धेनेच्छाम्प्रति सामानाधिकरण्यसम्बन्धेन विषयस्य कारणत्वम्' इति कार्य्यकारणभावो विषयस्य बुद्धिस्थत्वे एव सम्भवतीति भावः । एवमेव ज्ञानादिम्प्रत्यपि विषयस्य कारणत्वं बोध्यम्। कार्य्यकारणयोः समानदेशत्वनियमादन्तःकरणवर्तिसामग्र्या एव कार्य्योत्पादनं युक्तम् । किञ्च, सिद्धे पाकादाविच्छाविरहादसिद्धस्यैव पाकादेरिच्छाम्प्रति कारणत्वं वाच्यम्, तादृशस्य च पाकादेर्बुद्धिस्थत्वं स्वीकृत्य बुद्धावेव हेतुहेतुमतोः सामानाधिकरण्यमुपपादनीयम् । अन्यथा, असिद्धस्य पाकादेर्बहिर्देशस्थत्वाभावात् तस्य कारणत्वं शशशृङ्गायमाण-मेव स्यादिति बौद्धपदार्थस्तार्किकैरपि स्वीकार्य्यः । ❀आवश्यकीति—मतुप् सूत्रे ( पा० सू० ५।२।९४ ) "नैतयोरावश्यकः समावेशः" इति भाष्य-व्याख्याऽवसरे "अवश्यं भाव आवश्यकः" मनोज्ञादेराकृतिगणत्वात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"ओरावश्यके" ( पा० सू० ३।१।१२५ ) इति निपातनाद्वा वुन्प्रत्ययः, अव्ययानां भेति टिलोपः। आवश्यकमस्मिन्नस्तीत्यावश्यकः "अर्शआदेराकृतिगणत्वादच्" इति कैयटात् स्त्रियाम् 'आवश्यिका' इति पाठ इति केचित्। अवश्यंभवितरि 'आवश्यक'शब्दः "ओरावश्यके" इति निपातनात् ठक्, इकः इकारस्याकारश्च । तथा च स्त्रियां ठगन्तत्वान् ङीपि 'आवश्यकी' इत्यन्ये । एतदेव च युक्तम्, लाघवात् । वुञन्तपक्षे प्रज्ञादित्वादणि 'आवश्यकी' इति । ठगन्तपक्षे धर्मपरकात् 'आवश्यक' शब्दात् अर्श आद्यजन्तत्वात् स्त्रियाम् 'आवश्यिका' इत्युभयपक्षे उभयोः साधुत्वमिति। ज्ञानादिकं प्रति बाह्यस्यैव हेतुत्वमभ्युपगच्छतस्तार्किकान् निराकरोति—*यत्त्विति । *विषयतासम्बन्धेनेति—अयमाशयः—'विषयतासम्बन्धेन चाक्षुषम्प्रति समवायसम्बन्धेन चक्षुःसंयोगः कारणम्' एवञ्च घटचक्षुःसंयोगदशायां पटस्यापि चाक्षुषत्वापत्तिरिति विषयाणामपि तादात्म्येन हेतुत्वमावश्यकम् । न च विषयघटितचक्षुःसंयोगस्य कारणत्वेनैवातिप्रसङ्गवारणे विषयस्य कारणत्वकल्पनमनावश्यकमिति वाच्यम्, विषयभेदेनानन्तकार्य्यकारणभावापत्तेः । वस्तुतस्तु—'विशिष्टबुद्धौ विशेषणादिज्ञानस्य कारणत्वम्' इत्यप्रकल्प्य व्यक्तिवृत्तिविषयतासम्बन्धेनेश्वरज्ञानसाधारणज्ञानत्वेन हेतुत्वं कल्प्यते, अन्यथा घटत्वादिप्रत्यक्षस्थले घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपघटत्वत्वादिना विशेषणज्ञानस्य हेतुत्वकल्पने गौरवं स्यादिति बोध्यम् । *तदीयेति—तैः स्वस्मिन्नेव स्वतादात्म्यमभ्युपगम्यते । *वृत्त्यनियामकतयेति—तादात्म्यस्य वृत्तिनियामकत्वे हि 'घटो घटवान्' इति स्यात् । *सामानाधिकरण्येति—अतिप्रसङ्गवारणाय कार्य्यकारणयोः सामानाधिकरण्यमपेक्षितम् । तथा च 'विषयतासम्बन्धेन ज्ञानं विषये तिष्ठति' इति कार्य्याधिकरणवृत्त्यधिकरणतानिरूपितकारणताऽवच्छेदकसम्बन्धावच्छिन्नाधेयतावत्त्वमेव कारणे सामानाधिकरण्यं वाच्यम्, तच्च तादात्म्येन कारणत्वेऽसम्भवि, तादात्म्यस्याधेयताऽनवच्छेदकत्वादिति भावः । एवं सम्बन्धस्य = तादात्म्यरूपस्य । *वक्तुमशक्यत्वादिति — विषयस्याभावादिति भावः । नन्वेवं समवायेन घटम्प्रति तादात्म्येन कपालः कारणम् तथा च तादात्म्यस्याधारतानियामकत्वाभावेन कार्य्यकारणयोः सामानाधिकरण्यासम्भव इत्याह — *घटा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिसामग्र्या इति—। दैशिकविशेषणतया = दैशिकस्वरूपसम्बन्धेन। तथाच अवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतया कपालमपि कपाले वर्तत इति कार्य्यकारणयोः सामानाधिकरण्यं सुलभम्। एतेन 'समवायेन कार्य्यम्प्रति अवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतासम्बन्धेनैव द्रव्यस्य कारणत्वं न तु तादात्म्येनेति सूचितम्। ननूक्तसम्बन्धस्याप्याधारतानियामकत्वे मानाभावोऽत आह—॥शिरसीति—पदार्थनिर्णये लोकव्यवहारस्यैव प्रामाणिकत्वादिति भावः। ॥अवच्छेदकमिति—एतेनावच्छेदकतासम्बन्धोऽत्र सामानाधिकरण्यनियामक इति निरस्तम्। ॥भवदीयसम्मतत्वादिति—तार्किकसम्मतत्वादित्यर्थः। वस्तुतस्तु—मीमांसकसम्मतमिदम्, न तार्किकसम्मतमिति तदीयसम्मतिश्चिन्त्या। ननु समवायेन रूपादिकम्प्रति द्रव्यस्य कारणत्वे सामानाधिकरण्यानुपपत्तिरत आह—॥द्रव्येति—उक्तसम्बन्धेन द्रव्यस्यापि द्रव्ये सत्त्वादित्यर्थः। तत्र युक्त्यन्तरमाह—॥भ्रम इति। बौद्धस्यैव = बौद्धशुक्त्यादेरेव। अत एव = बौद्धपदार्थसत्त्वादेव। ॥असङ्गतिरिति—कुण्डल्यादिपदैर्देवदत्तस्यैवाभिधानादीदृशशब्दस्य वस्तुद्वयप्रयोगविषय एव प्रयोगदर्शनादसङ्गतिः स्यादिति भावः। ॥मम त्विति—बौद्धपदार्थवादिमते तु कुण्डल्यादिपदैर्बौद्धदेवदत्तस्याभिधानादीदृशपदघटकेदंशब्देन तस्य परामर्शात् 'अयं देवदत्तः' इत्यनेन बाह्यस्योपस्थानान्नोक्तदोषः। इदम् "गुणैः प्रापणमुद्देशः" (महाभा० १।३।२) इत्यस्योदाहरणत्वेनोक्तं भाष्ये। ॥तत्त्वेनेति—कुण्डलित्वादिनेत्यर्थः। ॥प्रत्यभिज्ञाविषयत्वमिति—एतेन बुद्धिस्थबाह्ययोरभेदो दर्शितः। स्वसिद्धान्तदार्ढ्यायानेकसूत्रस्थभाष्यसम्मतिमाह—॥"हेतुमति च" इत्यादि—तत्र हि—"इह कथं वर्तमानकालता 'कंसं घातयति' 'बलिं बन्धयति' इति चिरहते च कंसे चिरबद्धे च बलौ?। अत्रापि युक्तैव। कथम्? ये तावदेते शौभिका नाम, एते प्रत्यक्षं कंसं घातयन्ति, प्रत्यक्षञ्च बलिं बन्धयन्ति। चित्रेषु कथम्? चित्रेष्वप्युद्गूर्णनिपतिताश्च प्रहारा दृश्यन्ते कंसस्य च कृष्णस्य च। ग्रन्थिकेषु कथम्, यत्र शब्दग्रन्थनमात्रं लक्ष्यते?। तेऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशात् तद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकाशयन्ति" ( महाभा० ३।१।२६ ) इत्युक्तम् । *चिरहत इति — वध्यघातकभावस्यातीतकालिकत्वात् प्रयोजकव्यापारस्य वर्तमानत्वासम्भवः । 'आख्यानात् कृतस्तदाचष्टे' इत्युपसङ्ख्यानारम्भे तु न दोषः, आख्यानस्य वर्तमानत्वात् । *शौभिका इति — कंसाद्यनुसारिणां नटानां व्याख्यानोपाध्याया इत्यर्थः । कंसानुकारी नटः सामाजिकैः कंसबुद्ध्या गृहीतः कंसो भाष्ये विवक्षितः । *ग्रन्थिकेष्विति — कथकेष्वित्यर्थः । *तेऽपीति — तदुक्तं हरिणा—

"शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥" इति ।
(वाक्यप० कां० २ समुद्दे० ७ कारि० ५)

"ननु चिरहते कंसे" इत्युक्त्या प्रयोजकव्यापारस्य वर्तमानकालत्वाभावो नोक्त इति 'कथं वर्तमानकालता' ? इति प्रश्नासङ्गतिरत आह — *चिरहतेति — कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि चिरप्रवृत्तत्वमेवेति भावः । कंसाद्यनुसारिणाम् = कंसादिसदृशानाम् । *भाष्ये प्रत्यक्षमिति — तादृशेनैव = वासुदेवेनैव । उद्गूर्णाः = उद्यताः । "गुरी उद्यमने" इत्यतो निष्ठायां रूपम् । एवञ्च चित्रकारा अपि चित्रस्थं कंसं तादृशत्वेनैव ( कृष्णत्वेनैव ) घातयन्ति । *ग्रन्थिक इति — ग्रन्थशब्दाद् "अत इनिठनौ" (पा० सू० ५।२।११५) इति ठनि साधुः । शब्दः = कथकेनोच्चार्य्यमाणः । ग्रन्थः = तद्धस्तस्थपुस्तकरूपः । गडः = मनुष्यसंघातः । न तेषु कश्चिदपि कंसादिबुद्धिविषयः । तेऽपि = ग्रन्थिका अपि । तद्धीः = तदैश्वर्याणि । तानि कथयन्तो ग्रन्थिकाः स्वबुद्धिविषयान् सतः = विद्यमानान् कंसादीन् प्रकाशयन्ति = श्रोतृबुद्धौ समर्पयन्तीत्यर्थः । " इत्युद्योतः । एतेन हन्तेस्तद्धननाभिनये तत्प्रतिपादकग्रन्थकथने वा लक्षणा 'हन्यते कंसः' इत्यादावित्यपास्तम् । *पङ्क्तीति — तत्र हि "ननु चोक्तं विंशत्यादयो दशदर्थे चेत्, समासवचनानुपपत्तिः । परिमाणिनि चेत्, पुनः स्वार्थे प्रत्ययविधानम्, षष्ठीवचनविधिश्चेति । नैष दोषः, समुदाये विंशत्यादयो भविष्यन्ति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? सङ्घ इति वर्तते । सङ्घः, समूहः, समुदाय

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यनर्थान्तरम्" ( महाभा० ५।१।५९ ) इति भाष्ये उक्तम् । अस्येत्यनुवृत्त्या परिमाणमात्रे प्रत्ययलाभो न तु तद्विशेष इत्याह – *किमिति । *वर्तत इति—पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि 'सङ्घ'शब्दस्यैव स्वरितत्वादिहानुवृत्तिः । ननु प्राणिसमूहः सङ्घ इति वृक्षाणां विंशतिरिति न प्राप्नोतीत्याह — *सङ्घः समूह इति—सामान्येन प्राणिनामप्राणिनाञ्च समुदायः सङ्घ इत्यर्थः । "ननु चोक्तं परिमाणिनि चेत्, पुनः स्वार्थे प्रत्ययविधानमिति, नैष दोषः, द्रव्यसङ्घयोर्दशतोः सङ्घे प्रत्ययो निपात्यते । ननु द्रव्यसङ्घे इह द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च पारमार्थिको भेदो नास्ति, केवलं बुद्ध्या परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवभेदे भेदमवगमयन्ति" इति कैयटः । अत्र कैयट एव प्रमाणम् । *मतुप्सूत्रे चेति — तत्र हि—"अथास्तिग्रहणं किमर्थम् ? सत्तायां प्रत्ययो यथा स्यात् । नैतदस्ति प्रयोजनम्, न सत्तां पदार्थो व्यभिचरति । इदं तर्हि प्रयोजनं सम्प्रति सत्तायां यथा स्यात् । भूतभविष्यत्सत्तायां मा भूद्गावोऽस्यासन् गावोऽस्य भवितारः" ( महाभा० ५।२।९४) इत्युक्तम् । अत्र कैयटः-"*अथास्तिग्रहणमिति-सम्भवे व्यभिचारे च विशेषणविशेष्यभावो भविष्यति यथा 'नीलोत्पलम्' इति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणासम्भवात्, तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति प्रश्नः । *सत्तायां प्रत्ययो यथा स्यादिति — सत्तायां वर्त्तमानात् सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः । *न सत्तामिति — यावद् बुद्ध्या पदार्थो न विषयीकृतस्तावत् पदस्य प्रयोगाभावस्तस्माद् बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते 'वृक्षोऽस्ति' 'वृक्षो नास्ति' 'वृक्षो जायते' इति । अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः । तस्माद् बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारा इत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतया भासते । यदि वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा 'वृक्षः' इत्यतः सत्ताऽवगमाद् 'अस्ति' इत्यस्य गतार्थत्वात्प्रयोगो न स्यात् । 'नास्ति' इत्यस्य च सत्ताविरोधात्प्रयोगाप्रसङ्गः 'अङ्कुरो जायते' इति च प्रयोगो न स्यात्" इति । तत्र प्रश्ना-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शयमाह – ❀सम्भवे इति—तामन्तरेणार्थबोधाय पदोच्चारणासम्भवात् । तस्या एव = बुद्धिसत्ताया एव, प्रवृत्तौ = प्रयोगे । ननु न सत्ता प्रकृत्यर्थ इति 'सत्तायां वर्तमानाद्'इत्ययुक्तमतस्तदर्थमाह – ❀सत्तोपाधिकादिति – प्रकृतेस्तदर्थवृत्ताविति भावः । ननु वर्तमानार्थशत्रन्तप्रकृतिकसत्तापदार्थो न भूतभविष्यतोरिति कथं पदार्थस्तान्न व्यभिचरतीत्यत आह – ❀यावदिति । सम्बध्यते 'बहिः सत्त्वासत्त्वादिप्रतिपादनाय' इति शेषः । नन्वत्यन्तासतः शशविषाणादीन् सत्ता व्यभिचरतीत्यत आह – ❀अत्यन्तेति । ❀उपेति – बौद्धसत्ताया एव मुख्यत्वात् । ननु तस्या न शब्दजबोधविषयत्वं तद्विशिष्टस्य नयनाद्यसम्भवादत आह — ❀सैव त्विति—बहिःसत्तासत्त्वे तु तत्समानाधिकरणतया, असत्त्वे तु केवलायास्तस्या एव बहीरूपत्वेन भानम् । अत एव घटशून्यादपि गृहाद् 'घटमानय' इत्युक्ते घटानयने प्रवृत्तिर्दृश्यते । पश्चात्तदभावनिर्णये तु वक्तृज्ञानस्याप्रमात्वं बोध्यते । अन्तःकरणस्य रागादिदोषवशेन तस्या एव तत्त्वेन भानमिति तात्पर्यम् । बाह्यसत्ताया एव प्रयोगनियामकत्वे दोषमाह – ❀ यदि त्विति – 'सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्म'इति सतेऽपि 'अङ्कुर' पदोपात्तस्थूलरूपावच्छिन्नस्य सत एव जन्मेति भावः । नन्वेवं बुद्धिसत्तायाः सर्वत्र भाने 'अस्ति' इत्यस्य प्रयोगो न स्यादत आह – ❀बुद्धीति – तया च बाह्यसत्त्वाभावस्य जननस्य चाविरोधादिति भावः । अत एवात्र कैयटसम्मतिप्रदर्शनम् । तार्किकैरपीदं स्वीकार्यमित्याह — ❀गौतमोऽपीति — तत्र हि—"नासत्, न सत्, न सदसत्, सदसतो वैधर्म्यात्" (न्या० द० ४।१।४८) इति पूर्वसूत्रम् । अस्यार्थः—उत्पत्तेः प्राक्कार्यं नासत्, असतः उत्पत्तेरसम्भवात् । अन्यथा शशविषाणादिरप्युत्पद्येत । स्याच्च सिकतादावपि तैलम् । न च सत्, सतोऽप्युत्पत्तेरसम्भवात्, पुनरप्युत्पादप्रसङ्गाच्च । न सदसत्, सदसतोर्वैधर्म्यात् सत्त्वासत्त्वयोः सामानाधिकरण्यासम्भवात् । ततः सिद्धान्तितम्—उत्पत्तिधर्मकं प्रागुत्पत्तेरसत् । कस्मात् ? इति हेत्वाकाङ्क्षायाम् — "उत्पादव्ययदर्शनात्" ( न्या० द० ४।१।४९ ) इति सूत्रम् । कार्यस्योत्पादो विनाशश्च दृश्यते, तेनोत्पत्तेः प्रागसत्त्वं सिद्धम् । ननु असतः उत्पत्तावनियमप्रसङ्ग इत्याशङ्क्य "बुद्धिसिद्धन्तु तदसत्" ( न्या० द० ४।१।५० ) इति सूत्रम् । अस्यार्थस्तु मूल एव स्पष्टः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सू०—जन्मादिसूत्रे ( वे० सू० १-१-२ ) वाचस्पतिरप्याह— "चेतनो हि नामरूपे बुद्धावालिख्य 'घट' इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति । निर्वर्त्यस्यापि घटस्यान्तःसङ्कल्पात्मना सिद्धस्य कर्मकारकत्वम् 'घटं करोति' इत्यादौ । यदाहुः— "बुद्धिसिद्धन्तु तदसत्" (न्या० द० ४-१-५०) इति । तथाहि—

बौद्धार्थनिरूपणपूर्वकं भ्रमभानप्रदर्शनम्

चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते†, न तु तस्यां संयुक्तबाह्यविषयप्रतिविम्बः, स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिविम्वासम्भवात् । तथा च स्मृतिः—

"विप्र पृथ्व्यादि चित्तस्थं न वहिस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु, सर्वैरेवानुभूयते" ॥ इति

भ्रमे ज्ञानाकारस्यैव विषये आरोप इति सिद्धान्तात् । सन्निकृष्टं ज्ञानाकारं विहायासन्निकृष्टदूरस्थरजताद्यारोपे मानाभावात् । 'तदा दृष्टमधुना नास्ति' इति स्वरूपतो बाधानुभवस्यानुपपत्तेश्च । चाकचिक्यादिविषयदोषवशाच्च चित्तवृत्तेस्तथा परिणामः ।

(रत्न०)—वेदान्तिसम्मतमिदमित्याह—*जन्मादिसूत्र इति— "जन्माद्यस्य यतः" (वे० सू० १।१।२) इति सूत्र इत्यर्थः । अस्य दृश्यस्य प्रपञ्चस्य जन्मादि = जन्मस्थितिनाशा यतः यस्माद्येन यस्मिँश्च, तद्ब्रह्मेत्यर्थः । 'यतः' इति सर्वविभक्त्यन्ततसन्तस्य तन्त्रेण निर्देशः । "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्म" ( तैत्ति० उप० ३।१ ) इति श्रुतेस्तथा प्रतीतेः ।

---

† 'णम' धातोः परस्मैपदित्वात् 'परिणमते' इति चिन्त्यम् । यद्यपि कर्मकर्तरि 'परिणमते' इति रूपं वक्तुं शक्यम्, तथाप्यत्र तद्विषयत्वेऽर्थासङ्गतिः । यदि तु शंकरभगवत्पादादिभिः बहुशस्तथोक्तत्वात् शिष्टप्रयुक्तत्वम्, तदा पृषोदरादित्वात्साधुत्वं बोध्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतौ 'यद्' इति लुप्तसप्तमीकम् । ❀यत्प्रयन्तीति—प्रयन्ति = प्रेर्यमाणानि यत् = यस्मिन्नभिसंविशन्ति = लयं गच्छन्तीति तदर्थः । 'नामरूपे' इति कर्म पदम् । आलिख्य = विषयीकृत्य । विशेषतो नामरूपे एव दर्शयति — ❀घट इतीति—'नाम्ना रूपेण च' इत्यनयोः 'आलिख्य' इत्यत्रैवान्वयः । ❀निर्वर्त्यस्येति—अस्य 'अत एव' इत्यादिः, बुद्धिविषयीकरणादेवेति तदर्थः । प्राप्य-विकार्यकर्मणोः कथञ्चित् कारकत्वसम्भवेऽपि निर्वर्त्यस्य बौद्धत्वस्वीकारेणैव कर्मत्वसम्भव इति भावः । ❀कर्मकारकत्वमिति— अन्यथा सिद्धस्य फलाश्रयत्वरूपकर्मत्वासम्भव इति भावः । एवञ्च 'जगतोऽपि नामरूपाभ्यां व्याकृतत्वात्तत्कर्ता चेतनः परमात्माऽस्तीत्यनुमीयते' इत्येतदर्थकस्तद्ग्रन्थः । यत्तु क्रियानिमित्तत्वादेव घटस्य कारकत्वं विषयताऽऽश्रयत्वाच्च कर्मत्वमिति, तन्न, असतः फलाश्रयत्वासम्भवात् । ❀बुद्धिसिद्धमिति — उत्पत्तेः प्राक् तदसत्कार्य्यं बुद्धिसिद्धम्, बुद्धौ सिद्धमित्यर्थः । घटादीनां बुद्धिस्थत्वमुपपादयति — ❀चित्तस्येति — चित्तस्य = अन्तःकरणस्य द्रव्यरूपः = द्रव्यसमानाकारो यः परिणामः स एव 'वृत्तिः' इत्युच्यते । कथमन्तःकरणस्य परिणाम इति चेत्तत्राह — ❀इन्द्रियप्रणाल्या निर्गत्येति — अयं भावः — यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथाऽन्तःकरणमपि चक्षुरादिद्वारा घटादिदेशं गत्वा घटाद्याकारेण परिणमति । स एव परिणामः 'वृत्तिः' इत्युच्यते । यत्र च वृत्त्यवच्छिन्नचैतन्यविषयावच्छिन्नचैतन्ययोरैक्यं तत्र विषयस्य प्रत्यक्षत्वम् । ऐक्यप्रयोजकन्तु तयोरेकदेशस्थत्वम् । प्रकृते उभयोरेकदेशस्थत्वाद् घटांशे प्रत्यक्षत्वं बोध्यम् । नन्वन्तःकरणस्य निरवयवतया कथं परिणामरूपा वृत्तिरिति चेत्, न, अन्तःकरणस्य द्रव्यत्वेन सावयवत्वात् । एवं शुक्तिरजतादिस्थलेऽप्यविद्यैव रजताद्याकारेण परिणमति । 'रजतरूपेणाविद्यायाः परिणामे कथम् 'नेदं रजतम्' इत्यनेन लौकिकपरमार्थरजतं निषिध्यते' इति वेदान्तिग्रन्थ इति चेत्, उच्यते — पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाल्लौकिकपरमार्थरजतत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकपरमार्थरजतमिदं न भवतीति निषिध्यते इति तदाशयात् । न चान्तःकरणस्य बहिर्देशगमने शरीरं निर्जीवं स्यादिति वाच्यम्, चक्षुरादिवदन्तःकरणस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयदेशगमनेऽपि शरीरसम्बन्धसत्त्वाद् बुद्धिस्थविषयाकारेणैव परिणामाद्बहिर्गमनाभावाच्च । नन्वेवम् 'अहं सुखी' इतिवद् 'अहं रजतवान्' इति प्रतीतिः स्यादिति चेत्, न, 'अहमिहैवास्मि' इति प्रतीतेर्विशेष्यताऽवच्छेदकीभूतैतच्छरीरावच्छेदेनैतद्देशमात्रसंयोगावगाहित्ववदुक्तप्रतीतेरपि इदन्त्वावच्छेदेन रजतत्वावगाहित्वस्यैवौचित्यात् । ननु वृत्तेरन्तःकरणनिष्ठतया कथमन्तःकरणवृत्तिद्रव्यस्य वृत्तिरूपतेति चेत्, न, शरीरावच्छेदेन ज्ञानादेरिव शुक्तीदन्त्वादिविशिष्टावच्छेदेन रजतादेरात्मसमवाये बाधकाभावात् । *संयुज्येति — चित्तमिति शेषः† । सांख्यास्तु — 'अन्तःकरणस्य स्वच्छतया तत्र घटादिविषयाणां प्रतिबिम्बे घटादिविषया बुद्धिर्भवति, दर्पणे मुखप्रतिबिम्बे मुखादिबुद्धिवन्न तु तत्र मुखमस्ति । एवं जडेष्वन्तःकरणवृत्तिरूपेषु चैतन्यमपि संक्रान्तमिव दृश्यते । तत्सङ्क्रमविशिष्टान्तःकरणवृत्तौ सर्वार्थाकारसमर्पणम्' इति वदन्ति । तान् दूषयति — *न तु तस्यामिति — वृत्तावित्यर्थः । *संयुक्तेति — इन्द्रियसंयुक्तो यो बाह्यविषयस्तस्य प्रतिबिम्बे सति प्रत्यक्षत्वमिति तु न, स्वप्नादिस्थले बाह्यविषयसम्बन्धाभावेन प्रतिबिम्बासम्भवे प्रत्यक्षत्वानापत्तेः । *विप्रेति — यद्यपि कलाङ्कुद्भिः — 'योगवासिष्ठे उपशमप्रकरणे गाधिं प्रति विष्णूक्तिरियम् । व्याख्यातं गङ्गाधरसरस्वतिना — "हे विप्र ! पृथिव्यादि जगद्रूपं चित्तस्थम्, चित्तस्यैव जगन्निदानत्वाद्, बहिस्तु नासीदित्यर्थः । अयञ्चार्थः स्वप्नावस्थायां भ्रमावस्थायां मदावस्थायाञ्च सर्वैरनुभूयत एव, स्वप्नादिषु चित्तगतस्यैव प्रपञ्चस्य स्फुरणात्" इत्युक्तम्, तथापि योगवासिष्ठे उपशमप्रकरणे गाधिं प्रति विष्णूक्तौ नैवमानुपूर्वीकं किञ्चि-

---

† नन्वन्तःकरणस्येन्द्रियत्वेनातीन्द्रियतया 'अहम्' इति प्रत्यक्षानुपपत्तिरिति चेत्, न, तस्येन्द्रियत्वे मानाभावात् । "इन्द्रियेभ्यः परं मनः" (कठोप० ६।७) इति पृथगुक्तेः । "मनःषष्ठानीन्द्रियाणि" (भगवद्गी० १५।७) इति गीतावचने इन्द्रियगतसंख्यापूरणदर्शनादिन्द्रियत्वमिति चेत्, न, 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यत्र विजातीयेनापि पूरणदर्शनाद्विजातीयेनापि मनसेन्द्रियसंख्यापूरणे विरोधाभावात् । नन्वेवमपीन्द्रियजन्यत्वाभावात्प्रत्यक्षानुपपत्तिरिति चेत्, न, वेदान्तिमते इन्द्रियजन्यत्वस्य प्रत्यक्षत्वाप्रयोजकत्वेन ज्ञानगतप्रत्यक्षत्वस्य विषयचैतन्यप्रमातृचैतन्ययोरभेदस्यैव प्रयोजकत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वचनमुपलभ्यते । तत्र हि–एतद्वचनानुसारि—

"बहिर्न किञ्चिदप्यस्ति खाद्यब्ध्युर्वीदिगादिकम् ।
एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवाङ्कुरे ॥
फलादि स्फारतामेति यथैव बहिरङ्कुरात् ।
बहिः प्रकटतां याति तथा पृथ्व्यादि चेतसः ॥
सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं(स्थं)कदाचन ।
आबालमेतत्पुरुषैः सर्वैरेवानुभूयते ।
स्वप्न–भ्रम–मदावेग–राग–रोगादिदृष्टिषु ॥" इति ।

( यो० वा० ५।४८।४९–५३ )

इत्युपलभ्यते । तादृशवचनाभावे व्याख्यानानुपलब्धिरुचितैव । तदानुपूर्वीकवचनाभावेऽपि 'बौद्धा एव पदार्थाः; न तु बाह्यपदार्थस्य बुद्धौ प्रतिबिम्बः' इत्यत्र पूर्वोक्तानुपूर्वीकाणामपि वचनानां प्रामाण्यमस्त्येव । मञ्जूषाकारसमये तादृशमेव वचनमासील्लेखकप्रमादात्तु भ्रष्टमिति कथञ्चिद्वक्तुं शक्यते । यद्वा, मूलकृतैव अग्रे "कौर्मेऽपि" इत्युपक्रम्यैतद्वचनस्योपन्यस्तत्वात्कूर्मपुराणस्थमिदं भवेत् । स्वप्नोपलब्धरथादीनामागन्तुकनिद्राऽऽदिदोषजन्यत्वात्प्रातिभासिकत्वम् । ननु स्वप्ने पूर्वानुभूतरथादीनां स्मृतिरेवास्त्विति चेत्, न, स्वप्ने 'रथमहमद्राक्षम्' इत्यनुभूतेः सर्वसम्मतत्वात्स्मृतिरूपत्वस्य वक्तुमशक्यत्वात् । वस्तुतस्तु—रथादिषु तदानीमिन्द्रियग्राह्यत्वमपि प्रातिभासिकमेव, सर्वेन्द्रियाणामुपरतवृत्तिकत्वात् । *चित्तस्थमिति—स्वप्नादावसन्नेव विषयो यथा चित्तस्थ एवं जागरावस्थायामपि चित्तस्थ एव । बाह्येन्द्रियवृत्तेरभावे यदा मनोमात्रेणात्मनो भोक्तृत्वं तदा 'स्वप्नः' इत्युच्यते । अन्तःकरणचैतन्यस्यैवानाद्यविद्यावशात् स्वरूपतिरोधाने बाह्यरूपेण भानम् । तदुक्तम् "अन्तःकरणधर्मस्य भागा बहिरवस्थिताः" इति । अन्तः स्थितः करणव्यापारो यस्य तदन्तःकरणम् = चैतन्यं तस्य धर्माः = आन्तरपदार्थास्तेषामेव भागा बाह्या इत्यर्थः । वस्तुतस्तु–अन्तःकरणम् = चित्तं तस्य ये धर्म्माः = आन्तरपदार्थास्तदंशा एव बाह्या न तु ततो भिन्ना इत्यर्थः, चैतन्यस्य निर्धर्मकत्वात् । 'न तु वृत्तौ बाह्यविषयप्रतिबिम्बः' इति यदुक्तं तत्साधयति *भ्रमे इति—'ज्ञान'पदेन चित्तवृत्तेर्ग्रहणम् । तस्या आकारो रजततुल्यपरिणामता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सा च सत्यस्थल इव भ्रमस्थलेऽपि भवति। तत्रासतो रजतस्य वृत्तिविषयत्वासम्भवात्प्रातिभासिकमुत्पद्यते । शुक्तिरजतयोस्तादात्म्यमपि प्रातिभासिकमेव। तथा हि-तत्र हट्टस्थबाह्यरजतस्येन्द्रियसन्निकर्षाभावान्नाध्याससम्भवः। नापि तत्र रजतोत्पत्तिः, रजतं प्रति तदवयवानां कारणत्वेन तत्र रजतावयवाभावात्। अतः काचादिरोगदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगाद्रजताकाराऽन्तःकरणवृत्तिरुदेति। तथा च भ्रमस्थले काचादिदोषसमवहिताऽविद्यैव रजतादिरूपेण परिणमते' इति वेदान्तिसिद्धान्तः। *ज्ञानाकारस्येति—ज्ञानमाकारो यस्य, रजताकारज्ञानस्येत्यर्थः। विषये = शुक्त्यादौ। एवञ्च 'रजताद्याकारज्ञानस्य प्रातिभासिकरजतस्य वा शुक्त्यादावारोपः' इत्यस्यापि परिणामे एव पर्य्यवसानं बोध्यम्। *सिद्धान्तादिति—एतेन–'हट्टस्थं रजतं तत्र भासते इति। सन्निकर्षेणापि रजतांशे स्मरणात्मकं शुक्त्यंशे प्रत्यक्षात्मकं ज्ञानद्वयमेव जायते न तु शुक्तौ रजतत्वप्रकारकमेकं ज्ञानम्। रजतत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकज्ञानमात्रस्य रजतान्यनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपकत्वाभाववत्त्वमिति नियमस्य बाधकं विना त्यागायोगात्। एवञ्च स्मरणात्मकप्रत्यक्षात्मकज्ञानयोरैक्यमेव तत्र भ्रमत्वम्, न तु तदभाववति तत्प्रकारकज्ञानत्वमिति मीमांसकमतम्। नन्वेवं रजतत्वप्रकारेण शुक्तिविषयकप्रवृत्तिं प्रति शुक्तिनिष्ठेदन्त्वावच्छिन्नधर्मितानिरूपितरजतत्वनिष्ठप्रकारताकज्ञानं कारणमिति कार्यकारणभावानुपपत्तिरिति चेत्, न, रजतत्वोपस्थितिविशिष्टेदन्त्वनिष्ठप्रकारतानिरूपितशुक्तिनिष्ठविशेष्यताकज्ञानस्यैव तादृशप्रवृत्तिं प्रति हेतुत्वकल्पनेनादोषात्, इदंधर्मिकरजतत्वप्रत्यक्षं प्रति रजतासंसर्गाग्रहस्य प्रतिबन्धकत्वाच्च। 'नेदं रजतम्' इति प्रत्यक्षसत्त्वेन रजतत्वप्रकारकशुक्तिविशेष्यकप्रवृत्त्यापत्तिः' इति प्रभाकरोक्तमपास्तमिति भावः। *सन्निकृष्टमिति—तत्र न रजतोत्पत्तिः, तदुत्पादकरजतावयवाभावात्। नापि देशान्तरीयरजतज्ञानम्, इन्द्रियसन्निकर्षाभावात्। *रजताद्यारोप इति—असन्निकृष्टरजतभानाङ्गीकार इत्यर्थः। ननु दोषस्वभावादेव देशान्तरीयमपि रजतं भासेतेत्यरुचेराह—*तदा दृष्टमधुना नास्तीति। *स्वरूपत इति—रजतत्वस्वरूपभ्रमे बाह्यरजतस्यैव विषयत्वे तस्य विशेषदर्शनदशायामपि सत्त्वात् 'इदानीं रजतं नास्ति' इति रजताभावा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वगाही प्रत्ययो न स्यादिति भावः । 'रजतं नास्ति' इत्यस्य रजतबुद्धिर्नास्तीत्यर्थ इति चेत्, तर्हि सिद्धं बुद्धेरारोप इति । ननु विषयाभावे चित्तवृत्तेः कथं तथा परिणाम इत्यत आह—*चाकचिक्यादीति—चाकचिक्यादिकमेव भ्रमहेतुरित्यर्थः । अत एवोक्तं परमार्थसारे—"रज्ज्वां भुजङ्गहेतौ न च कारणमस्ति" (प० सा० ५०) इति । भुजङ्गहेतौ रज्ज्वां कारणान्तरं नास्ति किन्तु अन्यथाप्रतीत्यात्मिका अविद्यैवेति तदर्थः ।

ज्ञानलक्षणसन्निकर्ष-निरासः

**मू०—एतेन ज्ञानलक्षणसन्निकर्षेण हृष्टेऽनुभूतरजत ( धर्म ) प्रकारिका शुक्तिप्रतीतिरित्यपास्तम्, अन्यथोपपत्तेः । तत्तदनुयोगिताप्रतियोगिताऽविशिष्टसम्बन्धस्य कदाऽप्यनुभवाभावाच्च । सम्बन्धत्वस्य द्विष्ठत्वस्वरूपतया तत्तदनुयोगिकत्वादिरहितसम्बन्धभानस्यायुक्तत्वात् । तत्तदनुयोगिताऽऽदिवैशिष्ट्येन ज्ञातस्यैव प्रवृत्त्याद्युपयोगित्वाच्च ।**

(रत्न०)—*एतेनेति—प्रातिभासिकपदार्थस्वीकारेणेत्यर्थः । ननु लौकिकचाक्षुषं प्रत्येव चक्षुःसंयोगादेर्हेतुतयाऽलौकिकचाक्षुषं ज्ञानलक्षणसन्निकर्षेणैव वाच्यम् । तथा हि—'घटो नास्ति' इत्यत्राभावांशे घटस्य 'सोऽयम्' इति प्रत्यभिज्ञायां तत्तांशस्य, 'सुरभि चन्दनम्' इत्यादौ सौरभांशस्य भानं न संभवति, विषयेण सहेन्द्रियसम्बन्धाभावात् । अतस्तद्विषयकज्ञानमेव सम्बन्ध इति उक्तस्थले घटादीनां भानं सिद्धम् । तथा च भ्रमस्थलेऽपि बाह्यरजतादिज्ञानं वर्तत इति नैयायिकादिमतं खण्डयति—*ज्ञानलक्षणेति—ज्ञानं लक्षणं स्वरूपं यस्य सन्निकर्षस्य तेनेत्यर्थः । 'रज्जं रजतत्वेन जानामि, 'धूलिपटलं धूमत्वेन जानामि' इति प्रतीतिस्थलेऽन्यथाख्यातिरेव स्वीकार्या । अन्यथाख्यातिर्नामान्यप्रकारेण ज्ञानम् । तदभाववति तत्प्रकारकमिति यावत् । तथा च 'इदं रजतम्' इत्यादिभ्रमस्थले 'घटो नास्ति' 'सुरभि चन्दनम्' इत्यादिस्थले च कालान्तरे रजतत्वघटसौरभादीनामिन्द्रियसन्निकर्षेण यज्ज्ञानं जातं तद्रूपसन्निकर्षेण दोषेण च शुक्तौ रजतत्वप्रकारकं ज्ञानं जायते । शुक्त्याद्यंशमादाय चाक्षुषत्वादिव्यवहार इति तार्किकाः, तन्न युक्तमित्याह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*परास्तमिति† १—अयम्भावः—तत्र ज्ञानजनकचक्षुरादिसन्निकर्षाभावात् तद्विषयकज्ञानं प्रति तज्ज्ञानजन्यसंस्कारस्य कारणत्वं तैः कल्पनीयम् । न च दिनान्तरे जातं घटविषयकं ज्ञानं तिष्ठत्येवेति वाच्यम्, ज्ञानस्य तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन विनष्टत्वात्, संस्कारस्य च तदानीमसत्त्वात् । चाकचिक्यादिरूपोद्बोधकवशात्पुनस्तद्विषयकं ज्ञानं जायत इति तद्रूपसन्निकर्षेण शुक्तौ बाह्यरजतज्ञानमुपपन्नं स्यादिति चेत्, न, तद्विषयकज्ञानरूपसन्निकर्षे शुक्तौ रजतत्वप्रकारकज्ञाननिरूपिता कारणता कल्पनीया, अतिरिक्तसन्निकर्षकल्पना चेति कल्पनात्रयगौरवेण पराहतत्वादिति । *अन्यथैवेति— चित्तवृत्तिपरिणामेनैवेत्यर्थः । यत्तु ज्ञानस्य सन्निकर्षत्वे तत एव वह्न्यादिप्रत्यक्षोपपत्तावनुमितेरुच्छेदापत्तिरिति, तन्न, तत्र पर्वतीयवह्निविषयकज्ञानाभावादित्युपाध्यायाः । *तत्तदनुयोगित्वादीति–यथा घटभूतलयोःसंयोगे घटप्रतियोगिकत्वं भूतलानुयोगिकत्वम्, न तथा ज्ञानरूपसन्निकर्षे रजतत्वप्रतियोगिकत्वं शुक्त्याद्यनुयोगिकत्वमिति तस्य सम्बन्धत्वमेव दुर्वचमिति भावः । न च सामान्यलक्षणया निर्वाहः, तस्या देशान्तरीयस्वाश्रयविषयकज्ञानजनकत्वनियमात् । तथा च ज्ञाने सम्बन्धत्वासंभव इति भावः । यत्तु—'सम्बन्धसम्बन्धो न विशिष्टज्ञानविषयः' इति, तन्न, विशिष्टज्ञानविषयत्वाभावेऽपि स्वस्वरूपपरित्यागायोगात् । किञ्च, सम्बन्धसम्बन्धस्य भानाभावे 'वदरे कुण्डम्'

---

† अयमाशयः—'सौरभं चाक्षुषयामि' इति प्रतीतेरभावात् सौरभचाक्षुषोपपत्तये ज्ञानलक्षणसन्निकर्षो विफलः । न च 'सुरभि चन्दनम्' इति प्रतीत्यनुपपत्तिः, सौरभांशे स्मृतिविषयत्वस्यैव स्वीकारेणादोषात् । न चैवं सौरभांशे स्मृतित्वं चन्दनांशे चाक्षुषत्वम् इत्युभयोः साङ्कर्य्यम्, 'इदं रजतम्' इतिभ्रमस्थलेऽपि तत्त्वसत्त्वेन "यश्चोभयोः समो दोषः परिहारस्तयोः समः, इति न्यायेन तुल्ययुक्तिसमाधेयत्वात् । न च सन्निकर्षादेरिव तत्र दोषस्यापि प्रत्यक्षहेतुत्वमिति वाच्यम्, तदपेक्षया तदाकारेणान्तःकरणपरिणामकल्पन एव लाघवात् । नन्वन्तःकरणवृत्तावपि विषयगतदोषस्यैव प्रयोजकत्वेन सर्वस्यापि तादृशशुक्तिदर्शने भ्रान्तत्वाऽऽपत्तिरिति चेत, न, तत्पुरुषीयत्वं निवेश्यैव कार्य्यकारणभावकल्पनात् । 'लोहितः स्फटिकः' इत्यादिस्थले तु न तत्पुरुषीयत्वनिवेशः, तत्प्रतीतेः सर्वान् प्रत्यविशेषादिति । एतच्च ग्रन्थकृतैवाग्रे सूचितम् ।

२८

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति प्रतीतिवारणासम्भवः, संयोगस्योभयत्र तुल्यत्वात् । *वैशिष्ट्येनेति — यथा 'भूतले घटः' इत्यादौ भूतलानुयोगित्वेन ज्ञात एव सम्बन्धः प्रवृत्त्युपयोगीति भावः ।

मू०—वस्तुतः ज्ञानलक्षणा प्रत्यासत्तिरेव न, अविद्यमानस्य प्रत्यासत्तित्वायोगात् । न च ज्ञानविषयत्वं प्रत्यासत्तिः, ज्ञानविषयोभयस्वरूपा विषयतेति मते ज्ञाननाशे तस्या वक्तुमशक्यत्वात् । तस्मात् स्मृताविव संस्कार एव प्रत्यासत्तिः । एवञ्च मदुक्त एव पर्यवसानम् ।

'सुरभि चन्दनम्' 'सोऽयम्' इत्यादि च संस्कारचक्षुस्सन्निकर्षाद्युभयजन्यं ज्ञानान्तरमेवेति न स्मृतित्वानुभवत्वयोस्तत्र संकरः । ( इत्याद्यन्यत्र विस्तरः । )

(रत्न०) — एतत्सर्वं ज्ञानलक्षणसन्निकर्षमभ्युपेत्योक्तम् । वस्तुतस्तदसत्त्वमेवेत्याह —*वस्तुत इति —यत्तु कुञ्जिकाकारैः—'ज्ञायमानं सामान्यं न प्रत्यासत्तिरिति निराचष्टे' इत्यवतरणमुक्त्वा बहु प्रलपितम्, तदत्यन्तमसङ्गतम्, सामान्यरूपप्रत्यासत्तेः प्रकृते ग्रन्थकृताऽस्पृष्टत्वात् । *अविद्यमानस्येति — ज्ञानस्येति शेषः । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वात्तस्येति भावः । ननु न ज्ञानं प्रत्यासत्तिः किन्तु ज्ञानविषयत्वम्, तस्य च ज्ञाननाशेऽपि विद्यमानतया नानुपपत्तिरत आह —*ज्ञानविषयेति — विषयनिष्ठा या ज्ञानविषयता सा यदि ज्ञानविषयोभयरूपा तदा ज्ञाननाशेनोभयात्मकविषयतायाः नष्टत्वात् तस्या अपि प्रत्यासत्तित्वासम्भव इति भावः । विषयतायाः ज्ञानस्वरूपत्वेऽपि नष्टत्वात्प्रत्यासत्तित्वासिद्धिः, 'घटवद्भूतलम्' इति ज्ञानानन्तरम् 'घटविशेष्यकज्ञानवानहम्' इत्यनुव्यवसायापत्तिश्च, विषयतायाः ज्ञानरूपत्वाज्ज्ञानस्य च विशेष्यत्वात् । विषयरूपत्वे 'नष्टं घटं जानामि' इत्यस्यानुपपत्तिः, 'घटवद्भूतलम्' 'घट-भूतल-संयोगाः' इत्यनयोर्ज्ञानयोरवैलक्षण्यप्रसङ्गश्चेत्याह — *संस्कार एवेति — रजतवासनारूप इत्यर्थः । नातः संस्कारजन्यत्वेन स्मृतित्वापत्तिः । वस्तुतस्तु — विषयरूपत्वेऽपि 'घट-भूतल-संयोगाः' इत्यत्र संयोगत्वेन संयोगो भासते न तु 'घटवद्भूतलम्' इत्यत्र तथेति वैलक्षण्यम् । जात्यखण्डोपाध्यतिरिक्तपदार्थस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपतो न भानमिति नियमस्तु प्रकारतांशे न तु सांसर्गिकविषयतायामत एवोक्तम् — *मत इति — विषयतायाः ज्ञानविषयोभयातिरिक्तत्वस्वीकारे गौरवं स्फुटमेवेति ज्ञानविषयताया अपि प्रत्यासत्तित्वासम्भवः । तस्मात् = अन्यथाऽनिर्वाहात् । *स्मृताविवेति — भ्रमादावपीति भावः । एवञ्च = संस्कारस्यैव प्रत्यासत्तित्वे च । मदुक्ते एव = बौद्धपदार्थभाने एव । *सङ्कर इति — एतच्चाभ्युपेत्यवादेन । वस्तुतस्तु कपिसंयोगतदभावयोरिव एकस्मिन्नपि ज्ञाने स्मृतित्वानुभवत्वयोरवच्छेदकभेदेन स्वीकारे बाधकाभावः। परे तु 'सुरभि चन्दनम्' इत्यत्र चन्दनत्वेन सुरभित्वानुमानमेवेत्याहुः । प्राभाकरास्तु — 'इदं रजतम्' इत्यत्र 'इदम्' इति पुरोवर्तिद्रव्यग्रहणम्, दोषवशेन तद्गतशुक्तित्वविशेषाग्रहणम् । तज्ज्ञानं च दोषवशत एव प्रमुष्ट-पूर्वानुभूततत्ताका स्मृतिः । तत्र यथा 'इदं रजतम्' इति ज्ञानम् 'इदम्' पदार्थरजतत्वयोरसंसर्गं न गृह्णाति, तयोः संसृष्टत्वेनासंसर्गा-भावात्, ज्ञानैक्याच्च न स्वगतभेदं विषयीकरोति, तथा भ्रमस्थ-लेऽपि तत्तत्सादृश्यादेते भिन्ने अपि ज्ञाने स्वगतभेदं विषययोर-संसर्गञ्च नावगाहेते इति विशिष्टज्ञानकार्यप्रवृत्तेरेकज्ञानत्वव्यवहारादेश्च निर्वाहः । 'सुरभि चन्दनम्' इत्यत्रोक्तरीत्या ग्रहणात्मकमिदमेकमेव ज्ञानम् । संस्कारस्य सहकारितामात्रेण स्मृतित्वव्यवहारमात्रं न तु सा स्मृतिः, पूर्वानुभूततारूपतत्ताऽनुल्लेखात् । अत एव तत्र 'पश्यामि' इत्येवा-नुव्यवसायो न 'स्मरामि' इत्यंशतोऽपि । चक्षुर्द्वारा निर्गतान्तःकरण-वृत्तावेव संस्कारवशात्सौरभाकारताया अपि जायमानत्वेन तस्य चाक्षु-षत्वात् । 'सोऽयम्' इत्यत्रापि पूर्वानुभूततारूपतत्तोल्लेखेऽप्यन्यत्सर्वं प्रा-ग्वदेवेति स्मृतित्वाभावः' इत्याहुः । सिद्धान्ते तु स्मृतित्वानुभवत्वाविशिष्टं तृतीयं ज्ञानमिदमिति स्मृतित्वानुभवत्वयोः सामानाधिकरण्याभावान्न सा-ङ्कर्यम् । कुब्जिकाकारास्तु—ब्रह्मभिन्नस्य सर्वस्यानित्यतया नित्यत्वघटित-जातेरेवाभावात्साङ्कर्यस्य जातित्वबाधकत्वासम्भव इत्याहुः, तन्न, व्यव-हारकाले व्यवहारमार्गानुसारिभिर्व्यवहारस्य सर्वथोपपादनीयतया जाते-रप्यावश्यकत्वात् । न च सर्वप्रपञ्चस्यानित्यत्वेन नित्यत्वघटिततत्स्व-रूपस्यासम्भवात्तदसम्भवः, सृष्टिकालमारभ्य प्रलयपर्यन्तस्थायित्वरूप-नित्यत्वघटिततत्स्वरूपत्वेनादोषादित्युपाध्यायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—अत एव "स्त्रियाम्" ( पा० सू० ४।१।३ ) इति सूत्रे खट्वाऽऽदौ स्तनकेशाद्यदर्शनेन लिङ्गाभावाट्टापोऽनुपपत्तिमाशङ्क्य—"असत्तु मृगतृष्णावद् गन्धर्वनगरं यथा ।" असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसल्लिङ्गं शक्यं द्रष्टुम् ? मृगतृष्णावत् । तद्यथा—मृगास्तृपिताः अपां धाराः पश्यन्ति, न च ताः सन्ति, यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते" इति भाष्ये उक्तम् । अनेन हि स्पष्टमेव भ्रमे बहिस्तद्देशे असत एव भानमुक्तम् । हरिणाऽप्युक्तम्—

भ्रमे प्रातिभासिकभाननिरूपणम्

"यथा सलिलनिर्भासो मृगतृष्णासु जायते ।
जलोपलब्ध्यनुगुणाद्बीजाद् बुद्धिर्जलेऽसति ।। इति ।

'बीजं पूर्वपूर्वमिथ्याज्ञानजन्यवासना' इति तद्व्याख्यातारः । व्यवहारदशायां कदाऽपि केनापि तन्मात्रे बाधाननुभवात् 'असतो लिङ्गस्य भानम्' इत्येतन्निराकृतमित्यन्यत् ।

भ्रमे यावद्विशेषदर्शनं बहिः सत्त्वेन प्रतीतिस्तु तत्राधिष्ठानगतसत्त्वारोपात् । अत एव "सदसत्ख्यातिर्बाधाबाधाभ्याम्" ( सां० द० ५।५६ ) इति साङ्ख्यसूत्रे उक्तम् । यावद्विशेषदर्शनमबाधस्तदुत्तरं च बाधोऽस्ति ।

प्रपञ्चोऽप्येवमेव, मृगतृष्णाऽऽदिदृष्टान्तेन प्रपञ्चस्य शास्त्रे वर्णनात् । तदुक्तं परमार्थसारे शेषनागेन—

"मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवद् भ्रान्तमखिलं जगद्रूपम् ।।" इति ।

भ्रान्तं भ्रमविषय इत्यर्थः । (प० सा० २२)

(रत्न०)—नैयायिकोक्तं भाष्यविरुद्धमपीत्याह—*अत एवेति—उक्तरीत्याऽन्तःकरणपरिणामेन निर्वाहादेवेत्यर्थः । *स्तनकेशादीति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥"

( महाभा० ४।१।३ )

इति भाष्योक्तलिङ्गस्य खट्वावृक्षादावभावात् टापोऽप्राप्तिमाशङ्क्योक्तम्—

"असत्तु मृगतृष्णावद् गन्धर्वनगरं यथा" इति ।

अस्यार्थो भाष्ये—"असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसन्नाम लिङ्गं शक्यं द्रष्टुम् ? मृगतृष्णावत् । तद्यथा मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति । गन्धर्वनगरं यथा—यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते, तद्वत् खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम्" एवं वर्णितः । भुवा स्पृश्यमानत्वेन प्रतीयमानं गगनमण्डलम् 'गन्धर्वनगरम्' इत्युच्यते । बृहत्संहितायाम् वराहमिहिराचार्येण गन्धर्वनगरमुपक्रम्यैवमुक्तम्—

"गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम् ।
दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥
अनेकवर्णाकृति खे प्रकाशते
पुरं पताका-ध्वज-तोरणान्वितम् ।
यदा, तदा नाग-मनुष्य-वाजिनाम्
पिबत्यसृग् भूरि रणे वसुन्धरा ॥" इति ।

( बृह० सं० अ० ३६ श्लो० ४–५ )

अत्र कैयटः—"मृगतृष्णाविषया मरुमरीचिका यथाऽसत्येन जलरूपेण प्रतिभासते तथा खट्वावृक्षादावसता स्त्रीपुंसत्वेनेत्यर्थः । अथोच्यते—मरीचिदर्शनात्सादृश्याज्जलं पूर्वानुभूतं स्मर्यते, न तु तत्रासज्जलं चकास्तीति, तत्राह—"गन्धर्वनगरं यथा" इति । न हि गन्धर्वनगरमन्तरिक्षे कदाचिदुपलब्धम् । न च तत्र तत्सदृशवस्त्वन्तरग्रहणं येन गन्धर्वनगरं स्मर्येत । तस्मादसतामपि भावानामचिन्त्यान्निमित्तसामर्थ्याद्यथोपलम्भस्तथा खट्वाऽऽदावपि स्त्रीत्वादेरित्यर्थः" इति ।
अनेन = भाष्येण । तद्देशे = शुक्त्याद्यधिष्ठानदेशे । *असत एवेति—अनेन सतो भाननिरासः । नैयायिकादिमतेऽन्यत्र सत एव भानेन भाष्यविरोधः स्पष्ट एव । तस्मादुक्तप्रकारेण सर्वत्र बौद्धस्य बहिर्भानमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्णयः। तत्र हरिसम्मतिमप्याह — ❀हरिणाऽप्युक्तम् यथा सलिलेति — ननु जलाभावे तन्निर्भासासंभवः, अन्यथा शशविषाणस्याप्याभासः प्रसज्ज्येतात आह — ❀जलोपलब्धीति — जलोपलब्ध्यनुगुणात् = जलनिर्भासकारणात्। बीजात् = अचिन्त्यसामर्थ्यान्निमित्तात्। तदेवाह — ❀बीजं पूर्वपूर्वेति — नन्वग्रिमभाष्यात् "आदित्यगतिवत् सन्न" (महाभा० ४।१।३) अथवा यथाऽऽदित्यगतिः सती नोपलभ्यते, किन्तु देशान्तरसम्बन्धादनुमीयते। तथा सदपि खट्वाऽऽदिषु लिङ्गं नोपलभ्यते' इत्याद्यर्थकादसतो भानं निराकृतमत आह — ❀व्यवहारेति — लिङ्गस्थले लोके बाधाननुभवात् केवललिङ्गविषय एवासतो भानं निराकृतं ननु भ्रमस्थलेऽसतो रजतत्वस्य भानम्, तत्रोत्तरकाले बाधानुभवात्। तथा च वृक्षखट्वाऽऽदौ प्राणिष्विव सतो लिङ्गस्याश्रयणेन कार्यनिर्वाह इति भावः। ननु भ्रमादावसत एव भानं यदि भाष्यसम्मतं तदा बाधदर्शनात्प्राक् सत्त्वेन प्रतीतिर्नोपपद्यतेऽत आह — ❀भ्रमे इति — शुक्त्यादिरूपाधिष्ठानगतसत्तायाः रजतत्वादावारोपात्सत्त्वेन प्रतीतिरिति भावः। अत एव = अधिष्ठानगतसत्त्वारोपादेव। "सदसत्ख्यातिर्बाधाबाधात्" (सां० द० ५।५६) इति सांख्यसूत्रम्। तत्र तद्व्याख्यातृभिरेवं व्याख्यातम् — "सदसत्ख्यातिरेव सर्वेषां गुणादीनाम्। कुतः? बाधाबाधाभ्याम्"। क्वचिदेकवचनान्तः पाठः। "तत्र स्वरूपेणाबाधः, सर्ववस्तूनां नित्यत्वात्। संसर्गतस्तु बाधः, सर्ववस्तूनां चैतन्येऽस्तित्वात्। बाधश्च — प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम्। असत्त्वं त्वभावः, सोऽप्यधिकरणस्वरूप इति। न च सदसत्त्वयोर्विरोध इति वाच्यम्, प्रकारभेदेनाविरोधात्। यथा हि लौहित्यं बिम्बरूपेण सत्, स्फटिकगतप्रतिबिम्बरूपेण चासदिति दृष्टम्। यथा वा रजतं वणिग्वीथीस्थरूपेण सत्, शुक्त्यध्यस्तरूपेण चासत्। तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्यादावध्यस्तरूपेण चासदिति। एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम्। प्रकृते चावस्थाभेदेन सदसत्त्वे एव दृष्टान्तता"। ❀यावदिति — विरोधेन यौगपद्यासंभवाद्विशेषदर्शनात्प्राक् सत्, विशेषदर्शनानन्तरं चासदिति विरोधाभावः। ❀एवमेवेति — सदसत्ख्यातिरेवेत्यर्थः। ब्रह्मदर्शनात् प्राक् सत्, तदनन्तरञ्चासदिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावः । नन्वेतादृशं वस्तु क्व दृष्टम् ? अत आह—*मृगतृष्णेति । *तैमिरिकेति—यथाऽक्षिगोलकस्य निपीडनेन तिमिरकृतचन्द्रद्वयदर्शनमन्यथा न, तथा जगदपि । प्रतीतिमात्रेण धर्माणां न सत्यत्वमित्याह—*मृगतृष्णेति—ऊपरभूमावूर्ध्वाधरभावेन सूर्यकिरणानां सम्बन्ध एव 'मृगतृष्णा' । अधिष्ठानभूतायां तस्यामसदप्युदकं वासनावशाद् भासते । एवमसदपि रजतं शुक्त्यादाववभासत इत्यर्थः । यथा तिमिरनामकव्याधिविशिष्टस्य चन्द्रेऽसदपि द्वित्वं भासते एवं ब्रह्मणि निखिलं जगदसदपि पूर्वपूर्ववासनावशाद् भासते । मिथ्यात्वे विप्रतिपन्नं प्रति विश्वासदार्ढ्याय बहुदृष्टान्तोपन्यासः । *भ्रान्तमिति—भावत्कान्तादर्शं आद्यच् ।

सू०—व्यासोऽपि "मायामात्रं तु कात्स्न्र्येनानभिव्यक्तेः" (वे० सू० ३।२।३) इति स्वप्नप्रपञ्चस्य मायामात्रत्वं न तु बाह्यसर्गतुल्यत्वमाह तत्रैव । यद्यपि जाग्रत्प्रपञ्चस्यापि "तदनन्यत्वमारम्भण शब्दादिभ्यः" (वे० सू०२।१।१४) इति सूत्रेण मायामात्रत्वमुक्तम्, तथापि "प्राग् ब्रह्मात्मदर्शनाद् वियदादिप्रपञ्चो व्यवस्थितः, स्वाप्नस्तु प्रतिदिनं बाध्यत इति विशेषः" इति भाष्ये उक्तम् । तस्य प्रपञ्चस्यान्यवस्तुत्वाभावः, "वाचारम्भणं विकारो नामधेयम्" ( छान्दो० उप० ६ । १ । ४ )-इति श्रुतेरिति सूत्रार्थः । वाचैव केवलमारभ्यते, यतो नाममात्रं न तु वस्तुत इति श्रुत्यर्थः ।

(रत्न०)—उक्तार्थे एव व्याससम्मतिमाह—*व्यासोऽपीति—बृहदारण्यके हि—"स यत्र स्वपिति" इत्युपक्रम्य "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" (बृ० उप० ४।३।१०) इत्याद्युक्तम् । तत्र संशयः—किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिराहोस्विन् मायामयीति ? तत्र पूर्वपक्षभूतं प्रथमसूत्रम् "सन्ध्ये सृष्टिराह हि" (वे०सू०३।२।१) इति । 'सन्ध्य' शब्दः स्वप्नपर्यायः । तथा च स्वप्ने सृष्टिस्तथ्या भवितुमर्हति हि = यतः श्रुतिराह—"अथ रथान् रथयोगान्पथः सृजते" इति, इति सूत्रार्थः । ततः सिद्धान्तसूत्रम्—"माया मात्रन्तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्" इति । (वे० सू० ३।२।३ ) 'तु'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दः पक्षं व्यावर्तयति । संध्ये सृष्टिर्मायामात्रन्तु, न पारमार्थिकी, कुतः ? कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् । न हि कात्स्न्र्येन परमार्थवस्तुधर्मेण, जाग्रदवस्थासामग्रीजन्यकार्यधर्मेणेति यावत्, अभिव्यक्तं स्वरूपं यस्येति तादृशः स्वप्नः । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने सम्भाव्यन्ते । न स्वप्ने रथादीनामुचितो देशो नापि संवृते देहदेशे रथादयोऽवकाशं लभेरन्निति प्रातिभासिका एव ते पदार्था इति निर्णीतम् । सूत्रेऽनभिव्यक्तस्वरूपत्वादिति पाठः । *तदनन्यत्वमिति — तयोः कार्यकारणयोरनन्यत्वम् = व्यतिरेकेणाभावः कार्य्यस्य । कारणात्पृथक्सत्त्वशून्यत्वं साध्यते, नैक्यम् । भेद एव व्यासिध्यते न त्वभेदः साध्यत इति भावः । हेत्वाकाङ्क्षायामाह — *आरम्भणशब्दादिभ्य इति— एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते — "यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।१) इति । एकेन परमार्थतो मृदात्मना ज्ञातेन सर्वं मृन्मयं घटादि विज्ञातं भवति, मृदात्मकत्वाविशेषात् । यतो वाचया केवलमारभ्यते विकारजातं न तु तत्त्वतोऽस्ति, यतो नामधेयमात्रमेतत् । आरम्भणशब्दात् = आरम्भणपदघटितश्रुतेः । 'आदि' शब्देन "ऐतदात्म्यमिदं सर्वम्" (छान्दो० उप० ६।८।७) "इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदं सर्वं यदयमात्मा ( बृह० उप० २।४।६ ) "एतद् ब्रह्मैतत्सर्वम्" ( बृह० ५।३।१ ) इत्यादिश्रुतिपरिग्रहः । ननु स्वप्नप्रपञ्चस्य प्रातिभासिकोक्त्या जाग्रत्प्रपञ्चस्य तत्त्वं न प्रतीयते, व्याससूत्राच्च तस्यापि तत्त्वमिति विरोधोऽत आह — *जाग्रत्प्रपञ्चस्यापीति — । *ब्रह्मात्मदर्शनादिति — ब्रह्मस्वरूपदर्शनादित्यर्थः । *नामधेयमिति — अत्र 'नामधेय' शब्देन तन्निमित्तको व्यवहारो लक्ष्यते, तथा च व्यवहारमात्रमेतदित्यर्थः । मृदादिवत्कारणेभ्यो भेदाभेदाभ्यामनिर्वचनीयत्वात् । भेदे सत्कार्यवादहानिः, अभेदे कारणव्यापारवैयर्थ्यम् । उत्पत्तेः पूर्वमसत्स्वभावं नरविषाणवत् पश्चात्तु सदित्यस्याप्ययुक्तत्वान्नीलरूपस्य पीतरूपत्व इवैकस्योभयविधत्वे विरोधात्, मृत्तिकेत्येव सत्यम् । सत्यत्वञ्च मृदः स्वविकारापेक्षया । तथा च सत्यज्ञानादिरूपेण ब्रह्मणि ज्ञाते विकारोऽसत्यं ब्रह्मैव सत्यमिति मिथ्याभूतस्यापि मृद्विकारस्य यथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यवहारायोपादानम् तथा मिथ्याभूतस्यापि प्रपञ्चस्य व्यवहारायोपादानं युज्यत एव । आसाञ्च श्रुतीनां जगद्ब्रह्मणोरभेदे न तात्पर्यम्, सदसतोऽभेदायोगात् किन्तु प्रपञ्चस्य पृथक् सत्तानिषेधे तात्पर्यमिति सर्वमनवद्यम् । अनेकस्य तात्त्विकत्वे कथमप्येकविज्ञानेन सर्वस्य विज्ञानं वक्तुमशक्यम् ।

सू०—अत एव च 'अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वम्' इति "न तु दृष्टान्तभावात्" ( वे० सू० २।१।९ ) इति सूत्रे भाष्ये । कार्यस्य वस्तुत्वाभावादिति तदाशयः । मायामात्रमिति 'मात्र'पदेनानिर्वचनीयोत्पत्तिवादमपि निराकरोति । न च "न तत्र रथाः, न रथयोगाः, न पन्थानो भवन्ति, अथ रथान्, रथयोगान्, पथः सृजते" ( बृह. उप. ४।३।१० ) इति स्वप्नविषयश्रुत्युक्तसृष्ट्यसङ्गतिरिति वाच्यम्, 'उपक्रमे रथाद्यभावः श्रुत्योक्त इति सृष्टिवचनं भाक्तम्' ( शा. भा. ३।२।४ )† इति भाष्येणैव समाधानात् । किंच "नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्तने वा कुतो निमेषमात्रेण सामर्थ्यम्? दारूणि च न सन्ति········तस्मान्मायामात्रं स्वप्नदर्शनम्" इति, 'तादृशमपीष्टानिष्टसूचकम्' इति च भाष्ये स्पष्टम् । अत्रान्तःकरणपर्यन्तं नष्टवृत्तिकत्वात् 'चक्षुरादीनि न सन्ति' इत्युक्त्या विशिष्टज्ञानाध्यासो दर्शितः । सामग्रीव्यतिरेकाच्चानुत्पत्तिं वदता शुक्तिरजतादिस्थलेऽप्यनुत्पत्तिः सूचिता ।

( रत्न० )— ❀अत एवेति — कारणान्यवस्तुत्वाभावादेवेत्यर्थः । ❀"न तु दृष्टान्तभावात्" इति सूत्रे इति — तत्र हि पूर्वसूत्रेणोक्तम्— "यदि कार्य्यं ब्रह्मकारणकं स्यात्तदाऽपीतौ = प्रलये कारणं गच्छत्कार्यं कारणं स्वकीयेन स्थौल्यसावयवत्वाचेतनत्वादिधर्मेण दूषयेत्, तर्हि

---

†"तस्माद्रथाद्यभाववचनं श्रुत्या रथादिसृष्टिवचनं तु भक्त्या इति व्याख्येयम् । एतेन निर्माणश्रवणं व्याख्यातम्" इति तु शारीरकभाष्ये पाठः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'ब्रह्म जगत्कारणम्' इत्यसमञ्जसं स्यात्। तदुक्तम्—"अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" (वे० सू० २।१।८) इति। ततो द्वितीयं सूत्रम् "न तु दृष्टान्तभावात्" (वे० सू० २।१।९) इति। "यदुक्तं प्रलये कारणं गच्छत् कार्यं स्वेन धर्मेण कारणं दूषयेदिति, न तु, कस्माद्? दृष्टान्तभावात्। सन्ति हि दृष्टान्ताः—कारणं गच्छदपि कार्य्यं स्वेन धर्मेण न दूषयति, तद्यथा-शरावादयो विकाराः प्रकृतिं गच्छन्तोऽपि स्वेन धर्मेण मृदं न संसृजन्ति। कारणे कार्यधर्मसंयोजने हि न कश्चिद् दृष्टान्तोऽस्ति। यदि कार्यं कारणे स्वधर्मेणावतिष्ठेदपीतिरेव न सम्भवेत्। अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्य्यात्मत्वम्, आरम्भणशब्दादिभ्यः" इत्युक्तम्। अयं भावः—सृष्टिरेषा केवलं मायैव। जाग्रद्विषयस्य सर्वपुरुषसाधारण्येनार्थक्रियाकारित्वं स्थिरत्वञ्च, अनभिव्यक्तस्वरूपत्वात्। यद्यपि व्यवहारे सृष्टिरपि मायैव, तथापि इष्टोत्पादकविनाशकसामग्रीकल्पनाद्वारैवैषा मायाशक्तिः। द्वितीया तु मनआदिसापेक्षमायाशक्तिरिति। ते च स्वाप्नाः पदार्थाः मनःपरिणामरूपाः। व्यवहारदशायां बहिरनुपलभ्यमानाकारा बुद्धिवृत्तिरेव भ्रमः। शुक्तिरजतमपि शुक्त्यवच्छेदेनान्तःकरणपरिणाम एव। "न तु दृष्टान्तभावात्" इति सूत्रेण ब्रह्मापेक्षया सर्वस्य तुच्छत्वं फलितम्। ❀अनिर्वचनीयोत्पत्तिवादमिति—सदसद्विलक्षणोत्पत्तिवादमित्यर्थः। ❀सृष्ट्यसङ्गतिरिति—सामग्र्यभावादिति भावः। ❀भाक्तमिति—सामग्र्यभावात्सृष्ट्यभावबोधकश्रुतिविरोधाद् भाक्तमित्यर्थः। प्रातिभासिके भाष्यान्तरं प्रमाणयति—❀किञ्चेति। स च स्वप्नः-शुक्तिरजतं यथा शोकहर्षादिजनकम् एवं व्यावहारिकशुभाशुभसूचकः। न च स्वप्नस्य शुभाशुभसूचकत्वे प्रमाणाभावः, सूत्रस्यैव प्रमाणत्वात्। "सूचकश्च हि श्रुतेराचक्षते च तद्विदः" (वे० सू० ३।२।४) इति "सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा च श्रुतिः—

"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥" इति।

(छा० उप० ५।२।९)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*भाष्ये स्पष्टमिति — इति भाष्योक्तेरिति पाठः । *ज्ञानाध्यास इति — नत्वर्थाध्यास इति भावः । ज्ञानविषयत्वाभावेऽपि ज्ञानविषयत्वप्रतीतिर्ज्ञानाध्यासः । *अनुत्पत्तिः सूचितेति—सामग्र्यभावस्योभयत्र तुल्यत्वात् ।

सू०—तथा चतुर्थेऽपि भाष्ये—"मृत्पिण्डादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वम्, विकारस्य चानृतत्वं प्रतिपादयति शास्त्रम् । अतः सृष्टिवाक्यानि नोत्पत्त्यादिपराणि किन्तु ऐकात्म्यावगमपराणि" ( शा० भा० ४।३।१४ ) इति । 'सतः' इत्यस्याद्यन्तयोः सत्त्वेन मध्येऽपि सत्त्वानुमानेन कालत्रयाबाध्यत्वरूपं सत्यत्वम्, प्रपञ्चस्य तु आद्यन्तयोरसत्त्वेन मध्येऽप्यसत्त्वानुमानेन कालत्रयबाध्यत्वरूपमनृतत्वमित्यर्थः । मध्ये कदाचित्सत्त्वेन प्रतीतिस्तु भ्रम एवेति तदाशयः । उत्पत्त्यादीनां भ्रमविषयाणामेव तत्रानुवाद इति विकारत्वादिप्रतीतिरपि भ्रम एवेति तत्तात्पर्यम् ।

प्रपञ्चस्य प्रातिभासिकत्वनिरूपणम्

मृत्पिण्डादिदृष्टान्तस्य चायमर्थः—एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं घटशरावादि मृदात्मकमिति विज्ञातं भवतीति ।

"यथा च तक्षोभयथा" ( वे० सू० २।३।४० ) इति सूत्रेऽपि भाष्ये—"स्वाप्नो विकारो वासनामय एव न तु पारमार्थिकोऽस्ति इति" इति । यथा तन्त्रान्तरे घटादिप्रपञ्चस्य पारमार्थिकत्वं तथा तत्रापि न स्वाप्नस्येत्यर्थः । अस्माकं तु व्यावहारिकोऽपि प्रपञ्चो दीर्घस्वप्न एवेति बोध्यम् ।

"तदनन्यत्वम्"—(वे सू० २।१।१४) इति सूत्रे भाष्यम्—"यथा च मृगतृष्णोदकादीनामूषरादिभ्योऽनन्यत्वम्, दृष्टादृष्टस्वरूपत्वात्, एवमस्य प्रपञ्चस्य ब्रह्मव्यतिरेकेणेति भावः" इति । "सर्वव्यवहारस्य प्राग् ब्रह्मात्मविज्ञानात्सत्यत्वम्, स्वप्नव्यवहारस्येव प्राक् प्रबोधात्" इति च "अविभागेऽपि परमात्मनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथ्याज्ञानप्रतिबद्धोऽपि भागव्यवहारः स्वप्नवदव्याहतः" इति चान्यत्र भाष्ये ।

( रत्न० )—तत्रैव भाष्यान्तरं प्रमाणयति—*तथेति—वेदान्तदर्शने—"न च कार्ये प्रत्यभिसंधिः", ( अ० ४ पा० ३ सू० १४ ) इति सूत्रे इत्यर्थः । *सृष्टिवाक्यानीति—"यतो वा इमानि भूतानि जायन्ते" ( तैत्ति० उप० ३।१ ) इत्यादीनि । *नोत्पत्त्यादीति—प्रपञ्चस्य प्रातिभासिकत्वश्रवणात् । *आद्यन्तयोरिति—'प्रपञ्चस्य' इति शेषः । *मध्येऽपीति—प्रपञ्चविशिष्टकालेऽपीत्यर्थः । वै० स्वोत्पत्तिक्षणध्वंसाधिकरणत्व-स्वध्वंसप्रागभावाधिकरणत्वोभयसम्बन्धेन ।*तत्रानुवाद इति—"आत्मन आकाशः संम्भूतः" ( तैत्ति० उप० २।१।१ ) इत्यादिश्रुतावनुवाद इत्यर्थः । ननु मृत्पिण्डादिदृष्टान्तेन ब्रह्मणो जगदुत्पत्तिर्लभ्यतेऽत आह—*मृत्पिण्डादीति—'एकेन विज्ञातेन सर्वमिदं विज्ञातं भवति' इति श्रुत्यर्थसमर्थन एव तात्पर्यमिति भावः। स्वार्थे ब्रह्मसूत्रमपि प्रमाणयति—*यथा चेति—अस्यायमर्थः—"यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखीभवति, स एव गृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थोऽकर्ता सुखीभवति, एवमविद्याप्रत्युपस्थापितद्वैतसम्पृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखीभवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकारणसङ्घातोऽकर्ता सुखीभवति । तथा मुक्त्यवस्थायामपि अविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखीभवति" इति भाष्ये उक्तः । एवञ्च यथा तक्षा उभयथा = उक्तोभयरूपेण भवति तथा जीवोऽपीति भावः। *तत्रापीति—तन्त्रान्तरेऽपीत्यर्थः । *स्वाप्नस्येति—अत्रापि पारमार्थिकत्वमित्यनुषज्यते। दैनिकस्वप्नापेक्षया दीर्घत्वमस्य । *तदनन्यत्वमिति–तदर्थमाह—*भाष्यमिति । *दृष्टादृष्टस्वरूपत्वादिति—† दृष्टश्चादृष्टश्च दृष्टादृष्टे स्वरूपे येषां तेषां भावो दृष्टादृष्टस्वरूपत्वं तस्मात् । "ये हि दृष्टस्वरूपा अदृष्टस्वरूपाश्च, न ते वस्तुसन्तः, यथा मृगतृष्णिकोदकादयः । तस्मात्सर्वं

---

† भाष्ये तु "दृष्टादृष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभावः" इति पाठो लभ्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विकारजातमवस्तुसत् । तथाहि-यदस्ति तदस्त्येव यथा चिदात्मा । न ह्यसौ कदाचित्कचित्कथञ्चिद्वाऽस्ति किन्तु सर्वदा सर्वत्र सर्वथाऽस्त्येव, न नास्ति । न चैवं विकारजातम्, तस्य कदाचित् कचित्कथञ्चिदवस्थानात् । तथा हि — सत्स्वभावश्चेद् विकारजातं कथं कदाचिदसत् ? असत्स्वभावश्चेत् कथं कदाचित्सत् ? सदसतोरेकत्र विरोधात् । न हि रूपं कदाचित्कचित् कथञ्चिद्वा गन्धो भवति । तस्मात्प्रपञ्चस्य ब्रह्मणः पृथक् सत्ता नास्ति, तदाह — ※ब्रह्मव्यतिरेकेणेति — पार्थक्येनेत्यर्थः । ननु ब्रह्मणो नित्यत्वे तदवयवश्रुतिरसङ्गता, तथाहि तैत्तिरीयके—"तस्य २‡ प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" ( तैत्ति० उप० २ । ५ ) इति सावयवस्यानित्यत्वदर्शनादत आह — ※अविभागेऽपीति ।

सू०—यत्तु–अनिर्वचनीयम्=सदसद्विलक्षणं जलादि मृगतृष्णाऽऽदावुत्पद्यते, एवं ब्रह्मणि प्रपञ्चः, मृदादौ घटादिः, स्वाप्नश्चेति, तन्न, तादृशानिर्वचनीयस्याप्रसिद्ध्या तद्भेदस्य वक्तुमशक्यत्वात् । किञ्च, तस्य सद्भिन्नत्वादसत्त्वम्, असद्भिन्नत्वात् सत्त्वमापततीति उभयरूपत्वमेवायाति । तत्र सत्त्वमारोपितमिति भेदाभेदयोरिव तयोर्न विरोधः । धर्मद्वयानाक्रान्तस्य लोकव्यवहारेऽभावाच्च ।

नानाख्यातिप्रदर्शनपूर्वकं स्वमतस्थापनम्

तदुक्तं साङ्ख्यसूत्रे—"नासतः ख्यातिः, नृशृङ्गवत्" ( सां० द० ५।५२ ) "नानिर्वचनीयस्य, तदभावात्" (सां० द० ५।५४) "नान्यथा ख्यातिः, स्ववचोव्याघातात्" ( सां० द० ५।५५ ) इति । असतः ख्यातौ नृशृङ्गवच्छुक्तिरजतादेरप्यभानापत्तिः । न च 'नृशृङ्गम्' इत्यादिशब्दतो बोधात्तद्वासनाऽऽवश्यकत्वेन तत्र तेषामपि सत्त्वेन प्रत्यक्षापत्तिः, तद्वासनायाः फलबलेन शाब्दबोधमा-

२ ‡ अपेक्षितविषयदर्शनजन्यं सुखं प्रियम्, तल्लाभजन्यो मोदः, तद्भोगजन्यः प्रमोदः, सुषुप्त्यादौ भासमानमज्ञानोपहितं सुखसामान्यमानन्दः, निरुपाधिकं सुख ब्रह्म ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रजनकत्वेन तदापत्त्यभावात्। 'नानिर्वचनीयस्य' इत्यस्यार्थस्तूक्त एव।

यद्यप्यन्यथाख्यातिः सौत्रान्तिकस्य, 'बाह्यशुक्त्यादौ ज्ञानधर्मरजतादेरध्यासः' इति तेनाङ्गीकारात्, तथापि हट्टस्थरजतादेरारोप इति रीत्या वैशेषिकैः स्वकीयैः साऽऽहृता। तदुभयमपि न, तत्र तदसत्त्वेन तद्रूपस्य सन्निकर्षाभावेन "असन्न भासते, सन्निकर्षाभावात्" इति स्वसिद्धान्तव्याघातात्।

किञ्च विशेष्य-विशेषणानुयोगिकत्व-प्रतियोगिकत्वविशिष्टसम्बन्धस्य त्वयाऽप्यसत एव भानाङ्गीकारात्तदग्रहेऽसंसर्गाग्रह एव पर्यवसानमिति विशिष्टभ्रमवाचकस्यान्यथाख्यातिरिति वचसो व्याघातात्।

किञ्च ज्ञानस्यार्थव्यभिचारित्वे ज्ञानेनार्थसिद्धिरिति स्ववचोव्याघातादिति दिक्।

(रत्न०)—वेदान्तिमतं निराकरोति—*यत्त्विति—।*अनिर्वचनीयमिति—"न सत्, नापि असत्, परस्परविरोधादित्यनिर्वाच्यमेवारोपणीयं मरीचिषु तोयमास्थेयम्। तदनेन क्रमेणाध्यस्तं ज्ञेयं परमार्थतोयमिव, अत एव पूर्वदृष्टमिव। तत्त्वतस्तु न तोयं न च पूर्वदृष्टं किन्त्वनृतमनिर्वाच्यम्" (भाम० अध्या० भा०) इति भामत्याम्। एतदेव 'अनिर्वचनीयख्यातिः' इत्युच्यते। *सदसद्विलक्षणमिति—अनेन सत्त्वेनासत्त्वेन वैकरूपेण वक्तुमशक्यत्वरूपस्य स्वमतेन वक्ष्यमाणस्यानिर्वचनीयत्वस्येष्टत्वं सूचितम्। *प्रपञ्च इति—अत्र 'घटादिः' 'स्वाप्नश्च' इत्यत्र च 'सदसद्विलक्षणमुत्पद्यते' इति सम्बध्यते। *तादृशस्येति—सदसद्विलक्षणस्येत्यर्थः। *किञ्चेति—यदि प्रपञ्चादौ सद्भिन्नत्वं तर्हि तद्व्यापकमसत्त्वमापद्यते। यदि चासद्भिन्नत्वं तर्हि सत्त्वं प्राप्नोति, तस्याः सद्भिन्नत्वव्यापकत्वात्। *उभयरूपत्वमिति—उभयविधव्यवहारस्य दर्शनादुभयरूपत्वं प्राप्नोतीति भावः। ननु सत्त्वासत्त्वयोर्विरुद्धत्वादुभयरूपताऽसम्भवोऽत आह—*सत्त्वमारोपितमिति। *भेदाभेदयोरिवेति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दार्थयोरिति शेषः । तयोः = सत्त्वासत्त्वयोः । ※विरोध इति — अनारोपितयोरेव विरोधस्य लोकसिद्धत्वादिति भावः । ※नासत इति—यथाऽसतो नृशृङ्गस्य भानं न भवति तथाऽसद्वादे भानं न स्यात् । जायते च भानमित्यसत्ख्यातिरसङ्गतेति भावः । ※नानिर्वचनीयस्येति—तादृशपदार्थाप्रसिद्धेः । ※नान्यथेति—'अन्यद्वस्त्वन्यरूपेण भासते' इत्यपि न युक्तम्, स्ववचोव्याघातात् । अन्यत्रान्यरूपस्य नृशृङ्गतुल्यतया शब्देनान्यथा उच्यतेऽन्यथा च तस्य भानमिति स्ववच एव विहन्यत इति भावः । असतो भानासम्भवस्यान्यथाख्यातिवादिभिरपि उक्तत्वात् । ※बोधात्तद्वासनेति — 'कार्यात् कारणानुमानम्' इति न्यायाद् बोधरूपकार्येण तद्वासनाऽनुमानम् । तत्र = अन्तःकरणे । तेषामपि = नृशृङ्गादीनामपि । ※उक्त एवेति — सदसद्भिन्नमित्यादिना । ※सौत्रान्तिकस्येति — सौत्रान्तिको बौद्धविशेषः । चत्वारो हि बुद्धशिष्याः—सौत्रान्तिकः; वैभाषिकः, योगाचारः, माध्यमिकश्चेति । ते च यथाक्रमं बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्व-बाह्यशून्यत्व-सर्वशून्यत्ववादानभिमन्यन्ते । यद्यपि तत्र भगवान् बुद्धः एक एवोपदेष्टा तथापि बोद्धव्यबुद्धिवैगुण्यात् 'सर्वं क्षणिकं क्षणिकम्, दुःखं दुःखम्, स्वलक्षणं स्वलक्षणम्, शून्यं शून्यम्' इति भावनाचतुष्टयं भिन्नभिन्नरूपेण गृह्णन्तः परस्परं वैमत्यमाश्रिताः । यद्यपि सौत्रान्तिकस्य बाह्यार्थोऽनुमेय एव न प्रत्यक्षः, तथापि ज्ञानगतार्थसारूप्येणानुमीयमानत्वादस्तु तावदध्यासः, आरोप्यन्तु ज्ञानाकार एव, भ्रान्तिज्ञानाकारसदृशस्य बाह्यार्थस्याभावात् । सौत्रान्तिकनये बाह्यमस्ति वस्तुसत्, तत्र ज्ञानाकारस्यारोपः । एवञ्च, रजतं बहिर्बाधितमर्थादान्तरे ज्ञाने व्यवतिष्ठते इति ज्ञानाकारस्य बहिरध्यासः सिद्धः । ज्ञानाकारस्यान्यत्र भानेनान्यथाख्यातिवादित्वं तस्य । ※ज्ञानधर्मेति—ज्ञानधर्मान्तरस्य रजतादेरित्यर्थः । ※रीत्येति—अनेनान्यथाख्यातावुभयसम्मतिः सूचिता । इयानेव भेदः—'आन्तरस्यारोपः' इति सौत्रान्तिकाः, 'हट्टस्थस्यारोपः' इति वैशेषिकाः । ※स्वकीयैरिति — वेदप्रामाण्याभ्युपगन्तृत्वेन स्वकीयत्वम् । ※उभयमपीति — पूर्वोक्ताध्यासद्वयमित्यर्थः । तत्र = अधिष्ठाने । तद्रूपस्य = अध्यस्तरजतत्वस्य । ※स्वसिद्धान्तेति — वैशेषिकसिद्धान्तेत्यर्थः । ※तदग्रह इति — असत्त्वेन हेतुना तादृशसम्बन्धाग्रहे रजतत्वशुक्त्योस्तद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भिमतसम्बन्धस्य ज्ञानं न स्यात्। तदाह – *संसर्गाग्रह इति। अत्र 'संसर्गाग्रहः' इत्येव पाठः, न तु 'असंसर्गाग्रहः' इति। तथा च विशिष्ट-बुद्धित्वानुपपत्तिः, संसर्गावगाहित्वेनैव तत्त्वादित्याह – *विशिष्टभ्रमवाचकस्येति। नन्वसतो भानस्वीकारे 'यत्र यत्र ज्ञानं तत्र तत्रार्थः' इति व्याप्तिभङ्गोऽत आह – *किञ्चेति।

मू०–परमार्थसारेऽपि—

त्रिगुणा चैतन्यात्मनि, सर्वगतेऽवस्थितेऽखिलाधारे।
कुरुते सृष्टिमविद्या, सर्वात्मा स्पृश्यते तया नात्मा॥ (प० सा० ४९)

सृष्टिम्–तद्भ्रममित्यर्थः। तदप्युक्तं तत्रैव–

रज्ज्वां भुजङ्गहेतौ, प्रभवविनाशौ यथा न स्तः।
जगदुत्पत्तिविनाशे, न च कारणमस्ति तद्वदिह॥ (प० सा० ५०)

भुजङ्गहेतौ—भुजङ्गभ्रमहेतौ। न च कारणमस्तीति–किन्त्वन्यथाभानात्मिकाऽविद्यैव सेत्यर्थः। किञ्चानिर्वचनीयोत्पत्तौ घटादिना मृदादेरिव ब्रह्मणोऽपि विकारित्वापत्तिः। भ्रमविषयेण तु न विकारित्वम्, कामुककृतैः कान्ताविषयैः

"सुप्ता किन्नु, मृता नु किम्, मनसि मे लीना, विलीना नु किम्"
इति। (अम० शत०)

विकल्पैः कान्तायाः विकारित्वाभावात्। वस्तुतो मृदि घटादिविकारो भ्रम एव, न तु कोऽपि पदार्थ इति "तदनन्यत्वम्"–(वे.सू. २।१।१४) इति सूत्रेणोक्तम्।

किञ्च, प्रसिद्धसामग्रीव्यतिरेकेऽपि यया सामग्र्या शुक्त्यादौ रजताद्युत्पत्तिस्तया सामग्र्या विषयासत्त्वेऽपि तदसन्निकर्षेऽपि ज्ञानाङ्गीकारेऽपि न बाधकम्। किञ्च, अनिर्वचनीयोत्पत्तौ तस्य तादृशरजतत्वाद्याश्रयत्वेन तज्ज्ञानस्य भ्रमत्वानापत्तिः, तस्य तद्वृत्तिधर्मप्रकारकत्वाभावात्। न च रजतत्वमेवानिर्वचनीयम्, आश्रयस्तु शुक्तिरेवेति न दोषः, त्वयाऽपि जातेर्वारंवारमुत्पत्त्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नङ्गीकारात् । किञ्च, जातेरिव तदाश्रयत्वस्यापि तादृशस्य शुक्तौ सत्त्वेन पूर्वोक्तदोषतादवस्थ्यम् । तदुक्तं योगसूत्रे । "विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" ( यो. द. ३।८ ) इति । 'विपर्ययः' इति लक्ष्यम् । 'मिथ्याज्ञानम्' इति लक्षणम् तद्विवरणम् 'अतद्रूप' इति तद्रूपप्रतिष्ठत्वाभाववत् । यद् ज्ञानप्रतिभासि रूपं रजतत्वादि तदाश्रयत्वाभाववद्विशेष्यकमित्यर्थ इति मिश्राः ।

(रत्न०)—सर्वगते = अपरिच्छिन्ने । अवस्थिते = नित्ये, "नित्यं विभुं सर्वगतं सुसूक्ष्मम् तदव्ययम्" (मुंड० उप० १।१।६ ) इति श्रुतेः । सर्वात्मा = सर्वशक्तिमती । तया = भ्रमविषयसृष्ट्या । तथा च त्रिगुणा, सर्वात्मा, अविद्या सर्वगते, अवस्थिते, अखिलाधारे, चैतन्यात्मनि सृष्टिभ्रमं कुरुते । तया सृष्ट्या आत्मा तु न स्पृश्यते, "नात्मानं माया स्पृशति" ( नृसिं० पूर्वता० ५।१ ) इति श्रुतेः । एवञ्च 'सृष्टौ प्रातिभासिकत्वमेव न तु वास्तविकसत्त्वम्' इति फलति । *रज्वामिति – भुजङ्गभ्रमहेतौ रज्वां यथा भुजङ्गस्य प्रभवविनाशौ न स्तः, तथा इह परमात्मनि जगतोऽप्युत्पत्तिविनाशौ न स्तः । भ्रमाधिष्ठानत्वमेव तत्रेति भावः । *अन्यथेति – भ्रमरूपेत्यर्थः । विकल्पैः = विकल्पात्मकज्ञानैः । विकल्पश्च-"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( योगद० समा० पा० सू० ९) इति सूत्रोक्तः । *उक्तमिति—"तदनन्यत्वमारम्भणशब्दादिभ्यः" ( वे० सू० २।१।१४ ) इति सूत्रे "यतो वाचाऽऽरम्भणं विकारो नामधेयम्, वाचैव केवलमस्तीत्यारभ्यते विकारो घटः शराव उदञ्चनश्चेति, न तु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति । नामधेयमात्रं ह्येतदनृतम्, 'मृत्तिका' इत्येव सत्यमिति" भाष्येणोक्तमित्यर्थः । *तदसन्निकर्ष इति – विषयेण सहेन्द्रियासन्निकर्षेऽपीत्यर्थः । *ज्ञानाङ्गीकारेऽपीति – अनिर्वचनीयोत्पत्तिस्वीकारापेक्षयाऽनन्तोत्पत्तितत्प्रागभावध्वंसकल्पनयाऽनिर्वचनीयोत्पादकसामग्र्यैव लौकिकसामग्रीं विनाऽपि ज्ञानस्वीकारे लाघवम् । *तस्य तस्येति – अनिर्वचनीयोत्पन्नतत्तद्रजतस्येत्यर्थः । तस्य = तज्ज्ञानस्य । *तदवृत्तीति – रजतावृत्तीत्यर्थः । *वारंवारमिति – केवलस्य ब्रह्मण एव नित्यत्वेन जातिलक्षणघटकनित्यत्वस्य सृष्टिकालमात्रोत्पत्तिकत्व-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टप्रलयकालमात्रवृत्तिध्वंसप्रतियोगित्वरूपस्यैव वाच्यतया वारंवारमित्युक्तिः । अनेन प्रलयकाले जातेर्नाशेऽपि न क्षतिः । मध्ये जातेरप्युत्पत्तिस्वीकारे तु सिद्धान्तभङ्गः । ❀जातेरिवेति — जातेरुत्पत्तिस्वीकारे शुक्तौ रजतत्वसत्त्वे तदाश्रयत्वस्य स्वतःसिद्धतया पूर्वोक्त (भ्रमत्वानापत्तिरूप) दोषतादवस्थ्यम् । ननु तदभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वेन प्रकृते तदव्यतिरत आह — ❀तदुक्तं योगसूत्रे इति — एवञ्च तदाश्रयत्वाभाववति तत्प्रकारकज्ञानस्यैव भ्रमत्वमिति भावः । ❀लक्षणमिति — 'मिथ्यात्वे सति ज्ञानत्वं विपर्ययस्य लक्षणम्' इत्यर्थः । मिथ्याज्ञानस्यैव विवरणम् "अतद्रूपप्रतिष्ठम्" इति । एतेन तदाश्रयत्वाभाववति तदाश्रयत्वप्रकारकज्ञानस्यैव भ्रमत्वं सूचितम् । नन्वेवमपि योगसूत्रे "अतद्रूपप्रतिष्ठम्" इत्यस्य हट्टस्थरजतत्वाद्याश्रयत्वाभाववद्विशेष्यकमित्येवार्थ इति न दोषोऽत आह — ❀यज्ज्ञानप्रतिभासीति । अन्ये तु — न हि मिथ्याज्ञानमित्यस्य विवरणम् "अतद्रूपप्रतिष्ठम्" इति, किन्तु न विद्यते तद्रूपस्य = ज्ञानाकारस्य प्रतिष्ठा = चिरन्तनस्थितिर्यत्रेत्येतदर्थकत्वेन हेतुगर्भविशेषणम्, तस्य बाधज्ञानबाध्यत्वाच्च तत्त्वम् । तेनास्य विकल्पतो भेदोऽप्युक्तो भवति । विकल्पश्च — शब्दज्ञानानुपाती वस्तुशून्यज्ञानरूपः । तदर्थश्च — बाधाबाधकालसाधारणशब्दज्ञानमात्रजन्यः प्रत्ययो विकल्पः, यथा नृशृङ्गमिति ।

मू०—व्यासस्यापीदमेव मिथ्याज्ञानमभिप्रेतम्, तेनान्यतल्लक्षणानुक्तेः, साङ्ख्यदूषितानिर्वचनीयख्यातेरपि तत्सूत्रानारूढत्वाच्च । तेन साङ्ख्योक्तसदसत्ख्यातेरेव तदभिमतत्वं लक्ष्यते । किञ्च, शुक्तिरजतस्थलेऽधिष्ठानज्ञानेन तन्नाशो वाच्यः । न च ज्ञानस्य वस्तुनाशकता दृष्टा । अत एव गौतमादिभिरुत्पत्तिस्तत्र नोक्ता । अन्यथा घटादिवत्तत्रापि उत्पत्तिमेव वदेयुः । शुक्त्यादि समवायिकारणम्, चाकचिक्याद्यसमवायिकारणम्, दोषो निमित्तकारणमिति वक्तुं शक्यत्वात् । अन्यथाख्यातिरित्येव चोक्तं तदीयैः । अन्यथाख्यातिरित्यनेन प्रकारस्यान्यत्र सत्त्वं सूचितम् । तत्सम्बन्धोऽप्येवमेव, तदनुयोगिकत्वमप्येवमेवेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सूचितम्, संयोगसमवाययोः सम्बन्धस्यानुयोगित्वादिभाननियतत्वात् ।

( रत्न० ) – पूर्वोक्तमिथ्याज्ञानलक्षणे व्याससम्मतिमाह – ॐव्यासस्यापीति । ॐइदमेवेति – योगसूत्रोक्तमिश्रसम्मतमेवेत्यर्थः । तेन = व्यासेन । ॐअन्यतल्लक्षणेति — योगसूत्रोक्तभिन्नलक्षणेत्यर्थः । अनिर्वचनीयख्यातिरपि न व्याससम्मतेत्याह — ॐदूषितेति — 'सांख्यदूषित' इति विशेषणदानेनाग्रे स्वयं वक्ष्यमाणाऽनिर्वचनीयख्यातिर्व्याससम्मतेति सूचितम् । ॐसूत्रानारूढत्वाच्चेति – अनेन भाष्ये तत्खण्डनेऽपि न क्षतिः । ॐअधिष्ठानज्ञानेति – शुक्त्यादिविशेषरूपेणेत्यर्थः । तन्नाशः = उत्पन्नानिर्वचनीयरजतनाशः । ॐतस्येति – अधिष्ठानज्ञानस्येत्यर्थः, व्यवहारकाले ज्ञाने वस्तुनाशकत्वस्यानुभवविरुद्धत्वात् । ॐअत एवेति – ज्ञानेन वस्तुनाशासम्भवादेवेत्यर्थः । अन्यथा = उत्पत्तेरभिमतत्वे । तत्रापि = भ्रमस्थलेऽपि । ननु रजतोत्पादकसामग्र्यभावादुत्पत्त्यनुक्तिर्नासङ्गताऽत आह – ॐशुक्त्यादीति — विलक्षणोत्पत्तिं प्रति विलक्षणसामग्र्याः सत्त्वादित्यर्थः । ॐअन्यथाख्यातिरेवेति – एवेनानिर्वचनीयोत्पत्तिनिरासः । तदीयैः = गौतमीयैः, नैयायिकैरिति यावत् । ॐइत्यनेनेति — इति कथनेनेत्यर्थः । प्रकारस्य = प्रकारीभूतरजतत्वादेः । अन्यत्र = इहस्थरजतादौ । ॐतत्सम्बन्ध इति — रजतत्वादिसम्बन्धः समवायादिरित्यर्थः । एवमेव = अन्यत्र सन्नेव । तदनुयोगिकत्वम् = रजतत्वप्रतियोगिकसमवायानुयोगिकत्वमप्यत्र रजतादौ सदेवेत्यर्थः । ॐनियतत्वादिति – अनुयोगित्वाद्यभावे सम्बन्धत्वासम्भवादिति भावः ।

मू०—बुद्धिसद्वा तद् । भ्रमप्रकारत्वमेव मिथ्यात्वम् । 'रजतं पश्यामि' इत्यनुव्यवसायोऽपि दोषवशाच्चाक्षुषत्वांशे भ्रम एव । न च दोषस्य रजतज्ञानत्वं त्वया कार्यताऽवच्छेदकं वाच्यम्, तद्वरं रजतत्वमेव लाघवात्तथोचितमिति वाच्यम्, उत्पत्तिनाशकल्पनाऽपेक्षया प्रमास्थले क्लृप्तस्य तस्यैव तत्त्वौचित्यात् । अत एव "ब्रह्मदृष्टिरुत्कर्षात्" ( वे० सू० ४।१।५) इत्यधिकरणे भाष्ये 'मत्येत्येव हि केवलं शुक्तिकां रजतमिति न तु तत्र रजतमस्तीति'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

1† इत्युक्तम् । "मुग्धेऽर्थसम्पत्तिः—"(वे० सू० ३।२।१) इति सूत्रे भाष्येऽपि 'न हि स्वच्छः स्फटिकोऽलक्तकसंयोगादस्वच्छो भवति, भ्रमत्वादस्वच्छत्वाभिमानमात्रमस्य' २† इत्युक्तम् । तत्र व्यावहारिकप्रातिभासिकयोः सदसद्विलक्षणत्वाविशेषेण भेदस्य वक्तुमशक्यत्वात् । विशेषदर्शनबाध्यत्वमपि तुल्यम् । तदुक्तं परमार्थसारे —

"ज्वलनाद्ध धूमोद्गतिभिर्विविधाऽऽकृतिरम्बरे यथा भाति ।
तद्वद्विष्णौ सृष्टिः स्वमायया द्वैतविस्तरा भाति ॥"

इति । ( प० सा० ३३. )

अत्र 'भाति' इत्येवोक्तं न तु 'उत्पद्यते' इति । आकाशे जलरेखावत्, शिलायामङ्कुरवत्, विविधाकृतेस्तत्र स्वरूपायोग्यत्वेनासम्भवात् । स्वमायया = वासनारूपया ।

( रत्न० )— स्वरूपप्रदर्शनपूर्वकं परमतं निरस्य स्वसिद्धान्तमाह — *बुद्धिसदिति । तद् = रजतत्वादि । ननु रजतत्वस्य बुद्धिस्थत्वे मिथ्यात्वानुपपत्तिरत आह — *भ्रमेति — विषयगतमिथ्यात्वलक्षणमिदम् । ननु रजतत्वस्य बुद्धिस्थत्वे 'रजतं पश्यामि' इत्यनुव्यवसायानुपपत्तिः, अत आह — *रजतमिति । *भ्रम एवेति — चक्षुःसन्निकर्षाभावात् । ननु रजतत्वस्य प्रातिभासिकत्वनये चाकचिक्यादिदोषाणामेव तत्र कारणत्वं वाच्यम् । तादृशकारणतानिरूपितकार्यताया रजतज्ञाने सत्त्वेन रजतत्वज्ञानत्वमेव कार्यताऽवच्छेदकम्, उत्पत्तिवादिमते तु रजतस्य कार्यत्वाद्रजतत्वस्यैव कार्यताऽवच्छेदकत्वमिति लाघवमत आह — *न च दोषस्येति- *तद्वरमिति — मूले 'वरम्' 'उचितम्' इति पौनरुक्त्यमतस्तयोरेकं प्रक्षिप्तमिति प्रतीयते । *प्रमास्थल इति — भ्रमस्थलस्याप्युपलक्षणमिदम्, उत्पत्तिवादिमतेऽपि तत्र तादृशज्ञानस्य सत्त्वेन तत्त्वस्यौचित्यात् । *औचित्यादिति — ज्ञानस्य कार्यत्वनयेऽपि निरूपकतासम्बन्धेन रजत-

---

१ † अयमेव पाठो भाष्यानुसारी, लिखितमूलपुस्तकानुसारी च ।

२ ‡ "न हि स्वच्छः स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताऽभिनिवेशस्य" इति भाष्ये पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वस्यैव कार्यताऽवच्छेदकत्वस्योक्तत्वाच्चेत्यपि बोध्यम्। *अत एवेति—ज्ञानस्य कार्यत्वादेवेत्यर्थः। *ब्रह्मदृष्टिरिति—अयं भावः—"पूर्वम् ब्रह्मदृष्टिः कर्तव्या इत्युक्तम्, तत्र संशयः—किं ब्रह्मदृष्टिरादित्ये कर्तव्या, उत आदित्यदृष्टिर्ब्रह्मणि? "आदित्यो ब्रह्म" (छान्दो० उप० ३।१९।१) इति श्रुतेः आदित्यस्यापि 'ब्रह्म'शब्दवाच्यत्वात् तत्र प्राप्ते सिद्धान्त-सूत्रम्—"ब्रह्मदृष्टिरुत्कर्षात्" (वे० सू० ४।१।५) इति। अस्यार्थः—ब्रह्मदृष्टिरेवादित्येषु स्यादिति। कस्मात्? उत्कर्षात्, उत्कृष्टदृष्टेस्तेष्वध्यासात् 'उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यवसितव्या' इति लौकिको न्यायः, यथा राजदृष्टिः क्षत्तरि। न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यादिति। ततश्च यथा 'शुक्तिकां रजतमिति प्रत्येति' इत्यत्र शुक्तिवचन एव शुक्तिकाशब्दो रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः। प्रत्येति हि केवलं रजतमिति न तु तत्र रजतमस्ति। एवमत्राप्यादित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते" इति। बौद्धार्थे एव भाष्यान्तरमपि प्रमाणयति—*मुग्ध इति—तत्र हि—"अस्ति मुग्धो नाम यं 'मूर्च्छितः' इति लोकाः कथयन्ति। स किमवस्थ इति परीक्षायामुच्यते-जीवस्य चतस्रोऽवस्था भवन्ति—जागरितम्, स्वप्नः, सुषुप्तिः शरीरादपसृतिश्चेति। तत्राह—"मुग्धेऽर्धसम्पत्तिः" इति। अर्द्धसम्पत्तिर्मुग्धता। मरणधर्मेण कम्पादिना सुषुप्तिधर्मेण सुखित्वदुःखित्वप्रत्ययाद्यभावेनोभयोरर्द्धसम्पत्तिसत्त्वाद् 'अर्द्धसम्पत्तिः मूर्च्छा' इत्युच्यते"। नात्रत्यमिदं भाष्यं किन्तु एतत्सूत्राव्यवहितोत्तरम् "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" (वे० सू० ३।२।११) इति सूत्रस्थमेव। लाघवात्सामीप्याच्च तथोक्तिः। अत्र हि—ब्रह्मविषयाः "सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः" (छां० उप० ३।१४।२) इत्यादयो विशेषलिङ्गाः। "अस्थूलमनण्वह्रस्वमदीर्घम्" (बृ० उप० ३।८।८) इत्येवमाद्या निर्विशेषलिङ्गाः। एवञ्चोभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्, उतान्यतरलिङ्गम्? तदपि सविशेषमुत निर्विशेषम्? इति संशये उच्यते—एकस्य ब्रह्मणः स्वत उभयलिङ्गत्वासम्भवात्स्थानतः पृथिव्यादेरुभयलिङ्गकत्वम्। तत्राह—"न स्थानतोऽपि"—(वे० सू० ३।२।११) इति—न हि स्वच्छः स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताऽभिनिवेशस्य" इत्युक्तम्। एतच्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वं बौद्धार्थस्वीकार एव संगच्छते । तत्र = अनिर्वचनीयोत्पत्तिवादिनः । भेदस्य = व्यावहारिकभ्रमस्थलीययोर्भेदस्य । ननु भ्रमस्थलीयस्य विशेषदर्शनबाध्यत्वं न तु व्यावहारिकस्य तदिति वैषम्यमत आह — *विशेषदर्शनेति । *तदुक्तमिति — प्रपञ्चस्य प्रातिभासिकत्वमुक्तमित्यर्थः । *ज्वलनादिति — ज्वलन( वह्नि )हेतुको यो धूमः तत्कर्तृकोर्ध्वदेशगमनैरम्बरे = आकाशे विविधा = नीलपीतादिरूपाऽऽकृतिर्यथा भाति तद्वद्विष्णोः सृष्टिः स्वमायया द्वैतविस्तरा = नामरूपादिविस्तरा भाति । उत्पत्त्यभावे हेतुमाह — *आकाश इति । तत्र = विष्णौ । *स्वरूपायोग्यत्वेनेति — कारणताऽवच्छेदकधर्माभावेनेत्यर्थः । *असम्भवादिति — उत्पत्तेरसम्भवादित्यर्थः । *स्वमाययेति — स्वस्माद्दुद्गतमाययेत्यर्थः, दृष्टान्तबलेन तथैव लाभात् । अन्यथा विष्णुमाययोः कः सम्बन्धः स्यात्, येन विष्णुमायेत्युच्येत ? । न चाश्रयाश्रयिभावः, तस्यासम्बन्धत्वात् — सम्बन्धमूलको हि सः — तन्मूलकसम्बन्धान्तराभावाच्च । न च स्वस्वामिभावः, "चतुर्भिः प्रकारैः स्वं भवति — क्रयणात्, अपहरणात्, याच्ञायाः ( उपलक्षणं दानस्येदम्, तस्याः स्वत्वानिष्पादकत्वात् ) विनिमयाच्च" इति "षष्ठी शेषे" ( पा० सू० २।३।५० ) इति सूत्रे भाष्योक्तेस्तदन्यतमाभावेन तदसम्भवादित्यन्ये । वस्तुतस्तु स्वस्य = भानकर्तुः मायया = अनादिवासनया, इत्यर्थ एवोचितः, कर्तुरुपस्थितत्वात् । 'काश्यां स्वसामर्थ्येनावतिष्ठते देवदत्तः' इत्यादौ तथैव दर्शनाच्चेत्युपाध्यायाः ।

मू०—श्रीहर्षेणापि — "परकीयरीत्येदमुक्तम् — 'अनिर्वचनीयत्वं विश्वस्य पर्यवस्यति' इति । वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापननिवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भारमवलम्ब्य चरितार्थाः सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः — न साध्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वाद्" (खं० खा० प्र० परि०) इति । सत्त्वासत्त्वव्यवस्थेति — तदन्यतरव्यवस्थेत्यर्थः । भारम् = प्रातिभासिकप्रपञ्चभारम् । अनिर्वचनीयत्वम् — निर्धार्य सत्त्वासत्त्वान्यतररूपेणा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्वचनीयत्वं न तु सदसद्विलक्षणत्वम्" इति तद्व्याख्यातारः । अत एव भागवते उक्तम्—

"ऋतेऽर्थं यत्प्रतीयेत, न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥" इति ।
(श्रीमद्भा० पु० २।९।३३)

यद्विनाऽप्यर्थमात्मन्यधिष्ठाने प्रतीयेत, सच्चात्मरूपे न प्रतीयेत, तत्प्रत्ययाप्रत्ययरूपमात्मनो मायां विद्यात् । यथा आभासः द्विचन्द्रादिः, यथा च तमः = राहुर्ग्रहमण्डले सन्नपि न प्रतीयते इत्यर्थः । असदर्थप्रकाशनस्यैव मायात्वादेवमेव युक्तम् । यदुक्तं बृहन्नारदीये—

"नासद्रूपा, न सद्रूपा, माया नैवोभयात्मिका ।
अनिर्वाच्या ततो ज्ञेया मिथ्याभूता सनातनी ॥" इति ।

तस्यायमर्थः—व्यवहारकाले सत्त्वेन प्रतीतेर्न केवलमसद्रूपा । प्रतिक्षणं परिणामितया प्रतीतेर्बाधदर्शनाद्विशेषदर्शनबाध्यत्वाच्च न केवलं वास्तवसद्रूपा । अत एव वास्तवोभयरूपापि न, विरोधाच्च । अत एवानिर्वाच्या = सत्येवासत्येवेति निर्धार्य वक्तुमशक्या । तर्हि किमुभयविलक्षणा ? नेत्याह- मिथ्याभूता, प्रतिभासमात्रविषयत्वात् । सनातनी—भ्रमपरम्पराजनकपरम्पराकवासनारूपेणेति । तस्मादारोपितं सत्त्वं परमार्थतस्त्वसत्त्वमित्येव युक्तम् । तदुक्तम्—"यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्" इति ।

( रत्न० )— अनिर्वचनीयोत्पत्तिनिरासे श्रीहर्षस्यापि सम्मतिमाह— *श्रीहर्षेणेति । *परकीयरीत्येति— पराभिमतव्यवस्थया निर्वचनवादस्य खण्डनं कृतम्, खण्डिते तस्मिन् पारिशेष्याद् अनिर्वचनीयत्वं सिध्यति, न तु मयाऽनिर्वचनीयत्वं साध्यते । ननु अनिर्वचनीयत्वं मा साध्यताम्, परिशेषसिद्धानिर्वचनीयताऽभ्युपगमेनापि द्वैतापत्तिस्तदवस्था, इत्यत आह — *वस्तुतस्त्विति-- *निवृत्ता इति—प्रपञ्चविषयकं यत्सत्त्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यवस्थापनम्, असत्त्वव्यवस्थापनं वा, तदन्यतरव्यवस्थापनतो निवृत्ता इत्यर्थः । चरितार्था: = कृतनिश्चयाः । ननु विचारेऽपि ब्रह्मज्ञानिनस्ते कथं प्रवृत्तिरत आह — ❀ये त्विति — स्वपरिकल्पिते च ते साधनदूषणे तयोर्व्यवस्थया विचारमवतार्य = प्रस्तुत्य । स्वाभिमतानिर्वचनीयत्वमाह — ❀निर्धार्य सत्त्वासत्त्वान्यतररूपेणानिर्वचनीयमिति । वेदान्त्यभिमतमनिर्वचनीयत्वं खण्डयति — ❀नत्विति । प्रातिभासिके भगवद्वचनमपि प्रमाणयति — ❀ऋत इति — विधिं प्रति भगवदुक्तिः । नन्वनेन मायानिरूपणं क्रियते "यथात्ममायायोगेन" (श्रीमद्भा०पु०२।९।२६) इत्यनेन मायाया अपि पृष्टत्वाद् वक्ष्यमाणत्वाच्च" इति श्रीधरोक्तेः कथं तस्य प्रकृतोपयोगित्वम् ? अत आह — ❀व्यवहार इति । बाधदर्शनात् = सत्त्वप्रतीतिबाधकदर्शनात् । ❀बाध्यत्वादिति — ब्रह्मदर्शनबाध्यत्वादित्यर्थः । ❀वास्तवेति — व्यावहारिकसत्त्वं सूचितम् । ❀अत एवेति — प्रत्येकं सत्त्वमात्रस्यासत्त्वमात्रस्य चाभावादेवेत्यर्थः । ❀विरोधाच्चेति — सत्त्वासत्त्वयोर्विरोधादित्यर्थः । ❀अत एवेति — वास्तवरूपेण वक्तुमशक्यत्वादेवेत्यर्थः । तर्हि किंरूपा ? इत्याकाङ्क्षायामाह — ❀अत एव अनिर्वाच्येति । फलितार्थमुपसंहरति — ❀भ्रमपरम्परेति — भ्रमपरम्पराया जनिका परम्परा यस्याः सा चासौ वासना चेति, तद्रूपेणेत्यर्थः । युक्तत्वे सम्मतिमाह — ❀तदुक्तमिति — विज्ञानभिक्षुणा — "सदसत्ख्यातिर्बाधाबाधात्" ( सां० द० अ० ५ सू० ५६ ) इति सूत्रे सांख्यप्रवचनभाष्ये इति शेषः ।

"अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः" ॥

इति पूर्वार्द्धे पाठभेदः ।

मू०—"ईश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये" इति भाष्यस्याप्ययमेवार्थः । अविद्याऽत्र वासनारूपा । "प्रकृतैतावत्त्वं हि प्रतिषेधति"–( वे०सू०३।२।२२ ) इति सूत्रे "अथात आदेशो नेति नेति" ( बृह० उप० २।३।६ ) इति श्रुतिव्याख्याऽवसरे "पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति, उत्तरो वासनाराशिम्" इति भाष्योक्तेः । 'ईश्वर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्मभूते इत्यनेन आरोपितसत्तेत्युक्तम् । 'अविद्याकल्पिते' इत्यनेनासत्त्वमुक्तम् । एवमेव "अविद्याकल्पितेन नामरूपलक्षणेन भेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदम्, पारमार्थिकेन रूपेण सर्वव्यवहारातीतम्" (शारी० भा० २।१।२७) इति भाष्यमपि व्याख्येयम् । तत्र अविद्या पूर्वतनसंस्काररूपा । व्याकृतम्=स्थूलम् । अव्याकृतम्=तज्जन्यसंस्कारः, अस्थूलम् । "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः"–( वे०सू०३।१।१ ) इति सूत्रे भाष्ये–"जीवो मुख्यप्राणसचिवः, सेन्द्रियः, समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते" इति । तत्र 'पूर्वप्रज्ञा'शब्देन प्रतिपत्तव्यदेहविषय उद्बुद्धसंस्कारः । वक्ष्यति तत्रैव "कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयते" इति । कर्म्मोपस्थापितः=स्वकृतोद्बुद्धसंस्कारेण बुद्धिविषयः कृत इत्यर्थः । एवमेव एवंजातीयकमन्यदपि भाष्यं व्याख्येयम् । कौर्मेऽपि—

"विप्र ! पृथ्व्यादि चित्तस्थं न बहिःस्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥" इति ।

अत्र 'न कदाचन'इत्युक्त्या व्यवहारदशायामपि तथात्वमेवोक्तम् । 'चित्त'शब्देन ईश्वरोपाधिरपि । "नेह नानास्ति किञ्चन" ( कठोप०४।११ ) इत्याद्या श्रुतिरपि बहिः सर्वप्रकारकसत्तामनारोपितां निषेधति ।

(रत्न०)–अनिर्वचनीयोत्पत्तेरभावे भाष्यविरोधमाशङ्क्य परिहरति–*ईश्वरस्यात्मभूत इति । *इवेति — अनेन वस्तुनोऽन्यत्वं सूचितम् । *तत्त्वाऽन्यत्वेति — सत्त्वासत्त्वाभ्यामित्यर्थः । *अयमेवार्थ इति — सत्त्वेनासत्त्वेन वा निर्धार्य वक्तुमशक्यत्वरूपानिर्वचनीयत्वमेवार्थ इत्यर्थः, न तु सदसद्विलक्षणरूपः । नन्वविद्या जीवोपाधिरूपा, न च तत्कल्पिते नामरूपे, अत आह—*अविद्येति । *अत्रेति—अनेनान्यत्र अविद्याया रूपान्तरमपि सूचितम् । स्वार्थे भाष्यान्तरं प्रमाणयति — *प्रकृतेति-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" (वे०सू०३।२।२२) इति सूत्रम् । अस्यार्थश्च–"ब्रह्मणो द्वे रूपे–मूर्त्तश्चामूर्त्तञ्च । तत्र पृथिव्यादीनि त्रीणि मूर्त्तम्, वाय्वाकाशद्वयममूर्त्तमिति रूपद्वयम् "द्वे वाव ब्रह्मणो रूपे मूर्त्तञ्चामूर्त्तञ्च" [ बृह० उप० २।३।१ ] इति श्रुत्या प्रदर्श्य "अथात आदेशो नेति नेति" [ बृह० उप० २।३।६ ] इति श्रुतिः प्रतिषेधति, तत्र कोऽस्य प्रतिषेधस्य विषयः ? इत्याकाङ्क्षायामुभयं प्रतिषेधति-पृथिव्यादिरूपं रूपवद् ब्रह्म चेत्याशङ्क्य शून्यवादादिदोषप्रसंगाद् ब्रह्मणो रूपं प्रतिषेधति, परिशिनष्टि च ब्रह्मेत्यभ्युपगन्तव्यम् । तदेतदुच्यते—"प्रकृतैतावत्त्वं हि प्रतिषेधति" इति । प्रकृतञ्च यदेतावन्मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेव प्रतिषेधति एष शब्दः 'नेति नेति' इति । द्वौ निषेधौ द्वे अपि रूपे प्रतिषेधतः । यद्वा पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधत्युत्तरो वासनाराशिम् । अथवा 'नेति नेति' वीप्सेयम्, यत्किञ्चिदुत्प्रेक्ष्यते तत्सर्वं नेत्यर्थः । तस्मात्प्रपञ्चं प्रतिषेधति, परिशिनष्टि च ब्रह्मेति निर्णयः, न तु ब्रह्मापि निषेधति । यतः ततो निषेधात् । भूयो ब्रवीति "अन्यत् परमस्ति" [ बृ० उ० २।३।६ ] इति । अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परं स्यात् ? इति । निषेधस्य ब्रह्मेतरत्वादेव "प्राणा वै सत्यं तेषामेष सत्यम्" (बृह० उप० २।३।६) "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" (बृह० उप० ४।४।२५) इत्यादिश्रुतिरपि सङ्गच्छते । तदाह—*भूयः पुनरपि ब्रवीति इति—अस्य श्रुतिरिति शेषः । यदि सर्वाभावे निषेधतात्पर्य्यं स्यात्, तदाऽस्य ब्रह्मणः सत्यत्वमात्मत्वञ्चायुक्तं स्यात्, अभावस्य भावविरुद्धत्वात् ।

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते ॥"

इत्यात्मलक्षणाव्याप्तेश्च "नेति नेति" ( बृ० उप० २।३।६ ) इति श्रुतिः प्रपञ्चस्यैव निषेधिका न तु ब्रह्मण इति सिद्धम् । स चात्मा "यतो वाचो निवर्तन्ते" ( तैत्ति० उप० २।९ ) इत्यादिश्रुत्याऽव्यक्तत्वेन बोधनाल्लौकिकबुद्ध्यविषयः । श्रुतौ 'वाव' शब्द एवार्थः । रूपद्वयोपन्यासानन्तर्यम् 'अथ' शब्दार्थः । ब्रह्मणोऽव्यक्तत्वेन परिशेषः 'अतः' शब्दार्थः । तथा च ब्रह्मणो द्वे एव रूपे मूर्त्तञ्चामूर्त्तञ्च, अथ नेति नेतीत्युपदेशो ब्रह्मणो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यतिरिक्तपर इत्यर्थः । *व्याकृताव्याकृतेनेति–स्थूलसूक्ष्मरूपेणेत्यर्थः । जीवो मुख्यप्राणसचिवः, सेन्द्रियः, समनस्कोऽविद्या-कर्म-पूर्वप्रज्ञापरिग्रहः पूर्वदेहं विहाय देहान्तरं प्रतिपद्यते इत्येतदवगतम् । स किं देहबीजैः भूतसूक्ष्मैरसंपरिष्वक्तो गच्छति, आहोस्वित् संपरिष्वक्तः ? इति संशये पठत्याचार्य्यः "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" (वे० सू० ३।१।१) इति सूत्रम् । अन्यत्तत् = तदन्तरम् [देहान्तरम्] तस्य प्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तो रंहति ( गच्छति ) । कुतः ? प्रश्ननिरूपणाभ्याम्—"वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" ( छान्दो० उप० ५।३।३ ) इति प्रश्नात्, निरूपणम् = प्रतिवचनं तस्मात्, द्यु-पर्जन्य-पृथिवी-पुरुष-योषित्सु पञ्चस्वग्निषु श्रद्धा-सोमवृष्ट्यन्नरेतोरूपा पञ्चाहुतीर्दर्शयित्वा "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" (छान्दो० उप० ५।९।१।) इत्येवंरूपात् । *जीवो मुख्यप्राणेति – कर्म = धर्माधर्माख्यम् । पूर्वप्रज्ञा = जन्मान्तरसंस्कारः । अयं भावः—अत्र पूर्वपक्षे निराश्रयप्राणगत्यभावान्न वैराग्यम्, वैराग्यार्थञ्च मरणोत्तरभाविवर्णनमतो वैराग्यार्थं भूताश्रयप्राणगतिवर्णनम् । प्रवाहणो राजा श्वेतकेतुपितरं प्रोवाच – "पञ्चम्यामाहुतौ हुतायामापः यथा पुरुषशब्दवाच्याः पुरुषात्मना परिणमन्ते तथा किं त्वं वेत्थ" ? इति, तत उत्तरम्—असौ वाव लोको गौतमाग्निस्तत्र श्रद्धाख्या आप आहुतीः पर्जन्याग्नौ सोमरूपा इह खलु अग्निहोत्रे श्रद्धया हुता दध्यादिरूपा आपः यजमानसंलग्नाः स्वर्गं लोकं सम्प्राप्य सोमाख्यदिव्यदेहात्मना स्थिताः कर्मान्ते हुताः पर्जन्ये हूयन्ते । ततो वृष्टिरूपाः पृथिव्यामन्नरूपाः, पुरुषे रेतोरूपाः, योषिति हुता आपः पुरुषशब्दवाच्याः पुरुषात्मिका भवन्ति, इति निरूपणं कृतमिति । एवञ्च प्रश्नोत्तराभ्यां सूक्ष्मभूतपरिष्वक्त एव देहान्तरं गच्छतीति सिद्धम् । ननु पूर्वं पूर्वदेहं विहाय जीवो गच्छतीत्युक्तम्, तच्च जलूकोपमाबोधकश्रुतिविरुद्धमित्याशङ्कायां भगवता शङ्करेण समाहितमनुवदति – *कर्मोपस्थापितेति – बृहदारण्यकोपनिषदि जीवस्य मृत्युसमयवर्णनमुपक्रम्य तस्य शरीरान्तरग्रहणप्रक्रियायामेवं श्रूयते–"तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रम्यात्मानमुपसंहरति" ( बृह० उप० ४।४।३ ) इति । इहैव कर्मायत्तभाविदेहम् 'देवोऽहम्' इत्यादिभावनया गृहीत्वा गृहीतदेहं त्यजतीति जलूकाश्रुत्यर्थ इत्यतो न विरोध इति भावः । कर्मोपस्थापितः प्रतिपत्तव्यो यो देहस्तद्विषये 'देवोऽहम्' इति भावनाया दीर्घीभावः व्यवहितार्थावलम्बनत्वम्, तावन्मात्रं जलूकयोपमीयत इत्यर्थः । भाष्यान्तरविरोधसम्भावनायामाह—॰एवमेवेति । ॰विप्रेति—उक्तमपि पूर्वं दार्ढ्यायोच्यते । व्याख्यातमिदम् । ॰चित्तशब्देनेति—ईश्वरोपाधेरप्युपलक्षणमिदम् । तदाह—॰ईश्वरोपाधिरपीति । ॰अनारोपितामपीति—आरोपिता त्वस्त्येवेत्यर्थः ।

मू०—अत एव वाचस्पतिमिश्रा अपि अध्यासभाष्यव्याख्यायामाहुः—

"मृगतृष्णाजलादि न सत्, नासत्, नापि सदसत्, विरोधादित्यनिर्वाच्यमेव मरीचिषु तोयमास्थेयम् । अध्यस्तं च ( तोयम् ) परमार्थतोयमिव भासते । अत एव पूर्वदृष्टमिव । तत्त्वतस्तु न तोयं न च पूर्वदृष्टं किन्त्वनृतमनिर्वाच्यम् । देहादिप्रपञ्चोऽप्यनिर्वाच्यः, अपूर्वोऽपि मिथ्याप्रत्ययोपदर्शित एव ( इव ) चिदात्मन्यध्यस्यते । चिदात्मा तु श्रुत्यादिगोचरः सत्त्वेनैव निर्वाच्यः" (भाम० अध्या०) इति ।

अस्यार्थः—न सत्, बाधायोगात् । नासत्, असतश्चाक्षुषानुभवविषयत्वाभावात् । नापि सदसत्, अनारोपितोभयात्मकम्; अनारोपितोभयरूपत्वस्य विरुद्धत्वात् । अनिर्वाच्यमेव—आरोपितसत्त्वत्वादन्यतरधर्मेण निर्धार्य वक्तुमशक्यम् । तदाह—अनृतमनिर्वाच्यमिति । अनृतम्=असत् । अनिर्वाच्यत्वमुक्तरीत्या, अनृतत्वेनैव निर्धार्य वक्तुमशक्यत्वात् । यदध्यस्यते तदनृतमनिर्वाच्यमित्यर्थः । अपूर्वः=ज्ञानात्पूर्वमविद्यमानः । तदाह—मिथ्याप्रत्ययोपदर्शित एवेति । 'मिथ्याप्रत्यय' शब्देन तज्जन्यः संस्कारः । अत एव 'अध्यस्यते' इत्येवोक्तं न तु 'उत्पद्यते' इति । 'अध्यस्यते' इत्यस्य 'इत्युच्यते' इति शेषः । उपदर्शनस्यैवाध्यासत्वात् । निर्धार्य वाच्यत्वाभाव एवानिर्वाच्यत्वमिति ध्वनयन्नाह—सत्त्वेनैव निर्वाच्य इतीति । सदसद्विलक्षणत्वस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निर्वाच्यत्वपदार्थत्वे तदुत्पत्त्यङ्गीकारे चापूर्व इत्युक्त्यसंगतिः, अत्र एवकाराधिक्यं च । एवं चासत एवारोपितसत्त्ववतः पुरोवर्त्तिनि कल्पनात्सन्निकर्षोऽपि तादृशः सूपपादः । सन्निकर्षादिना चित्ता-दिदोषवशाज्ज्ञानमित्युपपादितम् । एवमध्यासोऽपि अनिर्वाच्य एव । तदुक्तं तैरेव—"तं केचिदन्यत्रान्यधर्माध्यासः" इति भाष्या-वतरणे "स चायमध्यासोऽनिर्वचनीयः सर्वेषामेव सम्मतः" इति । 'नानिर्वचनीयस्य ख्यातिः' (सां० द० ५।५४) इति सांख्योक्तं तत्खण्डनं तु सदसद्विलक्षणमुत्पद्यतेऽनिर्वचनीयमिति वाह्यैक-देशिमतसिद्धस्य न तूक्तानिर्वचनीयवादस्य । इदमेवानिर्वचनीयत्वं सदसत्ख्यातिशब्देन तेनोक्तमिति बोध्यम् ।

(रत्न०)—स्वसिद्धान्ते वाचस्पतिसम्मतिमाह—*अत एवेति—बौद्धार्थस्वीकारादेवेत्यर्थः । *अनिर्वाच्यमिति—निर्धार्य सत्त्वासत्त्वान्य-तररूपेणानिर्वाच्यमित्यर्थः । 'मृगतृष्णाजलादि' इत्यत्र 'आदि' पदग्राह्यमाह—देहादिप्रपञ्चोऽपीति । *मिथ्याप्रत्ययेति—रेखागवयन्यायेन मिथ्याप्रत्ययो-पदर्शितोऽपि चिदात्मन्यध्यस्यत इति भावः । *सदसदिति—अस्यैवार्थोऽ-नारोपितेति । *अनारोपितोभयेति—अनेनारोपितोभयात्मकत्वेऽविरोधः सूचितः । *आरोपितसत्त्वादिति—अस्य 'अशक्यम्' इत्यत्रान्वयः । वस्तुतस्तु सत्त्वासत्त्वान्यतरधर्मेणेत्येव युक्तम्, आरोपितसत्त्वत्वादित्यस्य प्रकृतानुप-योगित्वात् । *उक्तरीत्येति—सत्त्वासत्त्वखण्डनरीत्येत्यर्थः । *अत एवेति—'मिथ्याप्रत्यय' पदेन संस्कारस्य ग्रहणादेवेत्यर्थः । *अध्यस्यते इति—अस्य 'मिश्रव्याख्यायाम्' इत्यादिः । ननु मिश्रग्रन्थे मिथ्याप्रत्य-यस्योपदर्शनम्, नत्वध्यासोऽत आह—*उपदर्शनस्यैवेति । *निर्वाच्येति—यथा ब्रह्म सत्त्वेन निर्वाच्यः, न तथा प्रपञ्च इति भावः । *अपूर्व इत्यु-क्तीति—'मिश्रव्याख्यायाम्' इत्यादिः । *अत्रेति—'सत्त्वेनैव' इत्यत्रे-त्यर्थः । *एवञ्चेति—आरोपितसत्त्वविशिष्टासत्त्वरूपत्वे चेत्यर्थः । *ता-दृश इति—सदसद्रूप एवेत्यर्थः । नन्वनिर्वचनीयत्वस्वीकारे सांख्यविरो-धोऽत आह—*नानिर्वचनीयस्येति—'सदसद्विलक्षणमनिर्वचनीयमुत्पद्यते'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति मतस्यैव खण्डनम्, नत्वारोपितसत्त्वविशिष्टासत्त्वरूपानिर्वचनीयत्वस्य। *इदमेवेति–अस्मन्मतसिद्धमेवेत्यर्थः। तेन = कपिलेन।

मू०–परमार्थसारेऽपि—

पराभिमतानिर्वचनीयोत्पत्तिवादखण्डनपूर्वं-क्रमविधाया अनित्यत्वस्य तत्त्वरूपस्य च व्यवस्थापनम्।

"सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन।
तं प्रणिपत्योपेन्द्रं वक्ष्ये परमार्थसारमिदम्॥"
(प० सा० १) इति।

"प्राणाद्यनन्तभेदैरात्मानं संवितत्येन्द्रजालमिव।
संहरति वासुदेवः स्वविभूत्या क्रीडमान इव॥"
(प० सा० ३०) इति च।

'कृतम्' इत्यस्य 'दर्शितम्' इत्यर्थः। 'संवितत्य' इत्यस्य दर्शयित्वेत्यर्थः, अन्यथाऽऽत्मनो विकारित्वापत्तिः। स्वविभूत्या= वासनारूपया। सत्यमिवेति—इवेन तस्यारोपितत्वं स्पष्टमेवोक्तम्। यद्वा, पूर्वपूर्ववासनावशात्तत्त्वेनापि प्रतीतिः। व्यवहारकालमात्रे तत्प्रतीतेः 'सत्यमिव' इत्युक्तम्। एतेनासतो भाने बौद्धमतप्रवेश इत्यपास्तम्; तेन तत्रारोपितसत्त्वस्याप्यनङ्गीकारात्, आत्मनस्तेनानित्यत्वाङ्गीकाराच्च।

(रत्न०)–ग्रन्थादौ मङ्गलार्थकपद्यमिदम्–*सत्यमिवेति–मूलप्रकृतेर्हेतोरसत्यमिदं जगत् सत्यमिव येन कृतम्, तमुपेन्द्रं प्रणिपत्य इदं परमार्थसारं वक्ष्ये। यो वासुदेवः इन्द्रजालमिव–इन्द्रेण = कौशलैश्वर्येण, अन्यथा स्थितस्य वस्तुनोऽन्यथाप्रदर्शनहेतुभूतं कुहकमिव–आत्मानं प्राणाद्यनन्तभेदैः संवितत्य स्वविभूत्या = अविद्यया क्रीडमान इव संहरतीत्यर्थः। ननु 'कृतम्'इत्यनेनोत्पत्तिरेव लभ्यतेऽत आह–*कृतमित्यस्येति–धातूनामनेकार्थत्वाल्लक्षणया वा। एतत्सर्वं भगवतः सत्यसंकल्पतया नानुपपन्नम्। आह च श्रुतिः —

"मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥" इति।
(श्वेता० उप० ४।१०)

*तत्त्वेनेति—सत्यत्वेनेत्यर्थः। तेन = बौद्धेन। तत्र = प्रपञ्चे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—परमार्थसारेऽपि—

"अमलः सकृद्विभातश्चैतन्यात्मा खवद् व्यापी ।
सर्वविकल्पनहीनः शुद्धो बुद्धोऽजरोऽमरः शान्तः"॥ (प० स० २५)

इत्यात्मस्वरूपमुक्तम् । श्रुतिषु च स्पष्टमेव तथोक्तम् । विकल्पनम्= नामरूपे । इदमुपलक्षणम्, उत्पत्ति-विनाश-बहिष्ट्वादिकमपि सत्यत्वेनारोपितमीश्वरेण, तस्य सत्यसङ्कल्पत्वात् । सृष्ट्याद्यकाले चैष सङ्कल्पस्तस्य । यद्वा, तत्तत्सामग्रीभ्रमस्तत्तद्विषयभ्रमे कारणमिति तद्गतकार्यकारणभावस्य तद्विषयेऽनादिवासनावशादारोपितावेवोत्पत्तिनाशावारोपितत्वमपलप्य काणादसाङ्ख्याभ्यामुक्तौ । तत्र साङ्ख्यस्यापि सूक्ष्मतन्मात्रेभ्यः परमाण्वादिक्रमेणैव स्थूलभूतोत्पत्तिरभिप्रेतेति योगवृत्तौ स्पष्टं निरूपितम् । तस्माद् भ्रमरूपा स्थूलाऽविद्या । वासनारूपा च 'अव्यक्त'पदवाच्या सूक्ष्माऽविद्या । व्यवहारकाले स्थूलाविद्यायाः सा कारणमिति तस्या एव कारणत्वेन निर्देशः "अव्यक्तं कारणम्" इत्यादौ । एतत्सृष्टौ तज्जन्मानुपलम्भात्तस्या नित्यत्वोक्तिर्नेया ।

(रत्न०)—ननु बौद्धाभिमतमात्मनोऽनित्यत्वमेवास्तु, अत आह— *अमल इति—न विद्यते मलमज्ञानकार्य्यतालक्षणं यस्य सः, "आदित्यवर्णं तमसः परस्तात्" (श्वेता० उप० ३।८) इति श्रुतेः । सकृद्विभातः, "सकृद् विभातम्" ( नृ० उ० ९ ) इति श्रुतेः । चैतन्यात्मा = चैतन्यस्वरूपः, "प्रज्ञानं ब्रह्म" (ऐत० उप० ५।३) इति श्रुतेः । खवद्व्यापी=तद्वदपरिच्छिन्नः । विकल्पाः = विशेषास्तैर्हीनः, 'निरवद्यं निरञ्जनम्" ( श्वे० उप० ६।१९ ) इति श्रुतेः । एतेन भेदवादः परास्तः । शुद्धः = पापरहितः, "शुद्धमपापविद्धम्" (ईशोप० ८) इति श्रुतेः । बुद्धः = बोधस्वरूपः, "विज्ञानं ब्रह्म" ( तैत्ति० उप० २ । ५ । १ ) इति श्रुतेः । ब्रह्मणोऽत्यन्ताज्ञेयत्वदार्ढ्याय बुद्धचैतन्यशब्दयोः पर्यायत्वात् पौनरुक्त्येऽपि न दोषः । *अजरोऽमर इति—भावविकारराहित्यस्योपलक्षणमिदम् । शान्तः = निष्प्रपञ्चः, "शिवमद्वैतम्" ( माण्डू० उप० ७ ) इति श्रुतेः । पौनरुक्त्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्ववत्समाधेयम् । ॐश्रुतिषु चेति—उक्तरूपासु इत्यर्थः । चेन स्मृतिपुराणादीनां संग्रहः । ॐतथोक्तमिति—आत्मनो नित्यत्वमुक्तमित्यर्थः । इदम् = विकल्पनादि । ॐआरोपितमिति—न तु सत्यमित्यर्थः । तत्र बीजमाह—ॐतस्येति । सर्ववस्तुनोऽतत्त्वादाह—ॐसृष्ट्याद्यकाल इति । पक्षान्तरेण मतान्तराणि स्वमते योजयति—ॐयद्वेति । ॐतत्तत्सामग्रीति—कारणसामग्रीभ्रमेत्यर्थः । ॐतद्गतेति—भ्रमगतेत्यर्थः । ननु काणादसाङ्ख्ययोरुत्पत्तिक्रमे मतभेदोऽत आह—ॐतत्र साङ्ख्यस्यापीति । ॐपरमाण्वादिक्रमेणैवेति—अतो नास्ति मतभेद इति भावः । उक्तमेव विशदयन्नुपसंहरति—ॐतस्मादिति । ॐसेति—सूक्ष्माऽविद्येत्यर्थः । तस्या एव = सूक्ष्माविद्याया एव । नन्वेवमपि सूक्ष्माविद्याया अनित्यत्वम्, प्रकृतेश्च साङ्ख्यमते नित्यत्वमिति वैषम्यमत आह—ॐएतत्सृष्टाविति । तथा च काणादसाङ्ख्यादिना नास्त्यस्माकं विरोध इति भावः ।

मू०—उपनिषद्भाष्ये "अजाम्—" ( श्वेता० उप० ४।५ ) इति श्रुतौ 'अजाम्' इत्यस्य यौगिकत्वेन जन्माभावपरतया व्याख्यानमप्येवमेव नेयम् । संस्काराणामपि त्रिगुणत्वात् लोहितशुक्लकृष्णगुणत्वं तस्याः । समूहाभिप्रायेण चैकवचनं बोध्यम् । वासनारूपैव च सा 'मूलप्रकृतिः' इत्युच्यते ।

अनिर्वचनीयोत्पत्तिवादिभिरपि स्वसमानाधिकरणस्यावच्छिन्नवृत्तिकान्यात्यन्ताभावस्य प्रतियोगित्वरूपं मिथ्यात्वं वदद्भिः स्वीकृतमेव वस्तुनोऽसत्त्वम् । अन्यथा 'अभाव' पदे विरोध्यर्थत्वान्नञः प्रतियोगिसामानाधिकरण्यं तस्य वक्तुमशक्यम्, प्रतियोग्यसामानाधिकरण्यस्यैव तत्र विरोधपदार्थत्वात् । मम तु 'स्वप्रतिभाससमानाधिकरण' इत्याद्युक्तमेव भ्रमविषयत्वं मिथ्यात्वम् । ध्वनितञ्चेदं देवताऽधिरणे कल्पतरुणा—

"भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृदुदाहृतेः ।
अविद्याऽनादिभावात्मा मता वाचस्पतेरिह ॥"
( वेदा० कल्पत० १।३।३० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यनेन। अत्र 'वाचस्पतेर्मता' इत्यनेन सूत्रभाष्यकृतोऽभिमतसंस्काररूपैवाविद्येति मतं सूचितम्। इह=देवताऽधिकरणे। अनेन वाचस्पतेरप्यन्यत्र तत्पक्षाभिनिवेशः सूचितः। वस्तुतः—'यथा मण्डूका मृदो निःसरन्ति' इत्युदाहरणमपि वासनासमूहस्याविद्यात्वेन समूहादेकैकस्य निःसरणेनोपपन्नम्।

(रत्न०)-नन्वेतत्सृष्टौ जन्मानुपलम्भस्वीकारे कालान्तरे जन्मन एवोपलम्भेन जन्माभावपरतया व्याख्यानपरकोपनिषद्भाष्यविरोधोऽत आह—
❀उपनिषद्भाष्य इति। ❀एवमेवेति—एतत्सृष्टौ जन्माभावपरतयैवेत्यर्थः। ननूक्तरीत्या प्रकृतेर्वासनारूपसूक्ष्माविद्यारूपत्वेन श्रुत्युक्तत्रैवर्ण्यानुपपत्तिरत आह – ❀संस्काराणामपीति। ननु वासनाया आनन्त्यात् श्रुतौ 'अजाम्' इत्येकवचनविरोधोऽत आह – ❀समूहेति — ईश्वरसंस्काररूपाविद्याया एकत्वाच्च। अस्माभिः सहानिर्वचनीयोत्पत्तिवादिनामनिर्वचनीयत्वस्वरूपे वैमत्यसत्त्वेऽपि मदुक्तप्रपञ्चासत्त्वे मतैक्यमेव, न तदंशे मतभेद इत्याह — ❀अनिर्वचनीयोत्पत्तिवादिभिरपीति। ❀स्वसमानाधिकरणेति—यस्य मिथ्यात्वं चिकीर्षितं तत्स्वं तेन समानमधिकरणं यस्याभावस्य तादृशः, अवच्छिन्ना वृत्तिः=आधेयता यस्य तदन्यो यः कश्चन पदार्थस्तत्प्रतियोगिको यः पूर्वोक्तविशेषणविशिष्टोऽभावस्तत्प्रतियोगित्वं मिथ्यात्वम्। अयम्भावः—ब्रह्मातिरिक्तसर्वपदार्थानामारोपितसत्त्वमनारोपितमसत्त्वं सर्वत्रैव। तथात्वे एवोक्तवेदान्तिसम्मतमिथ्यात्वलक्षणं संघटते, नान्यथेति प्रपञ्चासत्त्वं तैरपि स्वीकृतमेवेति। लक्षणसमन्वयो यथा—स्वं घटस्तत्समानाधिकरणो (तदधिकरणभूतलादिवृत्तिः) योऽत्यन्ताभावः=घटात्यन्ताभावः स चावच्छिन्नवृत्तिकान्यप्रतियोगिकः, नहि 'भूतले घटो नास्ति' इत्यत्र भूतले यत्किञ्चिदवच्छेदेन घटवृत्तिता प्रतीयत इत्यवच्छिन्नवृत्तिकान्यघटात्यन्ताभावप्रतियोगित्वं घटस्यास्तीति तस्य मिथ्यात्वम्। एवमेव पटादिष्वपि बोध्यम्। तत्राभावे 'स्वसमानाधिकरण'-इति विशेषणाभावे ब्रह्मणोऽपि मिथ्यात्वापत्तिः। तथाहि—अवच्छिन्नवृत्तिकान्यद् ब्रह्म, तदत्यन्ताभावः 'ब्रह्मणि ब्रह्म नास्ति' इति, तत्प्रतियोगित्वस्य तत्र सत्त्वात्। तदुपादाने तु नातिप्रसङ्गः, ब्रह्मणोऽधिकरणाभावेन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदधिकरणवृत्त्यत्यन्ताभावस्याप्यसम्भवात् । अत्यन्ताभावप्रतियोगिनि 'अवच्छिन्नवृत्तिकान्य' इति विशेषणाभावेऽर्थान्तरत्वापत्तिः । स्वसमानाधिकरणोऽत्यन्ताभावो वृक्षे मूलावच्छेदेन वर्त्तमानः शाखाऽवच्छिन्नकपिसंयोगाभावस्तत्प्रतियोगित्वं तस्येति सामानाधिकरण्यरूपार्थान्तरत्वापत्तिर्दुर्वारा स्यात्। तत्सत्त्वे तु स्वसमानाधिकरणोऽभावः शाखावृत्तिकपिसंयोगाभावस्तत्प्रतियोगित्वं साध्यमिति नार्थान्तरत्वापत्तिः, सिद्धसाधनं वा । 'स्वसमानाधिकरण' इत्यस्य स्वाधिकरणत्वेनाभिमतवृत्तीत्यर्थः । तथा च शुक्तिरजतस्यापि मिथ्यात्वं सिध्यति, अन्यथा शुक्तेः स्वाधिकरणत्वाभावेन स्वसमानाधिकरणो रजतत्वाभावो नास्तीति तस्य मिथ्यात्वं न स्यात् । 'स्वाधिकरणत्वेनाभिमतवृत्ति' इत्यस्य निवेशे तु शुक्तौ रजतत्वाधिकरणत्वाभावेऽपि रजतत्वेन ज्ञानीयविषयतायाः सत्त्वेन तद्वृत्तिरजतत्वात्यन्ताभावस्य सुलभतया नाव्याप्तिः । नन्वेवमपि आकाशस्यावृत्तिकत्वात्स्वसमानाधिकरणात्यन्ताभावस्यासम्भवेन तत्र मिथ्यात्वानापत्तिरिति चेत्, न, 'एकविज्ञानेन सर्वं विज्ञातं भवति' इति श्रुत्यर्थानुरोधेनाकाशस्याप्यनित्यतया ब्रह्मण एव तदधिकरणत्वसम्भवेन तादृशात्यन्ताभावस्य सुलभत्वेनादोषात् । अत्यन्ताभावीयप्रतियोगितायां व्यधिकरणधर्मानवच्छिन्नत्वमपि विशेषणं देयमिति न घटाधिकरणवृत्तिं पटत्वेन घटात्यन्ताभावमादायार्थान्तरता । एवमुभयाभावमादायार्थान्तरत्ववारणाय व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनापि प्रतियोगिता विशेषणीयेत्यनिर्वचनीयोत्पत्तिवादिवेदान्तिमतेऽपि वस्तुनोऽसत्त्वं सिद्धम्। अन्यथा = वस्तुनोऽसत्त्वानङ्गीकारे । ननु त्वन्मतेऽपि सत्त्वासत्त्वयोर्विरुद्धत्वात्तादृशात्यन्ताभावो दुर्वच इति चेत्, न, अनारोपितयोरेव सत्त्वासत्त्वयोर्विरोधात्, मन्मते आरोपितसत्त्वस्यैव स्वीकारेण विरोधस्यानवकाशात् । भावाभावयोर्विरोधश्च प्रतियोग्यसामानाधिकरण्यमेव, तदाह — *प्रतियोग्यसामानाधिकरण्यस्यैवेति । ननु त्वन्मतेऽपि वस्तुनः सत्त्वस्यासत्त्वात्तादृशात्यन्ताभावासम्भव इति चेत्, अत आह — *स्वप्रतिभाससमानाधिकरणेत्याद्युक्तमेवेति – स्वसमानाधिकरणेत्यादिर्यस्य तादृशं यदुक्तम् = अवच्छिन्नवृत्तिकान्यात्यन्ताभावप्रतियोगित्वं तदित्यर्थः । *देवतेति—“समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्स्मृतेश्च" ( वे० सू० १।३।३० ) इति सूत्रभामतीव्याख्यान इति शेषः । ❀ध्वनितमिति — वासनारूपैवाविद्येति ध्वनितमित्यर्थः । ❀भ्रमादिति — भ्रमतज्जनकसंस्कारतश्चान्याऽनादिभावरूपाऽविद्या, न तु भ्रमरूपा संस्काररूपा वा । अत्र हेतुमाह — ❀मण्डूकेति—यथा एकस्या एव मृदोऽनेके मण्डूका उद्भवन्ति तथाऽविद्यातो नानाप्रपञ्चो निस्सरतीत्यत उक्तरूपैवाविद्या, भ्रमाणां संस्काराणाञ्चानेकत्वादेकस्याः मृदोऽनेक-मण्डूकनिस्सरणदृष्टान्तवैषम्यापत्तेः । एकस्याः भ्रमसंस्कारभिन्नरूपाया अविद्यायाः स्वीकारे तु एकस्या एवाविद्यायाः नानाविधप्रपञ्चोद्भवात् दृष्टान्तसङ्गतिः । नन्वनेन कल्पतरुवचनेन त्वदभिमता वासनारूपाऽविद्या न सिध्यति किन्त्वतिरिक्तैवेति चेत्, अत आह — ❀अत्र वाचस्पतेरिति । ❀मतं सूचितमिति — तेन वाचस्पतेः सम्मतेरभावेऽपि भ्रमवासनाऽन्य-तररूपैवाविद्येति सूत्रभाष्यकृत्सम्मतमेवेति भावः । ❀अनेनेति — इह देवताऽधिकरणे सम्मतेति कथनेनेत्यर्थः । ❀तत्पक्षाभिनिवेश इति — भ्रम-वासनाऽन्यतररूपाऽविद्येति पक्षाभिनिवेश इत्यर्थः । देवताऽधिकरणेऽपि अन्यतररूपाविद्यायाः स्वीकारे भ्रमसंस्काराणामानन्त्येऽपि मण्डूकमृदु-दाहरणं सङ्गमयति—❀वस्तुत इति ।

मू०--सनत्सुजातीयभाष्ये—भगवत्पादैरप्युक्तम् "मोहो मृत्युः" (महाभार०५।४२।४) इति पद्ये—'मोहो मिथ्याज्ञानमनात्मन्यात्मा-भिमानः। अनेनाग्रहणान्यथाग्रहणात्मिकाऽविद्या सूचिता इति। अग्र-हणम्=आत्मस्वरूपाग्रहणम्, तन्मूलकमिथ्याज्ञानात्मिकेत्यर्थः ।

( रत्न० )—तादृशाविद्यायां भाष्यान्तरमपि प्रमाणयति—❀सनत्सु-जातीयेति । ❀भगवत्पादैरिति — शङ्कराचार्यैरित्यर्थः । ❀इति पद्ये इति—एतत्पदघटितपद्ये इत्यर्थः । तद्घटितपद्यञ्च—

"उभे सत्ये क्षत्रियाद्यप्रवृत्ते, मोहो मृत्युः संमतो यः कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि, सदाऽप्रमादममृतत्वम् ब्रवीमि" ॥ इति ।

धृतराष्ट्रं प्रति सनत्सुजातमहर्षेरुक्तिः । अस्यार्थः — हे क्षत्रिय ! ये प्रागुक्ते मृत्योरस्तित्वनास्तित्वे ते उभे आद्यप्रवृत्ते = आद्यं सृष्टिकाल-मारभ्य प्रवृत्ते । यद्वा क्षत्रियाद्य = क्षत्रिय प्रधान ! प्रवृत्ते = वर्तमाने ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभे अपि सत्ये। ननु विरोधादेकस्य सत्यत्वेऽपरस्यासत्यत्वं स्यादत आह-
❀मोहो मृत्युरिति—भवेदयं विरोधो यदि परमार्थरूपो मृत्युः स्यात्, कस्तर्हि मृत्युः ? यो मोहो मिथ्याज्ञानम्, अनात्मन्यात्माभिमान इति यावत्, स केषाञ्चित् कवीनां मृत्युः सम्मतः । अहं तु न तथा मृत्युं ब्रवीमि । कथं तर्हि ? प्रमादं वै मृत्युमहं ब्रवीमि । प्रमादः = प्रच्युतिः स्वाभाविकब्रह्मभावात् । तं प्रमादं मिथ्याज्ञानस्यापि कारणमात्मानवधारणमात्माज्ञानं मृत्युम् = जननमरणादिसर्वानर्थबीजमहं ब्रवीमि । तथा, सदा अप्रमादम् = स्वाभाविकस्वरूपेणावस्थानममृतत्वं ब्रवीमि, तथा च श्रुतिः स्वरूपावस्थानमेव मोक्षपदं दर्शयति—"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ( छान्दो० उप० ८।३।४ ) इति । नीलकण्ठस्तु—"उभे सत्ये क्षत्रियैतस्य विद्धि" इति पाठमवलम्ब्य "एतस्य = एकस्यैव पुंसोऽवस्थाभेदेन उभे अपि सत्ये एव हे क्षत्रिय ! विद्धि । अविद्याऽवस्थायां बन्धः सत्यः, कर्मनाशश्च । विद्यावतां तु रज्जूरगवत्कालत्रयेऽपि नास्ति, मोहाद् भासमानस्य तु ज्ञानमात्रेण निवृत्तिर्भवतीति भावः । "आद्यप्रवृत्ते" इतिपाठे उभे अपि एते अनादिनी नित्ये इत्यर्थः । सिद्धान्तमाह—❀मोहादिति—निर्मोहानां तु नास्त्येव मृत्युरित्यर्थः । मोहं विवृणोति-❀प्रमादमिति-आत्मतत्त्वानवेक्षणं प्रमादः, मूलाज्ञानमिति यावत्, तदेव मृत्युः, "मृत्युर्वै तमः" (बृह० उप० १।३।२८) इति श्रुतेः । अप्रमादम् = अवहितताम्, सम्यगवेक्षणम्, ज्ञानमिति यावत्, "ज्ञानं सम्यगवेक्षणम्" इति स्मृतेः, अमृतत्वममृतत्वहेतुः" इत्याह । केषाञ्चित्सम्मतस्वरूपमाह-❀अनात्मनीति । भाष्ये द्वन्द्वभ्रमनिरासायाह—❀अग्रहणमिति—अग्रहणमूलकं यत् अन्यथाग्रहणञ्च तादृशः आत्मा स्वरूपं यस्याः साऽविद्येत्यर्थः ।

मू०-द्युभ्वाद्यायतनाधिकरणे ( वे० सू० १।३।१ ) च-"देहादिष्वनात्मसु 'अहमस्मि' इत्यात्मबुद्धिरविद्या" इति भाष्ये उक्तम् । अध्यासभाष्येऽपि—"विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतस्तयोरध्यासो मिथ्येति भवितुं युक्तम्" इत्यनेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथ्याभूतेनालीकेनाध्यासेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं कृत्वा "तथाऽप्यन्योऽन्यस्मिन्नन्योऽन्यात्मकतामन्योऽन्यधर्मांश्चाध्यस्येतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्' 'ममेदम्' इति नैसर्गिकोऽयं लोकव्यवहारः" इति सिद्धान्तितम् । तस्यैव चाध्यासस्य प्रहाणायाध्यात्मशास्त्रमिति तदर्थः । एतच्चाग्रे भाष्ये एवोपपादितम् ।'अध्यस्य'इत्यस्यैव विवरणम्'सत्यानृते मिथुनीकृत्य'इति । सत्यं ब्रह्म । न ऋतम् = अनृतमसत्, एतत्पदार्थमात्रम् । तत्र सत्यं ब्रह्म विशेष्यम्, अनृतमुपाधयो विशेषणम् ।

( रत्न० )—भ्रमरूपैवाविद्येत्यत्र भाष्यान्तरमपि प्रमाणत्वेन दर्शयति—*द्युभ्वाद्यायतनेति —इदं श्रूयते—

"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" ॥

( मुण्ड० उप० २ । २ । ५ ) इति ।

अत्र द्युप्रभृतीनामायतनं परं ब्रह्म स्यादाहोस्विदर्थान्तरम् ? इति संशये द्युभ्वाद्यायतनम् ब्रह्म भवितुमर्हति । कुतः ? स्वशब्दात् "तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः" इति तदुत्तरार्द्धश्रुतौ'आत्म'शब्दश्रवणात् । द्युभ्वाद्यायतनाधिकरणे "मुक्तोपसृप्यव्यपदेशात्" ( वे० सू० १ । ३ । २ ) इति द्वितीयसूत्रे अविद्यारागद्वेषादिदोषयुक्तैरुपसृप्यम् = गम्यमेतद् ब्रह्मेति हेतोर्द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थके भाष्ये उक्तम् "देहादिष्वनात्मसु" इति । *अध्यासभाष्येति —अयं भावः—बन्धनिवृत्तये ब्रह्मज्ञानं संपादनीयम् । तच्च ब्रह्मज्ञानं कथम् ? इत्याकाङ्क्षायां वेदान्तशास्त्रेणेति लभ्यते । तत्र "अथातो ब्रह्मजिज्ञासा" (वे०सू० १।१।१) इति सूत्रेण ब्रह्मज्ञानाय विचारः कर्तव्य इत्युक्तम् । तत्र ज्ञानस्य स्वतःफलत्वायोगात्प्रमातृत्व-कर्तृत्व-भोक्तृत्वरूपानर्थनिवर्तकत्वेन फलत्वं वक्तव्यम्, तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्य (जननमरणादिरूपस्य)अध्यस्तत्वमर्थात्सिद्धम् । तथाच—वेदान्तशास्त्रम्, आरब्धव्यम्, विषयप्रयोजनवत्त्वात्, भोजनादिवत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदान्तशास्त्रम्, प्रयोजनवत्, बन्धनिवर्तकज्ञानहेतुत्वात्, 'रज्जुरियम्' इत्यादिवाक्यवत्। बन्धः, ज्ञाननिवर्त्यः, अध्यस्तत्वात्, रज्जुसर्पवत्। एवमर्थात् ब्रह्मज्ञानाज्जीवगतानर्थभ्रमनिवृत्तिरूपफलं सूचयन् जीवब्रह्मणोरैक्यरूपं शास्त्रविषयमर्थात् सूचयति सूत्रकारः, अन्यज्ञानादन्यत्र भ्रमानिवृत्तेः। तथा च 'जीवः, ब्रह्माभिन्नः, तज्ज्ञाननिवर्त्याध्यासाश्रयत्वात्, यदित्थं तत् तथा, यथा शुक्त्यभिन्न इदमंशः' इति जीवब्रह्मणोरैक्यरूपविषयसिद्धिहेतुरध्यास इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति सिद्धम्। अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानादनिवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलति, सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेक इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याख्यातुकामो भगवान् शङ्करः सूत्रेण विचारकर्तव्यतारूपश्रौतार्थान्यथाऽनुपपत्त्याऽर्थात्सूचितं विषयप्रयोजनवत्त्वमुपोद्घातत्वात्तत्सिद्धिहेतुभूताध्यासाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति — ॐविषयविषयिणोरिति — अस्य "युष्मदस्मत्प्रत्ययगोचरयोः" इत्यादिः। लोके 'शुक्ताविदं रजतम्' इति भ्रमः सत्यरजते 'इदं रजतम्' इत्यधिष्ठानसामान्यारोप्यविशेषयोरैक्यप्रमाऽऽहितसंस्कारजन्यो दृष्ट इत्यत्राप्यात्मन्यहङ्काररूपानात्माध्यासे पूर्वप्रमाऽपेक्षिता। सा च प्रमा 'इदं रजतम्' इति सत्यस्थल इव आत्मानात्मनोर्वास्तवैक्यमपेक्षते, न हि तदस्ति। तथा हि—आत्मानात्मानौ, ऐक्यशून्यौ, परस्परैक्यायोग्यत्वात्, तमःप्रकाशवत्, इति बुद्ध्या आत्मानात्मनोरैक्याभावसाधकं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च पूर्वपक्षेण साधयति-विषयविषयिणोरित्यादिना। ग्राह्यो विषयः 'अचित्'इत्युच्यते। ग्राहको विषयी आत्मा 'चिद्' इत्युच्यते। युष्मच्छब्दजन्यप्रतीतिविषयोऽर्थः 'पराक्'इत्युच्यते। अस्मच्छब्दजन्यप्रतीतिविषयः'प्रत्यगात्मा'इत्युच्यते। तथा च विषयविषयिणोरात्मानात्मनोः पराक्प्रत्यक्त्वेन, चिदचित्त्वेन, ग्राह्यग्राहकत्वेन च विरोधात्तमःप्रकाशवत्, इतरेतरभावो नामेतरेतरत्वम् = ऐक्यम्, इतरस्मिन्नितरस्य भावस्तादात्म्यं तयोरैक्यतादात्म्ययोरनुपपत्तौ सिद्धायामध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः। ननु 'त्वम्'इति 'अहम्' इति प्रतीतिगोचरयोरध्यासाभावेऽपि ( ऐक्यतादात्म्ययोरभावेऽपि ) तद्धर्माणां चैतन्यसुखजाड्यदुःखादीनां विनिमयेनाध्यासोऽस्त्वित्यत आह — ॐतद्धर्माणामपीति —

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तयोरात्मानात्मनोः धर्मास्तद्धर्मास्तेषामपीतरेतरभावानुपपत्तिः, इतरत्र = धर्म्यन्तरे, इतरेषां धर्माणां भावः = संसर्गस्तस्यानुपपत्तिरित्यर्थः । नहि धर्मिणोः संसर्गं विना धर्माणां विनिमयोऽस्ति । स्फटिके लोहितवस्तुसान्निध्याल्लौहित्यधर्मसंसर्गः । असङ्गस्यात्मरूपधर्मिणः केनापि संसर्गाभावाद् धर्मिसंसर्गपूर्वको धर्मसंसर्गः कुतस्तस्य ? इत्याह—❀सुतरामिति । नन्वात्मानात्मनोस्तादात्म्यस्य तद्धर्मसंसर्गस्य चाभावेऽपि अध्यासः किन्न स्यात् ? अत आह —❀इत्यत इति — इति = उक्तरीत्या तादात्म्याद्यभावेन तत्प्रमायाः अभावात् । अतः = प्रमाजन्यसंस्कारस्य अध्यासहेतोरभावात्, अध्यासो मिथ्येति भवितुं युक्तमित्यन्वयः । तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासंभवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन वेदान्तशास्त्रीयविषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्यम् । युक्तग्रहणात् पूर्वपक्षस्य दुर्बलत्वं सूचितम् । मिथ्या भवितुं युक्तम्, न त्वस्तीति भावः । किमध्यासस्य नास्तित्वमयुक्तत्वात्, अभानात्, कारणाभावाद्वा ? आद्ये आह—❀तथापीति — एतदनुरोधादादौ 'यद्यपि' इत्यध्याहार्यम् । असङ्गस्वप्रकाशात्मनि अध्यासस्यालङ्कारत्वमेवेति नायुक्तत्वम् । न द्वितीयः; अज्ञः, कर्ता, मनुष्योऽहम्, इत्यध्यासस्य प्रत्यक्षात्मकभानसत्त्वात् । न चेदं प्रत्यक्षं नाध्यासः किन्तु प्रमैवेति वाच्यम्, अपौरुषेयतया निर्दोषेण, उपक्रमादिलिङ्गावधृततात्पर्येण च तत्त्वमस्यादिवाक्येनाकर्तृत्वब्रह्मत्वबोधनेन भ्रमत्वनिश्चयात् । न च ज्येष्ठप्रमाणप्रत्यक्षविरोधेनागमजन्यज्ञानस्य बाधः, 'मनुष्योऽहम्' इति प्रत्यक्षविरोधेन "अथायमशरीरः" (बृह० उप० ४।४।७) इत्यादिश्रुतिजन्यज्ञानस्य बाधेन देहात्मत्वप्रसंगात् । किञ्च, प्रत्यक्षे ज्येष्ठत्वं पूर्वकालिकत्वमागमज्ञानं प्रत्युपजीव्यत्वं वा ? नाद्यम्, ज्येष्ठस्यापि रजतभ्रमस्य कनिष्ठेन शुक्तिज्ञानेन बाधदर्शनात् । न द्वितीयम्, आगमज्ञानोत्पत्तौ प्रत्यक्षादिमूलवृद्धव्यवहारे सङ्गतिग्रहद्वारा शब्दोपलब्धिद्वारा च प्रत्यक्षादेर्व्यावहारिकप्रामाण्यस्योपजीव्यत्वेऽपि तात्त्विकप्रामाण्यस्यानपेक्षितत्वात्, अनपेक्षितांशस्यागमेनेन बाधसम्भवात्, तथा च 'अयमहम्' इत्याद्यध्यासमादायैवाह —❀अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामिति—तादात्म्यमित्यर्थः । 'ममेदं जरा-मरण-पुत्र-पशु-स्वाम्यादि' इति धर्माणाम् आत्मनि,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मधर्माणां चैतन्यादीनां देहादावध्यासमाश्रित्याह — ※अन्योन्यधर्मांश्चेति । ※अध्यस्येति — अध्यासलक्षणञ्च — एकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति अवभासमानत्वम् । संयोगेऽतिव्याप्तिवारणाय 'एकावच्छेदेन' इति । पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीत्यत्र घटेऽतिव्याप्तिवारणाय 'स्वसंसृज्यमान' इति । भूत्वावच्छेदेनावभासमानगन्धेऽतिव्याप्तिवारणाय 'स्वात्यन्ताभाववति' इति । शुक्तिदन्त्वावच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिः । न च शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासत्त्वादस्य लक्षणस्यासंभवः, दोषाधिष्ठानसामान्यज्ञानसंस्कारैतत्त्रयजन्यरजतस्य शुक्तावपि संसर्गसत्त्वात् । केचित्तु — उक्तदोषादित्रयजन्यत्वमेव कार्य्याध्यासलक्षणमाहुः । यद्वा, प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणम् । एवञ्च मिथ्याज्ञानमध्यासस्तत्फलं व्यवहारः । भामतीप्रस्थाने तु अध्यासरूप एवायं नैसर्गिको लोकव्यवहारः । स च मिथ्याज्ञाननिमित्तः, सत्यानृतमिथुनीकरणात्मकश्च । भेदग्रहश्च न कस्यापि विद्यते । नह्यात्मतत्त्वं कस्यापि विषयः । 'अहम्' इत्यनुभवस्तु कूटसाक्षितुल्यो नात्र प्रमाणतामश्नुते इति । ※इतरेतराविवेकेनेति — भेदाग्रहेणेत्यर्थः । भेदाग्रहस्तादात्म्यभ्रमे निमित्तम् । विविक्तयोः = भिन्नयोः । सत्यानृते, सत्यम् = चिदात्मा अनृतम् = बुद्धीन्द्रियदेहादि । मिथुनीकृत्य = अध्यस्य । एतदुक्तं भवति — अप्रतीतस्यारोपायोगात् आरोप्यस्य प्रतीतिरुपयुज्यते न तु वस्तुसत्तेति । स्यादेतत् — आरोप्यस्य प्रतीतौ सत्यां पूर्वदृष्टस्य समारोपः, समारोपनिबन्धना च प्रतीतिरिति परस्पराश्रयत्वं दुर्वारमित्यत आह — ※नैसर्गिक इति — स्वाभाविकोऽनादिरयं व्यवहारः इत्यर्थ इत्यनादित्वात् बीजाङ्कुरवन्न परस्पराश्रयत्वं दोष इति भावः । प्रहाणाय = विनिवृत्तये । अध्यात्मशास्त्रम् = वेदान्तशास्त्रम् । ※तदर्थ इति — सिद्धान्तपक्षाभिप्राय इत्यर्थः । 'अनृत' शब्दस्य वचःशब्दार्थविशेषणतयैव प्रसिद्धत्वाद्विवृणोति ※न ऋतमिति — एतत् = अनृतत्वम् । तत्र = मिथुनीकरणे । एवञ्चाध्याससमर्थनेन पदार्थस्य बौद्धत्वं स्पष्टमेव लभ्यते इति भावः ।

मू० — ऐतरेयोपनिषदि — "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति — एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्च" इत्यादिना "यच्च स्थावरम्" (ऐत० उप ५।२-३) इत्यन्तेन स्पष्टमेवैतदुक्तम् । "एष प्रज्ञानात्मा" इति व्याख्यातम्। विशेष्यांशस्यैव च नामधेयं भवति, नहि 'घट' इति घटत्वस्य नामेति कश्चिदभ्युपैति । श्रुत्यन्तरेऽपि—

"भोक्ता भोग्यं प्रेरितारं च मत्वा,
सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत्" ॥ (श्वेता० उप० १।१२)

इत्यत्र भोग्यजडवर्गस्य ब्रह्मत्वमुक्तम्, तच्चोक्तरीत्यैव । तदनन्यत्वमिति सूत्रेऽपि भाष्ये उक्तम्—"प्राक् चात्माऽवगतेरव्याहतः सर्वो लोकव्यवहारः सत्यानृतविषयः" (शारी० भा० २।१।१४) इति। इदं च 'मिथ्याज्ञाननिमित्त' इति प्रतीके 'मिथ्याज्ञानमध्यासः' इति व्याचक्षाणैः, 'लोकव्यवहार' इति प्रतीके लोकानां व्यवहारः स च 'अयमहं ममेदम्' इति च व्याचक्षाणैर्वाचस्पतिमिश्रैः स्पष्टीकृतम् । सर्वानर्थमूलत्वात् 'इदं मम, अहमिदम्' इत्येव व्यवहारः साक्षादुक्तः, स च व्यवहारमात्रस्योपलक्षणम् । 'नैसर्गिक' इत्यनेन पूर्वपूर्वभ्रमजन्य उत्तरोत्तरः संस्कारस्ततश्चोत्तरोत्तरभ्रम इति सूचितम् । तत्र देहादौ 'अहम्' इत्यध्यासः शुद्धविषय एव, "जडचेतनयोर्विषयविषयिणोरन्योऽन्यस्मिन्नन्योऽन्यात्मकतामध्यस्य" इति भाष्योक्तेः । न चाध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तिः, अध्यासविषयस्य मिथ्यात्वमित्येव नियमात् । स च क्वचिदध्यस्यमानस्य क्वचिदधिष्ठानस्य तत्त्वेनोपपन्नः । यत्त्वेतद्दोषभिया 'संसृष्टात्माऽध्यासः' इति कैश्चिदुक्तम्, तन्न, उक्तभाष्यास्वारस्यात् ।

(रत्न०)—बौद्धार्थे एवोपनिषदं प्रमाणयति—*ऐतरेयोपनिषदीति । *एतानीति—"संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वशः" इति सर्वाणि प्रागुक्तानीत्यर्थः । एता अन्तःकरणस्य वृत्तयः उपलब्धुरुपलब्ध्यर्थत्वाच्छुद्धप्रज्ञानरूपस्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मण उपाधिभूतास्तदुपाधिजनितगुणनामधेयानि भवन्ति, न स्वप्रः साक्षादिति भावः । ❀इत्यादिनेति—आदिना "पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव । बीजानि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमञ्च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इत्यस्य संग्रहः । ❀श्रुत्यन्तर इति—श्वेताश्वतरोपनिषदीत्यर्थः । ❀उक्तरीत्यैवेति–अध्यासोक्तरीत्यैवेत्यर्थः । ❀तदनन्यत्वमिति–पूर्वं व्याख्यातम् । ❀इदमिति—लोकव्यवहारस्य सत्यानृतविषयत्वञ्चेत्यर्थः । ❀स्पष्टीकृतमिति—अध्यासभाष्यव्याख्यायां भामत्यामिति शेषः । ननु व्यवहारस्यानन्त्यात् 'इत्येव' इत्यसङ्गतमत आह–❀सर्वानर्थेति–स च साक्षादुक्तव्यवहारश्च । उपलक्षणम् = संग्राहकः । ❀ उत्तरोत्तरभ्रम इति–अनेनानादित्वं सूचितं तेन न परस्पराश्रयत्वं दोष इति भावः । ❀शुद्धविषय इति—चेतनाधिष्ठानक एवेत्यर्थः । ❀भाष्योक्तेरिति—जडचेतनयोरित्युक्त्वा 'अन्योऽन्यस्मिन्नन्योऽन्यात्मकताम्' इत्युक्तेः ।❀अध्यस्यमानस्येति–अध्यासकर्मण इत्यर्थः, तादात्म्याध्यासे ब्रह्मणोऽपि अध्यासकर्मत्वात्त्रापि मिथ्यात्वापत्तिरिति भावः । ❀अध्यासविषयस्येति—अध्यासे विषयो विषयी च भासतेऽत एवोक्तम्— विषयविषयिणोरिति । तथा च अध्यासविषयत्वं यत्र तत्रैव मिथ्यात्वं न तु अध्यासविषयित्वं यत्र तत्र मिथ्यात्वमिति भावः । एवञ्च यत्र यत्राध्यासविषयत्वं तत्र तत्र मिथ्यात्वं सिद्धम् । अध्यासकर्मत्वस्य मिथ्यात्वनियामकत्वे तु ब्रह्मणोऽपि 'अयमहम्' इत्यादौ कर्मत्वान्मिथ्यात्वापत्तिः स्यात् । अन्ये तु—अध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तिरित्यनेन 'यत्र यत्राध्यासविषयत्वं तत्र तत्र मिथ्यात्वम्' इति ब्रह्मणोऽपि मिथ्यात्वमाशङ्क्य 'यत्र यत्र मिथ्यात्वम्, तत्र तत्राध्यासविषयत्वम्' इत्यर्थकेनाध्यासविषयस्य मिथ्यात्वमित्येव नियमादित्यनेन ग्रन्थेन ब्रह्मणो मिथ्यात्वं वारयति ग्रन्थकार इत्याहुः । स च = नियमश्च । ❀क्वचिदध्यस्यमानस्येति – यत्र चेतनस्याधिष्ठानत्वं तत्र अध्यस्यमानस्य विषयत्वम् । यत्र तु चेतनस्याध्यस्यमानत्वं तत्राधिष्ठानस्य विषयत्वमिति सर्वत्र विषयित्वविरुद्धं विषयत्वमादाय मिथ्यात्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्राच्यमिति फलति । *तत्त्वेनेति – विषयत्वेनेत्यथः । *एतद्दोषेति— ब्रह्मणि मिथ्यात्वदोषभियेत्यर्थः । *संसृष्टात्माऽध्यास इति – संसृष्टे सोपाधिक आत्मनि अध्यास इति विशिष्टस्य शुद्धातिरिक्तत्वं स्वीकृत्य तत्र मिथ्यात्वस्येष्टत्वेन ब्रह्मणोऽध्यासकर्मत्वाभावान्नातिप्रसङ्ग इति तेषामाशयः । *भाष्यास्वारस्यादिति— 'विषयविषयिणोरन्योऽन्यस्मिन्नन्योऽन्यात्मकताम्' इत्यनेन ब्रह्मणोऽपि अध्यासकर्मत्वप्रतीतेः ।

सू० —यत्तु – अध्यासः किन्निमित्तकस्तत्राह — मिथ्याज्ञाननिमित्त इति । मूलकारणाविद्यारूपभावपदार्थनिमित्तक इत्यर्थः । तच्च 'लोकव्यवहार' इत्यस्य विशेषणम् । लोक्यते = मनुष्योऽहम्' इति मन्यत इति लोकः, ज्ञानोपसर्जनोऽर्थाध्यासः तद्विषयो व्यवहारः = अध्यस्यमानार्थविषयो व्यवहार इति ज्ञानाध्यासोऽत्र व्यवहारः । स चोक्ताविद्यानिमित्तक इति । सा चाविद्या संस्कारकालकर्मादिरूपेण परिणताऽध्यासनिमित्तमिति, तत्र त्रयाणामप्यध्यासपदार्थत्वेन 'अध्यस्य' 'मिथुनीकृत्य' इति क्त्वाप्रत्ययानुपपत्तेः । न च वस्तुनोऽभेदेऽप्यपौर्वापर्येऽपि विशेषणभेदेन वस्तुभेदं परिकल्प्य तत्प्रतिपत्तिक्रमेण पौर्वापर्यं च परिकल्प्य तदुपपत्तिरिति वाच्यम् , भेदकविशेषणानुपलम्भात् , प्रतिपत्तिक्रमाननुभवाच्च, रूढेर्योगापहारकत्वेन 'लोक' 'व्यवहार'पदयोर्यथाकथञ्चित्स्वाभिमतयोगेनाध्यासपरतया व्याख्यानस्यानौचित्याच्च, तादृशव्याख्यानं विना भाष्यानुपपत्तेरभावाच्च । किञ्च, ज्ञानाध्यासो यथा — प्रतिमाऽऽदौ देवताद्यध्यासः, यथा वाऽसन्निकृष्टे पर्वतादौ भ्रमात्मकवह्न्यनुमितौ विषयस्यासत्त्वेन योऽध्यास इति वदन्ति नव्याः । तर्हि सर्वत्र तथैवास्तु, किमनेन द्वैविध्येन ? । किञ्च, अतिरिक्ताविद्याया अपि संस्कारादिरूपेण परिणामद्वारा कारणत्वेन लाघवात्, क्लृप्तसंस्कारादृष्टैरेवोपपत्तौ तत्कल्पने मानाभावाच्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)—शारीरकभाष्यव्याख्यातृभिरानन्दगिर्यादिभिर्यदुक्तम्— संस्कारतो भ्रमाच्चातिरिक्ताऽभावपदार्थरूपाऽविद्येति, 'लोकव्यवहार' इत्यस्य लोकोऽर्थाध्यासः, व्यवहारो ज्ञानाध्यास इति च, तदुभयं खण्डयति—*यत्त्वित्यादिना । *मिथ्याज्ञानेति — मिथ्या च तज्ज्ञानं चेति मिथ्याज्ञानं तन्निमित्तं यत्र स इत्यर्थः । अत्र 'निमित्त'पदं कारणसामान्यपरमित्यविद्याया उपादानत्वेऽपि न दोषः । यद्वा, तस्या उपादानत्वेऽपि संस्कार-काल-कर्मादिनिमित्तरूपेण परिणामद्वारा निमित्तमिति 'निमित्त'पदम् । स्वप्रकाशासङ्गात्मनि कथमविद्याप्रसङ्गः ? इत्याशङ्कानिवृत्तये 'मिथ्या' इति विशेषणम् । तच्च = 'मिथ्याज्ञाननिमित्त' इति पदञ्च । *लोक इति—ज्ञानविषयीभूतोऽर्थ इत्यर्थः । तद्विषयः = अर्थविषयः, व्यवहारः = अभिमानः । समुदायार्थमाह —*अध्यस्यमानेति । *ज्ञानाध्यास इति — अस्य'अर्थोपसर्जन' इत्यादिः । तथा चानेनाध्यासस्य द्वैविध्यं दर्शितम् । अविद्यायाः कालादिरूपेण परिणामद्वारा निमित्तत्वमाश्रित्याह — *स चेति – द्विविधश्चेत्यर्थः । अविद्यायाः निमित्तत्वप्रकारमाह — *सा चेति । त्रयाणाम् = लोक-व्यवहाराध्यासानाम् । यत्तु, त्रयाणामित्यस्याध्यास-मिथुनीकरणं-लोकव्यवहाराणामिति विवरणमुक्तम्, तदसङ्गतम्, मूले 'अध्यस्य'-इत्यस्यैव विवरणत्वेन 'मिथुनीकृत्य'इत्यस्य उक्तत्वादित्युपाध्यायाः । *अध्यासपदार्थत्वेनेति — अध्यासः पदार्थो यस्य तत्त्वेनेत्यर्थः । क्त्वाप्रत्ययस्योपपत्तिमाशङ्क्य खण्डयति — *न चेत्यादिना । *अभेदेऽपीति — त्रयाणामित्यादिः । प्रतिपत्तिक्रमेण = ज्ञानक्रमेण । तदुपपत्तिः = क्त्वाप्रत्ययोपपत्तिः । *भेदकविशेषणेति—अध्यासभेदकविशेषणेत्यर्थः । *योगापहारकत्वेनेति—अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानस्य प्रतिबन्धकत्वेनेत्यर्थः । यथा — रथन्तरादौ । *लोकव्यवहारेति – 'लोक'पद'व्यवहार'पदयोरित्यर्थः । *यथाकथञ्चिदिति — शब्दमर्य्यादाऽननुगुणेत्यर्थः । ननु पीनत्वान्यथाऽनुपपत्त्या यथा रात्रिभोजनस्य कल्पनं तथाऽध्यासपरभाष्यान्यथाऽनुपपत्त्या तथा कल्प्यते, अन्यथाऽनुपपत्तेः सर्वतो बलीयस्त्वादत आह— *तादृशेति — 'लोकव्यवहार'पदस्य तादृशार्थपरकत्वेन व्याख्यानं विनेत्यर्थः । ज्ञानाध्यासेऽर्थोपसर्जनत्वं नास्तीत्याह —

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*किञ्चेति । बौद्धस्यैव बाह्येऽध्यासः 'ज्ञानाध्यासः' इत्युच्यते । यद्वा, ज्ञानान्तरे ज्ञानान्तराध्यासः । *असन्निकृष्टेति — पूर्वं त्वधिष्ठानसन्निकर्षः, अत्र तु नेति भावः । एतेनाध्यासव्यक्तिभेदात्पूर्वस्य पूर्वस्योत्तरोत्तरं प्रति संस्कारद्वारा कारणत्वात्पौर्वापर्य्यस्योपपत्तिरिति रामानन्दोक्तमपास्तम् । अत्र तत्खण्डनस्य युक्तत्वेऽपि कश्चिदंशो न युक्त इत्यरुचेराह — *वदन्ति नव्या इति । अवशिष्टांशे स्वसिद्धान्तं प्रतिपादयितुं दोषमाह — *तर्हीति — अतिरिक्ताविद्यायाः परिणामस्वीकारे इत्यर्थः । सर्वत्र = अध्यासेऽपि । *द्वैविध्येनेति — अध्यासद्वैविध्येनेत्यर्थः । स्वसिद्धान्तमाह — *किन्त्विति — अतिरिक्ताविद्यायाः स्वीकारेऽपि तत्परिणामसंस्कारद्वारा कारणत्वकल्पनाऽपेक्षया तामस्वीकृत्य क्लृप्तसंस्काररूपामेवाविद्यामदृष्टञ्च कारणं परिकल्प्य सर्वोपपत्तौ अतिरिक्ताविद्यायाः कल्पने मानाभाव इति भावः ।

सू०—मिश्रव्याख्याने तु 'अध्यस्य' इत्यनेनानन्तर्यलाभेऽपि तस्य निमित्तत्वालाभात् तदुक्तिः, भ्रमरूपाध्यासेन कथं तत्र व्यवहारः ? इति शङ्काऽपनयनाय च तदुक्तिः । मिथ्याज्ञानविषयेण रज्जुसर्पादिना भयपलायनादिव्यवहारवत् सर्वोऽपि व्यवहारस्तन्निमित्तक इत्याशयः । किञ्च, सर्वसम्मताध्यासविषये "कोऽयमध्यासो नाम ? स्मृतिरूपः परत्र पूर्वदृष्टावभासः" इति प्रश्नोत्तरवत्सर्वासम्मताविद्याविषये प्रश्नोत्तरानुपलम्भेन सा न भाष्यसम्मता । पूर्वदृष्टस्य परस्यावभास इत्यर्थः । 'परत्र' इत्युक्तेः 'परस्य' इति लब्धम् । अवसन्नो भासोऽवभासः, उत्तरकालिकबाधेन तस्यावसादात् । पूर्वदृष्टत्वं च संस्कारद्वारोपयोगि, तच्च जन्मान्तरीयमपि । तदाह — स्मृतिरूप इति — स्मृतिसदृश इत्यर्थः । संस्कारजन्यत्वेन च तत्सादृश्यं न तु स्मृतिरेव, पूर्वानुभूतत्वरूपतत्ताऽनुल्लेखात् । एतच्च विवेचयिष्यते । अनेन च संस्कारोऽध्यासनिमित्तमित्युक्तमेवेति । तदाकाङ्क्षाऽभावेन तदंशेऽपि प्रश्नोत्तराभावः ।

अविद्याया अध्यासातिरिक्तत्वखण्डनम्

(रत्न०)—ननु मिश्रव्याख्याने व्यवहारस्याध्यासभिन्नत्वेऽपि 'अध्यस्य'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति ल्यबन्तेनैवानन्तर्य्यादिलाभेन निर्वाहे 'मिथ्याज्ञाननिमित्त' इति विशेषणं व्यर्थमत आह —*मिश्रव्याख्याने त्विति। तदुक्तिः = 'मिथ्याज्ञाननिमित्त' इति व्यवहारविशेषणोक्तिः। *तदुक्तिरिति — अत्रापि पूर्वोक्त एवार्थः। *तन्निमित्तक इति — मिथ्याज्ञाननिमित्तक इत्यर्थः। मिथ्याऽज्ञानमिति च्छेदेन तदतिरिक्तत्वे तदसङ्गतिरूपमेव दोषान्तरमतः सा तदभिप्रेतेति शङ्कानिरासायाह — *किञ्चेति। *प्रश्नोत्तरवदिति — शारीरकभाष्ये इति शेषः। *सर्वासम्मतेति — अतिरिक्तत्वेन सर्वासम्मतेत्यर्थः। तेन "तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति ब्रुवते" इति भाष्येण न विरोधः, अध्यासरूपायास्तस्याः स्वीकारेऽपि अतिरिक्ताया अस्वीकारात्। *परत्रेति—अयोग्याधिकरणे शुक्तिकादावित्यर्थः। अधिकरणेऽयोग्यत्वञ्च-आरोप्यात्यन्ताभाववत्त्वम्। 'परत्रावभासः' इत्येव लक्षणम्, 'पूर्वदृष्टावभासः' इति तु तदुपव्याख्यानम्। *प्रश्नोत्तरेति – 'केयमविद्या नाम ? इत्यादि-रूपेण प्रश्नोत्तराभाव इति भावः। सा = अतिरिक्ता अविद्या। *अवसन्न इति-अवभासेऽवसन्नत्वञ्च — प्रत्ययान्तरबाध्यत्वम्। तदाह — *उत्तरकालेति। *उपयोगीति — 'मिथ्याज्ञाने' इति शेषः। *तच्चेति — पूर्वदृष्टत्वञ्चेत्यर्थः। *जन्मान्तरीयेति — विनिगमनाविरहादिति भावः। ननु संस्कारजन्यत्वेन स्मृतित्वापत्तिरत आह — *न तु स्मृतिरिति। *तत्ताऽनुल्लेखादिति—यत्र तत्ता (अनुभूतता) भासते सैव स्मृतिरित्यर्थः। दोषादेरपि तत्र कारणत्वेन संस्कारमात्रजन्यत्वाभावाच्च न स्मृतित्वमिति भावः। *अनेन चेति — अध्यासे संस्कारद्वारा पूर्वदृष्टत्वस्योपयोगित्वेन चेत्यर्थः। *तदाकाङ्क्षेति— संस्काराकाङ्क्षेत्यर्थः। तदंशेऽपि = संस्कारांशेऽपि।

मू०—अग्रे चाध्यासातिरिक्ताऽविद्या न काचिदिति सूचयितु-मेव "तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति ब्रुवते" इत्युक्तम्। भावरूपायाः कारणाविद्यायाः अतिरिक्ताया भाष्यसम्मतत्वेऽध्यास-मपीति ब्रूयात्। "तमेतमेवंलक्षणम्" इत्यक्षरस्वारस्येनात्र "अहं मम" इत्यध्यास एवाविद्या† । "वासुदेवः सर्वम्" ( भगवद्गी०

---

† न्यायामृतकारास्तु — अध्यासे प्रमाणाभावः। न च 'अहं ब्राह्मणः काणः' इति प्रत्यक्षमेव मानमिति वाच्यम्, अहमर्थानात्मत्वस्य भवदभिमतत्वेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

७।१९) इति विद्यायां तस्यैव विरोधित्वात्। रागद्वेषमोहादि-वासनास्तु 'वासना' पदेनैव वाच्याः। मायात्वं तु साधारणम्।

---

तद्बुद्धेरात्मानवगाहित्वात्, देहात्मैक्यस्य प्रत्यक्षत्वे तद्विरोध्यनुमानागमयोरप्रामाण्यप्रसङ्गाच्च। किञ्च, भेदमात्राध्यासवादिनां मतेऽभेदस्य सत्यत्वोपलब्ध्या देहात्मैक्याध्यासोऽयुक्त एव। अधिष्ठानज्ञानाबाध्यात्यन्ताभावप्रतियोगित्वं हि मिथ्यात्वम्, तथा च — स्वरूपेणाध्यस्तत्वेऽपि देहात्मना सह भेद उपपन्न एव, रूप्ये शुक्तिज्ञानाबाध्यस्य भेदस्य दर्शनात्। अपि च देहात्मैक्याध्यासे 'अहं देहः' इति प्रतीतिः स्यान्न तु 'अहं देही' इति। न च 'ब्राह्मणोऽहम्' 'मनुष्योऽहम्' इति प्रतीतिरध्यासे मानम्, शरीरविशिष्टात्मनि ब्राह्मणत्वादेः सत्त्वेन तत्प्रतीतेः प्रमात्वेन भ्रमत्वासम्भवात्। 'कृशोऽहम्' इति प्रतीतिस्तु पुत्रे कृशे 'अहं कृशः' इतिवद्गौण्येव। "अस्तीत्येवोपलब्धव्यः" (कठोप० ६। १३) इति श्रुतिस्तु कुसमयप्राप्तदेहात्मत्वनिरासपरा, नानुवादिका। जातमात्रस्यापि पश्वादेः प्रवृत्त्यादिहेतुस्तन्यपानेष्टसाधनतास्मृतिर्देहान्तरास्मृतौ न युक्ता इत्यनेकमण्यनुस्यूतसूत्र इव अनेकशरीरानुगतात्मन्यपि भेदधीः सम्भवत्येवेति 'मम देहः' इति प्रत्ययो न गौणः किन्तु 'कृशोऽहम्' इति प्रत्यय एव। 'योऽहं बाल्ये पितरावन्वभूवम्, सोऽहं प्रनप्तॄनुनुभवामि' 'योऽहं स्वप्ने व्याघ्रदेहः, सोऽहमिदानीं मनुष्यदेहः' इति देहात्मनोर्व्यावृत्तत्वानुवृत्तत्वरूपभेदसाक्षात्कारस्य धर्मिणि प्रत्यक्षे भेदसाक्षात्कारव्यापृतत्वेन देहात्मैक्यभ्रमो नोत्पत्तुमर्हति। क्वचिद्भेदकधर्मज्ञानेऽपि भ्रमस्तु दोषाधिक्यात्। एतेन "ब्राह्मणो यजेत" इति श्रुतिरपि व्याख्याता। तत्र हि 'ब्राह्मण'शब्दस्य न शरीरमर्थः, जडस्यानियोज्यत्वात्। नापि देहविशेषसम्बन्धपरं ब्राह्मणपदम्, सम्बन्धस्यान्यस्यासम्भवात्। अध्यासरूप एवेति नाशङ्कनीयम्, संयोगस्य, आत्मविभुत्वे; स्वस्वामिभावस्य, तस्य पश्वादिसाधारण्ये; इच्छाऽनुविधायित्वस्य, वातजडीकृतदेहे; तदभावे तदिन्द्रियाश्रयत्वस्य, तज्ज्ञानकेन्द्रियाश्रयत्वस्य, साक्षात्प्रयत्नजन्यक्रियाऽऽश्रयत्वस्य, तद्भोगायतनत्वस्य, तत्कर्मार्जितत्वस्य वा सम्बन्धस्यान्यस्य सम्भवेनाध्याससम्बन्धवादायोगात्। नापि लक्षणया देहविशेषैक्याध्यासपरत्वम् 'ब्राह्मण' शब्दस्य, पुत्रादीनामिव ब्राह्मणभृत्यादीनामपि शूद्राणां ब्राह्मण्यापत्त्या कर्माधिकारप्रसङ्गात्, ब्राह्मणानामपि शूद्रस्वामिनां भृत्यानां वा कर्मानधिकारापाताच्च। जीवन्मुक्तस्याब्राह्मण्येन "न ब्राह्मणो हन्तव्यः" इत्यादि निषेधाविषयत्वापत्तेः। कादाचित्काध्यासस्तु महापातकनष्टब्राह्मण्यस्यापि कर्माधिकारापातेन न ब्राह्मण्यप्रयोजकः। एतेन 'सर्वाणि विधिनिषेधशास्त्राण्यध्यासमूलानि' इति परं भाष्यमपि प्रत्याख्यातम्। प्रमातृत्वन्तु अध्यासाभावेऽपि सुषुप्तौ ज्ञातृत्वदर्शनान्नाध्यासमूलम्। घटादिप्रमा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्रापि 'अविद्या' पदप्रयोगस्तु अध्यासत्वसामान्याद्गौण इति लभ्यते। अत एव "उपपद्यते चोपलभ्यते च" (वे०सू० २।१।३६) इति सूत्रे भाष्ये उक्तम्—ईश्वरस्य वैषम्यकारणत्वमित्यर्थः। 'न चाविद्या केवला वैषम्यकारणम्, तस्या एकरूपत्वात्। रागद्वेषवासनाऽऽक्षिप्तकर्मापेक्षत्वे तु तस्या ईश्वरस्यापि तदपेक्षत्वाद्वैषम्यहेतुत्वमुपपन्नम्' इति। एकरूपत्वादित्यस्य 'अहं मम' इत्यध्यासरूपाविद्यायाः सर्वेषामेकरूपत्वादित्यर्थः। तत्तत्प्राणिकर्मवशाद्बीजाङ्कुर न्यायेनानादिपूर्वपूर्ववासनयैव घटादिभ्रमरूपां सृष्टिं स करोतीति बोध्यम्।

(रत्न०)-अध्यासातिरिक्ताविद्याया अभावे मानान्तरमाह—*अग्रे चेति-अस्याग्रेतनेन 'उक्तम्' इत्यनेनान्वयः। *तमेतमेवमिति-उक्तलक्षणलक्षितमित्यर्थः। *कारणाविद्याया इति—प्रपञ्चमूलेत्यादिः। *अपीति—अपिनाऽतिरिक्ताया अविद्याया अपि ग्रहणं सम्भवेदिति भावः। *अक्षरस्वारस्येनेति—'अहं मम' इत्याद्यध्यासस्वरूपमुक्त्वा तमेतमेवमिति लक्षणकरणेनेत्यर्थः। *इति विद्यायामिति—इत्याकारकविद्यायामित्यर्थः। तस्यैव = अध्यासस्यैव। एवञ्च मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमविद्यात्वं फलितम्। न चैवं वासनाऽपि अविद्यैव स्यादत आह—*राग-

---

काले तदध्यासाभावेऽपि प्रमातृत्वदर्शनाच्चेति प्रमातृत्वादिकमध्यासमूलमिति परभाष्यमपि प्रत्युक्तम्। चार्वाकादीनां देहात्मत्वविप्रतिपत्तिस्तु देहातिरिक्तादर्शनमूलकानुमानाभासजन्यज्ञाने प्रत्यक्षत्वाभिमाननिबन्धना न देहात्मैक्यं प्रत्यक्षसिद्धमवगमयति। अङ्गुल्या देहं प्रदर्श्य 'अहम्' इति वादस्तु अङ्गारं प्रदर्श्य 'अयं वह्निः' इतिवत्, पृथग्दर्शयितुमशक्यत्वात्। उक्तञ्च—

"व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात्।
भेदज्ञानेऽपि चाङ्गारवह्निवत्स्वाविविक्तवत्॥
भवन्ति व्यवहाराच्च नहि प्रत्यक्षगानपि।
अर्थान् यथाऽनुभवतः प्रतिपादयितुं क्षमाः॥" इति।

तस्माद्देहादेरात्मैक्येन स्वरूपेण च अनध्यस्तत्वाज्जगत् सत्यमेव नानिर्वाच्यमिति सिद्धम्" इति वर्णयन्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वेषेति । ननु माया‌ऽप्येकतररूपैवं स्यादत आह — ॐमायात्वं त्विति — अध्यासाविद्योभयसाधारणमित्यर्थः । तत्रापि = वासनायामपि । ॐसामान्यादिति — समानाकारकत्वादित्यर्थः । ॐगौण इति — आरोपकृत इत्यर्थः । ॐअत एवेति — अध्यासे एवाविद्यापदस्य मुख्यत्वादेवेत्यर्थः । ॐसूत्रे इति — अत्र हि — "उपपद्यते च संसारस्यानादित्वम् । आदिमत्त्वे हि संसारस्याकस्मादुद्भूतेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः, अकृताभ्यागमप्रसङ्गश्च, ( अकृतेऽपि पुण्यपापरूपे कर्मणि तत्फलं भोक्तारमभ्यागच्छेत् ) सुखदुःखादिवैषम्यस्य निर्निमित्तत्वात् । न चेश्वरो वैषम्यहेतुरित्युक्तम् । न चाविद्या केवला वैषम्यस्य कारणम्; एकरूपत्वात् । रागादिक्लेशवासनाऽऽक्षिप्तकर्मापेक्षा त्वविद्या वैषम्यकरी स्यात् । न च कर्मान्तरेण शरीरं सम्भवति, न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयप्रसङ्गः । अनादित्वे तु बीजाङ्कुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति । उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः" इति; तदाह — ॐउपलभ्यते चेति । अत्र मूले 'भाष्ये उक्तम्' इत्यस्यानन्तरम् 'ईश्वरस्य वैषम्यकारणत्वमित्यर्थः' इत्युपलभ्यते, तच्चासङ्गतम्, अनन्वितत्वात्, अनपेक्षितत्वात्, अग्रे तथैवोक्तिदर्शनाच्च । तत्रत्यं भाष्यमर्थतोऽनुवदति — ॐन चेति । ॐतदपेक्षत्वादिति – अनादिप्राणिकर्मापेक्षत्वादित्यर्थः । तदनपेक्षत्वे तु वैषम्याभाव एव, तदाह — "वैषम्यनैर्घृण्ये न, सापेक्षत्वात्तथा हि दर्शयति" ( वे० सू० २ । १ । ३४ ) इति सूत्रेण । नन्वविद्याया एकरूपत्वे कथं भेदोऽत आह — ॐतत्तदिति । अनवस्थावारणाय भाष्योक्तार्थमेवाह — ॐबीजाङ्कुरेति । सः = ईश्वरः । संस्काररूपवासनाया अविद्यात्वे तु तासामनेकरूपत्वात् 'तस्या एकरूपत्वात्' इत्युक्तिरसङ्गतैव स्यादिति भावः । 'भ्रमरूपां सृष्टिं करोति' इत्यनेन सर्वेषां पदार्थानां बौद्धत्वं सूचितम् ।

मू० — किञ्च — "तत्तु समन्वयात्" ( वे० सू० १।१।४ ) इति सूत्रे — "साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्" इति भाष्ये उक्तम् । तत्रानित्यत्वं नाश्यत्वमेव । तव तु अजन्याया अविद्याया नाश्यत्ववज्जन्यस्यापि मोक्षस्याविनाशित्वे किं बाधकम् ? जन्यत्वनाश्यत्वयोः परस्प-

अविद्याया अजन्यत्वखण्डनम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रव्याप्तेरेव लोके दृष्टत्वाच्च । एवञ्च जन्याऽविद्या नाश्या चेत्युक्तमेव ।

(रत्न०)-※सूत्रे इति - "तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः । तद् ब्रह्म सर्वज्ञम्, सर्वशक्ति, जगदुत्पत्ति-स्थिति-प्रलयकारणं वेदान्तशास्त्रादेवावगम्यते। कथम् ? समन्वयात् — सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यैवार्थस्य प्रतिपादकत्वेन समनुगतानि "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" (छा० उप० ६।२।१) इति । तद् ब्रह्म, यस्येयं जिज्ञासा प्रस्तुता । तद्यदि कर्तव्यशेषत्वेनोपदिश्येत, तेन च कर्तव्येन साध्यश्चेन्मोक्षोऽभ्युपगम्येत, अनित्य एव स्यात्, नित्यश्च मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगम्यते" इत्युक्तम्। तत्र = भाष्ये । ※अजन्याया इति — वेदान्तिमते हि अविद्याऽजन्या विद्यया नाश्या च । तत्राजन्यत्वेऽपि यथा नाश्यत्वं स्वीक्रियते तथा मोक्षस्य साध्यत्वेऽपि अविनाशित्वस्वीकारे न किञ्चिद्बाधकमित्यर्थः । ※परस्परेति - 'जन्यत्वनाश्यत्वे समव्याप्ते' इति लोकप्रसिद्धतया तयोः परस्परव्याप्यव्यापकभावस्य त्यागे मानाभाव इति भावः । पर्यवसितं स्वसिद्धान्तमाह — ※एवञ्चेति—नाश्यत्वे च जन्यत्वमर्थापत्तिलभ्यमिति भावः ।

मू० — योगसूत्रेऽप्युक्तम् — "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" ( यो० द० २ । ५ ) इति। व्याससूत्रेऽपि एतद्विलक्षणाविद्याऽनुक्तेस्तस्यापीदमेव सम्मतमिति लक्ष्यते । अत एव "पञ्चवृत्तिर्मनोवद् व्यपदिश्यते" ( वे० सू० २ । ४ । १२ ) इति सूत्रे "परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायेन योगशास्त्रप्रसिद्धाः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतिरूपा मनसः पञ्च वृत्तयः परिगृह्यन्ते" इति भाष्ये उक्तम् ।

(रत्न०)-अविद्याया अध्यासरूपत्वे योगशास्त्रसम्मतिमाह — ※योग इति । ※अनित्येति — अनित्यादिचतुष्टये क्रमेण नित्यत्वादिबुद्धिः । तद्यथा — कालनिष्ठात्यन्ताभावप्रतियोगित्वरूपानित्यत्ववति कार्ये नित्यत्वज्ञानम् - ध्रुवा पृथिवी, ध्रुवा द्यौः, ध्रुवा दिवौकसः, इत्यादि । अशुचौ शुचित्वज्ञानम् —अपवित्रे परमबीभत्से काये 'शुद्धमिदम्' इति । तदुक्तम्—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"स्थानाद्बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥" इति ।

स्थानादिति — मातुरुदरं मूत्राद्युपहतं स्थानम्, पित्रोर्लोहितरेतसी बीजम्, अशितपीताहाररसादिभाव उपष्टम्भः, निःस्यन्दः = स्वेदः, निधनम् = मरणम् । या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखम्, या लौल्यादनुपशान्तिस्तद् दुःखम् । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम् । कस्मात् ? भोगाभ्यासमनु विवर्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति । तस्मादनुपायः सुखस्य भोगाभ्यास इति । स खल्वयं वृश्चिकभीत इवाशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्नः इति । तदुक्तम् — "परिणाम-ताप-संस्कार-दुःखैर्गुणवृत्ति-विरोधाच्च दुःखमेव सर्वं विवेकिनः" (यो०द० २।१५) इति । अनात्मन्यात्मख्यातिर्यथा — बाह्ये देहेऽहंबुद्धिः 'अयमहम्' इति, चेतनाचेतनेषु पुत्रधनादिषु ममताबुद्धिर्वा । एतत्कार्यमेव जगत्, 'अहं कर्त्ता' इत्याद्यभिमानस्यैव जगद्धेतुत्वात् । वेदान्तसूत्रकारसम्मताऽपीयमित्याह — *व्यासेति — अविद्यायास्तत्रावर्णनात् स्वयं तत्स्वरूपानुक्तेश्च योगशास्त्रोक्तायाः एव तत्सम्मतत्वं ध्वन्यते । *अत एवेति — योगशास्त्रोक्ताया अविद्यायाः सम्मतत्वादेवेत्यर्थः । पूर्वं प्राणवायोर्व्यापारविशेषं प्रदर्श्य पुनराह भगवान् शङ्करः—"इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यम्, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु—"प्राणोऽपानो व्यान उदानःसमानः"(बृह०उप० १।५।३) इति । प्राणः = प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानः = अर्वाग्वृत्तिर्निश्वासादिकर्मा, व्यानः = तयोःसन्धौ वर्त्तमानो वीर्यवत्कर्महेतुः, उदानः = ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः = समं सर्वेष्वङ्गेषु योऽन्नं रसान् नयतीति । एवं पञ्चवृत्तिः प्राणो मनोवत् । यथा मनसः पञ्च वृत्तयः, एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः, न तु "कामःसंकल्पः" (बृह० उप० १।५।३) इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसंख्याऽतिरेकात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्याऽतिरेकः, एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते— "प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः" (यो० द० १।६) इति सूत्रोक्ताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र "प्रत्यक्षानुमानागमाः प्रमाणानि" (यो० द० १।७)। "विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" (यो० द० १।८)। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" (यो० द० १।९)। "अभावप्रत्ययावलम्बना वृत्तिर्निद्रा" (यो० द० १।१०)। "अनुभूतविषयासम्प्रमोषः स्मृतिः" (यो० द० १।११) इति। एतेनैतदतिरिक्तवृत्तिपरत्वेन सूत्रव्याख्यानं परास्तम्। एवमविद्याया योगशास्त्रोक्ताया अप्रतिषेधात् सैवाविद्या व्याससम्मतेति प्रतीयते।

मू०—परमार्थसारेऽपि—

"रज्ज्वां नास्ति भुजङ्गः, सर्पभयं भवति हेतुना केन।
तद्वद् द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम्॥"
"एतत्तदन्धकारं यदनात्मन्यात्मताभ्रान्त्या।
न विदन्ति वासुदेवं सर्वात्मानं जना मूढाः॥" इति।
(प० सा० २८-२९)

एतद् = भ्रान्तिरूपम्। उत्तरार्द्धेन 'न विदन्त्यनया' इति 'अविद्या'पदव्युत्पत्तिर्दर्शिता। एवञ्च सिद्धं भ्रमस्तत्संस्काररूपा चाविद्येति। सा च जन्यैवेति नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गः।

(रत्न०)—पुनरप्यविद्याया भ्रमरूपत्वे जन्यत्वे च प्रमाणमाह—*परमार्थसार इति। नन्वात्मावस्थारूपश्चेज्जगत्, तर्हि तद्वत्सत्यं स्यादत आह—*रज्ज्वामिति—रज्जुः कालत्रयेऽपि भुजङ्गो न भवति, कदाचित्तद्दर्शनाद्भयं भवति, तत्केन हेतुना? भ्रान्तिरूपयाऽविद्ययेति चेत्, तद्वदात्मनि द्वैतविकल्पभ्रान्तिः = अन्तर्य्याम्यादिभ्रान्तिरविद्या, नैतत्सत्यमिति। भ्रान्तौ 'अविद्या' पदप्रवृत्तौ निमित्तमाह—*एतदिति—'अन्धकारम्' इति रूपकमेतत्। *सर्वात्मानमिति—सर्वस्वरूपं वासुदेवं परमात्मानं न विदन्ति। एवञ्च 'न विदन्ति अनया' इति 'अविद्या' पदवाच्यार्थो वर्णितः। तथा च श्रुतिः—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" (श्वेता० उप० ४।१०) इति, सनत्सुजातभाष्ये आचार्य्योक्तिश्च—"अग्रहणान्यथाग्रहणात्मिका अविद्या" इति। इयं स्थूलाऽविद्या अग्रहणजनकान्यथाग्रहणजनकस्वरूपेति तदर्थः। अन्यथाग्रहणजनकं तु पूर्वपूर्वं भ्रमजं संस्कारजालम्, तत्तत्प्राणिनां भोगजनक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मद्दष्टश्चेति बोध्यम् । अत्र कलानाम्न्यां टीकायाम् "तदाह—संक्षेपेणैतदिति" इति प्रतीकदर्शनाल्लेखकप्रमादादिना कियानंशो लुप्त इति प्रतीयते । निष्कर्षमाह—*एवञ्चेति—जगतो मानसत्वे चेत्यर्थः । भ्रमः = भ्रम-विषयप्रपञ्च इति यावत् । सा च = अविद्या च । *जन्येति—एवञ्च ब्रह्मण एव नित्यत्वेन सर्वकारणत्वेन च 'कारणविज्ञानेन च सर्वं कार्य्यजातं विज्ञातं भवति' इत्येतदभिप्रायिकाया एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया न भङ्ग इति भावः ।

सू० — परमार्थसारेऽप्युक्तम्—

"हिमफेनबुद्बुदा इव जलस्य धूमोद्गमो यथा वह्नेः ।
तद्वत्स्वभावभूता मायैषा कीर्तिता विष्णोः ॥
"एनां द्वैतविकल्पभ्रमस्वरूपां विमोहिनीं मायाम् ।" इति ।
( प० सा० ५६–५७ )

स्वभावभूता, तज्जननस्वभावत्वात्तस्य, जलादेः फेनादिजन-कत्वस्वभाववत् । आध्यासिकसम्बन्धेन तस्या नित्यसम्बद्धत्वाद् विष्णौ तत्स्वभावारोप इति बोध्यम् । विमोहिनीमुपाधिस्थस्य स्वस्य । तदुक्तं तत्रैव —

"विमोहयतीवात्मानं स्वमायया द्वैतरूपया देवः।" (प०सा० ३२) इति । वास्तवमोहाभावात् 'इव' इति, तेनारोपित एव मोह इति बोध्यम् । अत एव तृतीये—"सामान्यात्तु" (वे० सू० ३।२।३२) इति सूत्रे भगवत्पादैरुक्तम् —"न हि ब्रह्मातिरिक्तं किंचिदजं संभवति, "सदेव सोम्येदमग्र आसीद्, एकमेवाद्वितीयम्" ( छान्दो० उप० ६।२।१ ) इत्यवधारणात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च" इति । अत एव "न वियदश्रुतेः" ( वे० सू० २।३।१ ) इत्यधिकरणे वियदादीनामजन्यत्वे "प्रतिज्ञाऽहानिरव्यतिरेकाच्छ-ब्देभ्यः" (वे० सू० २।३।६) इति सूत्रेण एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञाभङ्ग आपादितः । मृत्पिण्डादिदृष्टान्तेन कारणज्ञानेन कार्यस्या-सत्यत्वज्ञानमिति हि ततो लभ्यते । तदुक्तम्—"अव्यतिरेकाच्छ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्देभ्यः" इति । शब्दाच्च प्रकृतिविकृतिन्यायेनाव्यतिरेकात्प्रतिज्ञासिद्धिरवगम्यते इति तदर्थः । एतेनाकाशस्याजन्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गापादनमभ्युच्चयः, अविद्याऽनुरोधेन 'सर्व' पदसंकोचस्यावश्यकत्वेनाकाशातिरिक्तपरत्वेनापि तत्संकोचादित्यपास्तम् । किञ्च, तत्रैव "यावद्विकारं तु विभागो लोकवत्" (वे०सू० २।३।७) इतिसूत्रेण कार्यत्वस्य भेदव्याप्य(पक्ष)त्वबोधकेनाकाशस्येवाविद्याया अपि तत्त्वबोधनात् । विकारः = कार्यम्, विभागः = भेदः, अस्ति ह्याकाशे पृथ्व्यादिभेदः । एवमविद्यायां शुद्धब्रह्मभेदसत्त्वात्कार्यत्वमापतति । ब्रह्मणि तु न किञ्चिन्निरूपितो भेदः, अधर्मकत्वेन वैधर्म्यसंभावनाऽभावात् "एष एव हि भेदो भेदहेतुर्वा यद्वैधर्म्यम्" ( काव्यप्र० उल्ला० ५ कारि० ४७ ) इति प्रकाशकाराद्युक्तेः । न च अजन्यं सद् यदविनाशि तदन्यत्वरूपमत्र कार्यत्वं साध्यम्, पराधीनसत्ताकत्वरूपं वा कार्य्यत्वं साध्यम्, अविद्याया अजन्यत्वेऽपि ब्रह्मण्यध्यस्तत्वेन पराधीनसत्ताकत्वम्, विनाशित्वाच्चाद्यमपि तत्रेति वाच्यम्; सामान्यप्रवृत्तसूत्रस्य सङ्कोचेन व्याख्याने मानाभावात्, अविद्याया अजन्यत्वबोधकसूत्रान्तराभावाच्च । आकाशस्याप्यध्यस्तत्वेनान्त्ये तत्रापि जन्यत्वं न सिध्येत् । "अजामेकाम्—" (श्वेता० उप० ४।५) इति श्रुतिरविद्याया अनादित्वबोधिका,

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥"
( गौड० कारि० १।१६)

इति भाष्योक्ता संप्रदायविदुक्तिश्च तस्या अजन्यत्वे न मानम्, अविद्याया रूपकेणोपपत्तेः । अत एव "अजामेकाम्—" (श्वेता० उप० ४।५) इति श्रुतौ तेजोऽवन्नानामव्याकृतनामरूपा प्रागवस्था अजारूपकेण निर्दिष्टा" ( शारी० भा० १।४।९–१० ) इति भाष्ये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तम् । अनादित्वमपि परम्पराऽनादित्वेनेति वक्ष्यामः । "अक्षरात्परतः •परः" ( मुण्ड० उप० २।१।२ ) इति श्रुतौ अविद्याया अक्षरत्वश्रुतेश्च तद्यदि, यथाकथञ्चित् तत्त्वज्ञानात्प्रागनिवृत्तेः, तर्हि अनादित्वमपि तथैवास्तु । न च तस्या जन्यत्वे मूलकारणेऽनवस्थाऽऽपत्तिः, ब्रह्मणस्तूपाधिसहकारं विना न जनकत्वम्, अत एव परमाण्वादीनां नित्यत्वं परैः स्वीकृतमिति वाच्यम्; वासनारूपाविद्यासहकारेण स्थूलाविद्यायास्तत्सहकारेण च सूक्ष्माविद्याया ब्रह्मजन्यत्वेनानवस्थाऽऽपत्त्यभावात् ।

(रत्न०)–तत्रैव प्रमाणान्तरमाह—*परमार्थेति । अविद्यास्वरूपमाह—*हिमफेनेति—यथा हिमादयो जलस्वभावा जलेन सम्बद्धा', धूमोद्गमः = धूमोद्गमहेतुता यथा वह्नेः स्वभावः, तद्वद्विष्णोर्माया विष्णुस्वभावभूता विष्णुना स्वभाववन्नियतसम्बद्धेत्यर्थः । *कीर्तितेति—'एतत्तदन्धकारम्' इत्यत्रेति शेषः । द्वैतम् = नामरूपात्मकम् । विकल्पाः = भेदास्तद्विषयको यो भ्रमस्तज्जनिकां जीवान् विमोहयन्तीं मायामसदर्थप्रकाशिकाम् । अस्योत्तरार्द्धस्थेन 'उत्सृज्य' इत्यनेनान्वयः । उत्तरार्द्धे तु "उत्सृज्य सकलनिष्कलमद्वैतं भावयेद्ब्रह्म" इति । तथा च भ्रमविषयद्वैतविकल्पस्वरूपां तत्कारणवासनारूपाञ्चोत्सृज्य "नेह नानास्ति किञ्चन" [कठोप० ४ । ११] इति श्रुतिबलादसत्त्वेन निश्चित्य—सकलेत्यत्रानुस्वारलोपश्छान्दसः—'सकलं दृश्यं निष्कलमद्वैतं ब्रह्मैव' इति भावयेत्, आदरनैरन्तर्याभ्यां तथा भावनां कुर्यात्' इत्यर्थकेन तन्निवर्तिका भावना उक्ता । प्रकृतानुपयोगित्वात्तदनुल्लेखः । *तज्जननेति—भ्रमजननेत्यर्थः । तस्य = परमेश्वरस्य । कर्मापेक्षत्वेन तस्य तत्त्वम् । तदाह—*आध्यासिकसम्बन्धेनेति—न तु वास्तविकेनेति भावः । *उपाधिस्थस्य स्वस्येति—जीवस्येत्यर्थः । *द्वैतरूपतयेति—नामरूपात्मिकयेत्यर्थः । आत्मनि वास्तविकमोहाभावात् 'इव' इत्युक्तिः । तेन जीवानां तदानीं स्वस्वरूपाज्ञानमुपलभ्यते । *अत एवेति—अविद्याया जन्यत्वादेवेत्यर्थः । *तृतीय इति—तत्र हि – न ब्रह्मणोऽन्यत्किंचिद् भवितुमर्हति, प्रमाणाभावात् । नह्यन्यस्यास्तित्वे किञ्चित्प्रमाणमुपलभामहे, सर्वस्य हि जनिमतो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम् । अनन्यत्वञ्च कारणात्कार्यस्य । न च ब्रह्मव्यतिरिक्तं किञ्चिदजं संभवति, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छान्दो० उप० ६।२।१ ) इत्यवधारणात् । एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशाः ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्, ब्रह्मणः सेतूपमानत्वेन पूर्वं वर्णनात्सेतोश्च सावधित्वेन ततः परस्यापि सत्त्वदर्शनात्सेत्वाद्युपमानव्यपदेशाः 'ब्रह्मणोऽपि भिन्नं किञ्चिदस्ति' इति सूचयन्तीति पूर्वपक्षाभिप्रायः । तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत, न चैतन्न्याय्यम्, अजत्वादिश्रुतिविरोधादिति पूर्वपक्षे आह— "सामान्यात्तु" ( वे० सू० ३ । २ । ३३ ) इति । जगतस्तन्मर्य्यादानाञ्च विधारकत्वसेतुसामान्यमात्मनः, न तु सर्वतोभावेनेति भावः । *एकविज्ञानेनेति— श्रुत्यादिप्रामाण्याद् ब्रह्मण एवैकस्य नित्यत्वे तदन्यस्य सर्वस्य तत्कार्य्यत्वेनानित्यत्वे चैकविज्ञानेन सर्वविज्ञानश्रुतिः सङ्गच्छते । कारणविज्ञानेन कार्यविज्ञानबोधन एव श्रुतितात्पर्यात् । तथाच विद्याया अपि ब्रह्मव्यतिरिक्तत्वेनानित्यत्वं सिद्धम् । *अत एवेति— ब्रह्मव्यतिरिक्तस्यानित्यत्वादेवेत्यर्थः । छान्दोग्ये सच्छब्दवाच्यं ब्रह्म प्रकृत्य "तदैक्षत तत्तेजोऽसृजत" ( छा० उप० ६।२।३। ) इति श्रुत्या तेजोऽबन्नानामुत्पत्तिर्बोध्यते । तत्राकाशोत्पत्तिबोधकश्रुतेरभावादाकाशस्यापि नित्यत्वमित्याह— "न वियदश्रुतेः" ( वे० सू० २।३।१ ) इति । वियन्नोत्पद्यते, आकाशोत्पत्तिबोधकश्रुतेरभावादिति तदर्थः । तत्र वियदुपलक्षणमन्येषामपीत्याह— *वियदादीनामजन्यत्व इति । एवं वियदादीनां नित्यत्वपूर्वपक्षे सिद्धान्तभूतं सूत्रम्—† "प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः" ( वे० सू० २।३।६ ) इति । अस्यार्थः—"वियतो ब्रह्मणो भेदे हि सति 'एकविज्ञानेन सर्वं

---

† अत्र 'प्रतिज्ञाहानिः' इत्यत्र 'प्रतिज्ञा अहानिः' इति पदच्छेदाभाव इति केनचिदुक्तम्, तदसङ्गतम्, भाष्येऽकारच्छेदेनैव व्याख्यातत्वात् । न चाकारच्छेदे मूले 'इति सूत्रेण प्रतिज्ञाभङ्ग आपादितः' इत्युक्त्यसङ्गतिः, अहानिः, इति च्छेदे प्रतिज्ञासिद्धेरेवोपपादनादिति वाच्यम्; भाष्यव्याख्याऽनुरोधेनात्र मूले 'इति सूत्रे' इति ससम्यन्तपाठस्यैवौचित्यात् । अप्रधानव्याख्यानानुरोधेन पाठकल्पनाऽपेक्षया प्रधानभाष्यव्याख्यानानुरोधेन पाठकल्पनस्यैव युक्ततरत्वादित्युपाध्यायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञायते' इतीयं प्रतिज्ञा हीयेत । वियदादेर्ब्रह्मणः कार्यत्वे तु तस्याः प्रतिज्ञाया अहानिः = सिद्धिर्भवति, कुतः ? अव्यतिरेकात् ( अभेदात् ) शब्देभ्यश्च । "येनाश्रुतं श्रुतं भवति" ( छान्दो० उप० ६।१।३ ) इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । एवञ्च शब्देभ्यः = श्रुतिभ्यश्च तस्याः प्रतिज्ञाया अहानिर्भवति । व्यतिरेके हि सति 'एकविज्ञानेन सर्वं विज्ञायते' इतीयं प्रतिज्ञा हीयेत इति प्रतिज्ञाभङ्ग आपादितो भाष्ये तदाह—*प्रतिज्ञाभङ्ग आपादित इति । प्रतिज्ञाया अहानिमेवोपपादयति—"अव्यतिरेकाच्छब्देभ्यः" इति सूत्रोत्तरभागेन । तस्यैवार्थमाह—*शब्दाच्चेति । तदर्थः = पूर्वोक्तसूत्रार्थः । *एतेनेति—उक्तरीत्याऽऽकाशस्य नित्यत्वनिरासेनेत्यर्थः । अस्य 'अपास्तम्' इत्यत्रान्वयः । *अभ्युच्चय इति—सदसदविवेकेन कथनमभ्युच्चयः । अयं भावः—एकविज्ञानेन सर्वविज्ञानबोधकश्रुतौ वेदान्तिनयेऽविद्याया अजन्यत्वेन ब्रह्मज्ञानेन तदकार्य्यत्वादविद्याया ज्ञानाभावे विरोधवारणाय 'सर्व'पदार्थेऽविद्येतरत्वेन संकोचस्यावश्यकतया तत्राकाशेतरत्वेनापि संकोचादेवोपपत्तौ सर्वविज्ञानप्रतिज्ञाभङ्गापादनमयुक्तमित्यभ्युच्चय इति । *अपास्तमिति—उक्तरीत्याऽविद्याया अपि जन्यत्वेन संकोचस्यानावश्यकतया तदितरत्वेन संकोचे मानाभावात्, आकाशस्यापि जन्यत्वाच्च । तदाह श्रुतिः—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" ( तैत्ति० उप० २।१।७ ) "तदाकाशमसृजत" ( छान्दो० उप० ६।२।३ ) इति । अविद्याया जन्यत्वं सूत्रसम्मतमित्याह—*किञ्चेति—न खल्वाकाशाद्युत्पत्तावसम्भवाशङ्का कार्य्या । तत्र हेतुमाह—*यावदिति—यद्यद्विकृतम्, तत्सर्वं विभक्तम्, लोकवत् = लोके यथा, सप्तम्यन्ताद्वतिः । अत्र यद्यपि सूत्राक्षरस्वारस्येन विकारस्य व्याप्यत्वं भेदस्य व्यापकत्वं लभ्यते, तथाप्यत्र समव्याप्ततयाऽसिद्धस्यैव साध्यत्वेन सिद्धेन भेदेन कार्य्यत्वं साध्यत इति भेदस्यैव व्याप्यत्वं बोध्यम् । ननु 'कार्य्यत्वस्य भेदव्याप्यत्वबोधकेन' इत्युक्त्या भेदस्य व्यापकत्वं प्रतीयते; तथा च व्यापकेन लिङ्गेन व्याप्यस्यानुमानासङ्गतिः, हेतोर्व्यभिचरितत्वादिति चेत्, न, व्याप्यव्यापकभावस्यात्रान्यूनानतिरिक्तवृत्तित्वरूपस्य विवक्षितत्वात्, 'भेदो व्याप्यो यस्य' इति बहुव्रीहिणा भेदस्यापि व्याप्यत्व-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लाभाच्च । अनुमानप्रयोगश्चेत्थम् – आकाशदिक्कालमनःपरमाणवः, विकाराः, आत्मान्यत्वे सति विभक्तत्वात्, घटादिवदिति । *आकाशस्यैवेति—आकाशस्य यथा भेदवत्त्वेन कार्यत्वं तथैवाविद्याया अपि तत्त्वेन कार्य्यत्वं बोधितमेवेत्याह — *अविद्याया अपीति — 'अपि तत्त्वबोधनात्' इत्येव पाठोऽत्र । तत्त्वबोधनात् = कार्य्यत्वबोधनात् । ननु सूत्रे कार्यत्वानुक्तेस्तदनुमानासङ्गतिरत आह — *विकार इति — एवञ्च 'यत्र यत्र भेदस्तत्र तत्र कार्य्यत्वम्' इति साहचर्यनियमः प्रकृते । ननु जगतोऽविद्योपादानकत्वेन तत्र प्रपञ्चभेदाभावात्कार्य्यत्वासिद्धिरत आह— *शुद्धब्रह्मभेदेनेति — 'अविद्या ब्रह्मप्रतियोगिकभेदवती' इत्येवंरूपेणेत्यर्थः । नन्वेवं ब्रह्मणोऽपि कार्य्यत्वापत्तिः, तत्रापि घटादिभेदस्य सत्त्वादत आह — *ब्रह्मणि त्विति । *अधर्मकत्वेनेति —

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥" (श्वे० उप० ६।१९)
"एको देवः सर्वभूतेषु गूढः, सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः, साक्षी चेता केवलो निर्गुणश्च ॥"
(श्वे० उप० ६।११)

"एकमेवाद्वितीयम्" (छान्दो० उप० ६।२।१) इत्यादि श्रुतिप्रामाण्यान्निर्धर्मकत्वं तस्येति भावः । *वैधर्म्यसम्भावनेति—अत्र 'अभावात्' इति च्छेदः । अयं भावः — प्रतियोगिताऽवच्छेदकविरुद्धधर्मवत्येव भेदवत्त्वस्य स्वीकारेण श्रुत्यादिप्रामाण्याद् ब्रह्मणि धर्मराहित्येन निरनुयोगिताऽवच्छेदकभेदस्य क्वाप्यदर्शनेन च तत्र नास्ति भेद इति । 'यत्र वैधर्म्यं तत्रैव भेदः' इत्यत्र काव्यप्रकाशं प्रमाणयति—*एष एव हीति – पञ्चमोल्लासे वाच्यव्यङ्ग्ययोर्भेदप्रदर्शनप्रस्तावे इदमुक्तम् । एवंरूपा हि तत्रत्याऽऽनुपूर्वी "अयमेव हि भेदो भेदहेतुर्वा यद् विरुद्धधर्माध्यासः कारणभेदश्च" इति । वैधर्म्यस्य भेदरूपत्वासंभवादाह — *भेदहेतुर्वेति – अविद्याया अजन्यत्वेऽपि सूत्रबोधितानुमितिविषयत्वं साधयितुमाशङ्कते — *न चेति । *अजन्यमिति — उत्पत्त्यभाववत्त्वे सति ध्वंसाप्रतियोगि यत् तद्भिन्नत्वरूपं कार्य्यत्वं साध्यमित्यर्थः । तथा च ब्रह्मभिन्नत्वरूपस्योक्तकार्य्यत्वस्याविद्यायामपि सत्त्वादजन्यत्वेऽपि नास्ति विरोध इति भावः । वृत्तिकाराद्यभिमतं कार्य्यत्वस्वरूपमाह –

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*पराधीनेति—कार्य्यस्याकाशादेः कारणाधीनसत्ताकत्वेन अजन्याविद्याया-श्चाधिष्ठानसत्ताऽधीनसत्ताकत्वेन च कार्य्यत्वसत्त्वान्नास्ति व्यभिचार इत्याह—*अविद्याया अजन्यत्वेऽपीति। *विनाशित्वादिति— अविद्याया विनाशित्वेन अजन्यत्वसमानाधिकरणो यः ध्वंसप्रतियोगित्वाभावस्तद्वद् ब्रह्म, तद्भिन्न-त्वरूपकार्यत्वस्य जगत्यविद्यायाश्च सत्त्वान्नास्त्यव्याप्तिरिति भावः। *आद्यमपीति — अजन्यत्वविशिष्टध्वंसप्रतियोगित्वाभाववद्भिन्नत्वरूपका-र्य्यत्वमित्यर्थः। तत्र = अविद्यायाम्। अनुमानप्रयोगश्चेत्थम्— 'आका-शादयः, पराधीनसत्ताकाः, स्वसमानसत्ताकभेदवत्त्वात्, घटशरावादिवत्, इति। *सामान्यप्रवृत्तेति — सर्वसाधारणकार्य्यत्वमादायानुमातुं प्रवृत्ते-त्यर्थः। *संकोचेनेति — संकुचितकार्यत्वेनेत्यर्थः। ननु कार्य्यमात्रवृत्ति-कार्य्यत्वस्य सङ्कुचितत्वकथनमसङ्गतम्, अत आह — *अविद्याया इति। *आकाशस्येति — अस्य किञ्चेत्यादिः। अन्त्ये = पराधीनसत्ताकत्वस्य साध्यत्वे। *न सिध्येदिति — पराधीनसत्ताकत्वस्वीकारमात्रेण जन्यत्वस्या-लाभादिति भावः। आकाशस्याध्यस्तत्वञ्च ब्रह्मणि बोध्यम्। नन्वविद्याया अजन्यत्वबोधकसूत्रान्तराभावेऽपि तस्या नित्यत्वे श्रुतिरेव मानमित्याशङ्का-निरासायाह — *अजामिति —

"अजामेकां लोहितशुक्लकृष्णाम्
बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः॥" (श्वे० उप० ४।५) इति

श्रुतावित्यर्थः। *अनादित्वबोधिकेति — सृष्टिप्रलयमध्ये जन्मानुपलम्भा-दिति भावः। *सुप्त इति — आवरणविशिष्ट इत्यर्थः। *प्रबुध्यत इति — प्रबोधः = आवरणभङ्गः। अनिद्रम् = गाढावरणरहितम्। अस्व-प्नम् = अल्पावरणरहितम्। यदा "तत्त्वमसि" (छान्दो० उप० ६।८।७) इत्युपदेशेन प्रबुध्यते = मायानिद्रां त्यजति, तदा जन्म-लय-स्थित्यवस्था-त्रयशून्यमद्वैतमीश्वरमात्मतत्त्वेनानुभवतीत्यर्थः। तस्याः = अविद्यायाः। *आद्याया इति— "अजाम्"इति श्रुतेरित्यर्थः। *अत एवेति — "अजाम्"इति श्रुतेरविद्याया गमकत्वाभावादेवेत्यर्थः। *तेजोऽबिति — तेजोजलपृथिव्यादीनामित्यर्थः। *अव्याकृतेति—सूक्ष्मेत्यर्थः। *प्रागि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति–स्थूलसृष्टेः प्रागित्यर्थः । ❀अजारूपकेणेति–रूपयति = उपमानोपमेययोरभेदारोपेणैकतां नयतीति रूपकम् । यथा — 'मुखं चन्द्रः' इत्यादौ मुखत्वचन्द्रत्वरूपधर्मवत्तयोपस्थितयोर्मुखचन्द्रयोरभेदारोपः। प्रकृते छाग्यविद्ययोः रूपकालङ्कारः । अभेदारोपे भोग्यत्वरूपः साधारणधर्मो हेतुः । ❀अनादित्वमपीति — प्रतिप्रलयं स्थूलरूपाविद्यायाः अभावेन सृष्ट्यादावुत्पत्त्या च तत्परम्पराऽऽवश्यकी, तद्रूपेणानादित्वमिति भावः । सूक्ष्मरूपमादाय तु न तत्त्वम्, तथा सति घटादेरपि नित्यत्वापत्त्या स्वसिद्धान्तविरोधात् । ❀अक्षरादिति–कार्यकारणबीजत्वेनोपलक्ष्यमाणत्वात् । परतः = परत्वविशिष्टात्, तदुपाधिलक्षणाव्याकृतस्वरूपत्वेनाक्षरात् परः निरुपाधिकः पुरुष इत्यर्थः । अत्र 'अक्षर'पदेनाविद्यारूपकारणस्य ग्रहणम् । तथा च तस्य वस्तुतोऽक्षरत्वेऽजन्यत्वविशिष्टाक्षरत्वरूपब्रह्मलक्षणाक्रान्तत्वाद् द्वैतमोक्षाभावयोरापत्तिरिति भावः । अस्य 'उच्यते' इति शेषः। तत् = अक्षरत्वम् ❀अनिवृत्तेति—सृष्टिमध्ये घटादीनां यथा निवृत्तिस्तथा निवृत्त्यभावादित्यर्थः । ❀तथैवास्त्विति–सृष्टिमध्ये वारं वारं नाशाभावेन सापेक्षमनादित्वमप्यस्त्विति भावः । स्वसिद्धान्ते आपतितं दोषं खण्डयति — ❀न चेति । ❀अनवस्थाऽऽपत्तिरिति — अतस्तद्भिया तस्या अजन्यत्वं स्वीकार्य्यमिति भावः । ननु केवलस्य ब्रह्मण एव जनकत्वमास्ताम्, किमित्यविद्यास्वीकारेण ? अत आह — ❀ब्रह्मणस्त्विति—शक्तिहीनस्य प्रवृत्त्यनुपपत्तेः । तथाचानवस्थादोष एवेति भावः। ❀अत एवेति—अनवस्थाभयादेवेत्यर्थः। ❀परमाण्वादीनामिति — आदिना साङ्ख्याभिमतप्रकृतिसंग्रहः । ❀स्थूलाविद्याया इति—अस्य 'ब्रह्मजन्यत्वेन' इत्यत्रान्वयः । ❀तत्सहकारेणेति—स्थूलाविद्यासहकारेणेत्यर्थः । ❀अनवस्थाऽऽपत्त्यभावादिति — परमते परमाण्वादीनामिव ब्रह्मणो नित्यत्वादनवस्थाऽभाव इति भावः ।

मू०– अत एव "प्रकाशादिवन्नैवं परः" (वे०सू०२।३।४६) इति सूत्रे भाष्ये–"मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गाद्या मूलप्रकृतिरभ्युपगम्यते तदेव नो ब्रह्म" इत्युक्तम् । तव त्वजन्याविद्यायामपि तत्सत्त्वात् "तदेव नो ब्रह्म"इत्यस्यासङ्गतिः स्पष्टैव। अत्र कार्यत्वमात्रं साध्यम्, न तु यद्भेदस्तत्कार्यत्वम् । तेन घटानां परस्परं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यत्वाभावेऽपि परस्परं भेदव्यवहारोपपत्तिः । आरोपितधर्मवति भेदो विकारत्वं चास्त्येव । रज्जूरगस्थले आरोपितोरगत्वेनैव रज्जुविकारत्वव्यवहारात् । किञ्च,

"सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः ।
संसारं तन्निवृत्तिश्च करोत्यविरतोदयम् ॥" इति ।

स्मृतौ शक्तिमण्डलत्वेन मायोक्ता ।

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥"
( श्वेता० उप० ४।१० )

इति श्रुतौ चाविद्यायाः सावयवत्वमुक्तम् । तेन जन्यत्वमावश्यकम्, घटादिवत् । 'अस्यावयव' इत्यत्र सन्धिरार्षः । यद्वा, अस्य=महेश्वरस्य । मायाऽवयवानामेव च तदवयवत्वम्, तद्विशिष्टस्यैव महेश्वरत्वात् । किञ्च, सत्तास्फूर्त्यनुरोधेन तस्या ब्रह्मकार्यत्वमावश्यकम् । वासनासमूहरूपाविद्याया अपि योगिनां सत्त्वेन स्फूर्त्तिसत्त्वात् । किञ्च, चतुर्थपादस्याद्याधिकरणे "तद्धेदं तर्ह्यव्याकृतमासीत्" ( बृह० उप० १।४।७ ) इति श्रुतेः 'इदं व्याकृतं नामरूपविभिन्नं जगत् प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थम्' इत्यर्थं दर्शयित्वा "परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते । अर्थवती च सा । न तया विना परमेश्वरस्य स्रष्टृत्वं संभवति, शक्तिहीनस्य प्रवृत्त्यनुपपत्तेः । अविद्यात्मिका हि सा बीजशक्तिः परमेश्वराश्रया" (शारी० भा० १।४।३ ) इति भाष्ये उक्तम् । तत्तत्कार्यबीजशक्तीनामानन्त्येऽपि 'बीजशक्तिः' इत्येकवचनं जात्यभिप्रायेण । अनेन हि वासनानामेवाविद्यात्वं स्पष्टमेवोक्तम् । प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणोऽविद्यया सर्वशक्तियोगः । "सर्वज्ञं सर्वशक्ति(योगं)महामायं च तद्ब्रह्म" ( शारी० भा० २।१।३७ ) इत्यन्यत्रोक्तम् । अत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अविद्यया' इत्यस्य पूर्वैतद्विधमिथ्याज्ञानजन्यवासनयेत्यर्थः । शक्तिसमूह एव च महामायेति बोध्यम् । एतेनाविद्याऽजन्या कश्चित् भावपदार्थो वासनाश्रय इत्यपास्तम्, अतिरिक्ततत्कल्पने मानाभावात् । अत एव प्रपञ्चस्यैककारणकत्वप्रवादनिर्वाहः, स्वजन्यातिरिक्तसहकार्यनपेक्षत्वात् ।

(रत्न०)—*अत एवेति—अविद्याया जन्यत्वादेवेत्यर्थः । ननु "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" ( छा० उप० ३।१२।६। ) "ममैवांशो जीवलोके जीवभूतः सनातनः" ( भगवद्गी० १५।७। ) इत्यादि श्रुतिस्मृतिप्रामाण्याज्जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन दुःखेनेश्वरस्यापि दुःखित्वादि स्यात्, लोके हस्तपादाद्यङ्गानां दुःखित्वादिमत्त्वेऽङ्गिनो देवदत्तस्य दुःखित्वादिमत्त्ववत्, इत्यत आह—*प्रकाशादीति—यथा प्रकाशश्चान्द्रः सौरो वा वियद्व्याप्यावतिष्ठमानो वक्रकाष्ठजलाद्युपाधिकृतं वक्रत्वचञ्चलत्वमापन्नोऽपि वस्तुतो न तद्वान्, यथा वाऽऽकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि वस्तुतो न गच्छति, यथा वा उदकशरावादिकम्पनात्तद्गते सूर्य्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्य्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवांशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते । तस्माज्जीवो यथा संसारदुःखमनुभवति, नैवं पर ईश्वरोऽनुभवतीति सूत्रार्थः । *मूलप्रकृतीति—मूलप्रकृतित्वसत्त्वादित्यर्थः । यत्र मूलप्रकृतित्वं तदेव ब्रह्मेति स्वीकारेऽनाद्यविद्यायामपि तव मूलप्रकृतित्वसत्त्वादेवकारासङ्गतिः । अविद्याया जन्यत्वे तु तन्मते तत्र मूलप्रकृतित्वस्याभावाद् ब्रह्मण्येव तत्सत्त्वान्नासङ्गतिः । तत्सूत्रे इदं भाष्यं नोपलभ्यते । ननु उक्तरीत्या तादृशकार्यत्वस्यासाध्यत्वेऽपि प्रत्यासत्त्या विशेषकार्य्यस्य साध्यत्वलाभात् सङ्कोचावश्यकत्वमेवेति तथैवास्ताम्, अत आह—*अत्रेति । *कार्यत्वमात्रमिति—सर्वविधं कार्यत्वं न तु विशिष्टरूपमेवेत्यर्थः । *यद्भेदस्तत्कार्यत्वमिति—यथा घटे मृद्भेदस्तत्कार्य्यत्वञ्च तत्र इत्यर्थः, मृदवृत्तिघटत्ववत्त्वरूपवैधर्म्यसत्त्वात् । तेन = कार्य्यत्वसामान्यसाधनेन । ननु प्रपञ्चस्य ब्रह्मणोऽभिन्नत्वेन निर्धर्मकत्वाद्भेदासिद्धिरत आह—*आरो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पितधर्मवतीति — प्रपञ्च इत्यर्थः। नन्वारोपितधर्मवति प्रकृतिविकृतिभावोऽनुपपन्नोऽत आह — ❀रज्जूरगेति। अविद्याया जन्यत्वे प्रमाणान्तरमाह — ❀किञ्चेति। ❀शक्तिमण्डलेति — अनेन सावयवत्वं सूचितम्, मण्डलस्य सावयवत्वदर्शनात्। ❀अविरतोदयमिति — इदं क्रियाविशेषणम्, संसारविशेषणमिदमिति कश्चित्। ❀अस्यावयवेति — तस्यावयवेति पाठान्तरम्। तेन = सावयवत्वेन। ❀आवश्यकमिति — सावयवत्वस्य जन्यत्वव्याप्यत्वादिति भावः। ❀अस्येति — अविद्याया इत्यर्थः। नन्वस्या विद्यार्थकत्वेऽस्या अवयवभूतैरित्युचितमत आह —❀सन्धिरिति। ❀महेश्वरस्येति — ननु महेश्वरस्य ब्रह्मणोऽखण्डत्वादेतदर्थकत्वासम्भवोऽत आह— ❀मायाऽवयवानामिति। ❀तद्विशिष्टस्येति — मायाविशिष्टस्येत्यर्थः। ❀सत्तेति — सत्तावत्त्वेन ज्ञानविषयत्वानुरोधेनेत्यर्थः। ननु सत्तावत्त्वेन स्फूर्त्तिविषयत्वे मानाभावोऽत आह — ❀वासनेति — अपिना स्थूलाविद्यायाः परिग्रहः। प्रागवस्थां दर्शयति — ❀अविद्यात्मिकेति। सा = प्रागवस्था। ❀तत्तत्कार्येति — तत्तत्कार्यस्य बीजभूता याः शक्तयस्तासामानन्त्येऽपीत्यर्थः। अनेन = भाष्येण। ननु ब्रह्मणः श्रुत्यादिभिः शुद्धत्वप्रतिपादनात्तस्यास्तदाश्रयत्वं कथम्? अत आह—❀प्रतिषिद्धेति। ननु वासनानामेव अविद्यात्वं कथम्? अत आह — ❀अत्राविद्येति। ❀पूर्वैतदिति — पूर्वम् = पूर्वकालिकं यदेतद्विधम् = एतादृशं मिथ्याज्ञानम् तज्जन्यवासनयेत्यर्थः। ननु 'सर्वशक्तियोगम्, महामायम्' इति विशेषणद्वयेन शक्तिमाययोर्भेदः स्यादत आह — ❀शक्तिसमूहेति। ❀एतेनेति — अविद्याया अजन्यत्ववासनारूपत्वनिरूपणेनेत्यर्थः। ❀भावपदार्थ इति — न तु विद्याया अभावोऽविद्या अभावरूपेति भावः। ❀मानाभावादिति — अतिरिक्तत्वखण्डने एव तात्पर्य्यं न तु भावरूपत्वखण्डने, वासनाया अपि भावरूपत्वात्। ❀अत एवेति — अविद्याया अपि ब्रह्मकारणकत्वादेवेत्यर्थः। ❀अनपेक्षत्वादिति — अविद्याया अजन्यत्वे प्रपञ्चे तस्या अपि सहकारित्वेन स्वजन्यातिरिक्तसहकार्य्यनपेक्षत्वं भज्येतेति भावः। सा चाविद्याऽधिष्ठानत्वेन ब्रह्मकल्पितैव, तल्लये इव तज्जननेऽपि सहकार्य्यन्तरानपेक्षणात्, आविर्भावतिरोभावयोरेवोत्पत्तिविनाशपदार्थत्वात्।

मू०—यत्तु "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" (वे० सू०

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१।४।२३) इति सूत्रे भाष्ये च "ब्रह्मैवोपादानकारणं निमित्तकारणञ्च" इत्युक्तम् । तस्य स्वसमकक्षनिमित्तकारणाभावे तात्पर्यम् । इतोऽपि अविद्यायां जन्यत्वमावश्यकम् । अन्यथा प्रतिज्ञादृष्टान्तोपरोधः स्यादेवेति बोध्यम् । अत एव विष्णुपुराणे—

"प्रजापतिपतिं विष्णुमनन्तमपराजितम् ।
प्रधानपुंसोरजयोः कारणं कार्य्यभूतयोः ॥"

इति स्मर्यते । 'अजयोः' इति रूपकं स्वातन्त्र्यनिरासाय । तद्धननायैव "कारणं कार्यभूतयोः" इत्युक्तम् । यद्वा एतत्सृष्टौ जन्मानुपलम्भादजत्वम्, पूर्वकल्पान्ते जन्यत्वमादाय 'कार्यभूतयोः' इत्युक्तम् । "यत्तत्सूक्ष्ममविज्ञेयम्" इति प्रकृत्य—"तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम !" इति "अव्यक्तं पुरुषे ब्रह्मन् ! निर्गुणे संप्रलीयते" इति च भाष्योदाहृतस्मृत्यन्तरविरोधश्च । एतदुपबृंहणेन सूत्रस्वरसेन चोक्तजातीयश्रुतीनां मदुक्तव्याख्यैवोचिता । तदुक्तं चरके पतञ्जलिना —"आदिर्नास्त्यात्मनः क्षेत्रपारम्पर्यमनादिकम्" (चर० सं० शारी० स्था० १।८०) इति । "प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च" । (भगवद्गी० १३।१) इति प्रघट्टके गीतायां वासनासमूहरूपाविद्यायाः 'अव्यक्त'शब्देन क्षेत्रत्वोक्तेः ।

(रत्न०)—ननु पूर्वं ब्रह्मणः सृष्टिजनकत्वे स्वजन्यानां सहकारित्वमुक्तम्, तच्च सूत्रभाष्योभयविरुद्धमत आह —*यत्त्विति । ननु "जन्माद्यस्य यतः" (वे० सू० १।१।२) इति लक्षितस्य ब्रह्मणो घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वम्, कुलालस्वर्णकारवन्निमित्तत्वं वा ? इति संशये "स ईक्षत लोकान्नु सृजै" (ऐत० उप० १।१) "स प्राणमसृजत" (प्रश्नोप० ६।४) इत्यादिश्रुतिप्रामाण्यान्निमित्तत्वं प्राप्नोतीति पूर्वपक्षे आह—*प्रकृतिश्चेति । ब्रह्म प्रकृतिः = उपादानकारणं निमित्तकारणञ्चेत्यर्थः । उपादानकारणत्वे प्रमाणमाह—*प्रतिज्ञादृष्टान्तानुपरोधादिति—'एकेन विज्ञातेन सर्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञातंभवति'इति प्रतिज्ञा, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" (छान्दो० उप० ६।१।४) इति च दृष्टान्तः। तयोरनुपरोधः = अवाधस्तस्मात्, सङ्गतेरिति यावत्। निमित्तकारणत्वे च "स ईक्षत लोकान्नु सृजै" (ऐत० उप० १।१) "स प्राणमसृजत" (प्रश्नोप० ६।४) इति श्रुती। एवञ्च स्वजन्यानां सहकारित्वेऽपि निमित्तोपादानत्वप्रतिपादनपरकसूत्रभाष्ययोः स्वसमकक्षनिमित्तकारणाभाव एव तात्पर्य्येण नास्ति विरोध इति भावः। ❀ इतोऽपीति–प्रतिज्ञादृष्टान्तानुपरोधपरकसूत्रभाष्यादपीत्यर्थः। अविद्याया अजन्यत्वे तत्कारणाभावाद् ब्रह्मरूपकारणविज्ञानेन तद्विज्ञानस्य वक्तुमशक्यत्वादिति भावः ❀अत एवेति — अविद्याया जन्यत्वादेवेत्यर्थः। ❀कार्य्यभूतयोरिति – 'प्रधानपुंसोः'इत्यत्रान्वयः। प्रधानम् = प्रकृतिः। पुमान् = जीवः। अजन्यत्वे विशेषणासङ्गतिः स्यादिति भावः। ननु कार्य्यत्वे अजयोरित्यनुपपन्नमत आह —❀रूपकमिति। ❀तद्ध्वननायैवेति–रूपकालङ्कारध्वननायैवेत्यर्थः। रूपकन्तु "रूपितस्यापह्नवभेदोपमानस्य निरपह्नवे = प्रतिषेधशून्ये, विषये = उपमेये, आरोपः = तादात्म्यारोपः। तदुक्तम् —

"रूपकं रूपितारोपाद् विषये निरपह्नवे।"

इति (सा० द० परिच्छे० १० कारि० २८)। काव्यप्रकाशकृताऽप्युक्तम् —

"तद् रूपकमभेदो यः, उपमानोपमेययोः।"

इति (काव्यप्र० उल्ला० १० कारि० ९३)। ननु रूपकत्वे वस्तुतोऽजन्यत्वेऽप्यस्वातन्त्र्यप्रदर्शनायैव 'कार्य्यभूतयोः' इति विशेषणोपपत्तिः, किञ्च, वैपरीत्यमेव स्यादत आह – ❀यद्वेति। अविद्याया अजन्यत्वे स्मृतिविरोधमाह — ❀यत्तदिति — अग्रेतन 'तस्मात्' पदस्यार्थप्रदर्शनायैतदुक्तिः। ❀अव्यक्तमिति – प्रकृतिरित्यर्थः, अविद्येति यावत्। आभ्यां स्मृतिभ्यामुत्पत्तिप्रलयौ स्पष्टमेवोक्तौ। ❀एतदुपबृंहणेनेति — पूर्वोक्तस्मृतिबलेनेत्यर्थः। ❀उक्तजातीयेति—अजत्वबोधिकानाम् "अजामेकाम्"इत्यादिश्रुतीनामित्यर्थः। ❀मदुक्तव्याख्येति– एतत्सृष्टौ जन्मानुपलम्भेनाजन्यत्वपरेत्यर्थः। "अजाम्" इति श्रुतेरुत्तरार्द्धे–"अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः।" (श्वे० उप० ४।५) इत्यत्रोपाधिविशिष्टस्य जीवत्वेनोपाधेश्च जन्यत्वेन



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशिष्टे ईदृशाजन्यत्वस्यैव वाच्यतया पूर्वार्द्धेऽप्येवमेव व्याख्येयमिति भावः । अत्रार्थे पतञ्जलिसम्मतिमाह — ॐतदुक्तमिति – आत्मन आदिर्नास्ति, अत्र क्षेत्रपारम्पर्य्यमनादिकम् । एवञ्च परम्पराऽनादित्वेनानादित्वम्, न त्वजन्यत्वरूपमितिभावः । आत्मातिरिक्तस्यैव क्षेत्रत्वेनाविद्याया अपि क्षेत्रतया तत्रापि पारम्पर्य्यस्यैवानादित्वस्यौचित्याद्युक्तयुक्तेः । नन्वेवमपि जीवोपाधिभूतस्य क्षेत्रस्य जन्यत्वमनेन लब्धम्, न त्वविद्याया अत आह – ॐप्रकृतिमिति –

"प्रकृतिं पुरुषञ्चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयञ्च केशव ॥" (भगवद्गी० १३।१)

इति प्रघट्टके = प्रकरणे

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।" ( भगवद्गी० १३।६ )

इत्यत्र 'अव्यक्त'पदेन वासनासमूहरूपाविद्यायाः क्षेत्रत्वमुक्तमिति भावः । 'प्रकृतिम्' इत्यस्यापि क्षेत्रम् = प्रकृतिम्, क्षेत्रज्ञम् = पुरुषं च वेदितुमिच्छामीत्यर्थमाहुर्व्याख्यातारः । तत्र प्रकृतिश्च वासनारूपैव, पूर्वं निर्णीतत्वात् । यदि तु —

"इदं शरीरं कौन्तेय ! क्षेत्रमित्यभिधीयते ।" (भगवद्गी० १३।२)

इति प्रतिपादनाच्छरीरस्यैव क्षेत्रत्वं लभ्यते इत्युच्येत, तर्हि तदुत्तरम् 'अव्यक्त'शब्देन क्षेत्रत्वमुक्तमेव बोध्यम् ।

**सू०—किञ्च ब्रह्माण्डपुराणे तस्या ब्रह्मणि लय उक्तः—**

"स्थूलं विलाप्य करणे करणं निदाने ।
तत्कारणं करणकारणवर्जिते च ॥
इत्थं विलाप्य यमिनः प्रविशन्ति यत्र ।
तं त्वां हरिं विमलबोधघनं नमामः ॥" इति ।

करणम् = महदादिः । निदानम् = प्रकृतिः । तत्कारणम् = प्रकृतिरूपकारणम् । करणकारणवर्ज्जिते=ब्रह्मणि । अनेनापि तदतिरिक्तस्य करणकारणसाहित्यं सूचितम् । 'विलाप्य' इत्यनेन समूलमुन्मूलनमुक्तम्, न तु प्रलये इवाविभागेनावस्थानम् । अत्र ब्रह्मणि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लयोक्त्या तस्य तदुपादानत्वमुक्तम् । उपादानकारणे एव लयस्य "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" (तैत्ति० उप० ३।१) इति श्रुत्या बोधनात् । "यस्य हि यतः उत्पत्तिस्तस्य तत्र लयो न्याय्यो मृदीव शरावस्य। न च मनसो वाग्उत्पद्यते" (शारी० भा० ४।२।१) इति शांकरभाष्याच्च । किञ्च, अनुत्पत्तिकत्वे तस्या नाशानापत्तिः। तदुक्तं न्यायभाष्ये वात्स्यायनेन –"न चानुत्पत्तिधर्मकं किञ्चिद्व्ययधर्मकं प्रतिज्ञातुं शक्यम्" (न्या० भा० ४।१।६८) इति । प्रागभावस्यापि न नाशः, उत्पत्त्यनन्तरं तत्प्राक्कालाभावेन तद्व्यवहाराभावोपपत्तेः । एवं जीवानामप्युपाधिवैशिष्ट्येन जन्यत्वमावश्यकम् । अत एव श्रुतौ – 'लोहस्थाग्नेर्विस्फुलिङ्गा इव जीवाः' (मुण्डकोप० २।१।१) इत्युक्तम् । परमार्थसारेऽपि—

"एकस्मात् क्षेत्रज्ञाद् बह्व्यः क्षेत्रज्ञजातयो जाताः ।
लोहस्थादिव दहनात्समन्ततो विस्फुलिङ्गकणाः ॥"(प०सा०४७)

इत्युक्तम् । 'क्षेत्रोत्पत्तिरेव तदुत्पत्तिः' इति तद्व्याख्यातारः। विशेष्यांशमादाय तेषां नित्यत्वोक्तिरपि। किं बहुना, घटादेरप्येवमेव जन्यत्वम् । तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात् ।

(रत्न०)—अविद्याया जन्यत्वे प्रमाणान्तरमाह –*किञ्चेति । इत्थम् = पूर्वोक्तरूपेण । *स्थूलमिति – यमिनः = योगिनः, स्थूलम् = अहङ्कारादिकम्, करणे = महत्तत्त्वे विलाप्य महत्तत्त्वञ्च निदाने = प्रकृतौ विलाप्य, तत्करणं तदेव करणम् =तत्करणम् प्रकृतिरूपं करणम् , करणकारणवर्जिते= ब्रह्मणि विलाप्य यत्र विशन्ति, तं विमलबोधघनं हरिं त्वां नमाम इत्यर्थः। अयम्भावः – येन क्रमेण प्रादुर्भावस्तेनैव क्रमेण लयो जायते । इत्थञ्च प्रादुर्भावक्रमः – ब्रह्मतः प्रकृतेः प्रादुर्भावः, ततो महत्तत्त्वस्य, तस्माचाहङ्कारस्य, अहङ्काराच्चैकादशेन्द्रियाणाम्, पञ्चतन्मात्राणाम् (१ शब्दतन्मात्र– २ स्पर्शतन्मात्र — ३ रूपतन्मात्र — ४ रसतन्मात्र — ५ गन्धतन्मा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्राणाम्), पञ्चतन्मात्रतः पञ्चमहाभूतानामिति। एवञ्च स्वस्वकारणे तत्कार्यस्य विलय उक्त उक्तवाक्येन। तथा च प्रकृतेरकारणकत्वे ब्रह्मणि तल्लयोक्तिरसङ्गता स्यादिति तस्या जन्यत्वं सूचितम्। *अनेनापीति – लयक्रमप्रदर्शनेनापीत्यर्थः। तदतिरिक्तस्य = ब्रह्मातिरिक्तस्य। करणकारणसाहित्यम् = करणत्वकारणत्वोभयविशिष्टत्वम्। तस्य = ब्रह्मणः तदुपादानत्वम्। *व्ययधर्मकमिति—नाशधर्मकमित्यर्थः। नन्वजन्यस्यापि प्रागभावस्य नैयायिकैर्नाशस्य स्वीकाराद् भाष्यविरोधस्तेषां स्यादत आह— *प्रागभावस्यापीति। ननु तन्नाशाभावे घटसत्त्वेऽपि तद्व्यवहारापत्तिरत आह — *उत्पत्तीति — प्रागभावस्याजन्यत्वे सति नाशप्रतियोगित्वेऽपि उक्तभाष्यस्य भावविषयकतया विरोधाभावो बोध्यः। प्रसङ्गादाह— *एवमिति — अविद्यावदित्यर्थः। अतएव = जीवानां जन्यत्वादेव। *एकस्मादिति — यथा — ताड्यमानलोहगतवह्नेः समन्ततो विस्फुलिङ्गरूपाः कणाः जाता इव भान्ति तथा एकस्मादन्तर्यामिणः क्षेत्रज्ञात् बह्वयः क्षेत्रज्ञजातयः ब्रह्मादिस्थावरान्ता जाता इव भान्तीत्यर्थः, तत्तदुपाधेर्जायमानत्वात्, तथा च श्रुतिः — "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवैतस्मादात्मनः सर्वे प्राणाः, सर्वे लोकाः, सर्वे देवाः, सर्वाणि भूतानि व्युच्चरन्ति" (बृ० उप० २।१।२०) इति। अत्रापि इवेति शेषः। तदाह—*क्षेत्रेति—तथा च क्षेत्रगतोत्पत्तेस्तत्रारोपात् जातत्वव्यवहारः। उपसंहरति—*किंबहुनेति—सर्वत्र विशेष्यांशस्य ब्रह्मरूपत्वात्तस्य चाजन्यत्वाद् घटत्वादिरूपोपाधिजन्यत्वेनैव जातत्वव्यवहार इत्याह –*तत्तदाकारादिति।

मू०—तदुक्तं परमार्थसारे—

"यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु।
तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा ॥" इति।

(प० सा० २३)

भाति, विशेष्यतयेत्यर्थः। अत एव "द्रव्यं नित्यम्" (महाभा० पस्पशाह्नि०) इति महाभाष्ये उक्तमित्युपरिष्टाद्वक्ष्यामः। उपाधिसन्निवेशादिशब्दैश्च ब्रह्मैव, पूर्वपूर्ववासनावशा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्परमात्मन एवोपाध्यादिरूपेण तद्वैशिष्ट्येन च भानात् । अत एव "सर्वशब्दानां ब्रह्मैव वाच्यं वाचकं च" इति हरिणा सिद्धान्तितं सङ्गच्छते । अत एव हिरण्यगर्भस्य 'कार्य्यब्रह्म' इति व्यवहारः । तथा च "सामीप्यात्तु तद्व्यपदेशः" ( वे०सू०४।३।९ ) इति सूत्रे "ब्रह्मसामीप्यादपरब्रह्मण्यपि 'ब्रह्म'शब्दः, परमेव हि ब्रह्म विशुद्धोपाधिसम्बद्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिरुपासनायोपदिश्यमानमपरमिति स्थितिः" इति भाष्ये उक्तम् । अविद्याया जन्यत्वादेव "सर्वं खल्विदं ब्रह्म तज्जलान्" (छान्दो०उप० ३।१४।१) इति श्रुतिर्द्वन्द्वगर्भा ब्रह्मातिरिक्तसर्वत्वावच्छिन्नविषये एकरूपा भवति । विष्णुपुराणेऽपि—

"ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ।
ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते परम् ॥
विद्याऽविद्ये च मैत्रेय ! ज्ञानमेवोपधारय ।" इति
( विष्णु पु० २।६।५०-५१ )

निरुपाधि ब्रह्मैव विद्या, सोपाधि तदेवाविद्येति तदर्थः । तदुक्तमाचार्यैः—"द्विरूपं हि ब्रह्मावगम्यते—नामरूपविकारभेदोपाधिविशिष्टम्, तद्विपरीतं च सर्वोपाधिविवर्जितम्" ( शारी० भा० १।१।१२ ) इति । अत्र 'अवगम्यते' इत्युक्त्या व्यवहारमात्रे ब्रह्मणो विशेष्यत्वमुक्तम् । अन्त्यं तु योगिभिः समाधाववगम्यते इति बोध्यम् ।

(रत्न०)—तत्तदाकारादिविशिष्टब्रह्मैव घटादिरित्यत्र मानमाह—*तदुक्तमिति । ननु लोके प्रतिव्यक्ति सुखदुःखादिवैचित्र्यदर्शनादात्मनो नानात्वमनुभवसिद्धम्, किञ्च, न्यायसाङ्ख्यादितन्त्रेष्वपि तथैव स्वीकृतमिति आत्मैकत्वकथनमसङ्गतमत आह—*यद्वदिति—यथा एक एव दिनकर आकाशस्थस्तत्तज्जलेषु प्रतिहतचक्षुषा उपाधिभेदादपूर्ववासनावशाच्च नानात्वेन गृह्यते, तथा सकलोपाधिष्ववस्थित एक एवात्मा नानात्वेन भाति इत्यर्थः । अत एव सुखदुःखादिवैलक्षण्यस्याप्युपपत्तिः । श्रुतिरपि—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥" इति ।
(शारी०भा०३।२।१८)

स्मृतिरपि—"यथा भिन्नजलेष्वेक आदित्यो भासते पृथक् ।
एक आत्मा शरीरेषु भिन्नवद् भासते तथा ॥" इति ।

तदाह – ❀भातीति । ❀अत एवेति – ब्रह्मणः सर्वत्र विशेष्यतया भानादेवेत्यर्थः । ❀महाभाष्य इति – पस्पशायाम्–"सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकव्याख्यानावसरे । उपरिष्टात् = जातिस्फोटसिद्धान्तनिरूपणावसरे । ननु विशेष्यतया भासमानस्यैव ब्रह्मरूपत्वे विशेषणतया भासमानस्योपाधेस्तद्भिन्नत्वमर्थात् सिद्धमित्यद्वैतसिद्धान्तभङ्गोऽत आह – ❀उपाधीति – श्रुत्यादिस्थोपाधिबोधकशब्दैरित्यर्थः । उपाध्यादिरपि ब्रह्मैवेति भावः । नन्वेवमुपाधेरपि नित्यत्वापत्तिरत आह – ❀पूर्वपूर्वेति – वासनाकृतमेव द्वैविध्यम्, न तु वास्तविकमिति भावः । ❀तद्वैशिष्ट्येनेति – उपाधिवैशिष्ट्येनेत्यर्थः । ❀अत एवेति – ज्ञानीयविषयताऽऽश्रयमात्रस्य ब्रह्मरूपत्वादेवेत्यर्थः । ❀अत एवेति – विशेषणतया भासमानांशमादाय तस्य जन्यत्वादेवेत्यर्थः । ❀कार्य्यब्रह्मेति – तथा च श्रुतिः – "यो ब्रह्माणं विदधाति पूर्वम्" ( श्वे० उप० ६।१८ ) इति "हिरण्यगर्भं जनयामास पूर्वम्" ( श्वे० उप० ३।४ ) इति च । ननु नपुंसक 'ब्रह्म' शब्दस्य परब्रह्मण्येव प्रसिद्धत्वात्कार्य्यब्रह्मणि तत्प्रयोगासङ्गतिरत आह – ❀सामीप्यादिति – परमेव ब्रह्म सत्यकामत्वादिगुणयुक्तम् 'कार्य्यब्रह्म' इत्युच्यते । सामीप्यादित्यस्यार्थमाह– ❀ब्रह्मसामीप्यादिति–सामीप्यसम्बन्धमूलकब्रह्मत्वारोपरूपलक्षणया तद्व्यपदेश इत्यर्थः । यद्वा, "ब्रह्मणा लोककर्तृणा" इत्यादिप्रयोगदर्शनात् कार्य्यब्रह्मवाचकस्य नपुंसकत्वमपि । ❀कार्य्यमेवेति – 'परमेव' इति पाठः, भाष्यात्तथैव लाभात्, 'कार्य्यम्' इतिपाठेऽर्थासङ्गतेश्च । ❀विशुद्धोपाधीति – कार्य्यत्वादविशुद्धा अपि श्रेयोहेतुत्वाद् विशुद्धा इत्युच्यन्ते । ❀अपरमिति – अपरं ब्रह्मेत्यर्थः, शुद्धस्योपासनाऽसम्भवादिति भावः । सर्वस्य ब्रह्मरूपत्वे प्रमाणभूतश्रुत्या अविद्याया अपि जन्यत्वं बोधितमित्याह – ❀अविद्याया इति । ❀सर्वमिति – अत्र 'सर्वम्' इति प्रकृतिसाधकम्, 'तज्ज' इति ब्रह्मसाधकम् । जायत इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जम्, लीयत इति लम्, अनितीति अन्, जश्च लश्चाश्चेति समाहारद्वन्द्वे ततो जातम्, तेन जीवितम्, तत्र लीनम् सर्वं ब्रह्मेत्यर्थः। *एकरूपा भवतीति-अन्यथाऽविद्येतरत्वेन संकोचनीया स्यादित्यर्थः । ब्रह्मण एव सर्वत्र विशेष्यतया भानमित्यत्र मानान्तरमाह —*विष्णुपुराण इति । *विद्याऽविद्ये इति-अनेनाविद्यायाः ब्रह्मजन्यत्वं स्फुटमेव सूचितम् । तदाह — *निरुपाधीति-द्वे अपि ब्रह्मैवेत्यर्थः । *तद्विपरीतमिति — अस्यैवार्थः—*सर्वोपाधिविवर्जितमिति । *अन्त्यन्त्विति — सर्वोपाधिविवर्जितन्त्वित्यर्थः ।

मू०—परमार्थसारेऽपि —

विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः ।
व्यवहारस्थस्यात्मन एतेऽवस्थाविशेषाः स्युः ॥"

(प० सा० २७ ) इति

यद्यपि विज्ञानं ब्रह्मैव, तथापि नामवैशिष्ट्येनावस्थात्वमुक्तम् । विपरीतं ज्ञानं मायाऽपि विज्ञानमत्र। एते विज्ञानादय आत्मनो भ्रमरूपाः प्रतिभासमात्रविषया अवस्था इत्यर्थः। अनेन सर्वोपाधीनां तद्विशेष्याणां च ब्रह्मरूपत्वमुक्तम् । तदप्युक्तं तत्रैव—

प्रपञ्चस्य ब्रह्मविवर्तत्वोपपादनम्

"रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ।
तद्वद्द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ॥"

(प० सा० २८) इति

तदुत्तरार्यया। इदं विज्ञानादि (अविद्या) वासनारूपाविद्यामूलकम्। वासनारूपसूक्ष्मोपाधिवैशिष्ट्येनापि ब्रह्मभानं मननादिपरिपाकवतामस्त्येव । अविद्यायाश्चाध्यासिकसम्बन्धेन परमात्मैवाश्रयः, तदतिरिक्ताविद्याया इव । तदप्युक्तं तत्रैव "त्रिगुणा चैतन्यात्मनि" इति पूर्वोक्तार्यया । भ्रमाधिष्ठानत्वमेव तद्विशेष्यत्वरूपविवर्तोपादानत्वम् । अत एव 'रज्जौ भुजङ्गो जातः' इत्यप्रत्ययः । 'रज्जौ भुजङ्गभ्रमो जातः' इत्येव च प्रत्ययः। "अनादिनिधनं ब्रह्म"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(वाक्यप० कां० १ कारि० १) इत्यादिश्लोके हरिग्रन्थेऽपि स्पष्टमेतत्—"तत्त्वादप्रच्युतस्य वस्तुनो भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्त्तः, स्वप्नविषयप्रतिभासवत्" इत्यादिना। 'तत्त्वात्=स्वस्वरूपात्। असत्यम्, वस्तुनो बहिरसत्त्वात्। अविभक्तम्, अधिष्ठानेन, अन्यद्व वैधर्म्योपलम्भात्। तादृशरूपोपग्राहिता = तत्तद्रूपप्रकारकज्ञानविशेष्यता। तदाह—स्वप्नविषयेति' इति तद्व्याख्यातारः। पयसो दधि तु न विवर्त्तः, तत्त्वात्प्रच्युतेः। स्वर्णादेः कुण्डलादि तु विवर्त्त एव।

(रत्न०)—स्वसिद्धान्तं द्रढयितुं मानान्तरमाह—*परमेति। उपाधिकृतानवस्थाभेदमाह—*विज्ञानेति। ननु निरुपाधिब्रह्मण एव विज्ञानरूपत्वाद् 'विज्ञान'इत्यवस्थाभेदवर्णनमसङ्गतमत आह—*यद्यपीति। *ब्रह्मैवेति—शुद्धं ब्रह्मैवेत्यर्थः। "विज्ञानमानन्दं ब्रह्म" (बृ० उप० ३।९।२८) इति श्रुतेः। 'एव'शब्देन तस्यावस्थात्वनिरासः। *नामवैशिष्ट्येनेति—ब्रह्मणः शब्दावाच्यतया विज्ञानपदवत्त्वेन विज्ञानमपि अवस्थाविशेष एवेत्यर्थः। पक्षान्तरेणाह—*विपरीतमिति—शुद्धसत्त्वगुणात्ममायारूपाविद्योपाधिकः, "एष ते आत्माऽन्तर्याम्यमृतः" (बृ० ३।७।३) इति श्रुतेः। *प्राणेति—गुणत्रयोपाधिको ब्रह्म-विष्णु-रुद्रसंज्ञक उत्पत्ति-स्थिति-विनाशकृत्। यद्वा, सूत्रात्मा प्राणः लिङ्गशरीरसमष्ट्यभिमानी हिरण्यगर्भः, "वायुर्वै गौतम! तत्सूत्रम्" (बृ० उप० ३।७।२) इति श्रुतेः—

"प्राणस्तु प्रणवो ज्ञेयो जीविते परमात्मनि।
इन्द्रिये वायुभेदे च बलान्तर्यामिणोरपि॥"

इति कोशाच्च। विराट्=स्थूलशरीरसमष्टिरूपो यो देहस्तत्राविर्भूतः "सहस्रशीर्षा"(पुरु०सू०१) इत्यादि श्रुतिबोध्यः। जातिः=देवत्वादिस्थावरान्ता। पिण्डाः=समष्टिव्यष्टिदेहाः, तत्राभिव्यक्ता विश्वशब्दवाच्या जीवास्तदुपाधयश्च। तथा च पिण्डा अन्ताः—अन्तत्वेन व्यवहारविषया येषां ते पिण्डान्ताः। "अन्तो व्यवस्थिते मृत्यौ स्वभावे निश्चयेऽन्तिके।" इति कोशाद् व्यवस्थितार्थोऽत्र 'अन्त'शब्दः। *आत्मन इति—सोपाधिकस्येत्यादिः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन व्यवहारकालिकस्येत्यर्थः । अवस्थायां वैलक्षण्यमाह — ❀भ्रमरूपा इति । अस्यैवार्थमाह — ❀प्रतिभासेति — रज्जूरगादिवद् भ्रमात्मकप्रतीतिविषया इत्यर्थः । तदुक्तं विष्णुपुराणे —

"देवाः, मनुष्याः, पशवः, पक्षि-वृक्ष — सरीसृपाः ।
रूपमेतदनन्तस्य विष्णोर्भिन्नमिव स्थितम् ॥" इति ।
"ज्ञानस्वरूपमत्यन्तनिर्मलं परमात्मनः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥"
( वि० पु० १।२।६ ) इति च ।

अनेन = 'भ्रमरूपा' इति विशेषणेन । नन्वेषां भ्रमरूपत्वे प्रमाणाभावोऽत आह — ❀तदपीति — तेषां भ्रमरूपत्वमपीत्यर्थः । ❀तत्रैवेति — परमार्थसार एवेत्यर्थः । ❀रज्ज्वामिति — व्याख्यातपूर्वमिदम् । ❀तदुत्तरेति — विज्ञानान्तर्यामीति पूर्वोक्तार्य्याऽपेक्षयोत्तरार्य्ययेत्यर्थः । आर्य्या नाम—

लक्ष्मैतत् १† सप्तगणाः गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं न लघू वा प्रथमेऽर्धे नियतमार्य्यायाः ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥"
( वृत्तरत्ना० २।१-२ )

इतिलक्षणलक्षितश्छन्दोविशेषः । इदमः सन्निकृष्टपरामर्शकत्वादाह — ❀वि-

---

† आर्य्याणां चतुर्मात्रात्मक एको गणः । आर्य्यायाः प्रथमेऽर्धे एकेन गुरुणा युक्ता सप्तगणा (त्रिंशन्मात्राः) भवन्ति । विषमे ( १-३-५-७ ) गणे इह आर्य्यायां जगणो न कार्य्यः । षष्ठो गणस्तु जगणरूपो लघुचतुष्टयात्मक एव वा कार्यः ।अन्ये तु स्वेच्छया कार्याः। षष्ठो गणः लघुचतुष्टयात्मक उक्तस्तत्र द्वितीयलघोः पूर्वं सयतिपदनियमः = यतिसहितं पदं नियमेन समापनीयम् । सप्तमे गणे स्वेच्छया लघुचतुष्टयात्मके कृते सति सप्तमगणस्य प्रथमलघोः पूर्वं यतिर्विधेया । चरमेऽर्धे पञ्चमके गणे स्वेच्छया लघुचतुष्टयात्मके कृते सति पञ्चमस्य प्रथमलघोः पूर्वं यतिर्विधेया । इह चरमेऽर्धे षष्ठ एकलघुरूप एव गणः कार्य्यो न तु लघुचतुष्टयात्मक इत्येव पूर्वार्धाद्विशेषः । एवञ्च चरमेऽर्धे सप्तविंशतिमात्राः कार्य्या इति फलति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

-ज्ञानादीति — आदिनाऽन्तर्याम्यादीनां सङ्ग्रहः। अतः परम् 'अविद्या' इति पाठोऽसङ्गत इवाभाति, अनन्वयात् । प्रत्यक्षविषयी भूतस्यैवेदमा परामर्शात्, स्थूलाविद्यायाश्च तत्त्वादाह — *वासनारूपेति — ननु स्थूलाविद्यायाः कारणीभूतसूक्ष्मवासनाया अपि प्रत्यक्षत्वासम्भवः । तथा च लोके यथा सुवर्णमजानतां पुंसां कुण्डलादिषु काञ्चनत्वज्ञानाभावस्तथाऽस्माकं सूक्ष्माविद्याया अभानात् कथं सूक्ष्मोपाधिवैशिष्ट्येन तद्भानम् ? अत आह — *वासनारूपेत्यादि — अपिना स्थूलोपाधेः सङ्ग्रहः । ननु सूक्ष्मोपाधिवैशिष्ट्येन ज्ञानं न स्यादिति चेत्, न, मृद्विवेकज्ञानवतां घटादिव्यवहार इव तेषामपि तद्वैशिष्ट्येन ज्ञानसम्भवात् । एवञ्चान्येषां सूक्ष्मोपाधिवैशिष्ट्येन ज्ञानाभावेऽपि न क्षतिः । रज्जुसर्पस्थले तु न कस्यापि युगपदुभयज्ञानमिति विशेषः । निदिध्यासनपरिपाकवाँस्तु बालानां रज्जुसर्पज्ञानवत्स्वस्य प्रपञ्चज्ञानं जानीते इत्यन्यत् । ननु सा चेदविद्या नातिरिक्ता किन्तु वासनारूपैव तर्हि को वासनाश्रयः ? परमात्मा तदाश्रय इति चेत्, न, सम्बन्धाभावादत आह — *अविद्याया इति — वासनारूपाविद्यायाश्चेत्यर्थः । परमात्मन आश्रयत्वञ्च तवाप्यावश्यकमित्याह — *तवेति — तव मते वासनाया आश्रयः अविद्या, अविद्यायाश्च परमात्मा, तथाऽस्माकं मतेऽतिरिक्तामविद्यामन्तरैव वासनारूपाविद्यायाः परमात्मैवाश्रय इति भावः । *तदपीति — परमात्मन एव वासनारूपाविद्याया आश्रयत्वमपीत्यर्थः । *पूर्वोक्तार्य्ययेति —

"त्रिगुणा चैतन्यात्मनि सर्वगतेऽवस्थितेऽखिलाधारे ।
कुरुते सृष्टिमविद्या सर्वात्मा स्पृश्यते तया नात्मा ॥"

( प० सा० ४९ ) इति ।

*तत्रैवेति — परमार्थसार एवेत्यर्थः । नन्वेवं यथा रज्जुर्भुजङ्गविवर्त्तोपादानम्, तथा ब्रह्म विवर्त्तोपादानं न स्यात्, तव मतेऽनिर्वचनीयोत्पत्तावतात्त्विकान्यथाभावात्, अत आह — *भ्रमाधिष्ठानेति । *तद्विशेष्यत्वमिति — भ्रमविशेष्यत्वमित्यर्थः । 'तद्विशेष्यत्वरूपविवर्तोपादानत्वम्' इति समस्तः पाठः । विवर्त्तस्य भ्रमविशेष्यत्वरूपत्वात्तद्विशेष्यत्वरूपस्याभेदेन विवर्तेऽन्वयात् । अतएव "तत्त्वादप्रच्युतस्य वस्तुनो भेदानुकारेणासत्याविभक्तान्यरूपप्रकारकज्ञानविशेष्यता विवर्त्तः" इत्यनुपदमेव मूले वक्ष्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा च 'तद्विशेष्यत्वरूपम्' इत्यपपाठः । दृष्टान्तेऽपि तथैवेत्याह— *अत एवेति—ईदृशस्य विवर्तोपादानत्वस्याङ्गीकारादेवेत्यर्थः । *प्रत्यय इति — किञ्च, रज्जुतत्त्वज्ञानानन्तरं न कदाचिदपि 'सर्प'पदप्रयोग-तद्बुद्धी भवतः । प्रकृते तु तत्त्वज्ञस्यापि तद्व्यवहारबुद्धी अनुवर्तेते इति वैषम्यम् । भ्रमाधिष्ठानत्वरूपस्य विवर्तोपादानत्वस्य स्वीकाराद् रज्जुर्भुजङ्गस्य विवर्तोपादानमिति निरस्तम् । तत्त्वज्ञानोत्तरमपि 'सर्प'पद-प्रयोगतद्बुद्धिजातत्वप्रत्ययरूपदोषत्रयप्रसङ्गात्, कुण्डलप्रतीतिकाले स्वर्ण-त्वप्रतीत्यनुवृत्तिवत्, भुजङ्गप्रतीतिकाले रज्जुत्वप्रतीत्यनुवृत्त्यभावेन तत्त्व-स्यानौचित्याच्च । *अनादीति — इदञ्च पूर्वमेवोक्तम् । तद्यथा —

"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥" इति ।
( वाक्यप० १।१ )

*एतदिति — तस्य विवर्तोपादानत्वं तादृशमेवेत्यर्थः । स्पष्टत्वप्रदर्शनाय तद्ग्रन्थमाह — *तत्त्वादिति । *इत्यादिनेति — आदिना "शब्दाख्या-दुपसंहृतक्रमाद् ब्रह्मणः सर्वविकारप्रत्यस्तमये वर्तमानादव्याकृतात्सर्व-विकारग्रन्थिरूपत्वेनाव्यपदेश्याज्जगदाख्यविकाराः क्रियन्त इत्यर्थः" इत्यस्य संग्रहः । *बहिरिति—अनेन कारणापेक्षयाऽसत्यत्वबोधनद्वारा कारणसत्ताऽपेक्षयाऽल्पसत्ताकत्वस्य कार्ये बोधनद्वारा 'कारणासमसत्ता-कोऽन्यथाभावो विवर्तः' इत्यपि सूचितम् । मायासत्तायाः ज्ञानपर्यन्तत्वेन कार्यसत्तायाश्च मध्यप्रलयेष्वभावेन कार्यत्वविवर्तत्वयोर्लक्षणसङ्गतिः । तत्त्वा-दप्रच्युतस्येत्यादेः फलमाह — *पयस इति । *स्वर्णादेरिति — मायाया अपि दुग्धस्य दधिभावेनेव न प्रपञ्चरूपः परिणामः, किन्तु स्वर्णस्य कुण्डलरूपेणेव । एतादृश एव परिणामः 'विवर्त'पदवाच्यः । अतः प्रलयसमयेऽविद्यारूपेण सर्वावस्थितिः । यदि दधीव परिणामो भवेत्तदा तस्य पुनर्दुग्धरूपत्ववत् प्रपञ्चस्य मायारूपेणावस्थितिर्भज्येत । तस्याः संस्काररूपेणावस्थानमेव ब्रह्मणि सर्वलयत्वेन व्यवह्रियते, इति बोध्यम् ।

मू०—तदुक्तं परमार्थसारे—

"यद्वद्देहोऽवयवा मृदेव पार्था विकारजातयश्च ।
तद्वत् स्थावरजङ्गममद्वैतं द्वैतवद्भाति ॥"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अवयवातिरिक्तोऽवयवी यथाऽसन्, मृद्विकाराश्च यथाऽसन्तो भान्ति, तथा नामरूपवत्त्वमसदेव भातीति तदर्थः । 'द्वैत' शब्देन च द्वाभ्यां प्रकाराभ्यामितं ज्ञातं द्वीतम्, तस्य भावो द्वैतमिति व्युत्पत्त्या नामरूपे उच्येते । तद्रहितञ्च 'अद्वैतशब्देन । एवञ्च 'द्वैत' शब्देन प्रपञ्चस्योक्तिरेव नाम्नः प्रकारत्वे मानमित्यपि बोध्यम् । श्रुतिरपि—"विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छान्दो० उप० ६।१।४ ) इति । नाममात्रम् = व्यवहारमात्रम्, न तु तन्त्रान्तरेष्विव वस्त्वस्तीति तदर्थः, चेतनसन्निधानमात्रेण देहेन्द्रियमनःसु क्रियादर्शनात् । तस्य प्रेरकत्वादि आरोपितमेव, जनकत्वादि च । तदुक्तं भाष्ये—"जीवेश्वरयोरैक्यात्प्रवर्त्यप्रवर्तकत्वमनुपपन्नम्, न, अविद्याप्रत्युपस्थापितनामरूपमायावशेन तदुपपत्तेः । अविद्या = संस्काररूपा, माया = स्थूलरूपा । न च सन्निधिमात्रेण प्रवर्तकत्वे सन्निधिनित्यत्वात्प्रवृत्तिनित्यत्वप्रसङ्ग इति वाच्यम्, सन्निधिनित्यत्वेऽपि मायिकत्वेन परिहारात्" इति ।

"न तु दृष्टान्तभावात्" ( वे० सू० २।१।९ ) इति सूत्रेऽपि भाष्ये उक्तम्—"यथा स्वयं प्रसारितमायया मायावी कदापि न संस्पृश्यते, अवस्तुत्वात् । एवं परमात्माऽपि न संसारमायया संस्पृश्यते, मायामात्रं ह्येतत्, यत् परमात्मनोऽवस्थात्रयात्मनाऽवभासनम्, रज्वा इव सर्पादिभावेन" इति । अत्रावस्थात्रयेत्युपलक्षणम् । अनेन हि सर्वस्य जनकत्वादेरवभास एव, न वस्तु किञ्चिदस्तीति स्पष्टमेवोक्तम् । अनादिवासनावशाद् भ्रमविषयमेव तत् "यतो वा" ( तैत्ति० उप० ३।१।५१ ) इत्यादि श्रुतयोऽनुवदन्ति । "यतो वा" इति श्रुत्या सर्वस्य जनकत्व-पालकत्व-लयस्थानत्वैस्तादृशैरेव ब्रह्मणस्तटस्थलक्षणं बोध्यते । कालत्रयसत्ताप्रतिपादनेन तद्बोधितकालत्रयाबाध्यत्वरूपं स्वरूपलक्षणमपि बोध्यते । "सत्यं ज्ञानम्" ( तैत्ति० उप० २।१।१। ) "आनन्दम्"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(बृह० उप० ३।९।२८) (तैत्ति० उप० २।४।१) इत्यादिश्रुतयोऽपि शुद्धचित्तं प्रति "नेह नानास्ति" (कठोप० ४।११) इत्यादि श्रुति-सहकारेण धर्मत्यागेनाद्वैतं शुद्धं ब्रह्म बोधयन्ति ।

(रत्न०)—इयुक्तविवर्तविषये मानमाह—*तदुक्तमिति—तत्त्वाद्-प्रच्युतस्यासत्यत्वादिधर्मप्रकारकप्रतीतिविशेष्यत्वमित्यर्थः । 'माया' इत्य-नेन प्रतिभासरूपस्य देहादेरसत्यत्वमेवोक्तम् । तदेव दृष्टान्तेन द्रढयति—*तद्वदिति । यथाऽवयवातिरिक्तोऽवयवी देहादिर्नास्ति, अवयव एव च तदतिरिक्तत्वेन व्यवह्रियते, भासते च । एवमेव यथा पार्थाः मृद्विकाराः—'पृथ्' शब्दः पृथ्वीवाचकः—मृदेव, नातिरिक्ताः सन्ति, व्यवह्रियन्ते, प्रतिभासन्ते च, तद्वदेव स्थावरजङ्गमात्मकः प्रपञ्चो ब्रह्मैव न ततो भिन्नः, किन्तु द्वैतवत् = नामरूपवद् भाति, न तु सत्यमित्यभिप्रायः । तथा च श्रुतिः—"वाचारम्भणं विकारो नामधेयम्" (छान्दो० उप० ६।१।४।) स्मृतिरपि "ज्ञानमेव परं ब्रह्म" इत्यादिः । तदेव दर्शयति—*अवयवा-तिरिक्त इति—भातीति शेषः । ननु 'द्वैत' शब्देन कथं नामरूपलाभः ? अत आह—*द्वैतशब्देनेति । ननु लोकेऽर्थस्यैव प्रतीतिविषयतायाः सर्वानुभवसिद्धत्वेनास्तु तस्य प्रतीतौ प्रकारत्वम्, शब्दस्य तु प्रकारत्वेन भानोक्तिरसङ्गताऽत आह—*एवञ्चेति—व्यवहारस्यैव सर्वतो बल-वत्त्वात्तथा व्युत्पत्तौ मानत्वमिति भावः । तदसत्यत्वे श्रुतिमपि प्रमाण-यति—*श्रुतिरपीति—ननु ब्रह्मणो निष्क्रियत्वेन श्रुतावुक्तत्वेन "पृथ-गात्मानं प्रेरितारं च मत्वा" इति "भोक्ता" इति च प्रागुक्ता श्रुतिरसङ्गता स्यात्, अत आह—*चेतनसन्निधानेति—'मात्र' पदेनात्मनि क्रिया-व्यवच्छेदः । अत्र प्रमाणमाह—*तदुक्तमिति—तयोर्भिन्नाधिकरणत्वेनै-क्यात्तत्त्वमनुपपन्नमिति यत्, तन्नेत्यर्थः । द्वयोरुक्त्योर्भेदमाह—*अवि-द्येति—तथा चाविद्यामाययोर्भेदाज्जीवेशयोर्भेदेन निष्क्रियत्वादि, प्रेरयितृ-त्वादि चोभयमुपपन्नमिति भावः । *प्रवृत्तिनित्यत्वमिति—संसारनित्यत्व-मित्यर्थः । तथात्वे प्रलयादिर्न स्यादिति भावः । *मायिकत्वेनेति—मायिकत्वेन हेतुना तस्याः प्रवृत्तेरप्यनित्यतया कदाचिद्विभागेनाप्यवस्था-नान्नोक्तदोष इति भावः । अनेन तस्य प्रेरकत्वमपि तादृशमेवेति स्पष्टमे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वोक्तम्। जनकत्वादेरपि मायिकत्वेन तत्त्वे प्रमाणमाह — *न तु दृष्टान्तेति — तत्र हि "यत्तदभिहितं कारणमपि गच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति, तददूषणम्। कस्माद्? दृष्टान्तभावात्। सन्ति हि दृष्टान्ता यथा—कारणमपि गच्छत्कार्यं कारणमात्मीयेन धर्मेण न दूषयति। यथा-शरावादयो मृत्प्रकृतिकाः विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपि गच्छन्तो न तामात्मीयेन धर्मेण संसृजन्ति, रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमात्मीयेन धर्मेण संसृजन्ति" इति जनकत्वादीनामपि तादृशत्वमुक्तमित्याह — *भाष्ये उक्तमिति। परिणामदृष्टान्तमभिधाय विवर्तदृष्टान्तमाह — *यथेति। कदापि = कालत्रयेऽपि। *अवस्थात्रयेति — प्रागुक्तजगज्जन्म-स्थिति-प्रलयरूपावस्थात्रयेत्यर्थः। न्यूनतां परिहरति—*अत्रेति — तेनावशिष्टभावविकारपरिग्रहः। स्वाभिप्रेतार्थमाह —*अनेनेति — भाष्येणेत्यर्थः। नन्वेवं श्रुतिविरोधः, तया हि ब्रह्मणि वास्तविकजनकत्वाभिधानात्, अत आह — *अनादीति — निदिध्यासनपरिपाकवता यज्ज्ञातं ब्रह्मणि भ्रमस्वरूपं तदेव जनकत्वादि परस्य वैराग्यसिद्धये ता अनुवदन्तीत्यर्थः। प्रासङ्गिकमाह— *यतो वेति श्रुत्येति — अस्य चाग्रेतनेन प्राथमिक 'बोध्यते' इत्यनेन द्वितीय 'बोध्यते' इत्यनेन चान्वयः तन्त्रेण। तादृशैरेव = भ्रमरूपैरेव। *तटस्थेति — ज्ञानीयविषयताऽनवच्छेदकं सद्यदितरव्यावृत्तिबुद्धिजनकं तत् तटस्थलक्षणम्, यथा – शाखोर्ध्वदेशत्वं चन्द्रस्य, काकवत्त्वञ्च देवदत्तगृहस्य। न हि तत्र तेन रूपेण ज्ञेयता विवक्षिता प्रष्टुः। यद्वा, यावल्लक्ष्यकालमनवस्थितत्वे सतीतरव्यावृत्तिबुद्धिजनकं तत्। ब्रह्मणश्च सर्वोपादानत्वमेव तत्। ज्ञेयताऽवच्छेदकं सद्यदितरव्यावृत्तिबुद्धिजनकं तत्स्वरूपलक्षणम्। यथा—सास्नादिमत्त्वं गोः। प्रकृते सत्यत्वज्ञानत्वादि। यद्यपि निर्धर्मके ब्रह्मणि तदपि कल्पितमेव, तथाऽपि तस्य श्रवणमननपरिपाकेन मिथ्यात्वनिश्चयेऽपि ततः प्राक् तदभावेन तेन रूपेण ज्ञेयत्वे बाधकाभावः। अन्यस्य तु धर्मस्य श्रवणमात्रेण मिथ्यात्वनिश्चय इति विशेषस्तदाह —*कालेति — इदमपि कल्पितमेव। *तद्बोधितेति — कालत्रयसत्ताबोधितेत्यर्थः। प्रासङ्गिकमन्यदपि आह —*सत्यमिति —

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति० उप० २।१।१) इत्येका श्रुतिः । "आनन्दं ब्रह्मणो विद्वान्" (तैत्ति० उप० २।४।१) इत्यपरा । *धर्मत्यागेनेति — निर्धर्मकत्वेनेत्यर्थः । *शुद्धमिति — श्रवणमननपरिपाकेन तस्य मिथ्यात्वनिश्चये निर्धर्मकस्याखण्डस्यैतच्छ्रुतितात्पर्यविषयीभूतस्य निदिध्यासनविषयतेति भावः ।

मू०—कणादादयोऽपि मायिकत्वेन, मिथ्याभूतत्वेन, ब्रह्मरूपत्वेन च स्वज्ञातस्य प्रपञ्चस्य बोधनीयशिष्याधिकारानुसारेण मायिकत्वाद्यपलप्य ब्रह्मरूपत्वेन(स्व)ज्ञातपरमाण्वादिभ्यः सृष्टिम्, समवायादीनां पदार्थत्वञ्चातीन्द्रियदृशा(ष्ट्या) ज्ञात्वोक्तवन्तः । तत्र तदुक्तपदार्थानां शुष्कतर्कबलेनान्यथाकरणं तेषां खण्डनं चायुक्तमेव, असत्सु भासमानेष्वर्थेषु ऋष्यनुसारेणैव कल्पनाया औचित्यात् । तदुक्तं परमार्थसारे—

मतान्तराणामपि शुद्धे ब्रह्मण्येव तात्पर्यबोधनम्

"यद्यत्सिद्धान्तागमतर्कादिषु भ्रमन्ति रागान्धाः ।
अनुमोदामस्तत्तत्तेषां सर्वात्मवादधिया ।।" (प०सा०६५)इति ।

सिद्धान्तप्रतिपादकेषु पाञ्चरात्राद्यागमादिषु भ्रमन्ति = 'अयमेव सिद्धान्तः समीचीनः' इति भ्रमन्ति, चित्तस्वास्थ्यञ्च न लभन्ते । तत्तत्तेषां मतम् 'सर्वमात्मा' इति वादे या धीस्तयाऽनुमोदाम इति तदर्थः । न चैवं रीत्या सर्वस्य चेतनत्वे सर्वत्र चेतनकार्य्यं कुतो नेति वाच्यम् ? चेतनसन्निधानेन तत्तत्कार्य्ये जननीये सेन्द्रियद्रव्यस्य कारणत्वात् । तदुक्तं चरके पतञ्जलिना—

"सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम् ।"
(चर० सं० सूत्रस्था० १।४७) इति ।

अत्र ग्रन्थे अग्रे पश्चात्कचिदाधुनिकग्रन्थानुसारेणास्ति लिखितमिति न पूर्वापरविरोधोऽत्रेत्यलं प्रसक्तानुप्रसक्त्या ।

(रत्न०)—एतादृशं ब्रह्म, प्रपञ्चस्य मायात्वं च कणादादिसम्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तमित्याह — ❀कणादादय इति — आदिना गौतमादीनां संग्रहः । ❀मायिकत्वादीति — आदिना मिथ्याभूतत्वादीनां संग्रहः । परमाण्वादेर्नित्यत्वायाह — ❀ब्रह्मरूपत्वेनेति — तथा च ब्रह्मरूपत्वेन नित्यत्वं तेषाम्, न तु परमाणुत्वेन । ❀परमाण्वादिभ्य इति — आदिना तन्मात्रादीनां ग्रहणम् । ❀उक्तवन्त इति — अयं भावः — कणादादीनामपि सर्वोपादानत्वं ब्रह्मणः, प्रपञ्चस्य मिथ्यात्वञ्च सम्मतम् । परन्तु ब्रह्मगततादृशोपादानत्व-प्रपञ्चगततथाविधमिथ्यात्वज्ञानानधिकारिणः शिष्यान् समीक्ष्य तदधिकारानुसारेण मिथ्यात्वेन ज्ञातेष्वपि परमाण्वादिषु मायिकत्वाद्यपलप्य तेभ्यः सृष्टिम् समवायादीनां नित्यत्वञ्च प्रतिपादितवन्त इत्यधिकारिशिष्यबोधानुरोधेन स्वस्वमतानुसारेण तत्तत्पदार्थकल्पनामात्रम्, न तु तेषां तात्त्विकत्वमिति तेषां खण्डनमण्डने निरर्थके इत्याह — ❀तत्र तदुक्तपदार्थानामिति । ❀शुष्कतर्केति—तर्के शुष्कत्वञ्च—श्रुत्यादिप्रमाणविरुद्धत्वरूपम् । अन्यथाकरणम् = प्रकारान्तरेणोपपादनम् । खण्डनम् = बाधकयुक्तिभिर्निरासः । 'तत्र तदुक्तपदार्थानाम्' इति पूर्वोक्त 'तत्र' इत्यस्यार्थमाह— ❀असत्स्विति — विषयसप्तमीयम् । ❀औचित्यादिति — असत्सु पदार्थेषु व्यवहारनिर्वाहाय कल्पनाऽपेक्षायां शिष्टप्रदर्शितमार्गेणैव तत्कल्पनाया न्याय्यत्वादिति भावः । अधिकारिभेदेन व्यवहारमात्रनिर्वाहकत्वेन कल्पितास्तन्त्रान्तरीयतत्तत्सिद्धान्ता ऋषिभिरित्यत्र प्रमाणमाह — ❀तदुक्तमिति । ननु 'पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवः द्व्यणुकादिक्रमेण ब्रह्माण्डपर्य्यन्तं जगद् आरभन्ते, असदेव कार्य्यं कारणव्यापारादुत्पद्यते' इति तार्किकाणां मीमांसकानाञ्च मतम् । सत्वरजस्तमोगुणात्मकप्रधानमेव महदहङ्कारादिक्रमेण जगदाकारेण परिणमते । पूर्वमपि सूक्ष्मरूपेण सदेव कार्य्यं कारणव्यापारेणाभिव्यज्यते' इति साङ्ख्ययोगपाशुपतानाम् । 'ब्रह्मणः परिणामो जगत्' इति वैष्णवानामपि । 'स्वप्रकाशपरमानन्दमद्वितीयं ब्रह्म स्वमायावशान्मिथ्येव जगद्रूपेण कल्पते' इति ब्रह्मवादिनाम् । एवम् 'ब्रह्मैकत्वविज्ञानं मोक्षसाधनम्' इति केचित् । 'प्रकृतिपुरुषविज्ञानं तथा' इति साङ्ख्या इत्यादीनि नानामतानि ऋषिभिरभिहितानि तत्र किं मतमुपादेयम् ? इत्यत्राह — ❀यद्यदिति — सर्वेषां प्रस्थानकर्तॄणां मुनीनां विवर्तवादपर्य्यवसानेनाद्वितीये ब्रह्मण्येव वेदान्तप्रतिपाद्ये तात्पर्य्यम् । न हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते मुनयो भ्रान्ताः, सर्वज्ञत्वात् । किन्तु बहिर्विषयप्रवणानामापाततः परम-पुरुषार्थे प्रवेशो न स्यादिति नास्तिक्यनिवारणाय तैः स्वस्वमतानुसारेण व्यवहारार्थं कल्पिताः प्रकारभेदाः प्रदर्शिताः । तत्र तात्पर्यमज्ञात्वा वेद-विरुद्धेऽप्यर्थे तेषां तात्पर्यमुत्प्रेक्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णन्तो रागान्धा जनाः 'इदं मतं समीचीनम्' इति भ्रमन्ति । *यद्यदिति—सिद्धा-न्तवद्भासमाना ये आगमाः = पाञ्चरात्रादयः, तर्कादयः = न्याय–वैशेषिक-सांख्य–योग–पूर्वमीमांसाः, भ्रमपरिगृहीतभेदादिप्रतिपादकेषु तेषु शास्त्रेषु यद्यत्प्रति = यद्यदर्थविषये । जगत्कारणमुक्तिप्रकारेषु तत्तच्छास्त्रोक्तेष्वर्थेषु रागान्धा भ्रमन्ति 'इदं समीचीनम्' इति, चित्तस्वास्थ्यञ्च न लभन्ते रागान्धत्वादेव । वयं तु तेषां तत्तन्मतं 'सर्वमात्मैव' इति ये वदन्ति तेषां ज्ञानेनानुमोदामः' इत्यक्षरार्थः । सर्वस्यात्मरूपत्वेन जगत्कारणमात्मैव, प्रकृतिपुरुषविज्ञानाद्यप्यात्मज्ञानमेव स्थूलारुन्धतीन्यायेन परम्परया ब्रह्म-प्रतिपादकत्वाद् वाऽनुमोदाम इति भावः । "सर्वे वेदा यत्पदमामनन्ति" ( कठोप० २।१५ ) इति श्रुतिः ।

"रागान्धा हि जनाः सर्वं न पश्यन्ति हिताहितम् ।
तस्माद्रागं न कुर्वीत यदिच्छेदात्मनो हितम् ॥" इति ।
"वेदे रामायणे चैव भारते च विशेषतः ।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते ॥"

इति च स्मृतिः । चेन पुराणादीनां सङ्ग्रह इत्याह—*सिद्धान्तप्रतिपाद-केति । *पाञ्चरात्रेति – वैष्णवनारदादिप्रतिपादितःपाञ्चरात्रनामको ग्रन्थः । तत्र वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः । भगवान् वासुदेवः परमेश्वरः सर्वकारणं तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवस्तस्मा-न्मनः = प्रद्युम्नः तस्माद् – अनिरुद्धः=अहङ्कारः । सर्वे चैते भगवतो वासुदेवस्यैवांशभूतास्तदभिन्ना एवेति तदाराधनं कृत्वा कृतकृत्यो भवतीति निरूपितम् । एवं रीत्या = उक्तप्रणाल्या । सर्वत्र = घटादावपि, कारण-सत्तायाः कार्य्यसत्ताऽव्यभिचारित्वादिति भावः । तदाह —*चेतनेति — तथा च घटादिषु सेन्द्रियद्रव्यत्वाभावान्न चेतनकार्य्यमिति भावः । अत्र मानमाह —*तदुक्तमिति — तत्तात्पर्य्यमादायैव तदुक्तमित्यर्थः । अन्यथा प्रागुक्तरीत्या सर्वस्याऽपि चेतनत्वात्तदसङ्गतिः स्पष्टैव । नन्वत्र द्रव्यस्य



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यत्वमुक्तमग्रे चानित्यत्वमिति विरोधः, किञ्च, अत्र ब्रह्मण एव सृष्टि-रुक्ता, पूर्वन्तु बिन्दोरिति विशेषोऽत आह—*अत्रेति । पश्चात् = पश्चादपि । *अस्तीति—वर्तमानसामीप्ये लट् । *लिखितमिति—'लिखितम्' इत्यत्र नपुंसके भावे क्तः । *विरोध इति—मतभेदाभिप्रायकत्वेन उक्तत्वान्न विरोध इति भावः । *प्रसक्तानुप्रसक्त्येति—प्रसङ्गप्रयोज्य-प्रसङ्गोक्त्येत्यर्थः ॥

मू०—प्रकृतमनुसरामः—

अन्तःकरणवृत्तेस्तत्प्रतिबिम्बाभावस्य तत्फलस्य च निरूपणम् चित्तस्य विषयाकारपरिणामरूपा वृत्तिश्चेन्द्रियेण सहैव, अत एव रसनेन्द्रियगतपित्तान्वयेन 'गुडः कटुः' इति, नयनगतपित्तान्वयेन च 'शङ्खः पीतः' इत्याद्युपपद्यते । सा च भ्रमप्रमोभयरूपा पुरुषे प्रतिबिम्बत इति पुंसो विद्यमानवृत्तिग्राहकत्वम् । प्रतिबिम्बोऽत्र बुद्धेः परिणामविशेष एव, † न त्वादर्शादाविव प्रतिबिम्बः, उभयोरपि नीरूपत्वादान्तरत्वाच्चेत्यन्यत्र निरूपितम् ।

(रत्न०)—*चित्तस्येति—प्रत्यक्षस्थले यथा तडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव च चतुष्कोणाद्याकारं भवति तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते इत्युक्तम् । तत्रान्तःकरणस्य विषयाकारेण परिणामश्चेन्द्रियेण सहैव भवति । इन्द्रियविशिष्टमेवान्तःकरणं विषयाकारेण परिणमतीति यावत् । तथा चेन्द्रियदोषात्तत्सम्बद्धान्तःकरणस्यापि सदोषत्वेन तादृशस्यैव च तस्य विषयाकारेण परिणामादिन्द्रियगतदोषाणां विषयेऽप्युपलब्धिः संगच्छते—इत्यभिप्रेत्याह—*इन्द्रियेण सहैवेति । *अत एवेति—इन्द्रियविशिष्टान्तःकरणस्य परिणामादेवेत्यर्थः । *उपपद्यत इति—अन्यथा 'कटुत्वाभाववान् गुडः' 'पीतत्वाभाववान् शङ्खः' इति बाधज्ञानसत्त्वात् 'गुडः कटुः' 'पीतः शङ्खः' इति प्रतीतिर्न स्यादिति भावः । ननु दोषविशेषाजन्यज्ञानं प्रत्येव बाधज्ञानस्य प्रतिबन्धकत्वमिति तद्विशिष्टान्तःकरणपरिणामाभावेऽपि तादृशप्रतीतौ प्रतिबन्धकाभाव इति

† 'प्रतिबिम्बोऽत्र पुरुषस्य तदवच्छेद्यत्वमेव' इति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेत्, न, इन्द्रियगतपित्तरूपदोषतारतम्येन विषयगतपीतत्वतारतम्यस्यानुभवसिद्धतया तत्र विषयविधया पित्तस्यैव हेतुत्वावश्यकत्वात्। ननु पीतत्वविशिष्टशङ्खरूपविषयाभावेन 'पीतः शङ्खः' इति चित्तवृत्तिर्न स्यादत आह —*सा चेति — वृत्तिश्चेत्यर्थः। अयम्भावः — क्षारपदार्थसंयोगेन यथा वस्त्रमालिन्यमपसार्य्यते तथेन्द्रियसन्निकर्षेण बौद्धं तमोऽपहन्यते। तथा च निर्मले वस्त्रे कुसुम्भयोगात्तद्वर्णतेव स्वच्छे बुद्धिसत्त्वे विषयाकारता सम्पद्यते। सैव बुद्ध्यवस्था 'वृत्तिः' इत्युच्यते। सा च प्रमाणम्। पौरुषेयबोधस्य प्रमात्वात्तत्करणत्वात्तस्यास्तत्त्वम्। यद्यपि ज्ञानोत्पत्तिप्रक्रियाऽत्र शास्त्रे वेदान्तशास्त्रे च सूत्रकृद्भिरनुक्ता, तथाऽपि योगभाष्ये वेदान्तसूत्रकृता व्यासेनेदृशज्ञानप्रक्रियाया एवोक्तत्वात्सैवात्रापि ज्ञानप्रक्रियेत्यनेन ध्वन्यते। नन्विदमाकारवृत्ते रजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारतानिरूपकत्वाभावाद् विशिष्टभ्रमानुपपत्तिरत आह —*भ्रमप्रमेति — शङ्खावच्छेदेन प्रमात्वं पीतत्वावच्छेदेन भ्रमत्वम्। नन्वेवमपि विशिष्टभ्रमत्वानुपपत्तिः, परस्परनिरूप्यनिरूपकभावापन्नविषयत्वाप्रयोजकत्वादिति चेत्, न, वृत्तिप्रतिबिम्बितचैतन्यस्यैकत्वेन सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेनैव भ्रमत्वोपपत्तेः। *पुरुषे इति — विषयावच्छिन्ने इत्यर्थः। एतावतैव स्वसम्बद्धां विषयोपरक्तां बुद्धिवृत्तिं चेतनोऽवभासयतीत्यर्थः। तथा च योगसूत्रम्—"सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः" इति (यो० द० ३।३५) "चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" (यो० द० ४।२२) इति च। सत्त्वम् = चित्तम्। अत्यन्तासङ्कीर्णत्वञ्च जडत्वाजडत्वपरिणामित्वापरिणामित्वादिभिः। प्रत्ययाविशेषश्च, प्रतिबिम्बरूपेण। प्रतिसंक्रमः = परिणामः। अप्रतिसंक्रमायाः = असङ्गायाः। तदाकारापत्तिः = बुद्धिसमानाकारापत्तिः। स्वबुद्धिसंवेदनम् = स्वबुद्धिवृत्तिज्ञानम् बुद्धिवृत्त्यविशिष्टः पुरुषः।" इति तद्भाष्यम्।

"संलक्ष्यते यथा रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत्परमपूरुषः॥
तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुवृत्तयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥" इति स्मृतिश्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*प्रतिबिम्बत इति — बुद्धिपुरुषयोर्भोग्यभोक्तृभावरूपसम्बन्धः 'छायाऽऽपत्ति' शब्देन 'प्रतिबिम्ब' शब्देन चोच्यते। *विद्यमानेति — अस्य 'आत्मनि' इति शेषः। *वृत्तिग्राहकत्वमिति — वृत्तिप्रकाशकत्वमित्यर्थः। न हि स्वयमप्रकाशिता बुद्धिः परं प्रकाशयितुमर्हति। न च बुद्धिः स्वप्रकाशा, द्रष्टृत्वदृश्यत्वयोः स्वयं विरोधात्। *प्रतिबिम्ब इति—वृत्तेः प्रतिबिम्बनं नाम — पुरुषोपरागः। आत्मनो ज्ञानात्मकत्वात् पुरुषे प्रतिबिम्ब उक्तपरिणामविशेषोऽभिमानात्मकः साक्षिभास्यः। अस्मादेव प्रतिबिम्बरूपाद्दोषात् साक्षिपुरुषयोः 'अहं सुखी' 'पश्यामि' इत्यादिरूपेणैकताभ्रमः। केचित्तु आहुः — ननु कोऽसौ प्रतिबिम्बः ?, न तावन्मुख्यः प्रतिबिम्बः, चाक्षुषे चाक्षुषस्यैव प्रतिबिम्बस्वीकारात्, प्रतिबिम्बस्य तुच्छतया तत्र बन्धानुपपत्तेः, निरवयवेऽवच्छेदासम्भवाच्च। अत एव कस्तूरीप्रतिबिम्बे न गन्धोपलब्धिः। प्रतिध्वनिस्तु न प्रतिबिम्बः, किन्तु ध्वनिजन्य आकाशगुणः। मूलध्वनयस्तु पृथिव्यादिगुणा एव। एतेन 'प्रतिबिम्बोऽत्र बुद्धिपरिणामविशेष एवाभिमानात्मकः साक्षिभास्यः' इत्यपि निरस्तम्। अत आह — *प्रतिबिम्बोऽत्रेति — तद्वृत्तिरुपाधीनां सम्बन्धविशेष एवाध्यासिकः 'प्रतिबिम्बः' इति 'अवच्छेदकः' इति च व्यवहार्य्य इत्यर्थ इति। साङ्ख्यादिमतं निराकरोति — *न त्विति। *आदर्शादाविति — तत्र हि — प्रतिहतचक्षुर्ग्राह्यत्वं प्रतिबिम्बत्वम्। आदर्शः = दर्पणम्। तत्र मुखच्छायासादृश्याच्छायान्तरोद्भवो भवति। उभयोः = बुद्धिपुरुषयोः। प्रतिध्वनौ प्रतिबिम्बत्वव्यवहर्तुर्मतेनाह — *आन्तरेति — न तु बाह्य इति न दोषः।

**मू०—पुरुषोऽपि वृत्तिसम्बन्धात्तद्गतविषयाकार(ता) भाक्। वृत्तिश्च तत्सम्बन्धात्तत्स्वरूपप्रकाशभाक्, स्वभावात्। तथा च पतञ्जलेः सूत्रे — "तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो० द० १।३) तदा = समाधौ। "वृत्तिसारूप्यमितरत्र" (यो० द० १।४) इति। "व्युत्थाने याश्चित्तवृत्तयस्तद्विशिष्टवृत्तिः पुरुषः" इति तद्भाष्यम्। पुरुषस्य वृत्तिश्च वृत्त्यवच्छिन्नः पुरुष एव। वृत्तिसारूप्यात्तत्र वृत्तित्वव्यवहारः। तत्सारूप्यात्पुरुषोऽपि दुःखा-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिमानिव, अकर्त्ताऽपि कर्त्तेव, अभोक्ताऽपि भोक्तेव यद्भवति स एव पुरुषस्य भ्रमात्मको भोगः, तद्धानिरेव च मोक्ष इति भावः । अवच्छेदकस्थले प्रतिबिम्बव्यवहारस्तु प्रतिबिम्बसादृश्यात् । यथा रव्यादिप्रतिबिम्बं सोपाधिजलादिधर्मान् चाञ्चल्यादीन् गृह्णातीव, तथा अवच्छेद्यमपि तदन्तर्भावात्तद्धर्मानिति ।

(रत्न०)—ननु 'विषयावच्छिन्ने पुरुषेऽवभासः' इति, 'वृत्तेः प्रकाशकत्त्वम्' इति चानुपपन्नम्, 'यत्रैवावभासः तत्रैव प्रकाशकत्वम्' इति नियमात् विषयाकारताया बुद्धौ सत्त्वात् प्रकाशकत्वस्य चेतने एव सत्त्वाच्च । अत आह—*पुरुषोऽपीति । *वृत्तिसम्बन्धादिति—वृत्तिप्रतिबिम्बादित्यर्थः । अयमाशयः—यथा लोहपिण्डस्य दग्धृत्वाभावेऽपि दहनकर्तृत्वाश्रयवह्नितादात्म्याध्यासात् 'अयो दहति' इति व्यवहारस्तथा विषयाकारपरिणामान्तःकरणैक्याध्यासादात्मनोऽपि सविषयकत्वमिति । *तद्गतेति—वृत्तिगतेत्यर्थः । *तत्सम्बन्धादिति—पुरुषसम्बन्धादित्यर्थः । पुरुषचैतन्याद् वृत्तेः प्रकाश इति भावः । इदमत्र बोध्यम्—"सत्यं ज्ञानम्" ( तैत्ति० उप० २।१।१ ) इत्यादिश्रुत्या मुख्यं ज्ञानं ब्रह्मैव, वृत्तेस्तु जडान्तःकरणधर्मत्वेन मुख्यं जडत्वमेव, गौणन्तु ज्ञानत्वम् । जपाकुसुमस्फटिकयोरिव सान्निध्याद् भेदाग्रहे सति पुरुषधर्मो बुद्धावध्यस्यत इति । *तत्स्वरूपेति—चेतनस्वरूपेत्यर्थः । तत्र हेतुमाह—*स्वभावादिति—स्वधर्मादित्यर्थः । अत्रार्थे मानमाह—*तथा चेति—पुरुषधर्मो बुद्धावध्यस्यत इत्येतद्बोधकमित्यर्थः । *तदा द्रष्टुरिति—अयम्भावः—चित्तं हि प्रख्या—(तत्त्वज्ञानम्) प्रवृत्ति-स्थिति-शीलत्वात् त्रिगुणम् । यद्यपि सत्त्वप्राधान्येन प्रख्यारूपमेव चित्तं तथापि त्रिगुणनिर्मिततया गुणानाञ्च वैषम्येण परस्परविमर्दवैलक्षण्याद् विभिन्नपरिणामं सदनेकावस्थामुपपद्यते । चित्तरूपेण परिणतं सत्त्वं प्रख्यारूपम् । तत्र चित्ते सत्त्वगुणापेक्षया किञ्चिदूने रजस्तमसी मिथः समे च यदा भवतस्तदैश्वर्य्यं विषयीकरोति, तत्त्वस्य तमसा पिहितत्वादैश्वर्य्यं तत्त्वमभिमन्यमानं तत्प्रणिधित्सति । अनेन क्षिप्ताऽवस्था दर्शिता । अथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थिति तत्प्रियमात्रं भवति = शब्दा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिषु पुनरस्य निरूढं प्रेम जायते । अनेन विक्षिप्ताऽवस्था उक्ता । यदा हि रजो विजित्य तमः प्रसृतं तदा चित्तमधर्माद्युपगच्छति । अनेन मूढाऽवस्था दर्शिता । एवञ्च क्षिप्तम्, मूढम्, विक्षिप्तमिति तिस्रश्चित्तस्य भूमयो दर्शिताः । यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स 'संप्रज्ञातयोगः' इत्याख्यायते । स च चतुर्विधः—वितर्कानुगतः, विचारानुगतः, आनन्दानुगतः, अस्मिताऽनुगतश्चेति । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः । संप्रज्ञातासंप्रज्ञातसमाधिद्वयम् 'योग' शब्देनाख्यायते । तत्र योगत्वम्—पुरुषात्यन्तिकस्वरूपावस्थितिहेतुत्वे सति चित्तवृत्तिनिरोधत्वम् । चित्तवृत्तयश्च—"प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः" ( यो० द० १।६) पूर्वोक्तावस्थागताश्च । तत्र निरोधश्च—चित्तस्य स्वविषयान्निवृत्तिः । सा च भावरूपा । तत्र ध्येयसाक्षात्काररूपफलोपहितनिरोधत्वं सम्प्रज्ञातत्वम् । असंप्रज्ञातत्वञ्च—तत्त्वज्ञानसंस्कारदाहकत्वे सति सर्ववृत्तिनिरोधत्वम् । चित्तं हि स्वयमेव सर्वार्थग्रहणक्षमं विभु च । तमोरूपावरणात्सदा सर्वं न गृह्णाति । अतस्तमोवर्धकानां विषयान्तरसञ्चारवासनापापादीनां योगतः क्षये स्वयमेव ध्येयं वस्तु साक्षात्क्रियत इति योगशास्त्रसिद्धान्तः । तत्र संप्रज्ञातसमाधिना वृत्त्युत्थदुःखभोगनिवृत्तिः । असंप्रज्ञातेन तु तत्त्वज्ञानसंस्काराणां प्रारब्धकर्मणाञ्च दाहाच्छीघ्रं स्वेच्छया मोक्षः । तत्रासंप्रज्ञातसमाधिमाश्रित्याह—"तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो० द० १।३) इति । तदा = असंप्रज्ञाताऽवस्थायाम्, द्रष्टुः = पुरुषस्य, स्वरूपे = निरुपाधिकचैतन्येऽवस्थानं भवतीत्यर्थः । व्युत्थाने समाधिविरोध्यवस्थायां वृत्तिसारूप्यम् तदाह—"वृत्तिसारूप्यमितरत्र" (यो० द० १।४) इति । वृत्तयः पूर्वोक्तास्तत्सारूप्यं पुरुषस्य भवति । एतदुक्तं भवति—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य 'शान्तोऽस्मि' 'दुःखितोऽस्मि' 'मूढोऽस्मि' इत्यध्यवस्यति, इत्याह—*व्युत्थाने याश्चित्तवृत्तय इति—व्युत्थानदशायामपि पुरुषः स्वरूपे एव तिष्ठति । तदा दुःखित्वाद्यङ्गीकारे परिणामित्वापत्तिरिति वृत्त्यवच्छिन्नत्वेनैव वृत्तिसारूप्यम्, नान्यथेत्याह—*पुरुषवृत्तिश्चेति—वृत्तयश्च दीपस्य शिखा इव भङ्गुराश्चित्तस्यावस्थापरिणामा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रव्यरूपास्त्रिगुणकार्यत्वात्सुखदुःखमोहाश्रयत्वाच्छान्तघोरमूढाख्याः स्वसंयुक्तार्थाकाराः । तद्विलक्षणाश्च पुरुषस्यापि, तस्य दर्शितविषयत्वात् । विषयदर्शनञ्च—स्ववृत्त्यारूढविषयस्य प्रतिविम्बरूपेण चिति आधानम् । एवञ्च तत्प्रतिविम्बान्येव पुरुषस्य वृत्तयः । प्रतिविम्बनमपि तासु स्वीयत्वाभिमानः । नैतावता कूटस्थत्वहानिरिति बोध्यम् । सापि नातिरिक्ता, 'राहोः शिरः' इतिवत्षष्ठीत्युक्तम्—*पुरुषस्य वृत्तिश्चेति—तत्र = पुरुषे। तादृशवृत्तिसारूप्यात् पुरुषे वृत्तित्वव्यवहार इति फलति । *भोग इति—सुखदुःखसाक्षात्कार इत्यर्थः । तद्धानिः = तादृशदुःखहानिः पुरुषस्य । ननु तादृशावच्छेदे कथं प्रतिविम्बव्यवहारः ? अत आह—*अवच्छेदक इति । सादृश्यमाह—*यथा रव्यादीति । अवच्छेद्यम् = पुरुषरूपम् । तदन्तर्भावात् = उपाध्यन्तर्भावात् ।

सू०—तथा च तृतीये द्वितीयपादे व्याससूत्राणि—"अत एव चोपमा सूर्यकादिवत्" "अम्बुवदग्रहणात्तु न तथात्वम्" "वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्" ( वे० सू० ३।२।१८–२० ) इति । अत एव, यतोऽयमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः, अतस्तस्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामाश्रित्य श्रुतिषु प्रतिविम्बोपमोपादीयते इत्यर्थः । नन्वेवमपि प्रतिविम्ब एवास्तु, अत आह—अम्बुवदिति—जलवदुपाधीनां पृथग्विप्रकृष्टदेशानां ग्रहणाभावेन न तत्र प्रतिविम्बत्वमित्यर्थः । केन तर्हि धर्मेण तदुपमा तत्र ? इत्यत आह—वृद्धिह्रासेति—जलगतं हि रव्यादिप्रतिविम्बं जलवृद्धौ वर्धत इव, तद्ध्रासे ह्रसतीव, तच्चलने चलतीव, तद्भेदे भिद्यत इवेति जलधर्मानुविधायि, न तु परमार्थतः सूर्यस्य तथात्वम् । एवं परमार्थतोऽविकृतमेकरूपमपि देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान् वृद्धिह्रासादीनित्येव उभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविशेषः, प्रतिविम्बत्वेनापि ब्रह्मण उपाधिषु व्यवहार इत्यर्थः ।

(रत्न०)—वृत्त्यवच्छेदेन तद्धर्मभाक्त्वे मानमाह—*तथा चेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तृतीये = तृतीयाध्याये । ॐनिर्विशेष इति — रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यम्, न रूपादिमत् । कस्मात् ? तत्प्रधानत्वात् । निष्प्रपञ्चं ब्रह्म, आत्मतत्त्वप्रधानम्, श्रुतिबोधितत्वात्, इत्यर्थकैः "अरूपवदेव हि तत्, प्रधानत्वात्" ( वे० सू० ३।२।१४ ) इत्यादिपूर्वसूत्रैस्तत्त्वेन प्रतिपादितत्वादित्यर्थः । विशेषवत्ताम् = भेदम् । जीवेश्वरयोर्वास्तविकोऽभेदः, भेदश्चोपाधिप्रयोज्य इति भावः । ॐप्रतिबिम्ब एवेति — न तु प्रतिबिम्बोपमेति भावः । ॐन तत्रेति — सूर्यादिभ्यो हि मूर्त्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिबिम्बोदयः । न त्वात्मा मूर्तो न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात्, सर्वानन्यत्वाच्च, न प्रतिबिम्ब इति भावः । उपमाप्रयोजकं धर्मं पृच्छति — ॐकेनेति । ॐजलधर्मानुविधायीति — तथा च श्रुतिः —

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥" इति ।
( ब्रह्माण्ड-उपनि० १२ )

यथा बिम्बप्रतिबिम्बयोरुपाधिकृतो भेदो नानात्वञ्च, वास्तवस्त्वभेदस्तथा जीवेश्वरयोरपीति भावः । नत्वेतावता जीवानां प्रतिबिम्बत्वम्, विप्रकृष्टदेशानामुपाधीनामिवान्तःकरणादीनां पृथग्ग्रहणाभावेन प्रतिबिम्बव्यवहारस्यायुक्तत्वादिति भावः । 'अहम्' इत्येव प्रतीतिस्तत्र ।

अत्र "तथा च पतञ्जलेः सूत्रे" इत्यारभ्य "ब्रह्मण उपाधिषु व्यवहार इत्यर्थः" इत्यन्तो भागो बहुषु पुस्तकेषु नोपलभ्यते, न च कुञ्जिकाकारेण व्याख्यातस्तथापि कलायां व्याख्यादर्शनात्, क्वचित् पुस्तके तथा पाठदर्शनाच्चोपन्यस्तः ।

मू०—वृत्तिजन्यफलं च वृत्तिद्वारा शुद्धचेतने तस्य प्रतिबिम्बनम्, एतदेव प्रकटता । तत्सम्बन्धाच्च परसमवेतक्रियाफलाश्रयत्वाद्विषयस्य कर्मत्वम्, अन्तःकरणद्वारा पुरुषस्य वृत्त्याश्रयत्वात्कर्तृत्वम् । जानातेश्च वृत्तिविशेषे एव शक्तिः । तत्र 'दण्डी' इति ज्ञाने वृत्तिस्थदण्डाकारेण यः पुरुषस्य सम्बन्धः सा प्रकारता, दण्डत्वनिष्ठश्च सोऽवच्छेदकत्वाख्यप्रकारता, संयोग-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निष्ठः स सांसर्गिकविषयता, पुरुषनिष्ठस्स विशेष्यता । तासां परस्परमवच्छेद्यावच्छेदकभावः परेषामिवास्माकमपि । विषयतात्वञ्च—वृत्त्यनुयोगिकचेतनसम्बन्धविशेषनिष्ठं सम्बन्धविशेषत्वमखण्डं यत्सम्प्रतिपन्नं तदेव ।

( रत्न० )—'घटं जानाति' इत्यादौ 'ज्ञानमात्रं धात्वर्थः' इति नैयायिकमतासङ्गतत्वं सूचयन्नाह—*वृत्तिजन्यफलमिति—अत्र 'वृत्तिजन्य' इत्युक्त्या ज्ञानरूपाया वृत्तेर्व्यापारत्वं सूचितम्, व्यापारस्यैव फलजनकत्वात् । *वृत्तिद्वारेति—वृत्तौ सत्यामेव प्रतिबिम्बनाद् वृत्तिजन्यत्वं तस्य, न तु वास्तविकम्, नित्यत्वात् । शुद्धचेतने=ज्ञानस्वरूपात्मनि । तस्य=विषयस्य । एतदेव=प्रतिबिम्बनमेव । 'एव' शब्देन प्रकटतायाः पदार्थान्तरत्वव्युदासः । अयं भावः—विषयेन्द्रियसंयोगस्थले सावयवमन्तःकरणं चक्षुरादिद्वारा निर्गत्य विषयदेशं गत्वा विषयाकारं भवति । स एव विषयाकाररूपः परिणामः 'वृत्तिः' इत्युच्यते । अन्तःकरणस्य विषयाकारपरिणामो हि तद्विषयावरकमज्ञानं निवर्त्तयति । ततश्च चेतने यत्तद्वृत्त्युपहितत्वं तदेव 'प्रमा' इत्युच्यते । तत्करणत्वाद् वृत्तेः प्रमाणत्वम् । आवरकाज्ञाननिवृत्तौ यत्र वृत्त्यवच्छिन्नचैतन्यस्य योग्यविषयावच्छिन्नचैतन्यस्य चैककालिकत्वमेकदेशस्थत्वं तत्र तयोरैक्याध्यासात्प्रत्यक्षत्वम्, न तु विषयेन्द्रियसन्निकर्षजन्यत्वमात्रेण ज्ञानस्य प्रत्यक्षत्वम् । अत एव 'तत्त्वमसि' इत्यादिवाक्यजन्यज्ञानस्थलेऽपि आत्मन एव विषयत्वेनान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य आत्मरूपविषयावच्छिन्नचैतन्यस्य च शरीररूपैकदेशस्थत्वेनैककालिकत्वेन च प्रत्यक्षत्वव्यवहारः । एवञ्च यत्र यत्रेन्द्रियसन्निकर्षद्वारा विषयाकारवृत्तिरन्तःकरणस्य, तत्र सर्वत्र वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्य चैककालिकत्वमेकदेशस्थत्वञ्चेति प्रत्यक्षत्वमेव । अनुमित्यादिस्थले तु व्याप्त्यादिदर्शनेन व्याप्तिज्ञानादिजन्यव्यापकाद्याकारवृत्त्युपहितत्वमात्रं प्रमातृचैतन्ये । तत्रान्तःकरणस्य बहिर्निर्गमनाभावेन वृत्त्यवच्छिन्नचैतन्य-विषयावच्छिन्नचैतन्ययोरेकदेशस्थत्वाभावान्नैक्याध्यास इति विशेषः । वृत्तेः वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाङ्गीकारात्तस्या अपि प्रत्यक्षत्वम् । अनुमित्यादिस्थलेऽपि वृत्तेः प्रत्यक्ष-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वमेव, तत्र वृत्त्यवच्छिन्नचैतन्य—वृत्तिरूपविषयावच्छिन्नचैतन्ययोः प्रमातृचैतन्यरूपैकदेशस्थत्वादिति । *प्रकटतेति — मीमांसकैः चक्षुरादीनां ज्ञानद्वारा विषये प्राकट्यजनकत्वं स्वीक्रियत इति तन्मते फलम् 'प्रकटता' इत्युच्यते । *तत्सम्बन्धाच्चेति — शुद्धचेतनसम्बन्धाच्चेत्यर्थः । *परसमवेतेति — पुरुषसमवेतवृत्तिरूपव्यापारजन्यप्रतिबिम्बनरूपफलाश्रयत्वादित्यर्थः । *कर्तृत्वमिति — अन्तःकरणपरिणामरूपवृत्तेः पुरुषेऽध्यासात्कर्तृत्वम् । तथा चान्तःकरणावच्छिन्नस्यैव पुरुषस्य कर्तृत्वम्, चेतनेनागृहीतभेदस्यैवान्तःकरणस्य वृत्त्याकारपरिणामनशीलत्वात् । तस्माच्छुद्धचेतनस्य कर्तृकर्मत्वाद्यभाव एव । नन्वहमर्थस्यैव ज्ञातृत्वेनात्मनस्तदभावाज्जडत्वापत्तिरिति चेत्, न, तस्य ज्ञानरूपत्वेन ज्ञानभेदरूपजडत्वस्याभावात् । न च विषयावभासकत्वस्यैव ज्ञानरूपतया मोक्षदशायां विषयानवभासात्तदनापत्तिरिति वाच्यम्, अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वात् । ननु वृत्त्याश्रयत्वे धातुवाच्यव्यापारानाश्रयतया कर्तृत्वानापत्तिरत आह — *जानातेश्चेति । *वृत्तिविशेष इति — तथा च तस्यैव धात्वर्थव्यापारत्वेन तदाश्रयतया कर्तृत्वमिति भावः । 'दण्डी' इति ज्ञाने प्रकारत्वाद्युपपादयति — *तत्रेति । *वृत्तिस्थेति — वृत्तिसंयुक्तस्यैव दण्ड्यादेः प्रत्यक्षत्वाद् वृत्तिस्थत्वम् । *दण्डाकारेणेति — दण्डनिष्ठो यः पुरुषस्य सम्बन्धः स एवात्र प्रकारता । *सेति — विधेयप्राधान्यात् स्त्रीत्वनिर्देशः । *अवच्छेदकत्वेति — विशेषणे यद्विशेषणं तन्निष्ठविषयताया अवच्छेदकतारूपत्वात् । सः = पुरुषसम्बन्धः । *विषयतेति — संसर्गतारूपेत्यर्थः । सः = चेतनसम्बन्धः । तासाम् = प्रकारतादिविषयतानाम् । *अवच्छेद्यावच्छेदकभाव इति — यथा 'दण्डी' इति ज्ञाने समवायनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावद्दण्डत्वनिष्ठावच्छेदकतानिरूपिता संयोगनिष्ठावच्छेदकतानिरूपिता च या दण्डनिष्ठा प्रकारता तादृशप्रकारताऽवच्छिन्ना या समवायनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावत्पुरुषत्वनिष्ठावच्छेदकतानिरूपितपुरुषनिष्ठा विशेष्यतेति । एवं तादृशपुरुषनिष्ठविशेष्यताऽवच्छिन्ना या दण्डनिष्ठा उक्तप्रकारतेत्येवंरूपेणेत्यर्थः । परेषामिव = नैयायिकादीनामिव । अस्माकमपि = वैयाकरणानामपि । *वृत्त्यनुयोगिकेति—वृत्तिनिष्ठो यश्चेतनसम्बन्धः स एवात्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विषयता । अत एव "ज्ञानस्य विषयेण सम्बन्धो विषयता, सा च ज्ञाननिष्ठा विषयविशिष्टज्ञानस्वरूपा" इति बौद्धाधिकारदीधितिः । एवञ्च विषयस्य नष्टत्वेऽपि ज्ञानस्य विद्यमानत्वाद् भवति विषयता । न च ज्ञानस्यापि तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वाद्विषयाभावे विषयत्वासम्भवः, स्वजन्यसंस्कारद्वारेण तत्सत्त्वात् । ॐअखण्डमिति—एतेन एकत्वं तस्य सूचितम् । विषयतायाः प्रकारताविशेष्यताभेदेन भिन्नतया घटविशिष्टबुद्धिं प्रति घटविषयकज्ञानस्य हेतुत्वेऽनुगतरूपेण विषयताया निवेशो न स्यात् । तत्तद्विषयतायाः निवेशेन कार्य्यकारणभावे एकस्या विषयताया निवेशेऽन्यविषयताशालिज्ञानाद् बोधो न स्यात् । तस्मात्सकलविषयतागतमेकमेव विषयतात्वमङ्गीकरणीयम् । तथा च विषयतात्वेन रूपेण घटनिष्ठसकलविषयताया निवेशेनानुगतकार्य्यकारणभावः सम्भवतीति भावः । ॐसम्प्रतिपन्नमिति — निर्णीतमित्यर्थः ।

मू०—न्यायनये तु तत्तद्विषयविशिष्टज्ञानं विशेष्यताऽऽदिरूपम्, अतिरिक्तमेव वा तत् । विषयतात्वं तु त्रितयसाधारणमतिरिक्तं स्वीकार्य्यम् । तत्तद्वृत्त्यारूढाकारस्य बाह्यघटाद्याकाराविभागेनैव ज्ञानविषयता । तादृशाकारत्वमेव ज्ञाने इच्छादौ च विषयिता ।

( रत्न० )— ॐन्यायनये त्विति — पूर्वमते वृत्त्यनुयोगिकचेतनसम्बन्धरूपा विषयतोक्ता, अत्र तु भिन्नैवेति 'तु' शब्दो विशेषं द्योतयति । ॐविषयविशिष्टज्ञानमिति—'घटवद्भूतलम्' इत्यत्र भूतलनिष्ठा विशेष्यता भूतलविशिष्टज्ञानरूपा । एवमेव तत्तद्विषयनिष्ठा विषयता तत्तद्विषयविशिष्टज्ञानरूपैवेति बोध्यम् । विषयतायाः केवलविषयरूपत्वे 'घटो विषयतावान्' इत्याधाराधेयभावानुपपत्तिः । अभेदस्याप्याधाराधेयभावनियामकत्वे 'घटो घटवान्' इत्याद्यापद्येत । किञ्च, विषयतायाः विषयरूपत्वे घटत्वप्रकारकप्रमानिरूपितायाः पटत्वप्रकारकभ्रमनिरूपितायाश्च विषयताया ऐक्यप्रसक्त्या घटत्वप्रकारकप्रमाया भ्रमत्वं पटत्वप्रकारकभ्रमस्य च प्रमात्वं स्यात् । एवं 'घटवद्भूतलम्' 'घटभूतलयोः संयोगः' इति ज्ञानयोरप्यैक्यप्रसङ्गः । यदि तु संयोगस्य संयोगत्वेन भानाभानाभ्यां वैलक्षण्यमादाय भेद इत्युच्यते, तदा 'घटवद्भूतलम्, संयोगश्च' 'घटभूतलसंयोगाः'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति ज्ञानयोर्वैलक्षण्यं दुरुपपादम् । ज्ञानरूपत्वे 'घटपटौ' इत्यादिसमूहालम्बनात्मकैकज्ञानविषयघटपटादिरूपनानाविषयनिष्ठविषयतानामेकत्वेन तादृशज्ञानानां घटत्वपटत्वाद्यवच्छिन्नघटपटादिनिष्ठविषयताकतया भ्रमत्वापत्तिः । किञ्च, ज्ञानात्मकत्वे ज्ञानाविषयकालस्यापि ज्ञानविषयत्वापत्तिः, कालनिष्ठतत्सम्बन्धस्यापि तत्स्वरूपानतिरिक्तत्वात् । घटानुयोगिकघटज्ञानप्रतियोगिकविषयत्वस्य कालानुयोगिकघटज्ञानप्रतियोगिककालिकसम्बन्धस्य च घटज्ञानस्वरूपतयैक्यात् 'घटज्ञानविषयतावान् कालः' इति प्रतीत्यापत्तिरिति भावः । एवञ्च 'विषयत्वं पदार्थान्तरमेव' इति नव्याः । यत्तु—'विषयता विषयज्ञानोभयरूपा' इति प्राञ्चः, तदपि न, 'घटपटौ' इति समूहालम्बनात्मकज्ञानस्य तज्ज्ञानपटोभयात्मकपटत्वावच्छिन्नपटनिष्ठविषयताघटकत्वेन घटत्वावच्छिन्नघटनिष्ठतज्ज्ञानघटोभयात्मकविषयताघटकत्वेन च घटनिष्ठा या पटत्वावच्छिन्ना तज्ज्ञानरूपा विषयता तन्निरूपकत्वेन भ्रमत्वापत्तेर्दुर्वारत्वादित्यन्यत्र विस्तरः । विशेष्यतादीनां केवलभूतलादिस्वरूपत्वे 'घटवद् भूतलम्' इति ज्ञानानन्तरम् 'भूतलप्रकारकज्ञानवानहम्' इति अनुव्यवसायस्याप्यापत्तिरित्याह—*तत्तद्विषयविशिष्टेति—तथाच घटावच्छेदेन ज्ञानस्य प्रकारतारूपत्वम्, भूतलावच्छेदेन विशेष्यतारूपत्वमिति भावः । अत्र 'ज्ञानम्' इतीच्छाया उपलक्षणम्, अन्यथा ज्ञानद्वारेच्छाया विषयतास्वस्वीकारे ज्ञाननाशे सविषयकत्वं भज्येत । यत्तु—घटादिविषयकज्ञानजन्यत्वमेवेच्छाया विषयत्वमिति, तन्न, ईश्वरेच्छायाः नित्यत्वेन तत्राव्याप्तेः । वस्तुतस्तु—तद्व्यक्तित्वेन सम्बन्धत्वं न सम्बन्धित्वमिति रूपभेदस्यावश्यकतया विषयताया एव ज्ञानादतिरिक्तत्वं न्याय्यम् । *विशेष्यतादिरूपमिति—विषयविशिष्टज्ञानमेव विशेष्यतादीत्यर्थः । *अतिरिक्तमेवेति—ज्ञानविषयोभयभिन्नं पदार्थान्तरमेवेत्यर्थः । *त्रितयसाधारणमिति—संसर्गता-प्रकारता-विशेष्यतात्रितयसाधारणमित्यर्थः । ननु बुद्धिस्थवृत्तिविषयस्यैव घटादेर्बुद्धिविषयत्वाद् बाह्यस्य भानं न स्यात्, अत आह—*अविभागेनैवेति—'बाह्यार्थसत्त्वे' इति शेषः । तदभावे तु केवल बुद्धिस्थस्यैव, यथा 'नृश्रृङ्गम्' । *तादृशाकारत्वमेवेति—यथा विषयनिष्ठा विषयता विषयविशिष्टज्ञानरूपा पदार्थान्तरं वा, एवमेव ज्ञाने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्छादिनिष्ठा विषयिताऽप्युक्तरीत्या ज्ञानेच्छादिरूपैव। न चोभयोरेकरूपत्वे तयोरैक्यापत्तिः, आधारभेदेन भेदात्।

मू०—एवं पुरुषोऽपि वृत्त्यारूढः पुरुषे प्रतिबिम्बत इति 'अहम्' इति ज्ञानोपपत्तिः, 'आत्मानमात्मना जानामि' इत्याद्युपपत्तिश्च, 'अहमिति जानामि' इत्याद्युपपत्तिश्च। बिम्बप्रतिबिम्बयोर्वास्तवभेदाभावात्स्वातिरिक्ताप्रकाश्यत्वरूपं स्वप्रकाशत्वं पुरुषस्योपपन्नम्। एतत्सर्वं साक्षिभास्यमिति तन्निष्ठप्रकारत्वावच्छिन्नतद्विशेष्यताकत्वरूपं प्रामाण्यमपि ज्ञानस्य स्वतोग्राह्यमेव। औत्तरकालिकबाधे तु तदंशे भ्रमत्वकल्पनम्। यथा च प्रदीपो रूपादिकं प्रकाशयन्नात्मानमपि प्रकाशयति, एवं ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति, एवं शब्दोऽपि; ज्ञान-शब्द-प्रदीपानां त्रयाणामपि स्वप्रकाशत्वात्।

पुरुषस्य ज्ञानशब्दादीनाञ्च स्वप्रकाशत्वोपपादनम्

(रत्न०)—बाह्यज्ञानक्रमं निरूप्यान्तरज्ञानक्रममाह—*एवमिति—बाह्यघटादिवदित्यर्थः। पुरुषोऽपि = चेतनोऽपि। *वृत्त्यारूढ इति—'अहम्' इत्याकारान्तःकरणवृत्त्यारूढ इत्यर्थः। सुखादिप्रत्यक्षस्थलेऽपि सुखाद्याकारान्तःकरणवृत्तिस्थत्वेनैव जीवसाक्षिरूपं प्रत्यक्षत्वं तेषाम्। न च सुखादीनां केवलसाक्षिवेद्यत्वप्रवादभङ्गः, तत्प्रवादस्यान्तःकरणभिन्नेन्द्रियादिप्रमाणव्यापारमन्तरैव साक्षिवेद्यत्वमात्रेणाभ्युपगमात्। अत एव 'अहम्' इति प्रत्यक्षेऽहमाकारान्तःकरणवृत्तिरङ्गीकृता साम्प्रदायिकैः, वृत्त्यतिरिक्तान्तःकरणधर्माणामपि साक्षिभास्यत्वे संस्काराणामपि साक्षिभास्यत्वापत्तेः। तथा च 'अहम्' इत्याकारिकायां वृत्तौ चेतनस्य पुरुषस्य प्रतिबिम्बः। अत एव चैतन्यभानमप्युपपद्यते, वृत्तिं विनैव स्वदर्शने कर्तृकर्मविरोधापत्तेः। बुद्धौ सम्बन्ध एव चेतनस्य चिदाकारताबुद्धेश्च छायाऽऽपत्तिः। अयमेव च बुद्धिपुरुषयोः सम्बन्धः परस्पराध्यास इत्युच्यते। चेतनसम्बद्धबुद्धिवृत्तिव्याप्यत्वमेव च ज्ञेयत्वं घटादिसाधारण आत्मन्यपीति फलितमिति कलाकारः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

※पुरुष इति — चिच्छायासम्बन्धाद् बुद्धितत्त्वे पुरुषच्छायाऽऽविर्भवती-त्यर्थः। वृत्तिविषयस्य पुरुषस्यापि घटादिवद् दृश्यत्वादिति भावः। ※ज्ञानोपपत्तिरिति — आत्मनो ज्ञानविषयत्वोपपत्तिरित्यर्थः। 'आत्मानं जानाति' इत्यादावेकस्यैव कर्तृकर्मत्वोपपत्तिरिति भावः। ननु आत्मनो ज्ञानकर्मत्वस्वीकारे वृत्तिप्रकाश्यत्वेन स्वप्रकाश्यत्वानुपपत्तिः, 'न जानामि' इत्यनुभवानुरोधेनाज्ञातत्वस्वीकारे स्वयंज्योतिष्ट्वभङ्ग इति चेत्, सत्यम्, "अन्यदेव तद्विदितादथोऽविदितादधि" (केनोप० १।३) इति श्रुत्या तस्य ज्ञाताज्ञातविलक्षणत्वात्। 'आत्मानमहं जानामि' इत्यनुभवस्य का गतिरिति चेत्, शुद्धस्यैवात्मनः स्वप्रकाशत्वात्। यद्यपि ज्ञानेच्छा-दीनां सविषयकत्वनियमस्तथापि सविषयत्वं विषयसम्बन्धः, स च न वास्तविकः किन्त्वाध्यासिकः। उपाधिविशिष्टस्य तु ज्ञानकर्मत्वेऽपि विरोधा-भावः। तदेतद् ध्वनयन्नात्मनः स्वप्रकाशत्वमाह — ※आत्मानमिति — अतःकरणावच्छिन्नचैतन्यं जीवः। अन्तःकरणोपहितचैतन्यं † साक्षी।

---

† नन्वयुक्तं जीवसाक्षिलक्षणम्, प्रमातृ-प्रमाण-तत्फलव्यतिरेकेण साक्षिणोऽ-सिद्धेः। नहि लक्षणेनैव पदार्थसिद्धिः, सिद्धस्यैव पदार्थस्य लक्षणप्रणयनात्। न च प्रत्यक्षम्, वादिविवादाभावप्रसङ्गात्। न च विषयावभासकाभावे जगदान्ध्य-प्रसक्त्या तदवभासकतया तस्य सिद्धिरिति वाच्यम्, प्रमाणचैतन्यस्य विषयाव-भासकरूपत्वाच्चक्षुरादेस्तत्तत्करणत्वेन प्रमातुश्च तदाश्रयत्वादतिरिक्तस्य विषयाव-भासकस्याभावादनपेक्षितत्वाच्च। तस्मात्प्रमाणप्रयोजनयोरभावात् प्रमातृभिन्नः कश्चन साक्षी दुर्वच इति चेत्, उच्यते—जीवसाक्षी तावदवश्यमङ्गीकर्तव्यः, अन्यथा विषयाननुसन्धानापत्तिः। न चान्यथोपपत्तिः, चक्षुरादिकरणतज्जन्यज्ञानानां नानात्वेनाननुगततया सर्वविषयानुसन्धातृत्वानुपपत्तेः। प्रमातुश्चानुगतत्वेऽपि स्वानु-सन्धानार्थमन्यापेक्षत्वात्। साक्षिणस्तु ब्रह्माभेदेन स्वप्रकाशतया निरपेक्षस्यैव स्वपर-विषयस्यानुसन्धानोपपत्तेः। ननु जीवसाक्षिणो ब्रह्माभिन्नत्वेन स्वप्रकाशत्वे सर्वविषयानुसन्धातृत्वापत्तौ चैत्रावगते मैत्रस्याप्यनुसन्धातृत्वापत्तिरिति चेत्, किं मैत्रसाक्षिणः चैत्रावगतविषयानुसन्धातृत्वं स्वप्रकाशचैतन्याभेदादापाद्यते, आहोस्वि-त्सर्वज्ञत्वादिविशिष्टचैतन्याभेदात्, चैत्रोपहितचैतन्याभेदाद्वा? नाद्यः, तस्य निर्वि-कारतया तदभेदस्य सर्वविषयानुसन्धानानापादकत्वात्। न द्वितीयः, अन्तः-करणोपहितस्य जीवसाक्षिणः परमेश्वरेण मायाविशिष्टेन मायोपहितेन वाऽत्यन्तभेद-सिद्धेः। न तृतीयः, चैत्रमैत्रान्तःकरणयोर्भिन्नदेशस्थत्वेन तदुपहितचैतन्ययोरभेद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदा चैतन्येऽन्तःकरणस्य विशेषणत्वं तदा जीवत्वम्, यदा तत्रान्तःकरणस्योपाधित्वं तदा साक्षित्वमित्यन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः। कार्यान्वयि वर्तमानं सद् व्यावर्तकं यत् तद् 'विशेषणम्' इत्युच्यते। यथा 'रूपविशिष्टो घटोऽनित्यः' इत्यत्र रूपमनित्यत्वरूपकार्य्यान्वयि, रूपस्याप्यनित्यत्वाद्रूपरहितस्य व्यावर्तकं चेति रूपं विशेषणम्। तथा च कार्य्यान्वयित्वे सति वर्तमानत्वे च सति व्यावर्तकत्वं विशेषणत्वम्। कार्य्यानन्वयी व्यावर्तको वर्तमानश्च 'उपाधिः' इत्युच्यते। यथा 'कर्णशष्कुल्यवच्छिन्नं नभः' इत्यत्र कर्णशष्कुली उपाधिः। अत्र कर्णशष्कुली नहि नभस्त्वाश्रयः कार्य्यानन्वयिनीति। 'कार्य्य'पदेनोभयत्रान्वयिताऽवच्छेदको ग्राह्यः। इतरनभसो व्यावर्तिका वर्तमाना चेत्युपाधित्वं तस्याः। एवमेव जीवतत्साक्षिणोर्लक्षणेऽन्तःकरणस्य विशेषणत्वमुपाधित्वं चोपपादनीयम्। तथाहि—अन्तःकरणस्य कर्तृत्वादिरूपजीवत्वान्वयित्वाद्विशेषणत्वम्। अन्तःकरणस्य जडत्वेन विषयावभासकत्वरूपसाक्षित्वानन्वयित्वादुपाधित्वम्। तत्रेन्द्रियाणां तज्जन्यज्ञानानाञ्चानुसन्धाता यद्यपि प्रमातैव, तथापि प्रमातुरप्यनुसन्धानार्थं साक्षिस्वीकारः। साक्षी तु ब्रह्माभिन्नः स्वप्रकाशतया निरपेक्ष एव स्वपरविषयाननुसंधत्ते इति वृत्तिरूपं ज्ञाने तद्गतप्रामाण्यञ्च तस्य विषयः। ज्ञानस्यापि स्वप्रकाशत्वमाह—*अहमिति—ननु पुरुषस्य साक्षिज्ञानविषयत्वे † स्वप्रकाशत्व-

---

शङ्काऽनवकाशात्। तस्माद्विषयानुसंधानानुपपत्तिः, प्रमात्रनुसन्धानाच्च साक्षिणि प्रमाणम्। एवं "साक्षी चेता केवलो निर्गुणश्च" (श्वेता० उप० ६।११) इत्यागमोऽपि प्रमाणम्। न चेश्वरविषयः सः, ईश्वरस्य मायाविशिष्टत्वेन 'केवलो निर्गुणश्च' इति विशेषणानुपपत्तेः। तस्माज्जीवातिरिक्तः साक्षी स्वीकार्य्यः, स च प्रत्यात्मभिन्न इति तत्त्वम्।

† अथ कोऽयं स्वप्रकाशशब्दार्थः? किम् स्वश्चासौ प्रकाशश्च स्वप्रकाशः। (१) स्वस्य स्वयमेव प्रकाशत इति वा। (२) सजातीयप्रकाशाप्रकाश्यत्वं वा। (३) स्वसत्तायां प्रकाशव्यतिरेकविरहितत्वं वा। (४) स्वव्यवहारहेतुप्रकाशकत्वं वा। (५) ज्ञानाविषयत्वं वा। (६) ज्ञानविषयत्वे सत्यपरोक्षत्वं वा। (७) व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा। (८) स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वं वा। (९) अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा। (१०) तद्योग्यत्वं वा? (११) नाद्यः, ज्ञानेऽतिव्याप्तेः। न द्वितीयः, कर्मकर्तृत्वविरोधेन लक्षणस्यासंभवात्। न तृतीयः;

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भङ्ग इत्यत आह — *बिम्बप्रतिबिम्बयोरिति — कलितभेदस्याप्रतिबन्धकत्वादाह — *वास्तवेति — अयं भावः — सूर्य्यो यथा बिम्बरूपेण प्रकाशकः, प्रतिबिम्बरूपेण च प्रकाश्यः । एवं पुरुषः स्वरूपेण ज्ञाता, स्वसम्बद्धवृत्तिसम्बन्धेन च ज्ञेय इति प्रकारभेदान्न कर्तृकर्मविरोधः । आत्मनस्तद्रूपस्वप्रकाशत्वश्चानन्यप्रकाशफलोपधानकत्वम् । तदुक्तं योगभाष्यकृता—"पुरुष एव तु तं प्रत्ययं स्वात्मालम्बनं पश्यति, न तु पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते "विज्ञातारमरे केन विजानीयात्" (बृह० २।४।१४) (यो० भा० ३।३५) इति । केन प्रकाशान्तरेण विज्ञातारं लोको विजानीयादिति श्रुत्यर्थ इति तद्व्याख्यातारः । चित्तस्यैवात्मत्वं वदतो बौद्धस्य मते "न तत्स्वाभासं दृश्यत्वात्" (यो० द० ४।१९) इति सूत्रेण कर्तृकर्मविरोध उपन्यस्तः पतञ्जलिना । तथा हि — चित्तमात्मा भवेद्

---

प्रदीपादावतिव्याप्तेः । नापि चतुर्थः, सुखादावतिव्याप्तेः । न पञ्चमः, प्रदीपादावनुव्यवसाये चाव्याप्तेः । नापि षष्ठः, लक्षणस्यासंभवात् । नापि सप्तमः, असम्भवादात्मन्यतिव्याप्तेश्च । नाप्यष्टमः, उक्तदोषात् । नापि नवमः, प्रदीपघटादावतिव्याप्तेः । नापि दशमः, कथाऽनवतारप्रसङ्गात्, सुषुप्त्यादावतिव्याप्तेश्च । नाप्येकादशः, व्यवहारयोग्यताया धर्मत्वेऽपसिद्धान्तापत्तेः, स्वरूपत्वे सप्रतियोगिकत्वप्रसङ्गाच्च । अत्रोच्यते—न लक्षणासम्भवः, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतायास्तल्लक्षणत्वात् । अपरोक्षव्यवहारयोग्यत्वञ्च—योग्यत्वात्यन्ताभावानधिकरणत्वं बोध्यम् । तेन नाव्याप्तिर्नाप्यपसिद्धान्तः । लक्षणसमन्वयश्च—ज्ञानीयविषयत्वाभाववत्त्वमवेद्यत्वम्, तच्च ब्रह्मणि सुलभम्, तस्याज्ञेयत्वस्वीकारात् । नन्वनुमानागमादिजन्यज्ञानविषयत्वेन तत्त्वासम्भव इति चेत्, न, अभिव्यक्तं विषयावच्छिन्नं यच्चैतन्यं तद्रूपफलव्याप्यत्वलक्षणवेद्यत्वस्य लक्षणे निविष्टत्वात् तस्य च तत्राभावात् । तादृशचैतन्याभिव्यक्तिश्च—इन्द्रियद्वाराऽर्थसन्निकृष्टमनःपरिणामविशेषः । स च नादृष्टार्थेषु सम्भवति, तेषामिन्द्रियायोग्यत्वात् । अनुमानादिजन्यज्ञानस्थले तु तत्तत्प्रमाणबलात् सामान्यतस्तदाकारधीवृत्तिव्याप्यत्वमात्रं ब्रह्मणः, न तु फलव्याप्यत्वम्; ब्रह्मणः परोक्षत्वेऽपि व्यवहारदशायां कल्पिताया अपरोक्षज्ञानयोग्यतायाः स्वीकाराद् विशेष्यांशोऽपि तत्र । न च मोक्षदशायामपरोक्षयोग्यत्वाभावादव्याप्तिः, तादृशयोग्यत्वरूपधर्माङ्गीकारेऽपसिद्धान्तापत्तिश्चेति वाच्यम्, योग्यत्वात्यन्ताभावानधिकरणत्वस्य विवक्षितत्वात्, काल्पनिकधर्माणां संसारमात्रदशायामभ्युपगमाच्च । न चेदमदृष्टधर्मादिष्वपि सत्त्वादतिव्याप्तम्, तेषामपि योगिप्रत्यक्षेण तत्त्वाभावादित्यन्यत्र विस्तरः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि, स्वसंवेदनं स्यात्, नत्वेतदस्ति । तद्धि परिणामितया नीलादिवदनुभवव्याप्यम्, यच्चानुभवव्याप्यं न तत्स्वाभासं भवितुमर्हति, स्वात्मनि वृत्तिविरोधात्; न हि तदेव क्रिया च कर्मकारकञ्च । न हि पाकः पच्यते छिदा छिद्यते इति । तत्र स्वाभासत्वम्—स्वगोचरवृत्तिं विना स्वग्राह्यत्वम् । तां विना साक्षात्स्वभासत्वे कर्मत्वकर्तृत्वविरोध इति भावः । आत्मा तु दृश्यभिन्नो द्रष्टृत्वात् । फलव्याप्यत्वरूपं प्रकाश्यत्वम् । आत्मनो द्रष्टव्यत्वञ्च—वृत्तिव्याप्यत्वमेव न फलव्याप्यत्वरूपम्, स्वप्रकाशस्य प्रकाशापेक्षाविरहात् । वृत्तिव्याप्यत्वञ्च — फलीभूतचेतनाव्याप्यत्वे सति वृत्तिव्याप्यतयाऽपरोक्षव्यवहारयोग्यत्वम् प्रागुक्तमेव । न चैवं तत्र श्रुत्यादीनां प्रामाण्यं न स्यात्, प्रमाऽऽख्यफलाजनकत्वादिति वाच्यम्, पुरुषनिष्ठाऽविद्यानिवृत्तेरेव तत्फलत्वात्, प्रमाख्यफलाभावेऽपि अक्षतेरिति । जडवैलक्षण्यमेव हि ज्ञानत्वमिति स्वप्रकाशत्वेऽपि न घटादिवज्जडत्वप्रसङ्गः । न हि अप्रकाशितो दीपो घटादिकं प्रकाशयति । ॐबिम्बेति—बिम्बम् = अन्तःकरणोपहितं साक्षिचैतन्यम् । प्रतिबिम्बम् = अन्तःकरणावच्छिन्नं प्रमातृचैतन्यम् । एवञ्चान्तःकरणकृत एव तयोर्भेदः । वस्तुतस्तु तयोरभेद एव इत्याह—ॐवास्तवभेदाभावादिति । ॐस्वातिरिक्तेति — स्वम् = प्रमातृचैतन्यं तदतिरिक्तं न हि साक्षिचैतन्यमिति साक्षिचैतन्यप्रकाश्यत्वेऽपि तदतिरिक्ताप्रकाश्यत्वसत्त्वात् स्वप्रकाशत्वाक्षतिः । ॐएतदिति — घटादिकं पुरुषादिकञ्चेत्यर्थः । साक्षिभास्यम् = साक्षिवेद्यम् । ॐतन्निष्ठेति —तद्धर्मनिष्ठा या प्रकारता तादृशप्रकारताऽवच्छिन्ना या तद्धर्मवन्निष्ठा विशेष्यता तादृशविशेष्यतानिरूपकत्वरूपं ज्ञाने प्रामाण्यम् । यथा 'घटः' इत्याकारकज्ञाने घटत्वनिष्ठप्रकारत्वावच्छिन्नघटत्ववन्निष्ठविशेष्यतानिरूपकत्वम् । ॐस्वतो ग्राह्यमिति-स्वतोग्राह्यत्वञ्च–दोषविशेषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम् । स्वम् = प्रामाण्यम् । तदाश्रयः = वृत्तिज्ञानम् । तद्ग्राहकम् = साक्षिज्ञानम् । तद्रूपा या सामग्री तद्ग्राह्यत्वं वृत्तिज्ञानगतप्रामाण्यस्येति । साक्षिज्ञानेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते इति भावः । इच्छागतप्रामाण्यस्य स्वतो ग्राह्यत्वं नास्तीत्युक्तम् — ॐज्ञानस्य स्वतो ग्राह्यत्वमिति । ननु प्रामाण्यस्य स्वतो ग्राह्यत्वेऽनभ्यासदशायामुत्पन्नज्ञाने 'इदं ज्ञानं प्रमाअप्रमा वा' इति



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संशयो न स्यात्, प्रामाण्यविषयकज्ञानस्य निश्चयात्मकत्वेन प्रतिबन्धकसद्भावादिति चेत्, न, तत्र संशयजनकदोषसत्त्वेन प्रामाण्यनिश्चयाभावात् । अत एव स्वतो ग्राह्यत्वलक्षणे 'दोषविशेषाभावे सति' इति विशेषणमुक्तम् । ॐएवेति—अनेन मतान्तरव्यवच्छेदः । ॐऔत्तरकालिकेति—'इदं ज्ञानमप्रमा' इति बाधनिश्चयसत्त्वे तु पूर्वज्ञानस्य भ्रमत्वं कल्प्यत इति भावः । तदंशे = ज्ञानांशे । ॐआत्मानमपीति—प्रदीपमपीत्यर्थः । एवं च 'घटमहं जानामि' इत्यादिस्थले—घटः, ज्ञानम्, आत्मा चेति त्रितयं ज्ञाने विषयीक्रियते । प्राभाकराणां मते इदमेव 'त्रिपुटीप्रत्यक्षम्' इत्युच्यते । न्यायनये तु 'घटविषयकज्ञानवानहम्' इत्यनुव्यवसायात्मकं ज्ञानं त्रितयं विषयीकरोति । यद्यपि तत्र विषयस्य न हि साक्षाद् भानं तथापि परम्परया त्रितयविषयकत्वमस्त्येव । ननु ज्ञानोत्पादिकायाः चक्षुरादिसन्निकर्षादिरूपसामग्र्या ज्ञाने ज्ञानविषयकत्वसंपादकत्वं दुर्वचम्, तदानीं ज्ञानरूपविषयाभावेन चक्षुरादिसन्निकर्षाभावादिति चेत्, न, यथा कपालसंयोगो द्रव्यत्वादिविशिष्टमेव घटमुत्पादयति तथा प्रकाशत्वविशिष्टज्ञानोत्पत्तौ बाधकाभावात् । ॐशब्दोऽपीति—अर्थादिकं प्रकाशयन्नात्मानमपि (शब्दमपि) प्रकाशयतीति पूर्वेणान्वयः । प्रकाशने कारणमाह—ॐप्रकाशत्वादिति—ज्ञानस्य स्वप्रकाशत्वञ्चानुव्यवसायाविषयत्वेन बोध्यम् । अनुव्यवसायज्ञानन्तु अनुव्यवसायात्मकज्ञानप्रकाश्यमेव । ज्ञानस्य प्रकाशत्वे "तमेव भान्तमनुभाति सर्वम्" (कठोप० ५।१५) इति श्रुतिरेव प्रमाणम् ॥

मू०—अत एव ज्ञाने सति 'जानामि न वा' इति संशयस्य 'न जानामि' इति विपर्ययस्य चाननुभवः । अनुव्यवसायस्य ज्ञानग्राहकत्वे तु अनवस्था । 'घटं जानामि' इतिवत् 'ज्ञानं जानामि' इत्यनुभवाभावाच्च । अभेदेऽपि कर्मकर्तृभावस्य विषयविषयिभावस्य च 'स्वप्रकाशः' इत्यादिव्यवहारानुरोधेन स्वीकारे बाधकाभावादित्यन्यत्र विस्तरः ।

(रत्न०)—ॐअत एवेति—'ज्ञानमात्मा' इति मते ज्ञानमात्माश्रयमिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नैयायिकादिमतेऽपि ज्ञानस्य स्वप्रकाशत्वादेवेत्यर्थः । *ज्ञाने सतीति — 'अयं घटः' इति ज्ञाने जाते घटे प्रकाशिते तद्विषयकज्ञानस्यापि प्रकाशाद् घटविषयकज्ञानविषयकः 'घटविषयकज्ञानवानहं तदभाववान् वाऽहम्' इति संशयो न जायत इत्यर्थः । *विपर्य्यय इति — घटज्ञाने जाते 'घटविषयकज्ञानाभाववानहम्' इति भ्रमात्मकं ज्ञानं न जायत इत्यर्थः। ननु तार्किकाणां मते तद्विषयकज्ञानानन्तरम् 'तद्विषयकज्ञानवानहम्' इत्यनुव्यवसायात्मकं ज्ञानं जायत इति तन्मते ज्ञानस्य स्वप्रकाशत्वमसङ्गतमत आह — *अनुव्यवसायस्येति — ज्ञानविषयकं ज्ञानमेवानुव्यवसायात्मकमित्युच्यते । *अनवस्थेति — प्रथमं चक्षुःसन्निकर्षादिना घटादिविषयकं ज्ञानं जातम्, तदनन्तरं घटविषयकज्ञानविषयकमनुव्यवसायात्मकम् 'घटविषयकज्ञानवानहम्' इत्याकारकं ज्ञानं स्यात् । एवञ्चानुव्यवसायात्मकं ज्ञानं प्रथमज्ञानं प्रकाशयति। ज्ञानप्रकाशकं यद् व्यवसायात्मकं तत् 'नहि अप्रकाशितो दीपो विषयं प्रकाशयति किन्तु प्रकाशित एव' इति न्यायेनानुव्यवसायात्मकज्ञानस्यापि प्रकाशकं ज्ञानमपेक्षते, यतः प्रकाशितमेव तज्ज्ञानं प्रकाशयेत्। एवं तदपि स्वप्रकाशनाय ज्ञानान्तरमित्येवंरूपेणानवस्था स्यादिति भावः । ज्ञानस्य ज्ञानविषयत्वे दूषणान्तरमाह — *ज्ञानं जानानीति — अतो ज्ञानस्य न ज्ञानग्राह्यत्वम् । ननु विषयतासम्बन्धेन प्रत्यक्षं प्रति तदव्यवहितप्राक्क्षणावच्छेदेन विषयस्येन्द्रियसन्निकर्षस्य चापेक्षितत्वेन घटादिज्ञानकाले ज्ञानाभावेन ज्ञानरूपविषयेन्द्रियसन्निकर्षाभावात् कथं स्वतोग्राह्यत्वम् ? इति चेत्, न, ज्ञानप्रत्यक्षे विषयेन्द्रियसन्निकर्षस्य हेतुत्वानभ्युपगमात् , ज्ञानप्रयोजकसामग्र्या एव ज्ञानविषयकज्ञानस्यापि प्रयोजकत्वात् । ननु विरुद्धयोः कर्तृत्वकर्मत्वयोः विषयत्वविषयित्वयोश्च सामानाधिकरण्यासम्भवः, अत आह — *अभेदेऽपीति — यथा हि — तार्किकमतेऽपि 'सर्वं प्रमेयम्' इति ज्ञाने स्वस्यापि विषयता, यथा वा द्रव्यादौ सत्तावत्त्वेन सद्व्यवहारः सत्ताप्रयुक्तः सत्तायान्तु स्वातिरिक्तसत्ताया अभावेऽपि सद्व्यवहारः एवं स्वस्यैव विषयविषयिभावो न विरुध्यते । वस्तुतस्तु — न हि सद्व्यवहारः सत्ताप्रयुक्तोऽस्ति, पदजन्यप्रतीतिविषयकालसम्बन्धविशेषरूपपदार्थप्रयुक्तः। अत एव सामान्यादावपि 'सत्' इति व्यवहारः सङ्गच्छते इति केचित्। अन्ये तु—सर्वं एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्त्वेन व्यवहारः सत्ताप्रयुक्त एव । न च सामान्यादौ सत्ताया अभावात् सद्व्यवहारानापत्तिः, समावायेन सत्ताया अभावेऽपि सामानाधिकरण्यादिसम्बन्धान्तरेण तत्सत्त्वात् । एवं 'स्वमात्मानं जानामि' इत्यादौ कर्तृकर्मभावो न विरुध्यत इति भावः । तार्किकाणां नये 'घटाभाववद् भूतलम्' इत्यादौ यथा भूतलस्य सम्बन्धित्वेन स्वरूपसम्बन्धत्वेन च भानम्, तथाऽत्र कर्तृकर्मभावस्याप्यविरोध एव । नन्वेवम् 'चैत्रश्चैत्रं गच्छति' इत्यापद्येतेति चेत्, न, 'चैत्रो ग्रामं गच्छति' इत्यर्थे तस्यानिष्टत्वेऽपि चैत्रकर्तृकचैत्रकर्मकगमने तस्येष्टत्वात् । कार्य्यानुसारेण कल्पनाया न्याय्यत्वेऽपि निमित्तानुसारेण कार्य्यकल्पनाया अन्याय्यत्वात्, कारकाणां विवक्षाऽधीनत्वाच्च । एतेन जन्या हि क्रिया जनकं कारकम् । तथा च ज्ञाने स्वस्य प्रकाश इत्यर्थकस्य 'स्वप्रकाश' शब्दस्यानुपपत्तिः, क्रियाकर्मभावानुपपत्तेरेकत्रोभयरूपत्वासम्भवात् । 'स्वः प्रकाशो यस्य' इति बहुव्रीहौ तु कर्तृकर्म्मविरोधः, एवमभेदे विषयविषयिभावासम्भवः । सम्बन्धस्य सम्बन्धिस्वरूपभेदनियतत्वेन विषयित्वग्रहासम्भवात्' इत्यपास्तम् । तथा सति ईश्वरज्ञानस्य नित्यत्वनये तस्य कर्मजन्यत्वाभावेन कारकत्वानापत्त्या 'ईश्वरः सर्वं जानाति' इत्यस्यानुपपत्तिः । निरुपाधिकमात्मानं जानतो ज्ञानिनः 'आत्मानं जानाति' इत्यस्यासिद्धिश्च । तस्माद्वैयाकरणनये तत्तद्रूपेण विवक्षात एव कर्मादिसंज्ञाः । यत्रापि सोऽर्थो नास्ति तत्रापि 'शशशृङ्गम्' इत्यादौ तदारोपेण तत्तच्छास्त्रीयकार्य्यनिर्वाहः । एवञ्च 'ज्ञानज्ञेययोर्विषयविषयिभावसम्बन्धः' इत्यादौ सम्बन्धसम्बन्धस्य षष्ठ्या प्रतीयमानस्यानवस्थाभिया स्वाश्रयात्मकत्वाङ्गीकारस्यावश्यकतया 'यत् सम्बन्धज्ञानं तत् सम्बन्धस्वरूपात्सम्बन्धिनोर्भेदे एव' इति नियमे संकोचात् सम्बन्धिभेदं विनाऽपि विषयविषयिभावाङ्गीकारे बाधकाभावः ।

आन्तरस्यैव बाह्यरूपेण भानम् ।

**मू०—एवं व्याप्याकारवृत्तिप्रतिबिम्बरूपव्याप्यज्ञानोत्तरं शब्दाकारवृत्तिप्रतिबिम्बरूपशब्दज्ञानोत्तरं च जायमानबौद्ध व्यापकशब्दार्थरूपतत्तदर्थाकारवृत्तिप्रतिबिम्बनमेवानुमितिः शाब्दबोधश्च । शशशृङ्गालीकादिशब्दानां प्रातिपदि-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वसिद्धिरपि † बौद्धार्थवत्त्वेनैवोपपद्यते । "परः सन्निकर्षः"— (पा० सू० १।४।१०९ ) इति सूत्रे स्थानिवत्सूत्रे च ( पा० सू० १।१।५६ ) भाष्ये स्पष्टमेतत् ।

( रत्न० )—एवं प्रत्यक्षप्रक्रियामभिधायानुमानादिप्रक्रियामाह— *एवमिति—प्रत्यक्षादिवदित्यर्थः । *व्याप्याकारेति—धूमाद्याकारा या अन्तःकरणवृत्तिः तत्प्रतिविम्बनमेव धूमादिव्याप्यज्ञानम् । तज्ज्ञानप्रयोज्यव्यापकवाह्याकारप्रतिविम्बनं वह्न्यनुमितिः । एवं शब्दाकारा या अन्तःकरणवृत्तिः तत्र यच्चैतन्यप्रतिबिम्बनं तदेव 'शब्दज्ञानम्' इत्युच्यते । तत्प्रयोज्या या बौद्धशब्दार्थाकारा अन्तःकरणवृत्तिस्तत्र प्रतिविम्बनमेव शब्दार्थज्ञानं शाब्दबोध इति यावत् । तदाह—*शाब्दबोधश्चेति—एवं प्रासङ्गिकज्ञानप्रक्रियां प्रतिपाद्य प्रकरणप्राप्तबौद्धपदार्थस्वीकारस्य फलान्तरमप्याह—*शशश्रृङ्गेति—तदुक्तं हरिणा—

"व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ।
सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥"

( वाक्यप० कां० ३ समु० ३कारि० ३९ ) इति ।

'बाह्यानां पदार्थानां व्यपदेशे = व्यवहारे, निमित्तम्, बाह्यविलक्षणसत्ता = बुद्धिसत्तासमाविष्टा, औपचारिकी = अरोपप्रयोजनवती । 'सर्वासु अवस्थासु' इत्यनेनातीतानागतानामपि बुद्ध्या प्रतिभासो ध्वनितः । 'सर्वेषाम्' इत्यनेन शशश्रृङ्गादिशब्देऽपि तद्बुद्धिकल्पनया व्यवहारात् शब्दार्थसम्बन्धस्य नित्यत्वं दर्शितम् । अत एव बुद्ध्या शशश्रृङ्गमुद्दिश्य वाह्यसत्तानिरासाय 'नास्ति' इति प्रयुज्यते । एतेन 'आकाशं न पश्यति' इत्यस्य सिद्धये बह्वाकुलीभवन्तो नैयायिकाः परास्ताः । बौद्धार्थस्वीकारे आकाशादिनिरूपितलौकिकविषयिताया: प्रसिद्ध्याऽनायासेनैव बाह्यसत्तानिषेधाय तदुपपत्तेः । बौद्धार्थास्वीकर्तृनये तु आकाशादिनिरूपितलौकिकविषयिताया अप्रसिद्धतया अप्रसिद्धप्रतियोगिकाभावाभावेन तादृशप्रयोगानुपपत्तिः । बौद्धार्थस्वीकारे मानान्तरमप्याह—*पर इति । *स्थानिवदिति चेति—आद्ये आशुविनाशिनां सन्निकर्षो दुरुपपाद इत्याशङ्क्य "बुद्धौ कृत्वा सर्वाश्चेष्टाः" इत्याद्युक्तमिति

† 'बौद्धार्थरूपतत्तदर्थवत्त्वेनैव' इति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्वं मूलव्याख्यानावसरे रत्नप्रभायामेव प्रपञ्चितम्। अन्त्ये—"कश्चित् कंश्चिदुपदिशति—'प्राचीनं ग्रामादाम्राः' इति। तस्य सर्वत्राम्रबुद्धिः प्रसक्ता। ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति। स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते। स ततः पश्यति बुद्ध्या आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्चाधीयमानान्। नित्या एव च स्वस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः। बुद्धिस्त्वस्य विपरिणम्यते।" इति। अनेन बौद्धपदार्थसत्ता सूचिता। इदमपि रत्नप्रभायां पूर्वमुक्तमेव।

मू०—ईदृशानामप्यन्तःकरणे वासनासत्त्वे शब्दाद् बोध एव मानम्। पूर्वपूर्वबोधैर्वासनाजननाच्च अनादित्वाच्च व्यवहारस्य न दोषः। तदुक्तं हरिणा—

"यो वाऽर्थो बुद्धिविषयो बाह्यवस्तुनिबन्धनः।
स बाह्यं वस्त्विवतिज्ञातः शब्दार्थः सम्यगिष्यते॥" इति।
(वाक्यप० २।१३४)

'अवहीरूपोऽपि बहीरूपतयाऽध्यस्तः' इति पुञ्जराजः। अध्यासे बीजं चान्तःकरणस्य रागादिदोष एव। अत एव बाह्यार्थानयनमुपपन्नम्। यत्र ह्यभ्यन्तरार्थस्य बाह्यार्थेन सम्वादः स शब्दः प्रमाणम्, विसम्वादे त्वप्रमाणमिति व्यवस्था। एवमेव 'अयं शब्दः प्रमाणं न वा' इत्यादेः, 'इदं ज्ञानं प्रमा न वा' इत्यादेश्चोपपत्तिः।

(रत्न०)—ननु शशशृङ्गादिशब्दानां बाह्यार्थासत्त्वेन तद्विषयकवासनासत्त्वे मानाभावोऽत आह—*ईदृशानामिति—अबाह्यानां शशशृङ्गादीनामित्यर्थः। ननु वासनाजनकबाह्यार्थाभावेन वासनाया असम्भवोऽत आह—*पूर्वपूर्वेति—'शशशृङ्गं नास्ति' इति वाक्यजन्यैः पूर्वपूर्वबोधैरित्यर्थः। नन्वेवमप्याद्यबोधानुपपत्तिरेव अत आह—*अनादित्वादिति—संसारस्यानादित्वाद् बोधस्याप्यनादित्वमिति भावः। *न दोष इति—न वासनाऽनुपपत्तिरित्यर्थः। न्यायामृतकारादयस्तु—शशशृङ्गादिशुक्तिरजतादिविषये बाह्यार्थाभावेऽपि बुद्धिविषयत्वादसत्ख्यातिरेवेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्यन्ते । असतो विषयस्य ख्यातिः = भानमसत्ख्यातिरिति । पुरोवर्तिनः शुक्त्यादेः स्वरूपेण सत्त्वाद् बाह्यरजताकारेण चासत्त्वात् सदसत्ख्यातिरिति कापिलाः । ज्ञानसन्तानमेवात्मेति मन्यमानानां बौद्धानामात्मख्यातिरिति व्यवहारः । अन्यधर्मेण शुक्तेरवभासादन्यथाख्यातिरिति तार्किकाः । अनिर्वचनीयख्यातिरिति वेदान्तिनः । *यो वाऽर्थ इति — "बुद्ध्युपारूढस्य विकल्पात्मकज्ञानजनकशब्दस्य यो बुद्ध्युपारूढो बाह्यवस्तुनिबन्धनः = बाह्यवस्तुविकल्पजननद्वारेणाध्यस्तत्वेन निबन्धनम् = निमित्तं यस्य स तथाभूतः । स च वैकल्पिकोऽर्थो भ्रमवशाद् दृश्यैकाकारेणाबहीरूपोऽपि बहीरूपतयाऽध्यस्तः, 'अध्यस्तमेव वस्त्ववगच्छामि शब्दात्' इति शब्दनिमित्तम् इति शब्दार्थ इष्यते" इति पुण्यराजः । कुञ्जिकाकारास्तु — 'यो वाऽर्थः' इति 'वा' शब्दः पक्षान्तरे । बुद्ध्युपारूढस्य शब्दस्य बाह्यवस्तुनिबन्धनो योऽर्थः स 'बाह्यं वस्तु' इत्यध्यस्तः सन् शब्दार्थः । यथा — आन्तरः स्फोटो वाचकस्तथाऽर्थोऽप्यान्तर एवेति भावः' इत्याहुः । उभयथाऽपि — अबहीरूपोऽपि बहीरूपतयाऽध्यस्त आन्तर एव स्फोटो वाचकः, आन्तर एवार्थो वाच्य इत्युक्तं भवति । ननु कारणाभावादध्यासो न युक्तः, अत आह — *अध्यासे बीजमिति । *रागादिदोष इति — तथा च रागादिदोषादेव प्रवृत्त्यादिदर्शनादिति भावः । "सुखानुशयी रागः" ( यो० द० २।७ ) इति भगवान् पतञ्जलिः । सुखे तत्कारणे वा तृष्णा राग इति तदर्थः । *अत एवेति — रागादिदोषवशाद् बाह्यान्तरार्थयोः सम्मुग्धत्वेन ग्रहणादेवेत्यर्थः । नन्वेवं सर्वेषां शब्दानां प्रामाण्यापत्तिरत आह — *यत्र हीति । संवादः = ऐक्यम् । विसंवादे = ऐक्याभावे । *एवमेवेति — संवादित्वासंवादित्वाभ्यामेवेत्यर्थः । ज्ञाने संवादविसंवादौ = तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्व — तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वरूपौ । *प्रमाणमिति — बाह्यार्थसम्वादीत्यर्थः ।

**मू०—नलादिपदेभ्योऽपि बौद्धाकारविषयक एव बोधः । स च बौद्ध आकारः सामान्यरूप एव, अवयवसंस्थानगतविशेषस्याग्रहात् ।**

**तेषां शक्तिग्रहोऽपि वक्तृमुखात् तदीयगुणसमृद्ध्यादिश्रवणा-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तरं तादृशगुणसमृद्ध्यादिविशिष्टे सामान्यतो बुद्ध्या गृहीते आकारे एव। "हेतुमति च" (पा० सू० ३।१।२६) इति सूत्रे भाष्ये "कंसं घातयति" इत्येतदुपपादनावसरे तेषामुत्पत्तिप्रभृत्याविनाशादृद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति" इत्युक्तेः ।

(रत्न०)—ननु नलादिपदानां बाह्यार्थाभावाददृष्टार्थकत्वाच्च वासनाया बाह्यार्थयोरध्यासस्य चासम्भवः, अत आह – *नलादीति । *बौद्धेति—बौद्धावयवसंस्थानविषयक इत्यर्थः । *सामान्यत इति—अवयवसंस्थानत्वरूपेण, न तु तद्व्याप्यरूपेणेत्यर्थः । सामान्याकारस्य सर्वत्रानुमानादिना बुद्धिस्थत्वसम्भवेनाज्ञाताकारस्य बुद्धिस्थत्वासम्भव इत्यपास्तम् । तेषाम् = नलादिपदानाम् । *शक्तिग्रहोऽपीति—सामान्यधर्मप्रकारकः समृद्ध्यादिविषयकशाब्दज्ञानप्रयोज्यज्ञानविषयीभूताकारनिरूपितशक्तिग्रहोऽपीत्यर्थः । अपिना – पदार्थोपस्थितिशाब्दबोधानां सङ्ग्रहः, शक्तिग्रहोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमात् । *गृहीताकार इति—अनुमिताकारे इत्यर्थः । अनुमानप्रकारश्चेत्थम्—पुराणाद्युक्तसमृद्ध्यादिविशिष्टः, अवयवसंस्थानविशिष्टःकश्चन पुरुषो भवेत्, पुराणाद्युक्तधर्माणां पुरुषवृत्तित्वात्' इति । अत्र मानमाह—*हेतुमति चेति—तत्र हि "आख्यानात्कृतः" इत्यादिवार्तिकप्रत्याख्यानाय सर्वेषु तद्विषयलक्ष्येषु प्रयोज्यप्रयोजकभावमादाय सूत्रेणैव णिचं संसाध्याशङ्कितम्—"ग्रन्थिकेषु कथम् ? यत्र शब्दग्रन्थनमात्रं लक्ष्यते । तेऽपि हि तेषामुत्पत्तिप्रभृति आविनाशात् तद्‌ऋद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान् प्रकाशयन्ति । आतश्च सतः । व्यामिश्रिताश्च दृश्यन्ते । केचित्कंसभक्ताः, केचिद् वासुदेवभक्ताः । वर्णान्यत्वं खल्वपि पुष्यन्ति । केचित्कालमुखाः भवन्ति, केचिद् रक्तमुखाः । त्रैकाल्यं खल्वपि लोके लक्ष्यते । गच्छ हन्यते कंसः, गच्छ घानिष्यते कंसः, किं गतेन हतः कंसः ? इति" इति । तेषाम् = कंसादीनाम् । *उत्पत्तीति—कंसादीनामृद्धीर्व्याचक्षाणाः कथकाः चिरकालातीतानां बहिरसत्त्वाद् बुद्धिगोचरतया विद्यमानान् प्रकाशयन्ति । तथा च कथकैः श्रोतरि कंसाद्याकारप्रत्ययजननाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिवासुदेवेन 'कंसं घातयति' इति प्रयोजकत्वोपपत्तिः । तथा च सूत्रेणैव णिचः सिद्धौ वार्तिकं नारब्धव्यमिति भावः । एतेन 'हन्तेस्तद्धननाभिनये तत्प्रतिपादकग्रन्थकथने वा लक्षणा' इति परास्तम्; बौद्धकंसस्य बौद्धकृष्णेन बौद्धहननमित्येवमन्यथैवोपपत्तौ लक्षणाया अनौचित्यात्, भाष्यविरोधाच्च ।

मू०—तदुक्तं हरिणा—

"शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान् ।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥
बुद्धिप्रवृत्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तिभेदानां क्रियते परिकल्पना ॥" इति ।

(वाक्यप० कां० ३ समु० ७ कारि० ५–६)

'प्रत्यक्षम्' इति मननक्रियाविशेषणम् । इन्द्रियजज्ञानाभावात् 'इव' इति । अर्थेषु = बाह्येषु । बौद्धमेवैकस्य शक्तिनानात्वं बाह्येऽध्यस्यते, दृश्यज्ञानविषययोरभेदाध्यासात् । अत एव देशान्तरस्थं देवदत्तं काश्यां शृण्वतस्तं च तत्र पश्यतोऽपि 'देवदत्तोऽत्र नास्ति' इत्यतो धीः सामान्येन बौद्धाकारेण, अस्य विजातीयतया सम्मुग्धत्वेनाग्रहात् । 'अयं स देवदत्तः' इत्युपदेशोत्तरं सामान्यरूपोऽपि बौद्ध आकारो विशेषरूपेण विवर्तते ।

(रत्न०)–*शब्दोपहितेति—कथकैः शब्देनोपहितं रूपं येषां तान्, अत एव बुद्धेर्विषयतां गतान् = बुद्धिविषयाकारान् कंसादीन् प्रत्यक्षमिव यथा स्यात्तथा साधनत्वेन हननादिक्रियाकारकत्वेन मन्यते इत्यर्थः । तदेवं बुद्ध्या व्यवहारमुपपाद्यैकस्यापि वस्तुनः शक्तिनानात्वं बौद्धमित्याह—*बुद्धिप्रवृत्तीति—बुद्धेः प्रवृत्तिः = परिच्छेदलक्षणो व्यापारः, तस्या (बुद्धेः) रूपम् = आकारः विषयेऽविद्यया आभासमानः, तमर्थेषु बाह्येष्वध्यस्य तेषां शक्तिनानात्वमभिधातृभिः परिकल्प्यते । तथा च बौद्धशक्तिभेद एव बाह्यशक्तिभेदः । एवं च क्रियाभेदाद् बाह्यं वस्त्वेव नानाशक्तिकमवधार्यते इति भावः । 'शक्तेर्भेदानाम्' इति पाठो वाक्यपदीयपुस्तके । *क्रियाविशे-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षणमिति – कंसादिविशेषणत्वे 'प्रत्यक्षान्' इति स्यादिति भावः । ❀इन्द्रियजेति — अस्य ज्ञानस्येन्द्रियजन्यत्वाभावात् 'प्रत्यक्षमिव' इति 'इव' शब्दप्रयोगः । ❀दृश्यज्ञानविषययोरिति – बाह्यबौद्धपदार्थयोरित्यर्थः । ❀ अत एवेति–बौद्धपदार्थविषयकशक्तिज्ञानादेवेत्यर्थः । ❀देशान्तरस्थमिति — अपरिचितमित्यर्थः । तत्र = काश्याम् । ❀पश्यतोऽपीति — बाह्यविशेषरूपेणेति शेषः । इत्यतः = इति वाक्यात् । ❀बौद्धाकारेणेति— अस्य 'धीः' इत्यत्रान्वयः । अस्य = पुरोवर्तिनो देवदत्तस्य । विजातीयतया = विजातीयरूपेण ज्ञानविषयतया । ❀सम्मुग्धत्वेनेति—अभिन्नत्वेनेत्यर्थः । मोहश्च—अज्ञानम्, तथाच मोह एव द्वयोरैक्यज्ञानप्रतिबन्धक इत्यर्थः । तद्धर्मप्रकारकनिश्चयात्मकज्ञानस्य तद्धर्माभावप्रकारकज्ञानं प्रत्येव प्रतिबन्धकत्वेन चक्षुःसन्निकर्षेण बाह्यविशेषधर्मप्रकारकज्ञानसत्त्वेऽपि बाह्यसामान्यधर्मेण तदभावप्रकारकं ज्ञानम् 'देवदत्तोऽत्र नास्ति' इति वाक्याज्जायते, बुद्धिस्थस्य सामान्याकारस्य विशेषे बाह्याकारेऽध्यासाभावात् । सः = देशान्तरस्थः । ❀अयमिति—अयमेवेत्यर्थः । ❀बौद्ध इति–उपदेशमहिम्ना बौद्धः सामान्याकारो बाह्यविशेषाकाररूपो भवतीत्यर्थः ।

**मू०—एतेनातीतनलादि-भाविचैत्रादि-वर्तमानप्रसिद्धासन्निकृष्टवस्तुगोचराः संस्कारा अनादयो धारारूपेण विशिष्य बोधान्यथाऽनुपपत्त्या कल्प्यन्ते, तैः स्मृतेष्वर्थेषु शक्तिग्रहो बोधश्चेति नैयायिकनव्योक्तमपास्तम्, विशिष्य बोधरूपहेत्वसिद्धेः, विशिष्य गृहीतसङ्गतिकानामिव तद्दर्शने पदस्मरणापत्तेश्च, पदप्रकारकबोधस्यैवानुभवाच्च।**

**अत एव अज्ञातार्थकेषु 'इदमेकं पदम्' इति ज्ञातेषु नलचैत्रगवयादिपदेषु श्रुतेषु 'क एतदर्थः ?' इति प्रश्ने उपमानतल्लक्षणकथनादिना प्रतिवचनञ्च दृश्यते। अत एव सादृश्याद्युपायेन शक्तिबोधकतया उपमानस्य, प्रसिद्धपदसामानाधिकरण्यात्तद्बोधकतया कोशस्य च प्रामाण्यं व्युत्पादयन्ति ।**

**नलत्वादिना बोधस्तु तेन रूपेण शक्तिग्रहासम्भवादसम्भवी ।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतेन—'प्रमेयत्वादिरूपेण सर्वानुभवसत्त्वात् तत्र प्रमेयत्वांशस्य अनुद्बुद्धसंस्कारत्वेन मोषे प्रथमतः तत्तज्जात्यादिविषयं निर्विकल्पकं स्मरणम्, ततो ज्ञानलक्षणया विशिष्टतत्तत्पदार्थोपस्थितौ तत्र शक्तिग्रहो वोधश्च। ज्ञानलक्षणा च—मनःसंयुक्तात्मवृत्तिसंस्कारविषयत्वम्। फलवलकल्प्योद्बोधकवशात् स्मृतेः क्वाचित्कत्वकादाचित्कत्वनियमेन न सार्वज्ञ्यापत्तिः' इत्यपास्तम्, अनुभवविरुद्धतादृशस्मरणकल्पने मानाभावाच्च, सर्वत्र स्मरणेऽनुभवसमानाकारत्वस्यैव दर्शनात्।

(रत्न०)—*अतीतनलादीति—अतीतनलादयश्च, भाविचैत्रादयश्च, वर्त्तमानं प्रसिद्धमसन्निकृष्टं च यद्वस्तु तच्चेति—अतीतनलादिभाविचैत्रादि-वर्त्तमानप्रसिद्धासन्निकृष्टवस्तूनि, तानि गोचरा येषां ते तथा। यत्तु—अतीतनलादिविषये नलत्वादिविशेषधर्माणां ज्ञानविषयत्वाभावात् तत्प्रकारकशक्तिग्रहस्यासम्भवेन प्रमेयप्रकारकः 'प्रमेयवान्' इत्येव शक्तिग्रहः। 'प्रमेयवान्' इत्यनुभवे प्रमेयत्वेन विशेषणीभूतस्य नलत्वविशिष्टस्यापि प्रागनुभवसत्त्वेन प्रमेयत्वविषयकस्मृतिजनकसंस्कारोद्बोधकत्वस्य प्रतीतिवशाददृष्टविशेषेऽकल्पनेन प्रमेयविषयकस्मृति जनकसंस्कारोद्बोधकत्वस्य च कल्पनेन केवलचैत्रत्वविशिष्टस्मरणमिति प्राञ्चः, तन्न, जातित्वेन घटत्वप्रकारकघटविशेष्यकानुभवोत्तरं स्वरूपतो घटत्वप्रकारकघटविशेष्यकस्मरणापत्तेः। न च तत्र जातित्वविषयकसंस्कारोद्बोधकत्वस्यापि सत्त्वात् स्वरूपतो घटत्वप्रकारकघटविशेष्यकस्मरणासम्भव इति वाच्यम्, संस्कारोद्बोधकनियमनस्य वक्तुमशक्यत्वात्। तस्मात्तत्रोक्तरीत्यैव बोध इत्यन्ये। तन्नियतकालाभावादाह—*अनादय इति। *धारारूपेणेति—विशेषरूपेण बोधदर्शनानुपपत्त्या प्रवाहरूपेण संस्काराः कल्प्यन्ते इति भावः। तैः = संस्कारैः। अर्थेषु = नलत्वादिविशिष्टादिषु। *हेत्वसिद्धेरिति—तादृशसंस्कारकल्पको यो विशेषनलत्वादिधर्मप्रकारको बोधः, स एव न प्रामाणिकत्वेन सिद्ध इति हेतोरभावात्तादृशसंस्कारासिद्धिरिति भावः। *विशिष्य गृहीतेति—विशेषरूपेण गृहीता सङ्गतिर्येषु तादृशानां घटा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दीनामित्यर्थः । *तद्दर्शन इति — घटादिदर्शने घटादिपदस्मरणमिव तथाविधचैत्रादिदर्शने चैत्रादिपदविषयकस्मरणापत्तेरित्यर्थः । *पदप्रकारकेति — 'नल'पदवाच्यः कश्चन आसीत्' इति पदनिष्ठप्रकारतानिरूपकबोधस्यैवानुभवविषयत्वादित्यर्थः । अनेन — 'नलादिपदेभ्यः नलादिशब्दार्थत्वप्रकारक एव बोधो लक्षणया । न च नलत्वादिप्रकारकशक्तिग्रहाभावात् शक्यसम्बन्धरूपलक्षणाया असम्भव इति वाच्यम्, विशेषरूपेण शक्तिग्रहाभावेऽपि सामान्यरूपेण शक्तिग्रहसत्त्वात् । सामान्यरूपेण शक्तिग्रहे विशेषरूपेण बोधे लक्षणाया ग्रन्थकृतैवोक्तत्वात्' इति कस्यचिदुक्तिरपास्ता, उक्तरीत्या शक्त्यैव बोधसम्भवे लक्षणाया अनुपयोगात् । *अत एवेति — सामान्यरूपेण शक्तिग्रहे तथा बोधादेवेत्यर्थः । *एकपदमितीति — अस्य 'व्यवहारः' इति शेषः । *ज्ञातेष्विति — सामान्यतो ज्ञातार्थकेष्वित्यर्थः । नैयायिकमते तु नलादिशब्दज्ञाने विशेषार्थस्यापि ज्ञातत्वात् प्रश्नासङ्गतिरेव स्यादिति भावः । मम तु 'सामान्यज्ञानपूर्विका हि विशेषजिज्ञासा' इति न्यायात् सामान्यार्थज्ञानसत्त्वेऽपि विशेषार्थविषयकजिज्ञासा उपपद्यत एव । *तल्लक्षणादिनेति — सास्नादिमत्त्वादिनेत्यर्थः । *प्रतिवचनमिति — उत्तरमित्यर्थः । *अत एवेति — सामान्यतो बोधादेवेत्यर्थः । *सादृश्याद्युपायेनेति- 'सादृश्यादि' इत्यत्रादिना वैधर्म्यपरिग्रहः । यथा अतिदीर्घग्रीवत्वादिरूपपश्वन्तरवैधर्म्यज्ञानात् 'करभ'पदशक्तिग्रहः । अयम्भावः—नागरिकेणारण्यके 'गवय' पदार्थे पृष्टे 'गोसदृशो गवयः' इति तेनोक्ते पश्चान्नागरिकेण क्वचिदरण्यादौ गवयो दृष्टः, तत्र यद् गोसादृश्यदर्शनं तदेव 'उपमानम् = उपमितिकरणम्' इत्युच्यते । तदनन्तरम् 'गोसदृशो गवयशब्दवाच्यः' इत्यतिदेशवाक्यार्थस्मरणं यज्जायते, तदेवोपमानस्य व्यापारः । तदनन्तरम् 'गवयो गवयपदजन्यबोधीयविषयतावान्, वाच्यवाचकभावसम्बन्धेन गवयपदविशिष्टो वा' इति यच्छक्तिज्ञानं तदेव 'उपमित्यात्मकं ज्ञानम्' इत्युच्यते । एवञ्च 'गवय' पदनिष्ठशक्तिज्ञानमेवोपमितिकरणस्य फलम्, न तु गवयज्ञानम्, तस्य चक्षुःसन्निकृष्टत्वेन प्रत्यक्षत्वात् । *शक्तिबोधकतयेति — 'गोसदृशो 'गवय'पदवाच्यः' इत्यतिदेशवाक्यार्थस्मरणाद् 'गवयो 'गवय'पदवाच्यः' इत्येवं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रूपेण शक्तिबोधकतयेत्यर्थः। *उपमानस्येति — अस्य वक्ष्यमाणेन 'प्रामाण्यम्' इत्यनेनान्वयः। *प्रसिद्धपदेति — अयं भावः — 'इदं पदम्, यत्किञ्चिदर्थनिरूपितशक्तिमत्, साधुपदत्वात्' इति साधुपदत्वहेतुकानुमानेनार्थत्वावच्छिन्ननिरूपितशक्तिग्रहे जातेऽर्थत्वेनैव रूपेणार्थोपस्थितौ च सत्यां पशुपतिपदार्थाभिन्नः 'शिव'पदार्थ इति सामानाधिकरण्येन निर्देशात्समानार्थत्वज्ञाने निष्पन्ने पश्चाद् वृद्धव्यवहारतः क्वचित्प्रसिद्धपदे विशेषरूपेण गृहीतशक्तिकस्य पुंसः 'पशुपति'पदम्, शिवत्वावच्छिन्ने शक्तम्, वाच्यतासम्बन्धेनैकार्थवृत्तित्वात्' इत्यनुमानद्वारा बोधकतया कोशस्य प्रामाण्यम्। सामान्यतोऽर्थबोधकत्वाभावे पूर्वोक्तानुमानाप्रसक्त्या प्रमात्मकबोधजनकत्वं तस्य न स्यादिति। *नलत्वादिनेति — शक्तिग्रहोपस्थितिशाब्दबोधानां समानप्रकारताप्रयोजकत्वनियमात् सामान्यरूपेण शक्तिग्रहे तादृशबोधासम्भवादिति भावः। *एतेनेति — सामान्यज्ञानपूर्वकविशिष्यबोधोपपादनेनेत्यर्थः। *प्रमेयत्वादीति — आदिनाऽभिधेयत्वास्तित्वयोः संग्रहः। अस्तित्वञ्च — कालसम्बन्धित्वम्। तत्र = 'प्रमेयः'इत्याकारकानुभवविषये। मोषे = स्मृतिविषयत्वाकल्पने। न च तदंशेऽन्याप्रकारकस्मृतिं प्रति तदंशेऽन्याप्रकारकानुभवस्य हेतुत्वात् तत्तज्जात्यादिरूपनिर्विकल्पकस्मरणासम्भवः, तादृशकार्यकारणभावकल्पने मानाभावात्। न चैवम् 'जातिमान् घटः' इत्यनुभवेन जातित्वांशविषयकोद्बोधकासत्त्वे स्वरूपतो घटत्वप्रकारकघटविशेष्यकस्मरणापत्तिरिति वाच्यम्, उद्बोधकसत्त्वासत्त्वयोः फलबलकल्प्यत्वात्। *प्रथमत इति — विशिष्टबोधापेक्षया प्राथम्यं बोध्यम्। *तत्तज्जात्यादीति — नलत्वादीत्यर्थः। *निर्विकल्पकमिति — यथा बालानां स्तनपानादाविष्टसाधनतायाः स्मरणे पूर्वानुभूततताया अदृष्टविशेषस्यैव नियामकत्वम्, तथा निर्विकल्पकस्मरणेऽपि तस्यैव नियामकतया तादृशस्मरणोपपत्तिरिति बोध्यम्। इदञ्च विशिष्टबोधे विशेषणज्ञानस्य कारणत्वानुरोधेनोक्तम्। *ज्ञानलक्षणयेति — प्रत्यासत्त्येत्यर्थः। *विशिष्टेति — नलत्वादिविशिष्टेत्यर्थः। तत्र = विशिष्टे। ननु जात्यादिज्ञानस्य प्रत्यासत्तित्वासम्भवः, अत आह — *ज्ञानलक्षणेति — चक्षुर्जन्यज्ञाने विषयतासम्पादकसंस्कारजनकज्ञानविषयत्वमित्यर्थः। *मनःसंयुक्तेति — आत्ममनःसंयोगस्य ज्ञानमात्रे हेतु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वादिति भावः । ※आत्मवृत्तीति—'सुरभि चन्दनं पश्यामि' इत्यादिस्थले सौरभाद्यंशे या स्मृतिविषयता सा तद्विषयकसंस्कारविषयतारूपज्ञानलक्षणसन्निकर्षजन्येति ज्ञानलक्षणसन्निकर्ष एव तत्र हेतुरिति भावः । नन्वेवं प्रमेयत्वेन सकलपदार्थानुभवाङ्गीकारे सर्वस्य सार्वज्ञ्यापत्तिः, अत आह—※फलबलेति । ※न सार्वज्ञ्यापत्तिरिति — यत्किञ्चिद्विषयकस्य यत्किञ्चित्कालावच्छेदेन स्मृतित्वादिति भावः। यत्तु-प्रमेयत्वेन ज्ञानेऽपि विशिष्टज्ञानाभावान्न सार्वज्ञ्यापत्तिरिति कुञ्जिकाकाराः, तन्न, प्रमेयत्वेन ज्ञानेऽपि ज्ञानलक्षणसन्निकर्षेण विशेषरूपेणैव शक्तिग्रहस्य बोधस्य च तेन स्वीकारात् । ※अनुभवविरुद्धेति—येन रूपेणानुभवस्तेनैव रूपेण स्मरणस्य नियतत्वादिति भावः । एतेन—'यावतामनुभवस्तावतां सर्वत्र स्मरणस्यादर्शनेन जातित्वेनानुभवे स्वरूपतः स्मरणे बाधकाभावः' इत्यपास्तम् । ※तादृशेति — प्रमेयत्वेनानुभवेऽन्यरूपेण स्मरणेत्यर्थः । ※अनुभवसमानाकारत्वस्यैवेति —समानाकारत्वञ्च —अधिकविषयताऽनवगाहित्वेन, न तु अन्यूनानतिरिक्तविषयताकत्वेन, अनुभवन्यूनविषयताकस्यापि स्मरणस्यानुभवसिद्धत्वात् । तदुक्तं भगवता पतञ्जलिना—"जाति-काल-देशव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वात्" ( यो० द० ४।९ ) इति । तथा च तत्रैव भाष्ये—"इह नानायोनिषु भ्रमतां संसारिणां काञ्चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यते, तदा तस्यां पूर्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोहिताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । जाति-देश-काल-व्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधनानन्तर्यनैरन्तर्यम्, कुतः ? स्मृतिसंस्कारयोरेकरूपत्वात् । तथाहि-अनुष्ठीयमानात्कर्मणः चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते । स च स्वर्गनरकादीनां फलानामङ्कुरीभावः, कर्मणां वा यागादीनां शक्तिरूपतयाऽवस्थानम्, कर्तुर्वा तथाविधभोग्यभोक्तृत्वरूपं सामर्थ्यम् । संस्कारात्स्मृतिः, स्मृतेश्च सुखदुःखोपभोगः, तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः। एवञ्च – यस्य स्मृतिसंस्कारादयो भिन्नाः, तया आनन्तर्याभावे दुर्लभः कार्यकारणभावः । अस्माकन्तु यदाऽनुभव एव संस्कारीभवति, संस्कारश्च स्मृतिरूपतया परिणमते,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदैकस्यैव चित्तस्यानुसन्धातृत्वेन स्थितत्वात्कार्यकारणभावो न दुर्घटः" इत्युक्तम्। तत्र-जातिव्यवहितत्वम्, जन्मान्तरयोगेण। देशकालव्यवधानम्, दूरत्वादिना। ननु सुषुप्तिदशायामनुभवजनकसामग्र्यभावात् तदनुत्पत्त्या 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्मरणानुपपत्तिरिति वाच्यम्; एतदर्थमेव निद्रारूपवृत्तिविशेषस्य स्वीकारात्। एतेन 'ज्ञानसामान्याभावरूपैव निद्रा' इति तार्किकमतं निरस्तम्।

मू०—किञ्च, तदंशमोषेऽपि कदाचिद् विशिष्य जातानुभवानामेव तथा ज्ञानं भवति, न तु कदाचिदपि तथाऽननुभूतानां तथा ज्ञानं ज्ञानलक्षणासहकारेणापि, अनुभवविरोधात्। अन्यथा ब्रह्मणोऽपि तथा स्मरणे ज्ञानलक्षणया तथाऽनुभवे च कृतकृत्यताऽऽपत्तिरित्यलम्।

(रत्न०)—ननु तत्प्रकारकतद्विशेष्यकस्मृतिं प्रति तत्प्रकारकतद्विशेष्यकानुभवस्य कारणत्वे उपेक्षात्मकज्ञानादपि व्यभिचारवारणायाव्यवहितोत्तरत्वं कार्य्यकारणभावे निवेश्यम्। न चोपेक्षाऽन्यज्ञानत्वेन हेतुत्वं कल्प्यम्, उपेक्षाऽन्यत्वस्य दुर्वचत्वात्। न चोपेक्षात्वं जातिरिति वाच्यम्, चाक्षुषत्वादिना साङ्कर्यात्। नापि संस्काराजनकत्वम्, उपेक्षाज्ञानव्यावृत्तसंस्कारजनकताऽवच्छेदकधर्माभावात्, तद्व्यक्तित्वस्य कारणताऽवच्छेदकत्वे गौरवात्। एवञ्चाव्यवहितोत्तरत्वस्य वैजात्यस्य वा निवेशेनोक्तदोषवारणसम्भवः, अत आह—*किञ्चेति। *विशिष्य जातेति—यस्य कस्यचिद् विशिष्यानुभवो जातस्तस्यैव तेन रूपेण ज्ञानलक्षणसन्निकर्षेणापि ज्ञानं जायते इत्यर्थः। तथा ज्ञानम् = विशेषरूपेण ज्ञानम्। *नत्विति—कदाचिदपि तथाऽननुभूतानां तथा ज्ञानं ज्ञानलक्षणासहकारेणापि नतु भवतीत्यन्वयः। अन्यथा = प्रमेयत्वेन बोधेऽपि ज्ञानलक्षणया विशिष्य बोधे। तथा स्मरणे = विशिष्य स्मरणे। कृतकृत्यताऽऽपत्तिः = मुक्तत्वापत्तिः। तथात्वे श्रवणमननादेः काशीमरणादेस्तद्बोधकश्रुतिस्मृतिपुराणशास्त्राणाञ्चानर्थक्यापत्तिः, वैषम्ये बीजाभावात्। ब्रह्मज्ञाने एकविज्ञानेन सर्वविज्ञानविधया सार्वज्ञ्यापत्तिश्चेत्याह—*इत्यलमिति।

मू०—यत्र तु न गुणसमृद्ध्यादिश्रवणं तत्र पदमात्रविषयकमेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानम् । अत एव 'पदं तु श्रुतमर्थं न जानामि' इति व्यवहारस्तत्र। गुणादिश्रवणोत्तरं तु 'श्रुतोऽस्ति स न दृष्टः' इति व्यवहारः। 'अस्य कश्चिदर्थो भविष्यति' इति पदत्वहेतुकमनुमानमेव । बौद्धार्थस्य बौद्धेन शब्देनाविभागात्तन्मूलाभेदाध्यवसायेन शब्दादर्थाकारवृत्तौ जायमानायां स्वाकारस्यापि समर्पणमिति शब्दस्यापि विषयता । अत एव शब्दे ग्राह्यत्वग्राहकत्वरूपशक्तिद्वयस्वीकारः । तत्र तात्पर्य्यवशाद्बहुधा शब्दप्रकारको बोधः । अर्थे बाधे तु 'गौरित्ययमाह' इत्यादौ अनुवादे शब्दविशेष्यकः । अनुकरणे तु शब्दमात्रविषयकः (विशेष्यकः) । एवमर्थेनापि स्वाकारसमर्पणे तत एव शब्दाकारस्यापि समर्पणमिति सर्वं ज्ञानं शब्दानुविद्धम् । तदुक्तम्—

शब्दस्यापि ज्ञानमात्रविषयत्ववर्णनम् ।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥" इति ।
(वाक्यप० का० १ कारि० १२४)

उत्तरार्धेनानुव्यवसायः प्रमाणं दर्शितम् । अत एव चक्षुषा दृश्यमानमप्यज्ञातबोधकं पदार्थम् 'किमिदम्' इति न जानामि' इति व्यवहरन्ति । तदुपदेशे च 'ज्ञातमिदम्' इति व्यवहरन्ति ।

(रत्न०)—*पदमात्रेति —'मात्र'शब्देनार्थविषयकत्वनिरासः। अत एव = पदमात्रविषयकत्वादेव । *श्रुत इति —सामान्यरूपेण शब्दजन्यज्ञानविषयीभूत इत्यर्थः । ननु गुणसमृद्ध्यादिश्रवणाभावेऽपि सामान्यतः शाब्दबोधः स्यात्, अत आह —*अस्य कश्चिदिति । *अनुमानमेवेति —'नलादिपदम्, कचित् शक्तम्, साधुपदत्वात्, घटादिपदवत्' इत्यनुमानमेवेत्यर्थः। न तु तत्र शाब्दबोध इति भावः । ज्ञानस्य स्वप्रकाशत्वप्रदर्शनावसरे 'एवं शब्दोऽपि' इति शब्दस्यापि स्वप्रकाशत्वमुक्तम् । प्रसङ्गात्तत्साधयति — *बौद्धार्थस्येति । *तन्मूलेति —बौद्धशब्दार्थयोरविभागमूलेत्यर्थः । *शब्दादिति —शब्दज्ञानप्रयोज्यार्थो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारान्तःकरणवृत्तौ जायमानायामित्यर्थः । *स्वाकारस्येति — शब्दाकारस्यापीत्यर्थः । समर्पणम् = शाब्दबोधविषयीकरणम् । विषयता = शाब्दबोधविषयता । अत एव = शाब्दबोधे शब्दस्यापि विषयत्वादेव । शाब्दबोधेऽनेकरूपेण भानदर्शनादाह — *तत्र तात्पर्य्यवशादिति । *शब्दप्रकारक इति — स्वजन्यबोधविषयत्वप्रकारकतात्पर्य्यविशेष्यत्वसम्बन्धावच्छिन्नशब्दनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताक इत्यर्थः । यथा 'गां पश्य' इत्यादौ । *अर्थे बाधे त्विति—'गौरित्ययमाह' इत्यादावुच्चारणकर्मताया अर्थे बाधे त्वित्यर्थः । *गौरित्ययमिति — उपलक्षणमिदम् 'गामुच्चारय' इत्यस्य । अन्यथाऽनुवादानुकरणयोरैक्येन 'अनुकरणे तु शब्दमात्रविशेष्यक' इति वक्ष्यमाणग्रन्थासङ्गतिः स्यादिति भावः । *शब्दविशेष्यक इति — स्वजन्यबोधविषयत्वप्रकारकतात्पर्य्यविशेष्यत्वसम्बन्धावच्छिन्नार्थनिष्ठप्रकारतानिरूपितशब्दनिष्ठविशेष्यताक इत्यर्थः । *शब्दमात्रविशेष्यक इति— भेदानुकरणे आनुपूर्व्यवच्छिन्नमात्रनिरूपितशक्तेरेव सत्त्वादानुपूर्वीनिष्ठप्रकारतानिरूपितशब्दनिष्ठविशेष्यताक एव बोध इत्यर्थः । 'गामुच्चारय' इत्यादौ तु जातिरूपगोत्वनिष्ठप्रकारतानिरूपितार्थनिष्ठाऽपि विशेष्यतेति 'मात्र' शब्देन तस्य व्यवच्छेदः । शाब्दबोधे शब्दस्य भानमुपपाद्य प्रत्यक्षादिस्थलेऽपि शब्दस्य भानं निरूपयति — *एवमिति — शब्दार्थाविभागमूलकाभेदाध्यवसाये इत्यर्थः । *स्वाकारे इति — अर्थाकारस्य बोधविषयीकरण इत्यर्थः । *तत एवेति— शब्दार्थयोरभेदेनार्थाकारस्यापि बोधविषयीकरणादेवेत्यर्थः । *शब्दाकारस्यापि समर्पणमिति—उभयोरभेदादित्यर्थः । *न सोऽस्तीति—लोके स प्रत्ययः = ज्ञानं नास्ति, यः शब्दानुगमादृते = शब्दमविषयीकृत्य स्यात् । शब्दस्य ज्ञानविषयकत्वे प्रमाणमाह—*अनुविद्धमिवेति — सर्वं शाब्दमशाब्दं वा शब्देनानुविद्धमिव = अनुस्यूतमिव, भासते = ज्ञानविषयो भवति । एतेनानुव्यवसायात्मकज्ञाने शब्दविषयकज्ञानस्य विषयतया ज्ञानस्य शब्दविषयकत्वे प्रामाण्यं सूचितम् । तदाह —*उत्तरार्द्धेनेति — ज्ञानस्य शब्दविषयकत्वे तद्विषयकानुव्यवसायात्मकज्ञानमेव प्रमाणमिति भावः । ननु 'अनुविद्धमिव' इत्युक्त्या वस्तुतो नानुविद्धत्वमिति प्रतीयते, तथा च कथं ज्ञानमात्रस्य शब्दविषयकत्वम् ? इति चेत्, न,



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्त्तत ॥"
(वाक्यप० १।१२१)

इत्यादिना शब्दपरिणामत्वमेव विश्वस्येति सिद्धान्ते वस्तुद्वयाभावात् 'अनुविद्धमिव' इत्युक्तेः । अत एव = ज्ञानमात्रस्य शब्दविषयकत्वादेव । *अज्ञातबोधकमिति — न ज्ञातो बोधकः शब्दो यस्य तमित्यर्थः । *न जानामीति — ज्ञानविषयत्वप्रकारकमिति निश्चयसत्त्वे ज्ञानविषयत्वाभावप्रकारकज्ञानासम्भवेन 'न जानामि' इत्युक्तिरसङ्गतैव स्यात् । ज्ञानस्य शब्दविषयकत्वे तु शब्दांशे ज्ञानविषयत्वाभावमादाय तदुक्तिः सङ्गच्छत इति भावः । तदुपदेशे = वाचकशब्दोपदेशे । *ज्ञातमिति — शब्दानुविद्धस्यैव भानात् शब्दज्ञाने 'ज्ञातम्' इति व्यवहार उचित एवेति भावः ।

मू०—एतेन मणिमन्त्रादिन्यायेन तत्तत्पदवाच्यत्वग्रहो विशेषधर्म्मप्रकारेण ज्ञाने तथाऽव्यवहारेऽनुव्यवसाये च हेतुरिति नैयायिकनव्योक्तमपास्तम्; मणिमन्त्रादिन्यायेन कारणत्वकल्पनाऽपेक्षयाऽस्मदुक्तस्यैवौचित्यात्, तद्ग्रहे सति स्मृतस्य तस्य भाने बाधकाभावात् । तदर्थं प्रतिबन्धककल्पने गौरवम्, अनुभवविरोधश्च ।

किञ्च 'पिक' पदशक्तिग्रहवतः 'अयं कोकिलः' इत्यनुव्यवसायापत्तिः, तव पिकत्वकोकिलत्वयोरभेदात् । मम तु तत्तत्पदभानान्न दोषः ।

अत एव कणादसूत्रवृत्तिकृद्भिः कीर्तिदिङ्नागादिभिः—'नामसंसर्गविषयकत्वम्' सविकल्पकलक्षणमुक्तम् । पातञ्जलानामपीत्थमेव सविकल्पकलक्षणं सम्मतम् ।

एतेन—'ज्ञानं शब्दाननुविद्धमेव, अर्थज्ञानस्य वाचकशब्दाभावात् । 'अर्थवाचकेन' इतिकरणयुक्तेन 'घटः' इति 'जानामि' इति तद्व्यवहारः' इत्यपास्तम् ।

"इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" (न्या० द० १।१।४) इति प्रत्यक्षलक्षणे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अव्यपदेश्यत्वम्' विशेषणं वदता गौतमेन शाब्दज्ञाने शब्दभान-स्याङ्गीकाराच्च । अव्यपदिश्यमानत्वम्—व्यपदेशाविषयकत्वम् । 'व्यपदेशश्च—अर्थवाचकः शब्दः' इति तद्भाष्ये स्पष्टम् ।

एवञ्च—'अन्यत्र तद्भानाग्रहो मुधा' इति पातञ्जलानामाशयः। 'शब्द-विषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः' इति वदता वात्स्यायनेन शब्दजबोधस्य शब्दविषयकत्वमुक्तप्रायमेव। शब्दविषयकत्वमेव च शाब्दत्वम्, न तु शब्दजन्यत्वम्' इति तत्रैव वाचस्पतिमिश्रैरुक्तम् ।

(रत्न०)—*एतेनेति — नलादिपदैरुक्तरीत्या बौद्धाकारविषयकबो-धस्योपपादनेनेत्यर्थः । अस्य 'अपास्तम्' इत्यत्रान्वयः । *मणिमन्त्रादि-न्यायेनेति — अयम्भावः — बाधज्ञानस्यानुमितिप्रतिबन्धकत्वाभावापत्ति-भिया कार्यानुकूलधर्मविघटकत्वरूपप्रतिबन्धकत्वस्य वक्तुमशक्यतया तादात्म्यातिरिक्तसम्बन्धावच्छिन्नकारणताऽऽश्रयीभूतो यो भावभिन्नात्यन्ता-भावस्तत्प्रतियोगित्वरूपस्यैव प्रतिबन्धकत्वस्य स्वीकर्तव्यत्वेन यथा 'ह्रदो वह्निमान्' इति बुद्धिं प्रति 'ह्रदो वह्न्यभाववान्' इति निश्चयस्य ग्राह्या-भावावगाहित्वविषयकोक्तप्रतिबन्धकत्वलक्षणाक्रान्ततया प्रतिबन्धकत्वम्, न तथा दाहं प्रति मणिमन्त्रादीनां प्रतिबन्धकत्वं प्राप्नोति, उक्तप्रतिबन्ध-कत्वलक्षणानाक्रान्तत्वादिति उक्तप्रतिबन्धकत्वाभावेऽपि लोकानुभवसिद्ध-मेव प्रतिबन्धकत्वं तत्र स्वीक्रियते, अनुभवानुरोधात्। तथा नलादिपदजन्य-बोधस्थलेऽपि तत्तत्पदवाच्यत्वरूपेण शक्तिज्ञानस्य विशेषधर्मप्रकारके शाब्दबोधे, व्यवहारे, अनुव्यवसाये चानुभवानुरोधात् कारणत्वस्वीकारे-णोपपत्तिरिति । *अपास्तमिति — उक्तरीत्यैवोपपत्तौ मणिमन्त्रादि-न्यायेन कार्यकारणभावकल्पने गौरवादिति भावः । तदाह — *मणि-मन्त्रादिन्यायेन कारणत्वेति । नन्वेवमर्थविषयकशाब्दबोधे तस्य प्रति-बन्धकत्वात्तत्र शब्दभानं न स्यात्, अत आह — *तद्ग्रह इति — अर्थग्रह इत्यर्थः । तस्य = वाचकशब्दस्य । *तदर्थं प्रति प्रतिबन्धकेति— शब्दभानं प्रति अर्थभानस्य प्रतिबन्धकत्वकल्पन इत्यर्थः । *अनुभव-विरोध इति — शब्दभानस्याप्यनुभवसिद्धत्वेन तद्विरोध इति भावः । शब्दस्य शाब्दबोधाविषयत्वे दोषान्तरमाह — *किञ्चेति । *पिकपदेति —

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पिक'पदं कोकिलत्वावच्छिन्ने शक्तमिति शक्तिज्ञानवतः पुंसः 'अयं पिकः' इत्येवानुव्यवसायो जायते, शाब्दबोधे पिकपदस्यैव भानात् । शब्दाभानवादिनये तु 'अयं कोकिलः' इत्यप्यनुव्यवसायापत्तिः, पिकत्वकोकिलत्वयोरैक्यात् । शब्दभानवादिनये तु शाब्दबोधे 'कोकिल'पदस्याभानान्न तादृशानुव्यवसायापत्तिः, अनुव्यवसाये पूर्वबोधविषयस्यैव भाननियमात् । ❀अत एवेति—शब्दस्यापि सविकल्पकज्ञानविषयत्वादेवेत्यर्थः । ❀नामसंसर्गेति—नाम च संसर्गश्च तौ विषयौ यस्य तत्त्वमित्यर्थः । नामसंसर्गोभयविषयकत्वमिति यावत् । न च चाक्षुषेऽयोग्यत्वान्नामवैशिष्ट्यासम्भव इति वाच्यम्, 'सुरभि चन्दनम्' इतिवदुपनीतभानसम्भवात् । यद्वा, संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने स्मृतिप्रयोज्यमेव, अभावज्ञाने प्रतियोगिस्मरणवत् । एतेन = ज्ञाने शब्दभानस्य दिङ्नागपातञ्जलसम्मतत्वेन । अस्यापि 'अपास्तम्' इत्यत्रान्वयः । अर्थज्ञानस्य = चक्षुरादिजन्यार्थज्ञानस्य । वाचकशब्दाभावात् = शब्दवाच्यत्वाभावात् । तथा च तादृशज्ञानशब्दयोः सम्बन्धाभावेन ज्ञानस्य शब्दाननुविद्धत्वमिति तदाशयः । ❀अर्थवाचकेनेति—एतेन ज्ञानावाचकत्वं सूचितम् । ❀इति करणयुक्तेनेति—घटार्थवाचक इति करणयुक्तो यो घटादिशब्दस्तेन ज्ञानस्य व्यवहार इत्यर्थः । शब्दस्य ज्ञानसम्बन्धित्वे तु 'इति' शब्दस्य वैयर्थ्यं स्यात् । शाब्दबोधस्य शब्दविषयकत्वे गौतमसम्मतिमाह—❀इन्द्रियार्थेति—इन्द्रियञ्चार्थश्च तयोः सन्निकर्षेणोत्पन्नम्, अव्यपदेश्यम् = शब्दाविषयकम्, अव्यभिचारि = भ्रमभिन्नम्, व्यवसायात्मकम् = निश्चयात्मकम् ज्ञानं प्रत्यक्षमित्यर्थः । ❀अव्यपदेश्यत्वं विशेषणमिति—अस्य 'शाब्देऽतिव्याप्तिनिरासाय' इत्यादिः । एवञ्च शाब्दबोधस्य शब्दविषयकत्वं स्पष्टमेवोक्तम् । ननु व्यपदेशः = शब्दप्रयोगः, तदनर्हत्वमेव 'अव्यपदेश्यत्वम्' इति नेदं प्रत्यक्षलक्षणे निविष्टम्, किन्तु इन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारि ज्ञानं प्रमात्मकं प्रत्यक्षम् । तच्च द्विविधम्—अव्यपदेश्यं निर्विकल्पकम्, व्यवसायात्मकं सविकल्पकञ्चेति विभागपरमिदमिति चेत्, अत आह—❀अव्यपदिश्यमानत्वं चेति । ❀व्यपदेशाविषयकत्वमिति—व्यपदिश्यतेऽनेनेति व्यपदेशः = वाचकः शब्दः, तदविषयकत्वमित्यर्थः । नन्वेवमपि 'शाब्देऽतिव्याप्तिनिरासाय व्यपदेश्यत्वं विशेषणम्' इत्युक्तिर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सङ्गता, शाब्दज्ञानस्येन्द्रियार्थसन्निकर्षजन्यत्वाभावादिति चेत्, न, "यावदर्थं वै नामधेयशब्दाः, तैरर्थसंप्रत्ययः, अर्थसंप्रत्ययाच्च व्यवहारः। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानम् 'रूपम्' इति वा 'रसः' इत्येवं वा भवति, रूप-रस-शब्दाश्च विषयनामधेयम्, तेन व्यपदिश्यते ज्ञानम् 'रूपम्' इति जानीते 'रसः' इति जानीते। 'नामधेय' शब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते — अत आह — अव्यपदेश्यमिति" (न्या० भा० १।१।४) इति भाष्येणैव समाहितत्वात्। अयं भावः — यदा रूपादिरिन्द्रियेण गृह्यते तदा तद्रूपेन्द्रियसन्निकर्षोत्पन्नं प्रत्यक्षम्, तदपि रूपादिनामधेयशब्देन व्यपदिश्यते इति पूर्वस्मात् 'रूपम्' इति 'रसः' इति शाब्दज्ञानान्न विशिष्यत इत्युभयोरैक्याच्छाब्दज्ञानमपि प्रत्यक्षं प्रसज्येतेति तद्व्युदासार्थम् 'अव्यपदेश्यम्' इति। वस्तुतस्तु–प्रत्यक्षलक्षणे 'अव्यपदेश्यम्' इति विशेषणं व्यर्थमेव, शाब्दज्ञानादिष्विन्द्रियार्थसन्निकर्षोत्पन्नत्वस्याभावात्। सादृश्यमात्रेण विशेषणापेक्षत्वेऽनुमित्यादिव्यावृत्त्यर्थमपि विशेषणापेक्षा प्रसज्येतेति. प्रत्यक्षज्ञानविभागपरकोऽयं सूत्रांश इति। भाष्यानुसारेण च मूलोक्तिरत्र। ननु मनोरूपेन्द्रियजन्यं सर्वं ज्ञानमिति तत्रातिव्याप्तिरिति चेत्, न, इन्द्रियत्वावच्छिन्नजनकताया विवक्षितत्वात्। मानसप्रत्यक्षे तु मनस्त्वावच्छिन्नाया एव जनकतायाः सत्त्वात्। *अव्यभिचारीति — भ्रमभिन्नमित्यर्थः। अव्यपदेश्यम् = निर्विकल्पकम्। व्यपदेशः = शब्दप्रयोगः, तस्य च विशिष्टज्ञानेष्वेव सत्त्वाद् व्यपदेशानर्हत्वम्। *व्यवसायात्मकमिति — विशिष्टज्ञानात्मकमित्यर्थः। शाब्दप्रमाया अपि एकपदार्थेऽपरपदार्थसंसर्गरूपयोग्यताजन्यत्वादतिव्याप्तिवारणाय 'इन्द्रिय' इति। त्वङ्मनोयोगजन्यानुमितिनिरासाय 'अर्थ' इति। सर्वांशे 'कामिनी' इत्याद्यलौकिकप्रत्यक्षे इन्द्रियार्थजन्यत्वाभावादव्याप्तिवारणाय 'सन्निकर्ष' इति। एवञ्चालौकिकसन्निकर्षस्य तत्रापि सत्त्वान्नाव्याप्तिः। चक्षुःकपालसंयोगजन्ये घटचक्षुःसंयोगेऽतिव्याप्तिनिरासाय 'ज्ञानम्' इति। नन्वेवमप्यात्मनः सन्निकर्षजन्यानुमितावतिव्याप्तितादवस्थ्यमिति चेत्, न, 'ज्ञान'पदमहिम्ना विषयतासम्बन्धावच्छिन्नेन्द्रियार्थसन्निकर्षनिष्ठजनकतानिरूपितजन्यत्वस्य विवक्षितत्वात्। आत्ममनःसंयोगनिष्ठजनकतायास्तु समवायसम्बन्धावच्छिन्नत्वान्नातिप्रसङ्गः। ननु 'गुडं भुङ्क्ते' इत्यत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'गुड' शब्देन मधुरत्वप्रकारकशाब्दबोधवारणाय 'तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नप्रकारताशालिशक्तिज्ञानं कारणम्' इति नियमस्य वक्तव्यतया घटादिशब्दानां घटत्वाद्यवच्छिन्नप्रकारताशालिशक्तिमत्त्वेन घटशब्दत्वादेः शक्तिज्ञानीयप्रकारताऽनवच्छेदकतया शाब्दबोधे शब्दभानासम्भव इति चेत्,न,शब्दानां शब्देऽर्थे च खण्डशः शक्तिस्वीकारात्, परमते शब्दांशे स्मरणात्मकबोधस्यैवोपगमात् तद्विषयकशाब्दबोधं प्रति स्वनिरूपकत्व-स्वाश्रयत्वान्यतरसम्बन्धेन शक्तिविशिष्टोपस्थितेरेव कारणत्वाच्च। यत्तु-सम्बन्धिज्ञानविधया सम्बन्धस्य भानमिति, तन्न, 'हस्तिपक'शब्दाद्धस्तिनोऽपि बोधापत्तेः । ❀तद्भाष्य इति— एतत्सूत्रपरकन्यायभाष्य इत्यर्थः । ❀एवञ्चेति—शाब्दज्ञाने शब्दभानस्वीकारे चेत्यर्थः । अन्यत्र = चाक्षुषादौ । ❀तदभानाग्रह इति— तस्य शब्दस्याभानम् = तदभानं तत्राऽऽग्रहः = अभिनिवेशो मुधा = व्यर्थ एवेत्यर्थः । पातञ्जलानाम् = वैयाकरणानाम् । ❀उक्तप्रायमिति— 'शब्दविषयकत्वं शाब्दत्वम्' इति लक्षणे प्रत्यक्षस्य शब्दविषयकत्वेन शाब्दत्वापत्तिं ब्रुवता वात्स्यायनेन शाब्दबोधस्य शब्दविषयकत्वमर्थादेवोक्तम्, अन्यथाऽव्याप्तिरेव तेनाभिहिता स्यात्। अत एव 'ज्ञानजन्यत्वे सति शब्दज्ञानाजन्यत्वम्' इत्यनुमितिलक्षणे मननजन्यतत्त्वज्ञानस्य "तत्त्वमसि" इत्यादिशब्दविषयकत्वान्नाव्याप्तिरिति तार्किका आहुः । ननु 'शब्दज्ञानजन्यज्ञानत्वम्' एव शाब्दलक्षणम्, न तु 'शब्दविषयकत्वम्' इति चेत्, आह—❀शब्दविषयकत्वमेवेति—शब्दजन्यत्वलक्षणे शब्दप्रत्यक्षे विषयविधया शब्दस्यापि कारणत्वेन तस्यापि शब्दजन्यत्वादतिव्याप्तिः स्यादिति भावः । वस्तुतस्तु—'शब्दविषयकज्ञानत्वं शाब्दत्वम्' इत्युक्तावपि तत्रातिव्याप्तिस्तदवस्थैवेति शब्दनिष्ठवृत्तिज्ञानजन्यज्ञानत्वमेव शाब्दत्वं वाच्यम्, तथा च लक्षणानुरोधेन शब्दविषयकत्वं दुर्घटमित्युपाध्यायाः ।

मू०—"स्वं रूपम्"—(पा० सू० १।१।६८) इति सूत्रे भाष्ये स्पष्टमेतत् । तत्र हि "न वा एतद्वक्तव्यम् । किं कारणम् ? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः । आतश्च शब्दपूर्वः । योऽपि ह्यसौ नाम्ना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽऽहूयते, नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति किं भवानाह ? इति । शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः" इत्युक्तम् । 'शब्दपूर्वको हि' इत्यस्य श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोके प्रसिद्धमित्यर्थः । अन्वयमुक्त्वा व्यतिरेकमाह—आतश्चेति । प्रकारान्तरमाह—शब्दपूर्वकश्चेति—शब्दविशेषणक इत्यर्थः । तेनार्थेऽसम्भवेन कारणत्वेन विशेषणत्वेन चोपस्थिते शब्दे कार्यमिति भावः । चकारेणास्य युक्त्यन्तरत्वमेवोचितम् । "मन्त्रे" "यजुषि" इति च यदुच्यते तत्र 'मन्त्र' शब्दादौ कार्यासम्भवेन मन्त्रादिसहचरितेऽर्थे भविष्यति" (महाभा० १।१।६८) इति भाष्यप्रतीके कैयटेन स्पष्टमेवोक्तम्—"साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमाद्" इति । किञ्च, प्रत्यक्षादावपि विषयताभाननियमनिर्वाहाय पदभानमावश्यकम्, यज्ज्ञानं यत्पदादिविषयं तत् तज्जन्यबोधविषयतासमानविषयताकमिति नियमात् ॥

(रत्न०)—*एतदिति—"स्वं रूपम्—" (पा० सू० १।१।६८) इति सूत्रमित्यर्थः । *शब्दपूर्वक इति—'हि' शब्दः प्रसिद्धौ । उपलब्धः शब्दोऽर्थं प्रत्याययति, न तु सत्तामात्रेण । चक्षुरादीनि तु सत्तामात्रेणैवार्थानवगमयन्ति । अर्थस्य क्वचिदशास्त्रीये कार्येऽयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते, न तु विप्रकृष्टं शब्दान्तरमिति नहि तदर्थकशब्दान्तरे कार्यमिति भाव । यत्रार्थे कार्यसम्भवस्तत्रार्थस्य विशेष्यता शब्दस्य विशेषणता । विशेष्यतया शब्दस्य भाने तु उपस्थितस्यार्थस्य त्यागे मानाभावेनार्थस्यापि विशेषणतया भानेनार्थवत्परिभाषाऽपि सूत्रं विनैव सिध्येदिति सूत्रं व्यर्थमिति भावः । नन्वर्थज्ञानोत्तरं परं प्रति बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेः, अत आह—*अस्य श्रोतुरिति—'श्रोतुः शब्दज्ञानपूर्वकमर्थप्रत्ययः' इति लोके प्रसिद्धमित्यर्थः । 'यत्र यत्रार्थप्रत्ययस्तत्र तत्र शब्दज्ञानम्' इत्यन्वयमुक्त्वा व्यतिरेकव्याप्तिमाह—*आतश्चेति । नामज्ञानाभावे बोधाभाव इत्याह—*योऽपीति । प्रकारान्तरमाह—*शब्दपूर्वक इति—पूर्वम् 'शब्दज्ञानपूर्वकमर्थप्रत्यय इत्यु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पस्थितत्वात्तदुपात्तः शब्दो ग्रहीष्यते' इत्युक्तम् । अत्र पक्षे तत्तच्छब्द-प्रकारकार्थनिरूपिता खण्डशः शब्देऽर्थे च शक्तिः शब्दस्येत्युच्यते । तदाह—*शब्दविशेषणक इति—अयं भावः—अन्तरङ्गत्वात्, अहेयत्वात्, असाधारणत्वाच्च स्वरूपमेव मुख्योऽर्थः शब्दस्य । शब्दार्थयोरभेदाच्छब्द-गताया जातेरर्थे आरोपः, अतएवोक्तं हरिणा—

"यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते ।
संयोगसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते ॥
तथा शब्दार्थसम्बन्धाच्छब्दे जातिरवस्थिता ।
व्यपदेशेऽर्थजातीनां जातिकार्य्याय कल्पते ॥" इति ।

( वाक्यप० का० ३ समुद्दे० १ कारि० ७-८ )

तेन = प्रकारद्वयेन । *कारणत्वेनेति —'शब्दपूर्वको ह्यर्थ इति पक्षे' इत्यादिः । *विशेषणत्वेनेति – अस्य 'शब्दपूर्वकश्चार्थ इति पक्षे' इत्यादिः । ननु 'शब्दपूर्वकश्च' इत्यपि न हि पक्षान्तरं किन्तु पूर्वोपसंहार एव, अत आह —*चकारेणेति — 'यतः शब्दपूर्वकः' इति पूर्वहेतुतया न व्याख्येय-मित्यर्थः । पूर्वोपदर्शितभाष्ये —*अर्थस्य निवृत्तिरिति — अर्थबोधक-शब्दान्तरनिवृत्तिरित्यर्थः । एवं हि तत्र भाष्यम्—"न वा, शब्दपूर्वको ह्यर्थे सम्प्रत्ययस्तस्मादर्थनिवृत्तिः । नवा एतत्प्रयोजनमस्ति, किं कारणम् ? शब्दपूर्वको ह्यर्थे सम्प्रत्ययः । आतश्च शब्दपूर्वकः । योऽपि ह्यसावाहूयते नाम्ना, नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति किं भवानाह ? इति । शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः । इह च व्याकरणे शब्दे कार्य्यस्य सम्भवः, अर्थेऽसम्भवस्तस्मादर्थनिवृत्तिर्भविष्यति" इति । मूले च कियदंशमादाय तदाशयवर्णनमात्रम् । *मन्त्र इति — अशब्दसंज्ञाया-मित्यस्य प्रयोजनमनुसन्धायोक्तम् — "मन्त्राद्यर्थं तर्हीदं वक्तव्यम् । मन्त्राद्यर्थमिति चेत्, न, मन्त्रे, ऋचि, यजुषि यदुच्यते मन्त्रशब्दे, ऋक्शब्दे, यजुःशब्दे च, तस्य कार्य्यस्य सम्भवो नास्ति, इति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति, साहचर्यात्" (महाभा० १।१।६८) इति । 'मन्त्रादिसहचरित' इति प्रतीके कैयटोक्तिमाह—*साहचर्य्यं-चेति । *प्रत्यक्षादावपीति — अयम्भावः—घटचक्षुःसन्निकर्षेण घटत्व-प्रकारकं घटविशेष्यकमेव प्रत्यक्षं जायते, तच्च प्रत्यक्षे पदभानं विना नोप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पद्यते, तत्र घटप्रकारकघटत्वविशेष्यकस्याप्यापादयितुं शक्यत्वात् । पदभाने तु 'यत्पदविषयकं प्रत्यक्षं तत्पदजन्यशाब्दज्ञाने यत्र या विषयता भासते सैव विषयता प्रत्यक्षेऽपि भासते' इति नियमेन प्रत्यक्षे भासमान-'घट'पदजन्यघटत्वप्रकारकघटविशेष्यकमेव चाक्षुषं जायते नान्यथा, इत्याह—* यज्ज्ञानमिति—'यद् घटादिज्ञानं यद् घटपदादिविषयकं तद् घटादिज्ञानं तद् घटपदादिजन्यज्ञानीयविषयतातुल्यविषयताकम्' इति व्याप्ते-रित्यर्थः । आदिना वाक्यस्य संग्रहः । तेन 'घटो रूपवान्' इति प्रत्यक्षे 'घटो रूपवान्' इति वाक्यस्यापि भानात् तद्वाक्यजन्यबोधीयविषयता-समानविषयताकत्वनियमेन रूपनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यता-कमेव प्रत्यक्षं नान्यथेति नियम उपपद्यते । तथा च तत्तत्पदजन्य-बोधीयविषयताऽपि तत्तत्पदशक्यैवेति भावः ।

मू०—सन्निकर्षादिभिस्तु न व्यवस्था, 'घटो रूपवान्' इति ज्ञानवत्, 'घटस्य रूपम्' इति रूपविशेष्यकज्ञानस्यापि तेन सन्निकर्षेण जननात् । घटरूपोभयविषयक-ज्ञानस्य तत्संस्कारस्य वा पूर्वं सत्त्वेन यदा यज्ज्ञानं पूर्वं तदा तस्य विशेषणतेत्यप्ययुक्तम्; विशेषणज्ञानस्येव विशेष्यताऽवच्छेदकरूपेण विशेष्याग्रहदशायां तदनुत्पत्त्या विशेष्यज्ञानस्यापि विशिष्टबुद्धिकारणत्वात्, अन्यथा 'किञ्चिद्रूपवत्' इत्येव स्यात्, न तु 'घटः' इत्यादि । किञ्च, यथा 'विशिष्टस्य वैशिष्ट्यम्' इति बुद्धौ विशेषणताऽवच्छेदकप्रकारक-निश्चयस्य कारणत्वेऽपि लाघवाद्विशिष्टज्ञानं प्रति विशेषणज्ञानं का-रणमिति कल्प्यते—अत एव निर्विकल्पकसिद्धिः—तथा 'विशिष्टे वैशिष्ट्यम्' इति विषयताऽवगाहिबुद्धौ विशेष्यताऽवच्छेदकप्रकार-कविशेष्यनिश्चयस्य कारणतायाः सर्वेषामावश्यकत्वेन विशिष्टबुद्धि-त्वमेव विशेष्यज्ञानस्य लाघवात् कार्यताऽवच्छेदकमुचितम् । 'घटः' इत्यादिविशिष्टबुद्धावपि विशेषणज्ञानवत् निर्विकल्पकं विशेष्यज्ञान-मपि सुलभम् । अत एव 'घटघटत्वे' इति निर्विकल्पकाकारमाहुः ।

ज्ञानमात्रे विषयताभान-निरूपणम्



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( रत्न० )—ननु प्रत्यक्षस्थले यथा चक्षुषा संयोगसन्निकर्षेण घटस्य, संयुक्तसमवायसन्निकर्षेण रूपादेः, संयुक्तसमवेतसमवायेन रूपत्वादेर्भानं तथा तत्तन्निष्ठविषयताया अपि संयुक्तविशेषणताऽऽदिसन्निकर्षेण चक्षुरादिनैव भानं स्यात्, यथा संयुक्तविशेषणतया घटनिष्ठविषयतायाः संयुक्तसमवेतविशेषणतया घटत्वादिनिष्ठविषयताया इति चेत्, अत आह—
*सन्निकर्षादिभिस्तु इति । *तेन सन्निकर्षेणेति – एकेनैव सन्निकर्षेण प्रत्यक्षे कदाचिद् रूपस्य विशेष्यतया, कदाचित् विशेषणतया 'घटस्य रूपम्' 'रूपवान् घटः' इत्येवंक्रमेण बोधस्य दर्शनात् 'घटस्य रूपम्' इत्याकारकप्रत्यक्षे घटे प्रकारतैव, रूपे विशेष्यतैव' इति नियमस्य वक्तुमशक्यत्वादिति भावः । शब्दभानवादिमते तु 'घटस्य रूपम्' इति वाक्यस्यापि प्रत्यक्षे यदा भानं तदा तादृशवाक्यजन्यबोधीयविषयतासमानविषयताकत्वस्य प्रत्यक्षे नियततया 'घटस्य प्रकारत्वं रूपस्य विशेष्यत्वम्'इति नियमेन नियतैव विषयता भासते। पदानां वृत्त्यैव भानस्वीकारेण—'पदानां स्वपरत्वे लक्षणैव, न शक्तिः, अन्यलभ्यत्वात्। प्रत्यक्षोपस्थितत्वात् शब्दस्यापि भानमिति तु न युक्तम्, वृत्त्याऽनुपस्थितत्वेन 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्त्या पदविशिष्टप्रकृत्यर्थे प्रत्ययार्थान्वयानापत्तेः । अत एव = प्रत्ययार्थान्वयादेव । वृत्तिं विनाऽपि पदस्य भानम्, स्वभावात्। अन्यभानेऽतिप्रसङ्गवारणाय वृत्तिरपेक्षिता न तु स्वभानेऽपीत्यपि न वक्तव्यम् इति परास्तम् । ननु विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया कारणस्य कार्य्याव्यवहितप्राक्क्षणवृत्तित्वनियमाद् विशेषणीभूतरूपघटत्वोभयविषयकज्ञानस्य तत्संस्कारस्य वा विशिष्टबुद्धेः पूर्वं सत्त्वेन यदा यज्ज्ञानं पूर्वं तदा तत्र विशेषणता, यज्ज्ञानमुत्तरकालिकं तत्र विशेष्यतेति नियमेन निर्वाहः, अत आह — *घटत्वरूपोभयेति । *विशेष्यज्ञानस्यापीति — तुल्ययुक्त्या विशिष्टबुद्धौ निर्विकल्पात्मकविशेषणज्ञानस्येव निर्विकल्पात्मकविशेष्यज्ञानस्यापि कारणत्वाद् विशेष्यस्यापि पूर्वं ज्ञानसत्त्वे विशेषणत्वापत्तिः स्यादिति भावः । क्वचिद् विशिष्टबुद्धौ सविकल्पकज्ञानस्यापि कारणत्वमादायाह — *अन्यथा किञ्चिद् रूपवदिति – विशेष्यज्ञानस्याकारणत्वेऽपि विशिष्टबुद्धौ 'किञ्चिद्रूपवत्' इत्येव बोधः स्यान्न तु विशेषधर्मावच्छिन्नविशेष्यताकत्वेन । तत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हेतुमाह — *विशेष्याग्रहदशायामिति । *तदनुत्पत्त्येति — तद्दशायां रूपप्रकारकघटविशेष्यकज्ञानानुपपत्तेरनुभवसिद्धत्वेनेति भावः । ननु यत्र विशिष्टे वैशिष्ट्यं यथा 'रूपवान् घटः' इत्यत्र, विशिष्टे = घटत्वावच्छिन्ने, रूपस्य वैशिष्ट्यम् = संसर्गस्तत्रैव विशेष्यज्ञानस्य कारणत्वेन 'घटः' इति ज्ञाने विशेष्यज्ञानस्य कारणत्वे मानाभावोऽत आह — *किञ्च यथा विशिष्टस्य वैशिष्ट्यमिति — 'रक्तदण्डवद्भूतलम्' इत्यत्र रक्तत्वविशिष्टदण्डस्य वैशिष्ट्यं भूतले भासते । तत्र रक्तत्वप्रकारकनिश्चयस्यैव हेतुत्वम् , 'रक्तो दण्डो न वा' इति संशयानन्तरम् 'रक्तदण्डवद् भूतलम्' इति विशिष्टबुद्ध्यनुदयात् । ननु तादृशबुद्धौ रक्तत्वप्रकारकनिश्चयस्यैव हेतुत्वे 'रक्तदण्डो न वा' इति संशयानन्तरम् 'रक्तदण्डं संदेह्मि' इति विशिष्टविषयकानुव्यवसायानापत्तिरिति चेत्, न, तादृशानुव्यवसायस्य 'दण्डो रक्तो न वा' इति दण्डे रक्तत्वतदभावावगाहिपरकत्वेनादोषात् । 'घटवद्भूतलम्' इति विशिष्टवैशिष्ट्यबुद्धौ तु विशेषणत्वावच्छेदकप्रकारकज्ञानत्वेनैव कारणत्वम्, न तु निश्चयत्वेन, 'अयं घटो न वा' इति संशयानन्तरमपि 'घटवद्भूतलम्' इति विशिष्टबुद्ध्युदयात् । तथा च — विशिष्टवैशिष्ट्यबुद्धित्वापेक्षया विशिष्टबुद्धित्वस्य विशेषणताऽवच्छेदकप्रकारकनिश्चयत्वापेक्षया विशेषणज्ञानत्वस्य लघुभूतस्य यथा कार्य्यत्वकारणत्वावच्छेदकत्वम् ; तथा 'विशिष्टे वैशिष्ट्यम्' इति बुद्धावपि विशिष्टवैशिष्ट्यबुद्धित्वापेक्षया लघुभूतस्य विशिष्टबुद्धित्वस्यैव कार्य्यताऽवच्छेदकताया औचित्यम् । ननु 'घटत्वप्रकारकघटविशेष्यकज्ञानवानहम्' इत्यनुव्यवसायानुरोधेन सविकल्पकज्ञानस्य प्रत्यक्षसिद्धत्वमस्तु, निर्विकल्पकज्ञानस्य स्वीकारे तु मानाभावः, अत आह — *अत एवेति — विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वादेवेत्यर्थः । घटघटत्वज्ञानमन्तरा घटत्वप्रकारकघटविशेष्यकज्ञानासम्भव इति भावः । ननु तादृशबुद्धावन्यथासिद्धत्वाद् विशेषणज्ञानस्य न कारणत्वमिति चेत्, न स्वरूपतो घटत्वप्रकारकबुद्धिं प्रति स्वरूपतो घटत्वज्ञानस्य 'जातिमान् घटः' इति जातित्वेन घटत्वप्रकारकबुद्धिं प्रति जातित्वेन घटत्वज्ञानस्य च हेतुतया विशेषणज्ञानस्य हेतुत्वावश्यकत्वात् । 'विशिष्टे वैशिष्ट्यम्' इति 'रक्तदण्डः प्रमेयः' इत्यत्र रक्तत्वविशिष्टे दण्डे प्रमेयत्ववैशिष्ट्यज्ञानम् । एवम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'घटवद्भूतलम्' इत्यादौ भूतलत्वविशिष्टे भूतले घटस्य वैशिष्ट्यम् । नन्वेवमपि चक्षुः संयुक्तस्वरूपसम्बन्धकारणबलात् समवायरूपसम्बन्धभानं दुर्वारमिति चेत्, तर्हि प्रकारताविशेष्यताशून्यत्वादेव निर्विकल्पकत्वं बोध्यम् । ननु 'संसर्गता-प्रकारता-विशेष्यताः' इति विषयतात्रयशून्यस्य भानासम्भव इति चेत्, न, निर्विकल्पके तुरीयाया विषयतायाः स्वीकारात् ।

मू०—ये तु निर्विकल्पकं नेच्छन्ति, विशेषणज्ञानादिकारणत्वं च नेच्छन्ति, सन्निकर्षेणैव विशिष्टज्ञानमिच्छन्ति तेषां त्वनुपपत्तिरेव ।

घटादिपदजबोधविषयताभाने तु घटादिपदानां घटत्वविशिष्टे शक्तिरिति शक्तिग्रहो नियामकः । घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ने शक्तिरिति तदर्थः । अत एव विषयताविषयकोऽनुव्यवसायः । स्वरूपतो विषये विद्यमानपदार्थस्यानुव्यवसाये भाने तु आम्रफलादिविषयकज्ञानानुव्यवसाये माधुर्यादीनामपि विषयताऽऽपत्तिः । 'कुब्जखञ्जः' 'खञ्जकुब्जः' इत्यादौ विषयताभानं विना बोधे (ध) विशेषस्योपपादयितुमशक्यत्वाच्च । सम्बन्धस्य स्वरूपसम्बन्धेनैव भानवद् विषयतानां स्वरूपत एव भानं न कयाऽपि विषयतयेति नानवस्था । न च विषयतानां कार्य्यकारणभावबलादेव बोधः, तद्बोधकारणतानियामकत्वेन शक्तिकल्पनाऽऽवश्यकत्वात् ।

(रत्न०)—परमतं खण्डयति—*येत्विति । *विशेषणज्ञानेति—युगपद्विशेष्यविशेषणयोरिन्द्रियसन्निकर्षेणैव विशिष्टबुद्ध्युपपत्तौ विशेषणज्ञानकारणत्वे मानाभावः । तथा च विशेषणज्ञानसम्पादकतया निर्विकल्पकस्याप्यसिद्धिः । कारणाभावेन कार्य्याभावस्य न्यायसिद्धत्वात् । ननु विशेषणज्ञानस्य कारणत्ववादिनयेऽपि स्मरणात्मकविशिष्टबुद्धौ तस्य कारणत्ववैफल्यम्, विशेषणज्ञानदशायां तत्संस्काराभावदशायां वा कारणाभावादेव स्मरणासम्भवात्, तथा च विशिष्टस्मरणस्यैव कारणत्वमस्तु, कृतं निर्विकल्पकज्ञानकल्पनयेति चेत्,न, अपूर्वचैत्रत्वादेः स्मरणासम्भवेन विशिष्टबुद्धिसिद्ध्यनापत्तेः । *सन्निकर्षेणैवेति —क्लृप्तकारण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भावेन सन्निकर्षेणैव विशिष्टबुद्धिसिद्धिरिति भावः । ❀अनुपपत्तिरेवेति— 'रूपवान् घटः' इत्यादि प्रत्यक्षकाले घटस्य विशेष्यत्वमेव रूपस्य विशेषणमेवेति नियमस्यानुपपत्तिरेवेत्यर्थः । विशेषणताऽवच्छेदकप्रकारकनिश्चयादेः कारणत्वं प्रत्यक्ष एव। शाब्दबोधस्थले तु 'खलकपोत' न्यायेन पदार्थोपस्थित्या शाब्दबोधसिद्धिः । ननु विशेषणज्ञानस्य हेतुत्वमात्रेण विशिष्टस्य वैशिष्ट्यबुद्ध्युपपत्तौ विशेषणताऽवच्छेदकप्रकारकज्ञानस्य हेतुत्वे मानाभाव इति चेत्, न, घटत्वादिनिर्विकल्पकानन्तरम् 'घटो नास्ति' इति प्रत्यक्षापत्तेः । न चाभावप्रत्यक्षे प्रतियोगिताऽवच्छेदकप्रकारकज्ञानस्य हेतुत्वम्, तत्कल्पने गौरवापत्तेः। ननु प्रत्यक्षादौ पदभानस्त्रीकारेऽपि विषयताभानस्याननुगमतादवस्थ्यम्, शाब्दबोधे विषयताभानस्यानुगतत्वे एव प्रत्यक्षादावपि तत्सिद्धेरिति चेत्, अत आह— ❀घटादिपदजबोध इति । ❀शक्तिग्रह इति— विषयतानिरूपितशक्तेरपि तत्र स्वीकार इति भावः । ननु शक्तिग्रहस्य घटत्वादिविषयकबोधनियामकत्वेऽपि शब्दमर्यादया विषयतानिरूपितशक्तेरलाभेन तद्भानानियमः, अत आह— ❀घटत्वनिष्ठेति— एवं च घटादिवत्तन्निष्ठविषयताऽपि तत्र भासत इति भावः । ❀अत एवेति— विषयतानिरूपितशक्तेरपि स्वीकारेण शाब्दबोधे तद्भानादेवेत्यर्थः । ❀अनुव्यवसाय इति— 'घटत्वनिष्ठप्रकारताविषयकज्ञानवानहम्' इत्यादिरूपोऽनुव्यवसाय इत्यर्थः । विषये = आम्रफलादौ । स्वरूपतः = स्थितिमात्रेण, पदार्थस्य भानस्वीकारे त्वाम्रफलपदीयशक्त्यविषयमाधुर्य्यादीनामप्यनुव्यवसाये भानापत्तिरिति भावः । ननु विषयतायाः शाब्दबोधे भानाभाव एवास्तु, अत आह— ❀कुब्जखञ्ज इति— उभयत्र पदार्थानां साम्येऽपि 'कुब्जखञ्जः' इत्यत्र कुब्जनिष्ठप्रकारतानिरूपितखञ्जनिष्ठविशेष्यताया भानम्, 'खञ्जकुब्जः' इत्यत्र खञ्जनिष्ठप्रकारतानिरूपितकुब्जनिष्ठविशेष्यताया भानमिति विषयताभेदादेव भेदः । ननु प्रकारत्वादेरपि यत्किञ्चिद्विषयतयैव भानं वक्तव्यम्; यद्विषयतया भानं स्यात्तस्या अपि विषयतारूपत्वेन विषयतान्तरेण भानमित्यनवस्था स्यात्, अत आह— ❀सम्बन्धस्य स्वरूपेति । ❀बलादेवेति— 'घटत्वनिष्ठप्रकारतानिरूपकशाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वनिष्ठप्रकारतानिरूपकशक्तिज्ञानस्य कारणत्वम्' इत्येवंरूपेण कार्य्यकारणभाव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बलादेवेत्यर्थः । *तद्बोधकारणतेति — तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तन्निरूपितशक्तिज्ञानस्य कारणतया प्रकारत्वाद्यंशविषयकशाब्द-बुद्धित्वावच्छिन्नं प्रति प्रकारत्वाद्यंशनिरूपितशक्तिमन्तरा प्रकारत्वादीनां शाब्दबोधासम्भवेन तन्निरूपितशक्तिकल्पनाया आवश्यकत्वादिति भावः ।

मू० — समर्थसूत्रे ( पा० सू० २।१।१ ) भाष्ये च 'जहत्स्वार्थवृत्तिव्युत्पादनावसरे 'राजपुरुषः' इत्यादौ वाक्ये 'राज' पदार्थे विद्यमानविशेष्यत्वरूपस्वार्थस्य त्याग इत्युक्तम् । एवञ्च ऋष्यनुभवसिद्धं विषयताभानं तच्छक्यत्वञ्च ।

( रत्न० )—*भाष्ये इति—तत्र हि—"अथ ये वृत्तिं वर्तयन्ति किं ते आहुः ?" ये कार्य्यशब्दिका वाक्यादेव वृत्तिं निष्पाद्यां मन्यन्ते तेषां मते किं वृत्तिलक्षणमाहुः ? इत्यर्थ इति वृत्तिलक्षणप्रश्नेऽन्यस्यार्थे यत्रान्य-शब्दोऽभिधत्ते सा वृत्तिर्यथा राजपुरुष इत्यत्र वाक्यावस्थायामनुक्तः पुरुषरूपार्थो वृत्तौ 'राज' शब्देनाभिधीयते इत्यर्थकम् "परार्थाभिधानं वृत्तिः" इत्युक्त्वा—ननु न हि स्वार्थमजहतः स्वेनार्थेन वशीकृतस्यार्थान्त-रोपादानं घटत इत्याशङ्क्य "का तर्हि वृत्तिर्न्याय्या ? जहत्स्वार्था" इत्य-भिधाय 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति ? इत्याशङ्क्य सिद्धान्तिनोक्तम्—"नैष दोषः, जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं जहाति । तद्यथा तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, न तु हिक्कित-हसित-कण्डूयितानि । न चायमर्थः परार्थ-विरोधी विशेषणं नाम, तस्मान्न हास्यति" इति । *नात्यन्तायेति—त्यागमात्रमभिसन्धाय जहत्स्वार्थेत्युच्यते, न तु सर्वात्मना त्यागः । *न चायमर्थ इति—वाक्येऽपि राजार्थस्य विशेषणत्वात् कस्तस्य वृत्तौ विशेष्य इति चेत्, वाक्ये स्वविशेषणसम्बन्धप्रतिपत्तौ सामर्थ्याविघातः । वृत्ता-वुपसर्जनीभूतेन स्वार्थेन प्रधानार्थस्योपकारात् स्वविशेषणप्रतिपत्तौ सामर्थ्यहानिः, पदार्थैकदेशत्वात् । एवञ्च वाक्ये विद्यमानस्य पदार्थान्तर-निष्ठप्रकारतानिरूपितविशेष्यत्वरूपस्वार्थस्य वृत्तौ त्याग इति भावः । विषयतायाः पदाशक्यत्वे तु तस्याः स्वार्थत्वाभावात्तत्त्यागेऽपि जहत्स्वार्थ-त्वोक्तिरसम्भूतैव स्यात्, "यः परार्थविरोधी स्वार्थस्तं जहाति" इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भाष्याक्षरास्वारस्यञ्च। 'परार्थविरोधी' इत्यस्य हि 'राज'पदेन परार्थस्य पुरुषरूपार्थस्यास्कन्दने तद्विशेषणत्वेन राजपदार्थोपस्थितौ राजरूपोऽर्थः स्वतो न विरोधी किन्तु तद्गतविशेष्यत्वादिकमेव विरोधिभूतम्, अतो राजरूपार्थं न ह्यास्यति किन्तु तद्गतविशेष्यतारूपमेव स्वार्थं तदास्कन्दनविरोधिभूतं त्यजति इत्यर्थ इति। एवञ्चैतद् भाष्यात् 'विषयता पदशक्या' इति स्पष्टमेव प्रतीयते। तदाह—॥एवञ्च ऋष्यनुभवेति—विषयताया ज्ञाने भानं पदशक्यत्वञ्चानुभवसिद्धमिति भावः।

मू०—अत एव "व्यक्त्याकृतिजातयस्तु पदार्थः" (न्या० द० २।२।६७) इति सूत्रे न्यायवार्तिककृतोक्तम्—"तु शब्दो विशेषणार्थः। किं विशेष्यते ? प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्" इति। "प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः" (न्या० भा० १।१।३३) इति प्रस्तावेऽपि न्यायवार्तिककृतोक्तम्—अनित्यः शब्दः, कृतकत्वात्, इत्यनुमाने शब्दस्य सिद्धत्वेन साध्यत्वं न भवतीति 'प्रज्ञापनीय' इत्यादि। नापि शब्देऽनित्यत्वं साध्यम्, कृतकत्वेन हेतुना साध्यस्य योगाभावात्। अनेन परम्परासम्बन्धानामसम्बन्धत्वं दर्शयति। किञ्चानित्यत्वमपि घटादौ सिद्धम्। तस्मादन्यधर्मत्वेन प्रज्ञातस्यानित्यत्वस्य धर्मिणा शब्देन यो विशेष्यविशेषणभावः स साध्यः। स चोभयाश्रयः। 'धर्मी विशेष्यः धर्मो विशेषणम्' इति। अनेन ज्ञाने विषयताभानं स्पष्टमेवोक्तमित्यन्यत्र विस्तरेण निरूपितम्।

(रत्न०)—व्यक्त्याकृतिजातीनां मिलितानामेव पदार्थत्वमस्ति, न तु केवलानाम्; तत्र दोषाणां पूर्वमुक्तत्वात्। यद्वा, जात्याकृतिविशिष्टायाः व्यक्तेर्वाच्यत्वमिति सूत्रार्थः। ॥विशेषणार्थ इति—विशेषबोधनार्थ इत्यर्थः। अभिप्रेतविशेषं जिज्ञासते—॥किमिति। उत्तरमाह—॥प्रधानेति—जात्याकृतिव्यक्तिषु शब्दवाच्यत्वे प्रधानाङ्गभावस्य विशेष्यविशेषणभावस्य नियमो नास्तीति 'तु' शब्देन सूत्रघटकेन बोध्यत इत्यर्थः। तथा च क्वचिद्व्यक्तेः, क्वचिज्जातेः क्वचिदाकृतेः प्राधान्यं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवति । जात्यादीनां गौणप्रधानभावस्य नियतत्वाभावात्तिसृणामपि पदार्थत्वमित्यर्थः । 'तु' शब्द एकैकमात्रस्य पदार्थत्वव्यवच्छेदाय । अन्यथा कदाचित् कस्याश्चित् उपस्थितिः स्यात्" इत्यन्यैर्व्याख्यातम्, तन्निरासाय मूले उक्तम्—*वार्तिककृतेति—यदा भेदविवक्षा विशेषगतिश्च 'गौस्तिष्ठति' 'गौर्निषण्णा' इति, तदा व्यक्तिः पदार्थोऽङ्गं जात्याकृती । जातावाकृतौ च स्थानगमनादीनामभावाद्यत्र सम्भवः स पदार्थ इति । यदा पुनर्भेदो न विवक्षितः; समान्यावगतिश्च, तदा जातिः पदार्थः, यथा—'गौर्न पदा स्प्रष्टव्या' इति । आकृतेश्च प्रधानभाव उत्प्रेक्षितव्य इति स्वयमुत्प्रेक्ष्य इत्यर्थः । क्व पुनराकृतेः प्राधान्यं दृष्टम् ? यथा—'पिष्टकमय्यो गावः क्रियन्ताम्' इति । तदेतद् बहुलं प्रयोगेषु प्रधानोपसर्जनभावः । स्वयमुत्प्रेक्ष्य इति" (न्या० वा० २।२।६७) इति न्यायवार्तिककृतोक्तम् । विशेष्यविशेषणभावरूपस्य प्रधानोपसर्जनभावस्य पदार्थत्वं वदता न्यायवार्तिककृता स्पष्टमेव विषयतायाः पदार्थत्वं शाब्दे भानञ्चोक्तम् । ज्ञाने विषयताया भाने वार्तिककृदुक्त्यन्तरमपि प्रमाणयति—*प्रज्ञापनीयेति—"साध्यनिर्देशः प्रतिज्ञा" ( न्या० द० १ । १ । ३३ ) इति सूत्रेण प्रतिज्ञालक्षणमुक्तम् । तत्र "तत्र प्रतिज्ञापनीयधर्मविशिष्टो धर्मी साध्यस्तस्य निर्देशः प्रतिज्ञापरिग्रहवचनम् । उदाहरणम्—'अनित्यः शब्दः' इति" (न्या० वा० १।१।३३) इति न्यायवार्तिककृता व्याख्यातम् । प्रज्ञापनीयेन = साध्येन, धर्मेण = पदार्थेन वह्न्यादिना, विशिष्टस्य = धर्मिणः, पक्षस्य = पर्वतादेः, यत्परिग्राहकं वचनं सा प्रतिज्ञा' यथा—पर्वतो वह्निमान् । अत्र धर्मी†

---

† न च पर्वते वह्निनिष्ठप्रकारतानिरूपितविशेष्यता, पर्वतत्वनिष्ठप्रकारतानिरूपितविशेष्यता चेति विशेष्यतयोर्विरोधाद् भानं न स्यादिति वाच्यम्, अन्यनिरूपितविशेषणताया अन्यनिरूपितविशेष्यतयाऽविरोधात् । अतो 'नित्यत्वविशिष्टघटत्ववान्' इत्यर्थे 'नित्यो घटः' इत्यस्य साधुत्वाभावः, घटत्वे नित्यत्वनिरूपितविशेष्यताया घटनिरूपितप्रकारतायाश्च भानाभावस्यानुभवसिद्धत्वात् । एवञ्च 'राजपुरुषः' इत्यादौ राज्ञि प्रकारतैव, न तु विशेष्यता । राजत्वे प्रकारत्वावच्छेदकताख्यविषयतैव, न तु राजनिरूपिता प्रकारता । पुरुषे च राज-पुरुषत्वोभयनिरूपितं विशेष्यताद्वयम्, अविरोधात् । न चैवं घटप्रकारकभूतलविशेष्यकप्रत्यक्षस्य 'घटवद्भूतलम्' इति शब्देनाभिलापानापत्तिः, तस्य प्रत्यक्षस्य वाक्यजन्यबोधीय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेष्यः, धर्मो विशेषणम् । अत्र — "परिगृह्यतेऽनेनेति परिग्रहः, स च वचनश्चेति परिग्रहवचनम्" इति तात्पर्य्यटीका । बोधनीयो धर्मो वह्निस्तद्विशिष्टो धर्मी पर्वतः, स साध्यः, । 'अनित्यः शब्दः' इत्यत्रानित्यत्वविशिष्टः शब्दो बोध्यते, ततश्चानित्यत्वविशिष्टः शब्दः साध्य इति भावः । अत एव "जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयः" इति भगवान् पतञ्जलिः । "प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा" ( न्या० भा० १।१।३३ ) इति तत्र भाष्यकारः । यदि प्रज्ञापनीयः न विशेषणम्' । अथ विशेषणम्, न प्रज्ञापनीयः । नासिद्धं विशेषणं भवतीति सिद्धेनायं विशेष्यते न साध्येनेति" ( न्या० वा० १।१।३३ ) अत्र शब्दस्यसिद्धत्वात्साध्यत्वं न सम्भवति, नाप्यनित्यत्वं साध्यम्, घटादौ सिद्धत्वात् । नापि शब्दनिष्ठमनित्यत्वं साध्यमित्याह— *नापीति— अयम्भावः — यद्यपि घटादावनित्यत्वं सिद्धं तथापि शब्देऽनित्यत्वमसिद्धमेवेति तदेव साध्यम् । तथाहि — 'अनित्यत्वम्' शब्दवृत्ति, कृतकत्वात्' इत्यनुमाने हि अनित्यत्वं पक्षः शब्दवृत्तित्वं साध्यम् । तथा च साध्यवति पक्षे हेतोर्वृत्तित्वमपेक्षितम्, हेतुश्च कृतकत्वरूपो न हि अनि-

---

विषयतासमानविषयताकत्वाभावात्, शब्दजबोधे घटवतो भूतले विशेषणत्वादिति वाच्यम्, 'घटवत्' इत्यंशे घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यत्वांशमादायादोषात् । न च 'घटवत्' इत्यंशीया विशेष्यता सम्बन्धित्वावच्छिन्ना, प्रत्यक्षीया तु भूतलत्वावच्छिन्नेति विशेष इति वाच्यम्, 'भूतल' पदेनापि सम्बन्धिरूपतद्व्यक्तेरेवोपस्थित्या सम्बन्धिनिष्ठविशेष्यताया अपि भूतलत्वावच्छिन्नत्वबोधनात् । समानाधिकरणधर्मस्यैवावच्छेदकत्वाद् भूतलत्वस्यापि तत्समानाधिकरणत्वात् । नन्वेवम् 'नीलो घटः' इत्यादौ नीलनिष्ठप्रकारताया अपि घटत्वसामानाधिकरण्याद् घटत्वावच्छिन्नत्वापत्तिः, न चेष्टापत्तिः, अनुभवविरोधादिति चेत्, न; एकरूपेणैकत्र विशेष्यताऽवच्छेदकत्व – प्रकारताऽवच्छेदकत्वयोर्विरोधात् । भिन्नपदोपस्थितैकवृत्तिविशेष्यताद्वयस्य तु शब्दान्तरोपस्थितसमानाधिकरणधर्मान्तरावच्छेद्यत्वे न कश्चिद्विरोधः । अत एव घटविधेयकानुमितेरपि 'घटवद्भूतलम्' इत्यभिलापः । तत्र 'भूतल'पदात् पृथगुपस्थितेरपि सत्त्वेन ततो घटविधेयकबोधस्य सम्भवात् । यत्तु—घटवतो भेदसम्बन्धेन भूतलेऽन्वयः, तन्न, पदद्वयोपस्थाप्ययोस्तत्रैक्येन सम्बन्धाकाङ्क्षायास्तत्राभावात् । अभेदस्य तु न सम्बन्धत्वमिति वक्ष्यते, इति केचित् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यत्वरूपपक्षवृत्तिः किन्तु शब्दवृत्तिरेवेति हेतुसाध्ययोः सामानाधिकरण्याभावादनुमित्यसिद्धिरित्याह — *कृतकत्वेन हेतुनेति । अनेन = हेतोः पक्षवृत्तित्वाभावबोधनेन । *परम्परासम्बन्धानामिति — "कृतकत्वरूपहेतोः स्वाश्रयवृत्तित्वसम्बन्धेनानित्यत्ववृत्तित्वेऽपि कृतकत्वेन हेतुना साध्यस्य योगाभावात्" ( न्या० वा० १।१।३३ ) इति वदता वार्तिककृता परम्परासम्बन्धानामसम्बन्धमुक्तप्रायम् , परम्परासम्बन्धस्याप्यनुमितिप्रयोजकत्वेऽतिप्रसङ्गाच्च । तस्मात् 'प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः' इत्येव वरम् । ननु परम्पराघटितस्यासम्बन्धत्वे 'एकं रूपम्'। इत्यादिप्रतीत्यनुपपत्तिः, समवायेन गुणे गुणानङ्गीकारात् , परम्परायाश्च सम्बन्धत्वाभावादिति चेत् , न, तत्र सङ्ख्याऽभावरूपस्यैकत्वस्य स्वरूपसम्बन्धेन वृत्तित्वमादाय तथा प्रतीत्युपपत्तेः । 'चतुर्विंशतिर्गुणाः' इत्यादीनामुपपत्तयेऽपेक्षाबुद्धिविषयत्वरूपं चतुर्विंशतित्वादिकं बोध्यम् । घटादौ सिद्धमनित्यत्वमपि न साध्यम् , सिद्धत्वादेव हेतोरित्याह — *किञ्चेति । ननु यदि अनित्यत्वरूपो धर्मः प्रज्ञापनीयस्तदाऽज्ञातधर्मस्य कथं विशेषणत्वम् , ज्ञातस्यैवेतरव्यावर्तकत्वादत आह — *तस्मादिति — अन्यधर्मत्वेन = घटादिधर्मत्वेन । धर्मधर्मिणोः सामान्यतो ज्ञातत्वेऽपि तयोर्विशेष्यविशेषणभावस्य बोधनार्थमेवानुमानमिति भावः । *स चेति — विशेष्यविशेषणभावश्चेत्यर्थः । उभयाश्रयः = शब्दानित्यत्वोभयसम्बन्ध्याश्रितः । तथा च स्वरूपसम्बन्धेन विशेष्यविशेषणभावः साध्यः । पक्षत्वञ्चात्र सम्बन्धिद्वयस्य, विषयतासम्बन्धरूपसाध्यस्योभयवृत्तित्वात् । पूर्वं शाब्दज्ञाने विषयताभानमुक्तम् , अत्र तु अनुमाने; इति ज्ञानमात्रे विषयताभानं प्रदर्शितं भवति ।

मू०—सर्वत्र शब्दभानमित्ययमर्थः 'अथ 'गौः' इत्यत्र कः शब्दः ?' (महाभा० पस्पशाह्नि०) इत्यनेनापि सूचित इत्यग्रे निरूपयिष्यते ।

ज्ञाने शब्दभानस्यावयविनोऽवयवानतिरिक्तत्वस्य च वर्णनम् ।

शब्दार्थयोरविभागादेव पस्पशायाम्—'अथ गौरित्यत्र कः शब्दः ?' इति प्रश्नः । किञ्च, तत्र प्रघट्टके जात्यादीनां शब्दत्वमाशङ्कितम् , तद्विविक्तशब्दतत्त्वाज्ञानात् । न चैवमपि गुणादीनां 'गो'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दत्वाशङ्का कथम् ? तेन शब्देन तेषां तादात्म्याभावादिति वाच्यम्, निरन्तरत्वरूपायुतसिद्धत्ववदवयवविशेषानुगतसामान्यविशेषरूपगुणसमूहस्यैव द्रव्यत्वात् । "स्त्रियाम्" ( पा० सू०४।१।३ ) इति सूत्रे — "द्रव्ये च भवतः कः संप्रत्ययः ? गुणसमुदायो द्रव्यम्" इति भाष्यात् । "कं च प्रति अवयवो गुणः? समुदायं प्रति" इति "संख्याया अवयवे" ( पा० सू०५।२।४२ ) इति सूत्रभाष्याच्च । †"अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यम् इति पतञ्जलिः" ( यो० द० भा० ३।४४ ) इति पातञ्जलभाष्याच्च । गुणपदेनावयवा धर्माश्च । अत एव व्रीहिषु प्रोक्षणजन्यसंस्कारस्यांशत्वावयवत्वादिना व्यवहारः समन्वयसूत्रे ( वे० सू० १।१।४ ) भामत्याम् । समुदायसमुदायिनोश्च परस्परं भेदाभेदाभ्युपगमः । अत एव 'मृद् घटो मृदि घटः' इत्याद्युपपद्यते गुणगुण्याद्योरिव । अत एव 'घटः' शुक्लः 'घटे रूपम्, गन्धः, स्पर्शः' इत्याद्युपपद्यते । अत एव 'गुणाश्रयो द्रव्यम्' इति परे वदन्ति । 'अयुतसिद्धावयवविशेषानुगतः' इत्युक्तेर्वनादीनां नातिरिक्तद्रव्यत्वम् , निरन्तरावयवत्व ( निरन्तरत्व ) रूपायुतसिद्धत्वाभावात् । विजातीयावयवविभाग एव तन्नाशकः, भूयोऽवयवावच्छेदेन चक्षुस्संयोगश्च तत्प्रत्यक्षे कारणम् ।

( रत्न० ) — प्रतिज्ञातेऽर्थे महाभाष्यं प्रमाणयति — *सर्वत्र शब्दभानमिति । *शब्दार्थयोरिति— 'अयं गौः' 'अयं शुक्लः' इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनात् शब्दस्वरूपनिर्धारणाय प्रश्नः । *अथ गौरिति— 'गौः' इति विज्ञाने प्रतिभासमानेषु शब्दजातिव्यक्त्यादिरूपवस्तुषु 'शब्दपदवाच्यः कः' ? इति प्रश्नः । नन्वेवं गुणक्रिययोः शब्दत्वाशङ्काऽसङ्गता, तयोः 'गौः' इति शब्दजन्यबोधाविषयत्वादिति चेत्, न, गुणगुणिनोः क्रियाक्रियावतोः शब्दार्थयोश्चाभेदात् 'तदभिन्नाऽभिन्नस्य' इति न्यायेन तच्छ-

---

† "अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः" इति तत्रत्यः पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ङ्गोपपत्तेः । यद्वा, 'गुणसमूहो द्रव्यम्' इति पक्षे समूहस्य वाच्यत्वेऽवयवभूतगुणादीनामपि वाच्यत्वमादाय शङ्का बोध्या । प्रघट्टके = प्रकरणे । ॐविविक्तेति—जात्यादिव्यतिरेकेण द्रव्यस्यानुपलम्भात् शब्दार्थयोरभेदाध्यासेऽर्थगतजातेरपि शब्दत्वसम्भवादिति भावः । ॐएवमपीति—प्रश्नस्य शक्यार्थे शब्दत्वाशङ्कायाश्चोक्तरीत्योपपत्तावपीत्यर्थः । ॐकथमिति—एकस्मिन्नेव फले पूर्वरूपनाशानन्तरं रूपान्तरोत्पत्तौ 'तदेवेदम्' इति प्रत्यभिज्ञाया दर्शनाद्गुणसमूहातिरिक्तस्यैव द्रव्यस्य न्याय्यत्वादिति भावः । तेन शब्देन = गोशब्देन । तेषाम् = गुणादीनाम् । ॐतादात्म्याभावादिति—यदर्थनिरूपिता शक्तिर्यत्र शब्दे तदर्थेनैव तस्य तादात्म्यम्, न हि गोगतगुणाः गोशब्दवाच्याः, गुणैः सह गोशब्दस्य तादात्म्याभावादित्यर्थः । ॐनिरन्तरत्वरूपेति—द्वयोः परस्परसम्बन्धमन्तराऽविद्यमानत्वरूपायुतसिद्धत्वविशिष्टा येऽवयवास्तदनुगता ये सामान्यविशेषगुणास्तत्समूहस्यैव द्रव्यत्वात्, द्रव्यात्मकव्यक्तेश्च शब्दशक्यत्वात् शङ्का युज्यत इति भावः । उक्तविशेषणविशिष्टगुणसमूहस्यैव द्रव्यत्वे भाष्यं प्रमाणयति—ॐस्त्रियामिति—तत्र हि "कस्य भवानेकं गुणं न्याय्यं मन्यते स्त्रीत्वं नाम ? द्रव्यस्य । द्रव्ये च भवतः कः सम्प्रत्ययः ? यदि तावद् गुणसमुदायो द्रव्यम्" इत्युक्तम् । ॐभाष्यादिति—तत्र हि—"अवयवप्रत्ययविधानेऽवयविनि प्रत्ययो भवतीति वक्तव्यम् ।...... अथावयविनीत्युच्यमानेऽवयवस्वामिनि कस्मान्न भवति ? पञ्चपञ्चवयवा देवदत्तस्येति । अवयवशब्दोऽयं गुणशब्दः । अस्येति च वर्त्तते । तेन यम्प्रत्यवयवो गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम् । कञ्च प्रत्यवयवो गुणः ? समुदायम्" इत्युक्तम् । इदञ्च भाष्यम् 'गुणसमुदायो द्रव्यम्' इति स्वीकारे एव संगच्छेत, तत्पक्षे एव समुदायम्प्रति गुणस्यावयवत्वात् । एवञ्च स्वामिनि प्रत्ययाभावः । अवयवारब्धे एवावयविशब्दप्रयोग इति तदाशयः । तेन तदनुगतस्तत्समूह एवावयवीति ध्वनितम् । ॐअयुतसिद्धेति—अयुतसिद्धा येऽवयवविशेषास्तदनुगतो यः सामान्यविशेषरूपगुणसमुदायस्तदेव द्रव्यमित्यर्थः । अयुतसिद्धत्वञ्च—अपृथग्भावेनानुभूयमानत्वम् । ननु स्त्रियामिति सूत्रे—'गुणसमुदायो द्रव्यम्' इत्युक्तम्, "संख्यायाः"—( पा० सू० ५।२।४२ ) इति सूत्रे च "समु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दायं प्रत्यवयवो गुणः" इत्युक्त्याऽवयवसमुदायो द्रव्यमिति प्रतीयते इति विरोधोऽत आह — *गुणपदेनेति — 'गुणसमूहः' इत्यत्र 'गुण' पदेने-त्यर्थः । अत एव = गुणपदेन धर्माणां ग्रहणादेव । *समन्वयसूत्रे भाम-त्यामिति—तत्र हि – 'निरवयवम्' इति भाष्यप्रतीकमादाय—"निरव-यवमिति संस्कार्य्यकर्मताम्" अत्र 'अपाकरोति' इति पूर्वतनं सम्बध्यते "व्रीहीणां खलु प्रोक्षणेन संस्काराख्योंऽशो यथा जायते, नैवं ब्रह्मणि कश्चिदंशः क्रियाधेयोऽस्ति; अनवयवत्वात् = अनंशत्वात् ।" इत्युक्तम् । अत्र ब्रह्मणोऽनवयवत्वप्रदर्शने वैधर्म्येण व्रीहिदृष्टान्ते 'यथा संस्कारा-ख्योंऽशः' इत्यनेन संस्कारस्यावयवत्वं स्पष्टमेवोक्तम् । अत्र कुञ्जिका-काराः — "पृथिव्याः सामान्यं कठोरत्वम्, जलस्य स्नेहः, वह्नेरुष्णता, वायोर्वहनशीलता, आकाशस्य सर्वतो गतिः । शब्द-स्पर्श-रूप-रस-गन्धाश्च पृथिव्यादीनां विशेषाः; तत्समूहो द्रव्यम्" । अत्र कुञ्जिकाकारमते एतेषां सामान्यविशेषत्वं चिन्त्यम् । तत्र 'समूहमात्रं न द्रव्यम्' इति बोधयितु-मुक्तम्—*अयुतसिद्धेति । एतस्यैव विवरणम्—*निरन्तरत्वरूपेति— यथा हि शरीरादीनामवयवा अयुतसिद्धाः, न तथा वनादीनामवयवा इति न तेषां द्रव्यत्वम् । गुणानामपि रूपादिसामान्यम्, शुक्लादिविशेष इति" अन्ये तु—तत्र सामान्यं नाम घटे घटव्यक्तिरूपघटपरमाणुमत्त्वम् । रूपक्रियादीनामप्येतन्मते द्रव्यत्वात् तत्तद्व्यक्त्यनुगमोऽस्त्येव । रूप-रस-गन्ध-स्पर्श-शब्दानां तत्तन्मात्ररूपतया द्रव्यत्वं स्पष्टमेव । गुरुत्वाद्यपि प्रकृतिपरिणामित्वात् तथा । तेषां गुणत्वव्यवहारस्तु 'घटे रूपम्' इत्यादि-व्यवहारकल्पिताश्रितत्वेन रूढः, परोपकारत्वाच्च तेषाम् । व्यक्तित्वञ्च— व्यज्यतेऽनयेति व्युत्पत्तेः । सैव चानुगताकारप्रतीतिजनिका । इदमेवाभि-सन्धाय त्यक्तभेदा व्यक्तय एव जातिरिति मतमाहुः । शब्दादितन्मात्रैः प्रथमं परमाणूनामेवोत्पत्तिः । पश्चात्परमाणुक्रमेण महापृथिव्याद्युत्पत्तिः, परमाणुद्वारैव तन्मात्राणां कार्य्योपादानत्वमिति तेषां सिद्धान्तात् । तत्र पार्थिवपरमाणुस्तन्मात्रपञ्चावयवकः । जलपरमाणुः गन्धतन्मात्रं विहाय चतुरवयवकः । एवं तेजः परमाणुः गन्ध-रसतन्मात्रं त्यक्त्वा त्र्यवयवकः । वायुपरमाणुः गन्ध-रस-रूपतन्मात्रमन्तरा द्व्यवयवकः । आकाशपरमाणुः शब्दतन्मात्रैकावयवकः । विशेषास्तु शब्द-स्पर्श-रूप-रस-गन्ध-परमाणवः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घटादिजनकानां विभिन्नपरमाणूनां भेदत्यागश्च, घटजनकशक्तिमत्त्वेनैक्या-रोपात् । न च परमाणूनां सावयवत्वेऽनन्तावयवत्वेन मेरुसर्षपयोः परि-माणसाम्यापत्तिः, अनन्तक्षणघटितयोरवान्तरकल्पयोरिवानन्तपरमाण्वा-रब्धमेरुभूगोलयोरिव विशेषेष्वपि विलक्षणानन्तविशेषत्वाद्विशेषोपपत्तेः, प्रकृतौ विश्रमाच्च । एवञ्चावयवसङ्घाते एव घटादिकम्, न तु तदतिरिक्त-मवयवविरूपमस्तीति सांख्यसिद्धान्तः । शतशश्छिन्नस्यापि पशो रूप-रस-गन्धादिव्यतिरिक्तस्य कस्यचिद्वस्तुनोऽनुपलम्भेन गुणसमुदाय एव द्रव्यमिति पातञ्जलाः । तत्र प्रत्येकबोधनाभिप्रायेण गुणव्यवहारः, समु-दायबोधनाभिप्रायेण द्रव्यव्यवहार इति भेदः । ननु गुणसमुदायस्यैव द्रव्यत्वे "तस्य भावस्त्वतलौ" ( पा०सू० ५।१।११९ ) इति सूत्रस्थ-भाष्यविरोधः—तत्र "किं पुनर्द्रव्यम् ? के पुनर्गुणाः ? शब्द-स्पर्श-रूप-रस-गन्धा गुणास्ततोऽन्यद्द्रव्यम्" इत्युक्तत्वादिति चेत्, न, समूहसमूहि-कृतभेदमादायैव द्रव्यगुणयोर्भेदव्यवहार इत्याशयपरत्वात् । व्याकरणे तु 'गुण'शब्देन धर्ममात्रमुच्यते । तदुक्तं हरिणा—

संसर्गिभेदकं यद्यत्स व्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ॥ इति ।
( वाक्यप० का० ३ समु० ५ का० १ )

अस्यार्थः—संसर्गिण आधारस्य यद्यत् स व्यापारमवच्छेदकरूपेण भेदकं प्रतीयते तस्य तस्य गुणत्वम् । लोके हि परतन्त्रः 'गुणः' इत्युच्यते । 'गुणाश्रयो द्रव्यम्' इति वैशेषिकादिपरिभाषा । व्याकरणे तु सर्वनामपरामर्शयोग्यत्वम्, भेद्यत्वं वा द्रव्यलक्षणम् । अत एव "तत्पुरुषः समानाधिकरणः कर्मधारयः" ( पा०सू० १।२।४२ ) इत्यत्र 'समानाधिकरण'शब्दस्य समानद्रव्यवाचकत्वेन 'सर्वरसः' इत्यत्र समासः सिद्ध्यति, अन्यथाऽत्र रसपदस्य गुणवाचकतया समासानापत्तिः । नन्वेवम्—"विप्रतिषिद्धं चानधिकरणवाचि" ( पा०सू०२।४।१३ ) इत्य-त्रापि 'अधिकरण'शब्देन तादृशानामेव ग्रहणात्, 'शीतोष्णम्, सुख-दुःखम्' इत्यादिष्वेकवद्भावानापत्तिरिति चेत्, न, 'वाचि'ग्रहणसामर्थ्यन 'गुणाश्रयो द्रव्यम्' इति लोकप्रसिद्धस्यैव ग्रहणात् । "वोतो गुणवच-नात्" ( पा०सू०४।१।४४ ) इत्यत्र विशेषणस्यापि "तस्य भावस्त्वतलौ"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(पा० सू० ५।१।११९) इत्यत्र यस्य गुणस्य भावात्" इत्युक्त्या गुणत्वेन ग्रहणं स्यादित्याशयेन—

"सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥"

इति गुणलक्षणं भाष्ये उक्तम् । 'सत्त्वम् = द्रव्यं तत्रैव निविशते' इति सावधारणं व्याख्येयम् । तेन सत्ता व्यावर्तते, तस्या गुणादिष्वपि सत्त्वात् । *अपैतीति—अनेन द्रव्यत्वं निरस्यते, द्रव्यात्तस्यापगमाभावात् । नीलत्वादिकं तु फलस्य पीतत्वेऽपैति । *पृथग्जातिषु दृश्यत इति—एतेन गोत्वं व्यावर्त्यते, अश्वादेरपायदर्शनात् । *आधेयश्चाक्रियाजश्चेति—उत्पाद्यानुत्पत्याद्योभयवृत्तिजात्याश्रयः । अनेन क्रियाया गुणत्वनिरासः, उत्पाद्याया एव क्रियायाः सत्त्वात् । गुणत्वस्य तु पाकजरूपादि — व्योमगतपरममहत्त्ववृत्तित्वादुत्पाद्यानुत्पाद्यवृत्तित्वमक्षतम् । "गुणवचनब्राह्मणादिभ्यः" ( पा० सू० ५।१।१२४ ) इत्यादिषु आकडारसूत्र ( पा०. सू० १।४।१ ) भाष्यपर्यालोचनया समस्तकृदन्ततद्धितान्त-सर्वनाम-जाति-संख्या-संज्ञाशब्दातिरिक्तत्वं गुणवचनत्वं लभ्यते । "तृतीया तत्कृतार्थे—" ( पा० सू० २।१।३० ) इत्यत्र खण्डादिरेव गुणः "तस्य भावः" इति सूत्रे भाष्ये "गुणशब्दोऽयं बह्वर्थः" इत्युक्त्वा अवयवद्रव्या-प्रधाना-चार-संस्कारार्थेषूदाहरणान्यप्युक्तानि । ननु अवयवसमुदायस्यैव द्रव्यत्वे 'मृदि घटः' इत्याधाराधेयभावो नोपपद्येतात आह—*समुदायसमुदायिनोरिति । अत एव = समूहसमूहिनोर्भेदाभेदस्वीकारादेव । अभेद आह—*घटः शुक्ल इति—न चात्र मतुबन्तः 'शुक्ल'शब्दः, नैयायिकादिमते तदभावात् । भेदे आह—*घटे रूपमित्यादि । अत एव = समूहसमूहिनोर्भेदस्यापि स्वीकारादेव । ननु समूहमात्रस्य द्रव्यत्वे वृक्षसमुदायरूपस्य वनस्याप्यतिरिक्तद्रव्यत्वापत्तिरत आह—*अयुतसिद्धावयवेति । *नातिरिक्तेति—वृक्षसमूह एव वनम्, नातिरिक्तं द्रव्यमित्यर्थः । *निरान्तरावयत्वेति—अस्य 'वनाद्यवयवानाम्' इत्यादिः, वनादीनां युतसिद्धावयवकत्वात् । नन्वेवं यत्किञ्चिदवयवनाशादपि तन्नाशापत्तिः, अत आह—*विजातीयेति—अत एव 'असमवायिकार्य्यानाशात् कार्यनाशः' इति तार्किकाः । न च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समवायिकारणनाशात् कार्यनाशः, परमाणूनां नित्यत्वेन द्व्यणुकनाशानुपपत्तेः । न च यावदवयवस्याप्रत्यक्षे घटादेः प्रत्यक्षत्वं न स्यात्, अत आह †*भूयोऽवयेवति ।

मू०—तदतिरिक्तोऽवयवी तु नोपलभ्यते, ग्रावसमुदायस्थल इव । किञ्च, तस्यातिरिक्तत्वे रूपगुरुत्वादेर्द्वैगुण्यस्योपलम्भापत्तिः । अवयविनो रूपराहित्येऽप्रत्यक्षत्वापत्तिः । न च अन्त्यावयवपरमाणूनामतीन्द्रियत्वेन तदाश्रितगुणाप्रत्यक्षत्वापत्तिरिति

---

† अत्रेदमवधार्य्यम्—कार्य्यमात्रं हि स्वकारणेन सूक्ष्मरूपेण सहानुगतमेवेति नासदुत्पादः । अभिव्यक्तिरूपं कार्य्यमेव च तत्तत्कारणसत्ताऽनुमापकम्, असदुत्पत्तौ सर्वत्र सर्वोत्पत्त्यापत्तेः । न चाभिव्यक्तिवादेऽपि सर्वदाऽभिव्यक्त्यापत्तिः, निमित्तकारणसहकारेणैव वर्तमानावस्थारूपप्रादुर्भावाङ्गीकारात् । मुद्गरपातादिना च कारणरूपधर्मान्तरोदयेऽतीतावस्थारूपतिरोभावः । 'ध्वंस' 'प्रागभाव' शब्दाभ्यामतीतानागतावस्थे एवोच्येते । अतीतानागतावस्थे चाभिव्यक्तेरेव बोध्ये । अभिव्यक्तिश्च—प्रत्यक्षविषयत्वरूपा । अनागतावस्थारूपप्रागभावस्य चाभिव्यक्तिहेतुत्वेन नातीताभिव्यक्तिकस्य वस्तुनः पुनरभिव्यक्तिः । 'घटो नष्टः' 'घटो वर्तमानः' 'घटो भविष्यति' इति कालत्रये घटानुवृत्तिदर्शनादपि तत्सत्ताऽनुमानं कारणव्यापारात्प्राक् । यद्यपि सत्कार्य्यवादिनये कारणव्यापारस्यापि सत्त्वेन तन्निरूपितप्राक्क्षणासम्भवः, तथापि 'कारणव्यापारात्प्राग्' इत्यस्य तदभिव्यक्त्यधिकरणक्षणात्प्रागित्यर्थो बोध्यः । क्षणस्यापि तत्त्वे तु पूर्ववदनुपपत्तिः परिहरणीया । अविद्यमाने विषयताऽऽदीनामनुपपत्तिश्च । अभिव्यक्तेरभिव्यक्तिस्तूत्पत्तेरुत्पत्तिवत्, अभावेऽभाववत्तत्स्वरूपैवेति नानवस्था । अभिव्यक्तेः सूक्ष्मावस्थाऽपि वस्तुसूक्ष्मावस्थारूपैव । "क्षिप्रवचने लृट्" (पा० सू० ३।३।१३३) इति सूत्रभाष्ये तु अङ्कुरादिरूपाभिव्यक्तेरेव शालिनिष्पत्तिरुक्ता । तत्र हि—"कश्चिदाह देवश्चेद्वृष्टः, संपत्स्यन्ते शालयः इति ।...मैवं वोचः, 'निष्पन्नाः शालयः' इत्येवं ब्रूहि । किं निष्पन्नकार्य्याणि न क्रियन्ते ? कानि ? भोजनादीनि । यथा कोष्ठगतेष्वपि शालिषु अवहननादीनि प्रतीक्ष्याणि । एवमिहापि निष्पन्नोऽर्थोऽवश्यन्तु जननादीनि प्रतीक्ष्याणि ।" (महाभा० ३।३।१३३) इति । कार्य्यस्यानागतावस्थैव कारणस्य शक्तिरित्युच्यते । शक्तेश्च यावत्सहकारेण कार्य्यजनकता । तत्र सर्वत्र तच्छक्तिमत्त्वोपचारः । "तस्य भावः" इति सूत्रे च भाष्ये ध्वनितमेतत् । अतिरिक्तावयविवादिनयेऽप्यवयवानपलाप एव । अन्यथा तदाधारताऽनुपपत्तिरिति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाच्यम्, रथाङ्गानां प्रत्येकं कार्यासामर्थ्येऽपि विलक्षणसमुदायभावे कार्यकरत्ववदुपपत्तेः । एवं च गोशब्दे तत्समूहाभेदे तत्समूह्यभेदोऽपि सिद्ध एवेति भावेन गुणादीनां गोशब्दत्वाशङ्का । 'लिङ्गसङ्ख्याद्यन्वयि द्रव्यम्' 'सर्वनामपरामर्शयोग्यं द्रव्यम्' इति तु स्वशास्त्रव्यवहारोपयोगीति बोध्यम् । "गुणो नाम सः" इत्युत्तराशयस्तु गोशब्देनानुद्भूतभेदावयवानुगतसमूहेनैव तादात्म्यं न तु तदवयवैरपीति । तत्र "भेदः प्रतिभासमात्रकल्पितत्वेनाध्यस्तः 'राहोः शिरः' इतिवत्, अभेदस्तु व्यावहारिकः" इति वाचस्पतिमिश्राः । अन्ये तु-उभावपि व्यावहारिकौ, 'स्वर्णं कुण्डलम्' 'स्वर्णस्य कुण्डलम्' इति च व्यवहारात्, एतद्व्यवहारान्यथाऽनुपपत्त्यैव तयोः क्वचिद्विरोधस्याङ्गीकारात्—

"अन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥"

इति श्रीहर्षोक्तेः। किञ्च,स्वर्णत्वरूपेणाभेदस्य कुण्डलत्वरूपेण भेदस्य स्थितिरित्यविरोधः । सामानाधिकरण्यं च-एकार्थबोधकत्वमेव । (सुवर्णत्वादि)प्रकारविशेषानपेक्षोऽभेदस्तु भेदेन विरुद्धः, प्रतिभासकल्पितत्वेऽपि यावद्व्यवहारदर्शनं ब्रह्मज्ञानतः प्राक् शुक्तिरजतवत्तद्व्यवहारानपगमेन व्यर्थपरिश्रमत्वात् । 'राहोः शिरः' इत्यत्रानेकावस्थायुक्तराहोरेकावस्थायुक्तशिरसोऽवयवत्वेन तत्रापि व्यावहारिकभेद एव ।

( रत्न० )—सामान्यविशेषरूपगुणसमुदायातिरिक्तं द्रव्यमिति मतं खण्डयति —*तदतिरिक्त इति —गुणसमूहातिरिक्त इत्यर्थः । *ग्रावसमुदायेति —ग्रावा = पाषाणः, यथा—पाषाणसमुदायाश्रयीभूते पाषाणातिरिक्तत्वं नोपलभ्यते, तद्वदित्यर्थः । दोषान्तरमाह —*किञ्चेति— अवयविनः समुदायातिरिक्तत्वे चेत्यर्थः । तत्समूहघटकरूपाद्यपेक्षया अव-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यव्यन्तरघटकरूपादेर्भिन्नत्वादिति भावः । ❀द्वैगुण्यस्येति—अवयवावयविगुरुत्वद्वयेनेत्यर्थः । नन्ववयवी रूपगुरुत्वादिरहित एव, अत आह—❀अवयविन इति—चाक्षुषप्रत्यक्षे उद्भूतरूपवत्त्वस्य कारणत्वात् । अवयविनोऽवयवसमुदायरूपत्वे अप्रत्यक्षत्वापत्तिमाशङ्कते—❀न चेति—परमाणूनाममहत्त्वेनातीन्द्रियतया तदाश्रितगुणानामप्यतीन्द्रियत्वापत्तिः, अतिरिक्तत्वे तु तस्योद्भूतरूपवत्त्वेन प्रत्यक्षत्वं सिध्यतीति भावः । अनवस्थाभयात्परमाणूनां निरवयवत्वस्वीकारादाह—❀अन्त्यावयवेति । अवयवापेक्षया समुदायस्य भेदाभेदस्वीकारेणातीन्द्रियावयवकसमुदायस्यैन्द्रियकत्वेऽपि बाधकाभावः । किञ्च, एकस्य तण्डुलस्य क्षुत्प्रतिघातासमर्थत्वेऽपि तत्समुदायस्य समर्थत्वदर्शनवत्समुदायप्रत्यक्षं स्यात्, अत आह—❀रथाङ्गानामिति—तस्मात्तादृशगुणसमूह एव द्रव्यम् । भेदाभेदस्वीकारादेवावयवविलक्षणजलाहरणादिकार्य्यकारित्वं तस्य । समुदायो द्विविधः—कश्चिच्छब्दोपस्थितभेदावयवाननुगतः कर्मधारयेण, यथा—'वृक्षवनम्' इति, कश्चित्तु शब्दोपस्थितभेदावयवानुगतः, यथा 'उभये देवमनुष्याः' इति 'सहस्रतन्तुकः पटः' इति चेति । ननु अवयवस्यातीन्द्रियत्वेऽपि समुदायस्य प्रत्यक्षत्वे पिशाचसमूहस्यापि प्रत्यक्षत्वापत्तिरिति चेत्, न, तत्रानुभवबलादवयवापेक्षया विलक्षणसंयोगाभावात् । ननु समूहसमूहिनोरभिन्नत्वे रूपरसादिपरावृत्तौ समुदायस्यान्यत्वात् 'सोऽयं घटः' इति प्रत्यभिज्ञाऽनुपपत्तिरिति चेत्, न, अनुगतस्यापि कस्यचिदवयवस्य सत्त्वेन तदुपपत्तेः, प्रत्यभिज्ञाया आकृतिनिबन्धनत्वाद्वा, बाल्ययौवनादिभिन्नेषु तत्तच्छरीरेषु तत्प्रत्यभिज्ञानवत् । गुरुत्वप्रतीतिरप्यवयवानुगतगुरुत्वसमुदायविषया, दशपाषाणगतगुरुत्वप्रतीतिवत् । ननु गुणसमुदायस्य द्रव्यत्वेऽपि समूहसमूहिनोरभिन्नत्वेऽपि भाष्ये गुणादीनां शब्दत्वाशङ्का न समाहिता, तथा च 'अन्यद् भुक्तमन्यद् वान्तम्' इति न्यायविषयताऽऽपत्तिरत आह—❀एवञ्चेति—तत्समूहस्य द्रव्यत्वेन समूहसमूहिनोरभेदाङ्गीकारे चेत्यर्थः । ❀सिद्ध इति—तदभिन्नाभिन्नस्य तदभिन्नत्वमिति, भावेन = आशयेन । तदभिन्नः = शब्दाभिन्नः, समूहस्तदभिन्नः समूहीति शब्दस्य समूह्यभिन्नत्वेन शब्दत्वाशङ्का भाष्य इति भावः । ननु गुणसमुदायस्यैव द्रव्यत्वे 'एकरसः' इत्यत्र कर्मधारयो न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्, 'अधिकरण'शब्दस्य गुणसमुदायरूपद्रव्यवाचित्वेनैकत्वविशिष्ट-रसस्य द्रव्यत्वाभावेन समानाधिकरणत्वाभावात्, अत आह—*लिङ्ग-सङ्ख्येति, *सर्वनामेति च—तथा च गुणस्य क्रियायाश्च द्रव्यत्वसिद्धिः। एवं स्त्रीत्वस्यापि द्रव्यत्वेन स्त्रीत्वरूपलिङ्गयोगात् 'स्त्रीता'इत्यत्र टाप् सिध्यति, स्त्रीत्वस्येदमा तदा च परामर्शयोग्यत्वसत्त्वादिति भावः। तथा च 'गुणस-मुदायो द्रव्यम्' इति लौकिकं लक्षणम्, प्रायः शास्त्रप्रक्रियोपयोगि तु इद-मेवेति भावः। *गुणो नामेति—भाष्ये गुणस्य शब्दत्वमाशङ्क्य 'गुणो नाम सः' इत्युत्तरं यद्दत्तं तदाशयस्त्वित्यर्थः। *गोशब्देनेति—'गोशब्द स्य' इति षष्ठ्यन्त एव पाठः उचितः, तृतीयान्तस्यानन्वयात्। *अनु-द्भूतेति—अनुद्भूतावयवभेदविशिष्टेनैव तादात्म्यमित्यर्थः। *न तु तदव-यवैरिति—समूहावयवै रूपादिभिर्न तु तादात्म्यमित्यर्थः। ननु 'गो'शब्दस्य समूहावयवभूतै रूपादिभिः सहाभेदाभावेऽपि समूहेन सहाभेदे समूहस्य च रूपादिभिः सहाभेदः स्वीकृत एवेति तदभिन्नेति न्यायेन शब्देनाप्यभेदः स्यादिति चेत्, न, यस्य येन सहाभेदो विवक्षितस्तद्द्वारैव तस्य तत्स्वरूपा-नुगमश्चेत्तदा तदभिन्नेति न्यायः प्रवर्तते, इति नियमात् यथा—'प्रकृते-र्महान्, महतोऽहङ्कारः' इत्यत्र परमकारणेन प्रकृत्या सहाहङ्कारस्याभेदो विवक्षितस्तत्र प्रकृत्यनुगतत्वमहङ्कारस्य प्रकृतिकार्य्यभूतमहत्तत्त्वद्वारैवेति अहङ्कारे महतोऽभेदे प्रकृत्यभेदोऽपि सिध्यति। एवं मृदो विकारः कपालः, तद्विकारो घटस्तत्र मृदभिन्नत्वं घटस्य कपालद्वारैव, घटे मृत्स्वरूपानुग-मात्। तदुक्तम्—"यत्र स्वाभिन्नद्वारकः स्वस्वरूपानुगमस्तत्रैव तदभिन्नेति न्यायः" इति। अत एव स्वर्णजन्ययोः कटककुण्डलयोः आत्मजन्ययोः सुखदुःखयोश्च नाभेदः। प्रकृते तु शब्दाभिन्नः समूहस्तदभिन्नो रूपादि-स्तथा च समूहद्वारा रूपादौ नहि शब्दरूपमनुगम्यते इति न तत्र तेन सहाभेदः। एवञ्च, यत्र परम्परयोपादानोपादेयभावस्तत्रैवायं न्याय इति लब्धम्। तथा चावयवगुणादेः शब्देन सह तादात्म्याभावान्न गवादि-शब्दवाच्यत्वम्। अनुद्भूतावयवभेदेन गुणसमूहेनाभेदसत्त्वात्तद्वाच्यत्वं तत्र। भेदाभेदयोर्वैयधिकरण्यस्य नियतत्वात् सामानाधिकरण्यासम्भवः, अत आह—*तत्रेति—समूहसमूहिनोरित्यर्थः। *प्रतिभासमात्रेति—प्रातिभासिक इत्यर्थः। परमार्थदशायां व्यवहारदशायाञ्च यदसत्यं तत्प्राति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भासिकमित्युच्यते, यथा—शुक्तौ रजतत्वम्। ❀प्रतिभासमात्रेति—यत्पुनः परमार्थदशायां बाधितमपि व्यवहारदशायां न बाध्यते तद्व्यावहारिकमित्युच्यते, यथा—रजते रजतत्वम्। अत्राभेदे 'मात्र'पदेन व्यावहारिकत्वं व्यावर्त्यते। ❀व्यावहारिक इति—"सत्यञ्चानृतञ्च सत्यमभवत्" (तैत्ति० उप० २।६।१) इति तैत्तरीयकश्रुतौ ब्रह्मणः सत्यानृतोभयरूपविवर्तोपादानत्वमुक्तम्। तत्र सृष्टेः सत्यत्वं व्यावहारिकसत्यतया। व्यवहारसत्यविलक्षणं प्रातिभासिकं रजतं भ्रमस्थले। उभौ = भेदौ। ननु विरोधात् कथमुभयोः सामानाधिकरण्यम्, अत आह—❀एतद्व्यवहारेति—उक्तद्विविधव्यवहारेत्यर्थः। अतिप्रसङ्गवारणायाह—❀क्वचिदिति—व्यवहारानुसारेणैव तथा कल्पनेत्यर्थः। नन्वनुपपत्त्याऽपि कथमदृष्टचरं साध्येत, अत आह—❀अन्यथाऽनुपपत्तिश्चेदिति—भेदाभेदयोर्दृष्टविरुद्धत्वमन्यथाऽनुपपत्तिः पिनष्टीत्यर्थः। ननु दृष्टवैमत्यमेवान्यथाऽनुपपत्तिं कुतो न बाधते, अत आह—❀सैवेति—सर्वतो बलवत्यन्यथाऽनुपपत्तिरेव दृष्टविरोधं निराकरोतीत्यर्थः। ❀श्रीहर्षोक्तेरिति—'खण्डने' इत्यादिः। विज्ञानस्य स्वप्रकाशत्वमुपक्रम्योक्तम्—"तदेवं यद्यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति; तत्सर्वमन्यथाऽनुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति। तद्यथा—अन्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दृष्टम् 'अहम्' इति व्यवहारान्यथाऽनुपपत्त्या त्याज्यम्, तथाऽन्यज्ज्ञानमन्यज्ज्ञेयम् 'जानामि' इति व्यवहारान्यथाऽनुपपत्त्या त्याज्यम्। सर्वबलवती ह्यन्यथाऽनुपपत्तिः तथा दृष्टतामात्रमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते" इति। वस्तुतो विरोध एव न, इत्याह—❀किञ्चेति। ननु 'स्वर्णं कुण्डलम्' इत्यत्रात्यन्ताभेदेऽन्यतरस्य द्विरवभासापत्तिः, भेदे चात्यन्तिके गवाश्वादिवत् सामानाधिकरण्यानुपपत्तिः, अत आह—❀स्वर्णत्वरूपेणेति—विशेष्यविशेषणोभयवृत्तिसामान्यधर्मेण विवक्षायामभेदः। विशेषणमात्रवृत्तिधर्मेण विवक्षायाम् 'सुवर्णस्य कुण्डलम्' इति भेदः। प्रकृतिविकृतिभावोऽत्र षष्ठ्यर्थः। तदुक्तं भामत्याम्—"कार्य्यरूपेण नानात्वम्, अभेदः कारणात्मना" इति। युक्तञ्चैतत्, सर्वथाऽभेदे हि कार्य्यकारणभावासम्भव एव स्यात्। न च भेदे "तदनन्यत्वमारम्भणशब्दादिभ्यः"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( वे० सू० २।१।१४ ) इत्यभेदबोधकाधिकरणविरोधः, उपादानव्यतिरेकेणोपादेयं नास्तीत्यत्रैव तत्तात्पर्य्यात् । *अविरोध इति — भेदाभेदयोरविरोध इत्यर्थः । ननु उभयत्रोभयसत्त्वात्कथं 'स्वर्णं कुण्डलम्' इति सामानाधिकरण्यम्, विशेषणभेदात्, अत आह — *सामानाधिकरण्यमिति — एतेन विशेषणैक्यनिरासः । 'नीलो घटः' इत्यादौ तथैव सत्त्वादिति भावः । "ननु 'एतौ विरुद्धौ' इति प्रवादोच्छेदापत्तिः, अत आह — *प्रकारेति — अभेदस्त्विति च्छेदः । अयमेवात्यन्तिकाभेद इत्युच्यते । विरुद्धः = विरुद्ध एव ब्रह्मणीति भावः । न च गन्धपृथिवीत्ववत्प्रकारविशेषानपेक्षावपीमावेकत्रास्तामिति वाच्यम्, एकत्रैव घटे 'घटः' 'न घटः' इति बुद्ध्योः समावेशापत्तेः" इति कलाकारः । कुञ्जिकाकारास्तु — "ननु विभिन्नरूपेणोपस्थित्यभावेऽपि भेदस्यैवासम्भव इत्यत आह — *सामानाधिकरण्यञ्चेति ।" तेन = अभेदेन, एतन्मते — "सामानाधिकरण्यञ्च तेनैकार्थबोधकत्वमेव" इति पाठः प्रतीयते, तेनेत्यस्य विवरणदर्शनात्, तदग्रे 'एकार्थ' इति प्रतीकदर्शनाच्च । "*एकार्थेति — भिन्नप्रवृत्तिनिमित्ताश्रयैकार्थेत्यर्थः । *प्रकारेति — 'नीलो घटः' इत्यत्र नीलत्वघटत्वरूपप्रकारविशेषापेक्षो भेदः, न तु विशेष्यस्यापि भेदः, अभेदेन विरोधादित्यर्थः" इत्याहुः । वस्तुतस्त्वेवं व्याख्येयम् — ननु भेदाभेदयोरेकत्र स्वीकारे विभिन्नार्थाबोधकत्वरूपसामानाधिकरण्यानुपपत्तिरत आह — *सामानाधिकरण्यञ्चेति । *एकार्थबोधकत्वमिति — न तु विभिन्नार्थाबोधकत्वमिति भावः । नन्वेवमपि भेदाभेदयोर्विरोधात्तयोः सामानाधिकरण्यासङ्गतिरेवात आह — *प्रकारविशेषेति — प्रकारीभूतधर्मविशेषानपेक्षो विशेष्यांशयोरभेदः सर्वत्र भेदेन विरुद्ध एव, तत्राभेद एव न तु भेद इति भावः । तत्र भेदस्तु प्रकारीभूतधर्मांशमादायैवेत्युपाध्यायाः । *तद् द्रव्यव्यवहारेति — भेदव्यवहारेत्यर्थः । *प्रतिभासेति — कल्पितस्यापि भेदस्य व्यवहारदशायामनवगमात्सत्त्वमस्त्येवेत्यर्थः । *व्यर्थपरिश्रमत्वादिति — व्यावहारिकत्वस्य सम्भवेनाध्यस्तत्वकल्पनाया अन्याय्यत्वादित्यर्थः । बाधज्ञानात्पूर्वं सर्वत्रैव सत्त्वेन व्यवहारदर्शनाद् व्यावहारिकत्वमेवेत्यध्यस्तत्वकल्पनं व्यर्थमेवेति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—वस्तुतस्तत्र विकल्पात्मकमेव ज्ञानम् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( यो० द० १।९ ) इति तल्लक्षणं पतञ्जल्युक्तम् । शब्दज्ञानजन्यो बाह्यवस्तुशून्यो विकल्प इति तदर्थः । किञ्च, शब्दप्रयोगं तज्जन्यज्ञानं चानुपतति, तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण सदैव जायमानो विकल्प इत्यर्थः । अनेन वक्तुः शब्दप्रयोगजनकमानसज्ञानस्यापि विकल्पत्वमुक्तम्। विपर्यये तु बाधोत्तरं शब्दप्रत्यययोरभावान्न तेन गतार्थता ।

अवयविनो विकल्पात्मकज्ञानादिविषयत्वोपपादनम् ।

हरिणाऽप्युक्तम्—

"अत्यन्तासत्यपि स्वार्थे ज्ञानं शब्दः करोति हि ।"

इति । 'अत्यन्त' इत्यस्य बहिरित्यादिः । ज्ञानमवष्टभ्य शब्दः स्वप्रयोगं करोतीत्यपि तदर्थः । अत एव "पुरुषस्य चैतन्यम्" इति तदुदाहरणं पातञ्जलभाष्ये दत्तम् । न हि तस्मादस्य कश्चिद्विशेषः ।

"व्यपदेशिवद्" इत्यस्यायमर्थः — मुख्यव्यवहारविषये यथा शास्त्रीयं कार्यम्, तद्वद् मुख्यसम्बन्धाद्यभावेऽपि कार्यमिति । स्वर्णकुण्डलस्थले देशकालैक्येऽपि न्यूनाधिकमूल्यदर्शनेन व्यावहारिकभेदोऽप्यवश्यं स्वीकार्यः । न हि प्रातिभासिकेन तदुपपत्तिः, शुक्तौ प्रातिभासिकरजते सर्वथा मूल्याभावादित्यपि कश्चित् ।

'राहोः शिरः' इत्यादाववस्थाकल्पितोऽवयवावयविभाव इति तु न युक्तम्, बोद्धॄणामनेकावस्थाविशिष्टस्य तत्त्वेन राहुपदादबोधात् ।

अत एव 'इयाय' इत्यादौ 'इकारस्य प्रथमावयवत्वं कथम् ?' इत्याशङ्क्य 'लोकविज्ञानात्सिद्धम्' ( महाभा० ६।१।१ ) इत्युक्तं भाष्ये । लोकवदेव शास्त्रेऽविचारितरमणीयो व्यवहारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किञ्च, अस्य विकल्पात्मकज्ञानजनकत्वे वस्तुसिद्ध्यनापत्तिः। विषयभेदेन विषयताऽङ्गीकारे तु अन्त्यः।

केचित्तु — शब्दाभेदेऽपि विकल्पेन व्यवहारः शास्त्रीयकार्यनिर्वाहश्च। यथा — 'अद्यतनेऽप्यद्यतनोऽस्ति' इति लङ्विधायके भाष्ये प्रयुक्तमिति तदाशय इत्याहुः।

(रत्न०)—'राहोः शिरः' इत्यादौ भेदस्य व्यावहारिकत्वं कैयटादिमतेनोक्तम्, भाष्यमतेनाह — *वस्तुतस्त्विति। तत्र = 'राहोः शिरः' इत्यत्र। *शब्दज्ञानानुपातीति–शब्दजन्यज्ञानानन्तरं वस्तुतत्त्वमनपेक्ष्यैव बुद्धावनुपतनशीलोऽध्यवसायो विकल्प इत्यर्थः। आगमप्रमाणान्तर्गतत्वनिरासायाह — *वस्तुशून्य इति। अत्रैव सूत्रे भाष्यव्याख्यायाम् — "एतदुक्तं भवति – क्वचिदभेदे भेदमारोपयति, क्वचित्पुनर्भिन्नानामभेदम्। ततो भेदस्याभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणम्, नापि विपर्य्ययः, व्यवहाराविसम्वादादिति" इति वाचस्पतिमिश्राः। अभेदे भेदारोपो यथा – 'पुरुषस्य चैतन्यम्' इति। भेदेऽभेदारोपः– 'अयो दहति' इति। व्यासभाष्यसम्मतं मिश्रमतानुसारिणश्चार्थमाह — *शब्दज्ञानजन्य इति। स्वाभिप्रेतार्थमाह — *किञ्चेति — पूर्वव्याख्याऽनुसारेण श्रोतुरेव तादृशं ज्ञानं विकल्पात्मकम्। किञ्चेति व्याख्यानरीत्या तु वक्तुरपि तादृशं ज्ञानं विकल्पात्मकम्, इत्याह — *अनेन वक्तुरिति — वक्त्राऽर्थज्ञानानन्तरमेव शब्दप्रयोगात् तज्ज्ञानं शब्दप्रयोगजनकमिति भावः। विपर्य्ययस्तु नेदम्, बाधदर्शनानन्तरम् 'इदं रजतम्' इति व्यवहारस्य प्रतीतेश्चाभावात्। तथा च – "विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" (यो०द० १।८) इति भगवत्पतञ्जल्युक्तविपर्य्ययलक्षणे शब्दज्ञानाननुपातित्वं विशेषणं देयम्, तदाह — *विपर्य्ययेत्विति। तेन = विपर्य्ययेण। बौद्धसत्तायाः सत्त्वादाह — *अत्यन्तेति — बहिरत्यन्तासत्यपि स्वार्थे शब्दः ज्ञानमवष्टभ्य करोति। कर्माकाङ्क्षायाम् 'स्वप्रयोगम्' इत्यध्याहार्य्यम्, तदाह — *स्वप्रयोगं करोतीत्यपि तदर्थ इति। अपिना 'शब्दज्ञानजन्यः' इत्याद्युक्तरूपोऽपि विकल्पो ग्राह्यः। 'करोति' इति पाठे हिः—अप्यर्थे। प्रथमो हिः—एवार्थे। एतेन–वक्ष्यमाणं नव्यनैयायिकोक्तमपास्तम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।
प्रमाबाध्याऽप्रमा तत्र ह्यतः प्रामाण्यनिर्णयः ॥"

इति † खण्डनकारोक्तेः । अत्यन्तासत्यपि = बाधितत्वेन निर्धारितेऽप्यर्थे = विषये, हि = निश्चयेन, शब्दः ज्ञानं करोत्येव । द्वितीय'हि'शब्द एवकारार्थकः । नन्वेवं तत्र प्रवृत्त्यापत्तिः, तज्जनकस्य विशिष्टज्ञानस्य सत्त्वात्, अत आह— ॐअप्रमेति–तत्र = बाधितार्थे । प्रमाबाध्या = प्रमया योग्यताप्रमया बाध्या = अप्रमात्वेन ज्ञाप्या सती, अप्रमा = अप्रमात्मकशाब्दबुद्धिरेव, भवतीति शेषः । तथाच प्रवृत्तिप्रयोजकप्रामाण्यनिर्णयाभावान्न प्रवृत्तिरित्यर्थ इति । अन्यथा चितेरेव पुरुषत्वाद् भेदनियतसम्बन्धरूपषष्ठ्यर्थस्याप्रतीत्यापत्तिः । भवति हि 'चैत्रस्य गौः' इति यथार्थशब्दवदत्रापि षष्ठ्यर्थे वृत्तिः, ततो विवेकिनामपि बोधश्च, तदाह — ॐन हीति । तस्मात् = 'राहोः शिरः' इत्यतः । अस्य = 'पुरुषस्य चैतन्यम्' इत्युक्तस्य । ननु 'राहोः शिरः' इत्यत्रावयवावयविभावं व्यपदेशिवद्भावेन प्रकल्प्य षष्ठ्यत्रेति प्रवादासङ्गतिः, अत आह — ॐव्यपदेशिवदिति — विशिष्टोऽपदेशो व्यपदेशः, व्यवहारः = मुख्यव्यवहार इति यावत् । सोऽस्त्यस्येति व्यपदेशी = मुख्यव्यवहारी । तेन तुल्यम् एकस्मिन् असहायेऽपि कार्य्यं कर्तव्यमिति शाब्दोऽर्थः । तात्पर्य्यार्थमाह — ॐअस्यार्थ इति — मुख्यव्यवहारविषये 'चैत्रस्य गौः' इत्यादौ । कार्य्यम् = षष्ठ्यादि । एवञ्चैतल्लभ्य एवार्थः 'व्यपदेशिवत्–' इत्यनेनोच्यत इति भावः । ॐमुख्यसम्बन्धेति— भेदनिबन्धनो यः सम्बन्धः स मुख्य इत्युच्यते । तदभावे भेदव्य-

---

† खण्डने तु–अद्वैतविचारावसरे–'अङ्गुल्यग्रे करिशतं विहरति' 'मम कर्णकुहरं प्रविश्य सिंहः क्रीडति' इत्यादिशब्दादुत्पद्यमानस्य ज्ञानस्यानुभवसिद्धतया शाब्दज्ञाने योग्यताज्ञानस्यायोग्यताज्ञानविरहस्य वा न जनकत्वम्, किन्तु ज्ञानमुत्पद्यमानं विषयबाधादप्रमाणतया व्यवहर्तुमुचितम् । प्रकृते च विषयबाधो नास्त्येवेत्याशयेन—

"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम् ॥"

इत्येवंरूपेणोक्तम् । आनुपूर्वीमात्रे भेदः, तात्पर्यन्तु एकमेव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वहारो विधेय इति फलितोऽर्थः । ※शुक्ताविति — भ्रमस्थले तु रजतादि अविद्यापरिणाम एव, प्रातिभासिकत्वस्य प्रतिभाससत्तासमनियतसत्ताकत्वात् । नन्वेवम् 'स्वर्णस्य कुण्डलम्' इत्यादावप्युक्तरीत्यैवोपपत्तौ तद्व्यवहाराद् भेदस्य व्यावहारिकत्वासिद्धिरतः प्रागुक्तमेव मतान्तरमाह — ※स्वर्णेति । तदुपपत्तिः = न्यूनाधिकमूल्योपपत्तिः । ※कश्चिदिति—अत्रारुचिवीजन्तु तत्र बाधज्ञानोत्तरं रजतमूल्याभावेऽपि प्रवृत्त्यन्यथाऽनुपपत्त्या प्राक् सत्त्वेन बाधोत्तरमपि शुक्तिमूल्यस्य सत्त्वात्सर्वथा मूल्याभावोक्तिश्चिन्त्या । तत्रापि = भेदस्य तत्त्वेऽपि । अवयवसंस्थानकृतभेदेन तदुपपत्तिरिति न तत्रापि तदावश्यकत्वम् । कैयटाद्युक्तिं खण्डयति – ※राहोः शिर इति । तत्त्वेन = राहुत्वेन । केचित्तु – 'राहोः शिरः' इत्यत्र व्यावहारिक एव भेदः, अत एव प्रकृतिविकृत्योरपि भेदात् 'भक्तिर्ज्ञानाय कल्पते' इत्येतदर्थम् "क्लृपि सम्पद्यमाने च" ( पा० सू० वा० २।३।१३ ) इति वार्त्तिकं संगच्छते । 'स्वर्ण' शब्दस्य विकाररहिते एव प्रसिद्धत्वात् 'स्वर्णस्य कुण्डलम्' इत्यादौ षष्ठी । स्वर्णविकारस्य स्वर्णत्वजात्यवच्छिन्नत्वाच्चाभेदोऽपि । सर्वथाऽभेदे तु दधिदुग्धयो रसभेदकार्य्यभेदौ न स्याताम् अत एव दुग्धे लवणादियोगनिषेधकम्—"वर्ज्यं सलवणं क्षीरम्" ( सुश्रु० सं० सूत्रस्था० ४५।६४ ) इत्यादिस्मृतिवचनं न स्वविषयत्वेन दधि गोचरयति । अत एव "व्रीहिभिर्यजेत" इत्यत्र पुरोडाशसाधनत्वस्य व्रीह्यन्तर्वर्तितण्डुलादौ सत्त्वेऽपि प्रोक्षणावघातादीनां व्रीहिसंस्कारतया व्रीहीणामपि करणत्वोपपत्तिः । स्वोक्तौ भाष्यमपि प्रमाणयति — ※अत एवेति—स्वस्मिन् स्वनिरूपितव्यावहारिकभेदसत्त्वादेवेत्यर्थः । ※इयायेति — अत्र हि भाष्ये — "एकाचो द्वे प्रथमस्य" ( पा० सू० ६ । १ । १ ) इति बहुव्रीहिनिर्देशोऽयम् । एकवर्णेषु कथम् ? एकवर्णेषु व्यपदेशिवद्वचनात्" इत्युक्त्वा "अवचनाल्लोकविज्ञानात्सिद्धम्" इत्युक्तम् । वचनं विनैव यल्लोकविज्ञानं लोकव्यवहारात्मकं तस्मात्सिद्धमित्यर्थः । ※लोकवदेवेति— यथा प्रमेयत्वरूपसम्बन्धिनि प्रमेयत्वप्रतियोगिकभेदाभावेऽपि 'प्रमेयत्वे प्रमेयत्वम्' यथा वा 'घटाभाववद् भूतलम्' इत्यादौ भूतलरूपसम्बन्धिभेदाभावेऽपि स्वरूपसम्बन्धे सम्बन्धत्वम् । तथाऽभेदे सत्यपि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदसम्बन्धव्यवहार इत्यर्थः । अविचारितरमणीयः = मुख्यामुख्यसाधारणः। ननु 'राहोः शिरः' इतिवद् विकल्पात्मकज्ञानजनकत्वमेव "एकाचो द्वे प्रथमस्य" ( पा० सू० ६।१।१ ) इत्यस्यास्तु, अत आह — ॐकिञ्चास्येति — "एकाचो द्वे प्रथमस्य" इत्यस्येत्यर्थः । ॐवस्तुसिद्ध्यनापत्तिरिति — वस्तुसत्त्वे 'जजागार' इत्यादौ विकल्पविषयत्वाभावाच्छास्त्राप्रवृत्तिरित्यर्थः । ननु प्रतिलक्ष्यं लक्षणोपप्लवे अदोषः, अत आह — ॐविषयभेदेनेति–विषयताप्रयोजकलक्षणभेदाङ्गीकारे त्वित्यर्थः। अन्त्यः = विकल्पात्मकज्ञानजनकत्वपक्षः । ॐशब्दाभेदेऽपीति — आरोप्यमाणारोपाधिकरणबोधकशब्दाभेदेऽपीत्यर्थ इति केचित् । वस्तुतस्तु — 'शब्दाभेदेऽपि' इत्यस्य बोधकशब्दोपप्लवाभावेऽपीत्यर्थः । विकल्पेन = विकल्पात्मकज्ञानेन । निर्वाहप्रकारमाह — ॐयथा अद्यतन इति — अयं भावः — यथा अद्यतने अद्यतननिरूपितभेदाभावेऽपि विकल्पात्मकज्ञानेन भेदमाश्रित्याप्यद्यतनाधिकरणत्वं भाष्यकृता उक्तम्, तथा एकेनैव रूपेणैकशब्दादपि सर्वेषां ज्ञानं स्यादित्यावृत्त्यादिना बोधोऽनावश्यक इति ।

'तदभिन्नाभिन्न'-इति न्यायस्य निरूपणम् ।

मू०—केचित्तु – 'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इत्याशयेन शङ्का । अयञ्च न्यायो मूलकारणोपादानककार्योपादानके कार्ये मूलकारणोपादानकत्वस्यापि † व्यवहारेण सिद्धः । यथा तन्मात्राद्युपादानकेऽपि प्रकृत्याद्युपादानकत्वम् ।

"गुणो नाम सः" (महाभा० पस्पशाह्नि०) इत्युत्तराशयस्तु– यत्र स्वाभिन्नवस्तुद्वारकः स्वस्वरूपानुगमस्तद्विषय एवोक्तन्यायः।

स्वर्गनरकयोस्तु नैक्यम्, यदन्तःकरणावयवपरिणामः सुखम्, तदतिरिक्तावयवपरिणाम एव दुःखमित्यङ्गीकारात् ।

"येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति, स शब्दः" ( महाभा० पस्पाह्नि० ) इति भाष्याशयस्तु – यथा चिज्जडयोस्तादात्म्यावभासेऽपि चित एव भास-

† 'मूलकारणाभेदस्यापि' इति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वम्, जडस्यावभास्यत्वमेव, स्वभावात्, तथा स्वभावादेव शब्दस्य भासकत्वम्, अर्थस्यावभास्यतेति वदन्ति। तस्माद् बुद्ध्यवच्छिन्नाकाशधर्मोऽयमान्तरः स्फोटः।

(रत्न०)—भाष्ये गुणादीनां शब्दत्वाशङ्कादौ कौस्तुभाद्युक्तमाह—*केचित्त्विति—अन्यथैवोपपादनसम्भवे एवमभिधानमसङ्गतमित्यरुचेरुक्तम्—*केचित्त्विति। *तदभिन्नेति—यथा 'कपालस्य कारणं कपालिका कपालजन्यश्च घटः' इति कार्य्यकारणयोरभेदात् कपालिकाभिन्नः कपालस्तदभिन्नो घट इति 'तदभिन्नाभिन्नस्य'—इति न्यायेन कपालिकाघटयोरभेदस्तथा शब्दार्थयोस्तादात्म्यात् शब्दाभिन्नो गुणसमुदायरूपोऽर्थस्तस्य च समुदायसमुदायिनोरभेदाद् गुणरूपसमुदायिना समुदायरूपद्रव्येण सहाभेद इति शब्दादप्यभेदं मत्वा गुणत्वाशङ्का। तदभिन्नेति न्याये बीजमाह—*अयञ्च न्याय इति—यथा—प्रकृतेः कार्य्यं महत्तत्त्वमिति तयोरभेदः, अहङ्कारस्य च कार्याणि तन्मात्रादय इति तेषामप्यभेदः, महत्तत्त्वस्याहङ्कार इति तयोरप्यभेदः, एवमन्त्यावयविपर्यन्तं परस्परमभेदे प्राकृतत्वव्यवहारदर्शनेन 'तदभिन्नाभिन्न'—इति न्यायः सिध्यति। *यत्र स्वाभिन्नेति—स्वम् = प्रकृतिः, तदभिन्नं वस्तु = महत्तत्त्वम्, तद्द्वाराऽहङ्कारेऽपि प्रकृतिस्वरूपानुगमसत्त्वात्प्रकृत्यभिन्नत्वं तस्य। यथा वा स्वम् = कपालिका, तदभिन्नः = कपालः, तद्द्वारा घटे कपालिकाऽनुगमसत्त्वात्तयोरभेदः। यथा वा स्वम् = तूलम्, तदभिन्नम् = सूत्रम्, तस्य कार्य्यं पटः, इति पटे सूत्रद्वारा तूलस्वरूपानुगमस्य दर्शनेन तूलपटयोरभिन्नत्वम्, एवमेव सर्वत्र बोध्यम्। शब्दविषये तु शब्दार्थयोस्तादात्म्येन शब्दस्य गुणसमुदायरूपार्थेन सहाभेदो नहि कार्य्यकारणभावद्वारा, न्यायश्च—स्वमूलभूतव्यवहारसाजात्येन यत्र कार्य्यकारणभावद्वाराऽभेदस्तत्र, इति न्यायविषयाभावात् शब्दस्य गुणत्वाभाव इति। ननूत्तरपक्षस्यैवमभिप्रायकत्वे स्वर्णस्य स्वकार्य्यकुण्डलद्वारा कटके कटकद्वारा वा कुण्डलेऽनुगमाभावेनैक्याभावेऽपि अन्तःकरणपरिणामयोः सुखदुःखयोरैक्यं स्यात्, अत आह—*स्वर्गेति—स्वर्गः = सुखम्। नरकः = दुःखम्, स्वातन्त्र्येणान्तःकरणावयवविशेषपरिणामः—सुखम्, विभिन्नान्तःकरणावयव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिणामः—दुःखमित्यत्रापि स्वकार्य्यान्तःकरणस्वरूपानुगमो नास्तीति तत्राप्यैक्याभावः । 'अन्तःकरणावयव' इत्युक्त्याऽन्तःकरणस्य सावयवत्वं दर्शितम् । सादिद्रव्यत्वेन तस्यापि सावयवत्वात् । ननु 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययः' इत्युक्त्या शब्दार्थयोर्भेदः प्रतीयते, अत आह—*भाष्याशय इति । *चिज्जडयोरिति—चित् = चैतन्यम् । जडः = चैतन्यभिन्नः । *तादात्म्येति—विवेकाख्यातिमूलकस्तादात्म्याध्यासः, विवेकाख्यातिप्रयोज्य एव पुरुषस्य कर्तृत्वभोक्तृत्वादिव्यवहारः । *अवभास्यत्वमिति—ननु अवभास्यत्वस्य वृत्तिव्याप्यत्वरूपत्वात् तद्रूपमेव जडत्वं फलितम्, तथा च ब्रह्मणोऽपि वेदान्तादिवाक्यजन्यवृत्तिविषयत्वाज्जडत्वापत्तिरिति चेत्, न, वृत्त्युपहितस्यैव ब्रह्मणो वृत्तिविषयत्वेन जडत्वस्येष्टत्वात् । शुद्धन्तु स्वप्रकाशमेव । न च शुद्धस्यापि 'स्वप्रकाशम्' इत्यादिवाक्यजन्यज्ञानविषयताऽस्त्येवेति वाच्यम्, तस्य वाक्यस्य लक्षणया 'अशुद्धत्वमप्रकाशत्वं न' इत्यर्थात्, फलव्याप्यत्वरूपजडत्वस्य स्वीकारेणादोषाच्च । अशुद्धत्वव्यावृत्त्या शुद्धस्वप्रकाशता पर्य्यवस्यति । आन्तरस्फोटाख्यशब्दस्यापि आकाशदेशताया न्याय्यत्वादाह—*बुद्ध्यवच्छिन्नेति—आभ्यन्तरेत्यर्थः । वेदान्तसिद्धान्तेऽन्तःकरणविशेषरूपाया बुद्धेः घटादिवद् द्रव्यतया आकाशावच्छेदकत्वं बोध्यम् ।

मू०—अर्थश्च बौद्ध एव ज्ञानविषयः शक्तिग्रहविषयश्च । ज्ञानञ्च वृत्तिरूपं बुद्धिधर्म एवेति एकदेशस्थत्वात्तेषामितरेतराध्यासः "शब्दार्थप्रत्ययानामितरेतराध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्" (यो० द० ३।१७) इति योगसूत्रोक्त उपपन्नः । स चानादिवासनावशादनादिरेव । एवं शब्दार्थधर्मयोरिति न कुतर्कावसरः ।

शब्दादीनामध्यासस्य वाच्यवाचकयोर्बौद्धत्वस्य च निरूपणम् ।

(रत्न०)—बौद्ध एव = बुद्धिदेशस्थ एव । *शक्तिग्रहेति—शक्तिज्ञानीयविषयताऽऽश्रय इत्यर्थः । *वृत्तिरूपमिति—अन्तःकरणस्य इन्द्रियद्वारा विषयदेशगमने यो विषयाकारेण परिणामः स एव वृत्तिरित्युच्यते । *बुद्धीति—अन्तःकरणमेव नैर्मल्यान्निश्चये जाते बुद्ध्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यया व्यपदिश्यते । ब्रह्मात्मकज्ञानस्य बुद्धिविषयत्वाभावादुक्तम्—*वृत्तिरूपेति । एकदेशस्थत्वात् = बुद्धिरूपैकदेशस्थत्वात् । तेषाम् = शब्दार्थज्ञानानाम् । इतरेतराध्यासः = परस्परतादात्म्यम् । *शब्दार्थप्रत्ययानामिति—तत्र हि—"पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽयमर्थो योऽयमर्थः सोऽयं शब्द इति । एवमितरेतराध्यासरूपः संकेतो भवतीति । एवमेते शब्दार्थसम्प्रत्यया इतरेतराध्यासात् संकीर्णाः 'गौः' इति शब्दः 'गौः' इत्यर्थः 'गौः' इति ज्ञानम् । य एषां प्रविभागज्ञः, एवं शब्दः, एवं प्रत्ययः, नेतरेतरसहगत इति; अन्यथा शब्दोऽन्यथाऽर्थोऽन्यथा प्रत्यय इति प्रविभागज्ञः तस्यैवं तत्प्रविभागसंयमाद् योगिनः सर्वभूतरुतज्ञानं संपद्यते ।" इति योगभाष्ये उक्तम् । अयमाशयः—शब्दार्थप्रत्ययानां शास्त्रयुक्तिभ्यां प्रविभागः सिद्धः । तत्र वर्णव्यङ्ग्यं पदम्, पदव्यङ्ग्यं वाक्यम्, इत्येवमादिरूपं शब्दतत्त्वम् । अर्थो द्रव्यादिः—वाच्यो लक्ष्यो व्यङ्ग्यश्चेत्येवमाद्यर्थतत्त्वम् । शब्दजन्यार्थविषया बुद्धिः प्रत्यय इत्येवमादि ज्ञानतत्त्वम् । तत्तद्विभागे संयमात् साक्षात्कारपर्यन्तात् सर्वशब्दाद् वशीकारसूचकं सर्वेषां भूतानां पश्वादीनां रुतस्य = शब्दस्य ज्ञानं भवति । यद्यपि शब्दज्ञानं श्रवणेन्द्रियेणैव सिद्धम्, तथापि संयमात् 'अनेनैतदभिप्रायेणेदं सर्वमुच्चारितम्' इति ज्ञानं जायते । *उपपन्न इति—अस्य पूर्वोक्तेन 'इतरेतराध्यासः' इत्यनेनान्वयः । ननु 'शुक्लः पटः' 'पटः शुक्लः' इति प्रमात्मकज्ञानस्याप्यध्यासरूपत्वेन भ्रमत्वापत्तिरिति चेत्, न, स्वरूपविवेकतिरस्कारेणाभेदधिय एवाध्यासरूपत्वात् । स च = अध्यासश्च । *शब्दार्थेति—शब्देऽर्थधर्मस्यार्थे शब्दधर्मस्येत्यर्थः । यथा—'अर्थं शृणोति' 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति । *कुतर्क इति—अग्न्यादिशब्दोच्चारणे मुखे दाहाद्यापत्तिरूपेत्यर्थः ।

मू०—अत एव—

"निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ।"

"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।
गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः ॥"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"हिरण्यपूर्वं कशिपुं प्रचक्षते" (शिशु० व० १।४२) इत्यादि सङ्गच्छते । अन्त्ये 'हिरण्यकशिपु'-नामानमिति प्रतीतेरनुभवसिद्धत्वात् । अत एव कथितपदत्वं दोषोऽपि क्वचिन्न दोषः ।

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥"
( काव्यप्र० उल्ला० ७ उदा० कारि० २४५ )

इत्यत्र 'ताम्र'पदं विना न तादृशो बोधः, पदप्रकारकबोधात्' इति प्रकाशकृतः । तदुक्तं हरिणा —

"यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता ॥ इति ।
अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशते ।
एकस्यैवात्मनो भेदौ शब्दार्थावपृथक् स्थितौ ॥"
( वाक्यप० का० २ कारि० ३०-३१ )

इति च । अन्तस्तथा स्थितावपि बहिर्भेदेन भासेते, तस्यैव शक्तिभेदात् । अक्रमे तस्मिन् क्रमभासोऽपि तच्छक्तिवशादेवेत्यपि तत्रैव स्पष्टम् ।

किञ्च बौद्धपदार्थानङ्गीकारे—

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥"
( मनुस्मृ० १।२१ )

इति स्मृतेः "स भूरिति व्याहरत्, स भूमिमसृजत" इति श्रुतेश्च सृष्टेः प्राग् भूशब्दादिभ्यस्तदर्थज्ञानपूर्वकं सृष्टिरिति लाभेन तदा बाह्याया भुवोऽभावात् 'भूः' शब्दस्य शक्तिग्रहपूर्वकं कस्यार्थस्य बोधः स्यात् ? । न च जातेर्नित्यत्वात्तत्र शक्तिग्रह इति वाच्यम्, अद्वैतिनां जातेरप्यनित्यत्वेन तस्या अपि केनचिद्वैदिकशब्देनैव ज्ञानपूर्वं ब्रह्मणा निर्माणे तत्राप्यस्या एव दुरवस्थायाः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्त्वात्, निराश्रयजातिसत्त्वे मानाभावाच्च । तत्तद्व्यक्त्यवच्छिन्न-† ब्रह्मसत्ताया जातित्वेऽप्यवच्छेदकाभावात्तस्यास्तदा जातित्वाभावात् । किञ्च, 'तत्तद्व्यक्त्यवच्छिन्ना ब्रह्मसत्ता जातिः' इति गौरवान्न युक्तमित्यग्रे वक्ष्यते । "अपागादग्नेरग्नित्वम्" (छान्दो० उप० ६।४।१ ) इति श्रुत्या तन्नाशस्यैव कथनाच्च । तस्मात्सर्वज्ञत्वाद्भगवदनुग्रहाच्च वेदलाभवत्तदैव स्वबुद्धिवर्तिपदार्थस्य स्थूलरूपेण भानम्, तत्र ( तत्तत् ) सम्बन्धग्रहो बोधश्च हिरण्यगर्भस्येति बोध्यम् ।

(रत्न०)—अत एव = शब्दार्थयोस्तादात्म्यादेव । *निकार इति—सुभाषितरत्ने याचकनिन्दायाम्—

"क गन्तासि भ्रातः ! कृतवसतयो यत्र धनिनः
किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि ।
धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलम्
निकारोऽग्रे पश्चाद्धनमहह ! भोस्तद्धि निधनम् ॥"

इति पद्यम् । निकारः = निःशब्दोऽग्रे, पश्चाद्धनशब्द इति यत् तदेव निधनम् = मरणं भोः ! इत्यर्थः । अहह इति खेदे । वस्तुतस्तु—नेदं शब्दार्थयोस्तादात्म्यस्योदाहरणं भवितुमर्हति । तथा हि—अग्रे = पूर्वम् निकारः = तिरस्कारः, पश्चाद् धनम् = धनलाभ इति यत्तदेव निधनं मरणम् । तिरस्कारपूर्वकधनलाभ एव मरणमिति भावः । एवञ्च तिरस्कारमुद्दिश्य मरणस्य विधेयताऽत्रेति शब्दपरकत्वेनानिर्देशात् तयोस्तादात्म्यस्योदाहरणं चिन्त्यमित्युपाध्यायाः । अत एवारुचेराह—*रामेति द्व्यक्षरमिति । *प्रतीतेरिति—शब्दार्थयोरभेदमन्तरेयं प्रतीतिरसङ्गता स्यादिति भावः । अत एव = शब्दार्थयोस्तादात्म्यात् शाब्दबोधे शब्दस्य प्रकारतया भानादेव । *कथितपदत्वमिति—तच्च प्रयोजनशून्यत्वविशिष्टसमानार्थकसमानानुपूर्वीकोक्तपदवत्त्वम् । "उदेति सविता ताम्र" इत्यत्र हि तेनैव शब्देन पुनरुपादानेऽनुवादत्वेन झटिति प्रयोजनजिज्ञासायां व्यञ्जनयाऽस्तमयोदयादावेकरूपतयाऽवगमः प्रयोजनम् । विभि-

† 'तत्तद्व्यक्तिसमवेत' इति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्नानुपूर्वीकपदोपादाने पुनरुक्तत्वम् । ॐदोष इति — दोषत्वञ्च — मुख्यार्थापकर्षकत्वम् । अर्थे मुख्यत्वञ्च — इतरेच्छानधीनेच्छाविषयत्वम् । तच्च स्वतः पुरुषार्थो यः सुखरूपो रसस्तन्निष्ठमिति मुख्यार्थत्वं रसस्य। कथितं पदं यस्मिन्निति व्युत्पत्त्या कथितपदम् काव्यम्, तत्त्वञ्च दोषः। ॐन दोष इति —कथितपदत्वरूपदोषलक्षणघटकप्रयोजनशून्यत्वरूपविशेषणाभावात्। ॐउदेतीति — अत्र हि — एकार्थे एकपदस्य प्रयोगे उदयास्तमयादावेकरूपतयाऽवगमरूपं प्रयोजनम्, 'रक्त एवास्तमेति च' इति पदान्तरेण प्रतिपादने स एवार्थोऽर्थान्तरमिव प्रतिभासमानः प्रयोजनप्रतीतिं स्थगयेत्, तदाह — ॐताम्रपदं विनेति । ॐप्रकाशकृत इति — यद्यपि तत्र– "अत्र 'रक्त एवास्तमेति' इति यदि क्रियेत तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरमिव भासमानः प्रतीतिं स्थगयति" इत्युक्तम्, तथापि तत्पदाप्रयोगेऽर्थान्तरतयैवेत्युक्त्या शाब्दबोधे पदप्रतीतिः स्पष्टमेवोक्ता। तद्भावमादाय तु मूलम् । पूर्वं बाह्यस्फोटस्य वाचकत्वाभिप्रायेण व्याख्यातम्, साम्प्रतमान्तरमेवाह — ॐयदन्तरिति —यदेकं निरवयवमन्तःस्थितं शब्दतत्त्वं नादैर्बहिः प्रकाशितम्, अपरे तं शब्दमाहुः । वाक्ये = वाक्यविषये, तस्यैकता = अवयवराहित्यम् । 'वाक्य' इत्युपलक्षणम् । न केवलं वाक्यस्यैवाखण्डत्वं किन्त्वर्थस्यापीत्याह — ॐअर्थभागैरिति — तेषां मतेऽर्थभागैः ( अर्थभागैरित्युक्त्या शाब्दे शब्दस्य भानं सूचितम् । ) तथा = अखण्ड एवान्तरोऽर्थः प्रकाशते = व्यज्यते । शब्दार्थावेकस्यैवात्मतत्त्वस्य = अन्तःकरणस्य, सम्बन्धिनावपृथक् स्थितौ = अभिन्नावेव स्थितौ नहि भिन्नाविवावभासेते । तथा = अभेदेन । तस्यैव = अन्तःकरणस्यैव । शक्तिभेदात् = शक्तिवैलक्षण्यात् । अक्रमे = वर्णक्रमरहिते । तस्मिन् = वाक्ये । तच्छक्तिवशात् = अन्तःकरणशक्तिवशात् । तत्रैव = वाक्यपदीय एव। सः = परमात्मा हिरण्यगर्भरूपेणावस्थितः । ॐनामानीति—गवादिजातेः 'गौः' इत्यादीनि। कर्माणि = अध्ययनादीनि। पृथक् पृथक् = भिन्नरूपतया, यस्य पूर्वकल्पे यान्यभूवन्। ॐवेदशब्देभ्य एवेति—वैदिकशब्देभ्य एवावगम्य इत्यर्थः। संस्थाः = लौकिकीर्व्यवस्थाः, कुलालस्य घटनिर्माणम्, कुविन्दस्य पटनिर्माणमित्यादीः। यद्वा, भिन्नाकृतीन् = पृथिव्यादीन्। ॐतदर्थज्ञानेति–

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्तच्छब्दैस्तं तं पदार्थं स्मृत्वेत्यर्थः। तदा = सृष्टेः प्राक् । तदानीं बाह्यपदार्थपृथिव्यादेरभावेन बौद्धपदार्थमन्तरा कस्य स्मरणं स्यात्। यत्तु—"शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" (वे० सू० १।३।२८) इति सूत्रव्याख्याऽवसरे—'देवतानां विग्रहवत्त्वेऽनित्यताऽऽपत्त्याऽनित्यस्येन्द्रादिरूपार्थस्येन्द्रादिशब्देनानित्यः सम्बन्धः स्यात्, तथा च वैदिकशब्देषु स्वतः प्रामाण्यं भज्येत, अनित्यानां परतः प्रामाण्यादिति प्रामाण्यरक्षार्थं यथा जातेर्नित्यतया जातिवाचकत्वमेव शब्दानाम्, जातीनां च नित्यतया शब्दार्थसम्बन्धस्यापि नित्यत्वेन नाप्रामाण्यम्, तथेन्द्रादिशब्दानामपि इन्द्रत्वादिजातिष्वेव शक्तिरिति इन्द्रादिव्यक्तेरनित्यत्वेऽप्याकृतिनित्यतया विग्रहवत्त्वेऽपीन्द्रादीनां नास्ति दोषः' इत्युक्तम्, तत्खण्डयति — *न चेत्यादिना। *अस्या एव व्यवस्थाया इति — जातेरप्यनित्यतया तदानीमभावात्तन्निरूपितशक्तिग्रहाभावेन तज्ज्ञानपूर्वकसृष्टिकरणासम्भवरूपदुरवस्थाया इत्यर्थः। *अवच्छेदकाभावादिति — सावच्छिन्नाया एव ब्रह्मसत्ताया जातित्वेन तस्यास्तदानीमवच्छेदकाभावाज्जातित्वासम्भव इति भावः । अग्रे = जातिस्फोटनिरूपणानन्तरम्। तन्नाशस्य = जातिनाशस्य। *वेदलाभवदिति —

"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥"

(श्वेता० उप० ६।१८)

इति श्रुत्युक्तवेदलाभवदित्यर्थः। हिरण्यगर्भस्यापि स्वमानेन वर्षशतान्ते नाशात्कल्पान्तरानुभूतबौद्धपदार्थज्ञानपूर्वकमेव स्रष्टृत्वमिति बौद्धपदार्थ आवश्यकः।

मू०—स चायं स्फोट आन्तरप्रणवरूप एव। "ओङ्कार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः। बह्वी = वाक्यपदादिरूपा, नानारूपा = घटपटादिरूपा च। 'अकार एव' इति श्रुत्यन्तरे पाठः। तत्राप्यवयवद्वारा प्रणवोपलक्षणत्वम्। द्वादशस्कन्धे भागवते प्रणवस्य स्फोटत्वं स्फुटमेवोक्तम्।

स्फोटात्मकप्रणवस्य सर्वकारणत्व-तत्त्वरूपत्वादिवर्णनम्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र हि—

"समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥"
(श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ३७)

हृद्गताकाशादित्यर्थः । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्माभिरपि विभाव्यते = श्रूयते ।

"ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥"
( श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ३९ )

त्रिवृत् = त्रिमात्रः । अव्यक्तः = ईश्वरः प्रभवो यस्य सः । अत एवाह–भगवतो लिङ्गम् = गमकः ॥

(रत्न०)—स्फोटस्वरूपमाह —*स चेति । प्रणवद्वैविध्यस्य वक्ष्यमाणत्वादाह —*आन्तरेति । *प्रणवरूप इति — प्रणवो द्विविधः — परोऽपरश्च । परः = ब्रह्मात्मकः, अपरः = शब्दात्मकः । निरूपितश्चैतत्सूतसंहितायाम् —

"परः परतरं ब्रह्म ज्ञानानन्दादिलक्षणम् ।
प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः ॥
अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ।
प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ॥" इति ।

"सत्यं ज्ञानम्" ( तैति० उप० २।१।४१ ) "आनन्दं ब्रह्म" ( बृ० उप० ३।९।२८ ) इत्यादिश्रुत्युक्तं ब्रह्म ज्ञानानन्दादिरूपं यथा प्रकर्षेण नवम् = निखिलविकाररहिततया कूटस्थं तथा प्रकर्षेण नवस्तत्प्राप्तिरूपो यस्मादिति विग्रहबलेन शब्दोऽपि 'प्रणवः' इत्युच्यते । *स्पर्शोष्मभिरिति — स्पर्शः = ताल्वादेः स्पर्शः, उष्मा = वायुः, उपलक्षणमिदं व्यञ्जकान्तरस्य । श्रुतौ पौनरुक्त्यं वारयति — *नानारूपेति । *अकार एवेतीति — योगदर्शने हि — "विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी" ( योग० द० १।३५ ) इति सूत्रेण नासिकाऽग्रे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः, जिह्वाऽग्रे रससंवित्, तालुनि रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले च शब्दसंवित्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति। एताः 'विषयवत्यः' इत्युच्यन्ते। यावदेकदेशोऽपि कश्चिन्न स्वकर्णसंवेद्यो भवति तत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति। तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षे जाते सर्वं सूक्ष्मविषयमपि आपवर्गाच्छ्रद्धीयते। ततः "विशोका वा ज्योतिष्मती" (योग० द० १।३६) इत्यनेन विगतशोका ज्योतिष्मती प्रकाशरूपा प्रवृत्तिरुक्ता। सा च—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति अष्टदलं रेचकप्राणायामेन तद् ऊर्ध्वमुखं कृत्वा तत्रालम्बने चित्तं धारयेत्। तन्मध्ये हि सूर्य्यमण्डलमकारो जागरितस्थानम्, तदूर्ध्वं चन्द्रमण्डलमुकारः स्वप्नस्थानम्, तदूर्ध्वं वह्निमण्डलं मकारः सुषुप्तस्थानम्, तदूर्ध्वं ब्रह्म व्योमात्मकम्, नादस्तुरीयः स्थानं याऽर्धमात्रेति। योगिनां तत्कर्णिकायां विष्वग्व्यापिशाखासहस्रवत्या मनोवहाऽऽख्यनाड्या मूलं तिष्ठति। तस्या ऊर्ध्वमुखी एका शाखा सुषुम्नाऽऽख्याऽन्तरसूर्य्यादिमध्यगा। तया च बाह्यान्यपि सूर्य्यमण्डलानि प्रोतानि। सैव मनोवहा नाडी चित्तस्थानम्। तस्यां ध्यानधारणा-समाधिभिश्चित्तसाक्षात्कारो भवति। सोऽयं प्राणिमात्रस्य हृद्देशस्थोऽर्धमात्रारूपस्तुरीयोंऽशोऽर्धमात्रारूपो नादः, स्फोटो वेत्युच्यते। एतदभिप्रायेणैव सप्तशत्याम्—"अर्धमात्रास्थिता नित्या याऽनुच्चार्या विशेषतः।" (अ० १ श्लो० ७४) इत्युक्तम्। तस्यैव प्रणवस्य श्रुत्या सर्वनादत्वमुक्तमिति बोद्धव्यम्। *आत्मन इति—ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूदिति भावः। स नादः कः? इत्याकाङ्क्षायामाह—* यः कर्णपुटेति—अनेन सूक्ष्मत्वं दर्शितम्। अत आह—*स्वराडिति—स्वत एव हृदि प्रकाशमान इत्यर्थः। *त्रिमात्र इति—अकारोकारमकाररूपमात्रात्रयात्मक इत्यर्थः। *ईश्वरः प्रभवो यस्येति—ननु "यः छन्दसामृषभः"—(तैति० उप० ४।१) इति श्रुतौ ॐकारं प्रकृत्य "ब्रह्मणः कोशोऽसि" (तैति० उप० ४।१) इत्युक्तमिति कथं प्रणवस्य ब्रह्मप्रभवत्वमिति चेत्सत्यम्, खड्गस्येवोपलम्भस्थानत्वात्कोशत्वम्। *गमक इति—कार्येण लक्ष्यते इति तत्त्वम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—कोऽसौ परमात्मा तत्राह—

"शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥"
( श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ४० )

सुप्ते श्रोत्रे = कर्णपिधानादिना अवृत्तिके । इमम् = प्रणवरूपम् । स्फोटं स्थूलरूपेण परिणतमपि यः शृणोति स परमात्मा । जीवस्य तु करणाधीनज्ञानत्वात् करणस्य चावृत्तिकत्वात् न तदा श्रोतृत्वम् । ईश्वरस्तु यतः शून्येऽपि इन्द्रियवर्गे दृक्=ज्ञानं यस्य तादृश इति श्रोतैव । जीवस्य तदुपलब्धिस्तु ईश्वरद्वारिकैव । यथा—निद्राकाले लीनेन्द्रियमपि जीवं परमात्मैव शब्दं श्रुत्वा प्रबोधयति तद्वत् । येन प्रणवेन वाग् बृहती व्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिः ।

"स्वधाम्नः ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥"
( श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ४१ )

स्वधाम्नः = स्वकारणस्य । किञ्च, स तदंशभूतसमस्तदेवतावाचकोऽपीत्याह—सः = प्रणवः । सर्वमन्त्राणामुपनिषद् = रहस्यम् = सूक्ष्मरूपम्, यतो वेदकारणम् । तत्कारणत्वेऽपि न विकारित्वम्, यतः सनातनम् = सदैकरूपम् ।

"तस्य ह्यासँस्त्रयो वर्णा अकाराद्या भृगूद्वह ! ।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥"
(श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ४२)

अकाराद्याः = अकारोकारमकाराः । तस्येत्यवयवावयविभावे षष्ठी । यैः=अकाराद्यैः । त्रयः = त्रित्वसंख्यायुक्ताः । भावाः = ( धर्माः ) धार्यन्ते तत्कारणत्वात् । गुणाः=सत्त्वरजस्तमांसि । नामानि=

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋग्यजुःसामलक्षणानि । अर्थाः = भूर्भुवःस्वर्लोकाः, वृत्तयः = जाग्रत्स्वप्नसुषुप्तयः । अनेन तस्यैव सर्वप्रपञ्चकारणतोक्ता ।

"ततोऽक्षरसमाम्नायमसृजद्भगवानजः ।
अन्तःस्थोष्मस्वरस्पर्शदीर्घह्रस्वादिलक्षणम् ॥" इति ।

(श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ४३)

ततः=अकारादिभ्यः । अन्तःस्थादयो लक्षणं यस्य तम् ।

"तेनासौ चतुरो वेदाँश्चतुर्भिर्वदनैर्विभुः ।
सव्याहृतिकान्सोङ्कारान् चातुर्होत्रविवक्षया ॥"

(श्रीमद्भा० स्कं० १२ अ० ६ श्लो० ४४)

'असृजत्' इत्यनुषज्यते । चत्वारो होत्रुपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया इत्यर्थकमुक्तमिति ।

(रत्न०)—'कोऽसौ' इत्यस्य 'ननु' इत्यादिः । ननु जीव एव श्रोताऽस्त्वित्यत आह—*सुप्त इति—श्रोत्रपिधाने सत्यपीत्यर्थः । *प्रणवरूपमिति — अव्यक्तमित्यर्थः । *शून्येऽपीति — अवृत्तिकेऽपीत्यर्थः । *श्रोतैवेति – इन्द्रियवृत्त्यभावेऽपि ज्ञातृत्वात्परमात्मैव श्रोतेत्यर्थः । *निद्रेति — "अभावप्रत्ययालम्बना वृत्तिर्निद्रा" (योग० द० १।६) इति योगसूत्रम् । जाग्रत्स्वप्नवृत्तीनामभावस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमस्तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा । त्रिगुणे बुद्धिसत्त्वे हि यदा सत्त्वरजसी अभिभूय सकलेन्द्रियावरकं तम आविर्भवति तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुप्तोऽन्तःसंज्ञ इत्युच्यते । तदानीन्तनी जीवस्य वृत्तिर्निद्रेत्युच्यते । ननु जीवस्याज्ञायमानोपलब्धिः कथम् ? अत आह — *जीवस्येति । उत्तरार्धं विवृणोति — *येनेति । यस्य = प्रणवस्य । *वाचक इति — तथा च योगसूत्रम् — "तस्य वाचकः प्रणवः" ( योग० द० १।२७ ) इति । *न विकारित्वमिति — नित्यमित्यर्थः । तस्य = प्रणवस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रीन् भावान् प्रत्येकं दर्शयति—*गुणेति। *अकारोकारेति—ननु समाहारेऽव्ययत्वानापत्तिभिया "अवतेष्टिलोपश्च" (उणादिसू० १।१४७) इत्युणादिनिष्पन्नस्य मान्तत्वादव्ययसंज्ञकस्य ग्रहणे उक्तार्थासङ्गतिरिति चेत्, न, औणादिकस्य "कृन्मेजन्तः" (पा० सू० १।१।३९) इत्येवाव्ययत्वे सिद्धे स्वरादिपाठसामर्थ्यात् समाहारद्वन्द्वनिष्पन्नस्याप्यव्ययत्वात्। तत्र समुदायशक्त्यैव ब्रह्मप्रतिपादकत्वम्—यदुक्तम्—

"अकारादयस्त्रयो वर्णा ब्रह्मविष्णुमहेश्वराः।
अन्त्ये प्रतीयमानो यो ध्वनिर्ब्रह्मेति कीर्त्यते॥" इति।

*त्रय इति—त्रित्वं प्रत्येकान्वयि, तत्रैव त्रित्वस्य विवक्षितत्वात्, समुदाये बाधाच्च। तद्यथा—त्रयो गुणाः, त्रीणि नामानि, त्रयोऽर्थाः, तिस्रो वृत्तय इति। ननु गुणादीनां वृत्तिघटकत्वात् त्रित्वस्य भावत्वस्य च प्रत्येकमन्वयो न स्यादिति चेत्, न, 'गुणनामार्थवृत्तयः त्रयः भावाः' इत्येवं गुणादीनुद्दिश्य त्रित्वविशिष्टभावत्वविधानेनोक्तार्थस्य लाभात्। तथा च 'ते' इत्यध्याहृत्य 'धार्यन्ते' इत्यत्रान्वयः कार्यः। ननु समुद्रादावपि वाय्वाद्यभिघातं विना तरङ्गो नोत्पद्यते तथा च चिन्मात्रेऽद्वितीये द्वितीयमज्ञानं कथं सम्बद्ध्येत, यतोऽहङ्काराद्युत्पत्तिः स्यादिति चेदत्रोच्यते—कार्यमात्रं प्रत्यविद्यायाः कारणतयाऽहङ्कारादिकार्यदर्शनादेव चिदात्मनि सा कल्प्यते न तु तत्त्वतश्चिदात्मनि तत्सम्बन्धोऽस्तीति। अनेन='गुणनामार्थवृत्तयो धार्य्यन्ते' इति कथनेन। *तस्यैवेति—आन्तरप्रणवात्मकस्फोटस्यैवेत्यर्थः। *स्वरेति—उदात्तत्वादीत्यर्थस्तेन दीर्घेत्याद्युक्त्या न पौनरुक्त्यम्। *तेनेति—अक्षरसमाम्नायेनेत्यर्थः। *लक्षणमिति—स्वरूपमित्यर्थः। विभुः=चतुर्मुखरूपः परमात्मा। *होत्रुपलक्षिता इति—'होतृ' पदं होत्रुपलक्षितऋत्विक्परं लक्षणया। विग्रहस्तु—चत्वारश्च ते होतारश्चेति चतुर्होतारस्तेषां कर्म चातुर्होत्रम्। कर्म च—हौत्राध्वर्य्यवब्रह्मकर्मौद्गात्रात्मकम्। *ऋत्विज इति—होता, अध्वर्युः, ब्रह्मा, उद्गाता चेति चत्वार ऋत्विजः। तत्र ऋग्वेदेन हौत्रम्, यजुषाऽऽध्वर्यवम्, औद्गात्रं साम्ना, अथर्वणा ब्रह्मकर्म सम्पद्यते।

मू०—निरुक्तभाष्येऽपि—उक्तरीत्या पदसत्ताऽभावाशङ्का-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तरभूतम् "व्याप्तिमत्त्वात्तु शब्दस्य" ( निरुक्त० नैघ० १।१।२ ) इति प्रतीकमुपादायोक्तम् — 'अभिधानाभिधेय-रूपा बुद्धिर्हृदयाकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणोदीर्यमाणा कण्ठादिषु वर्णभावमापद्य ( माना ) बाह्याकाशस्थं शब्दं स्वस्वरूपं कृत्वा श्रोत्रद्वारेण तत्र स्थितां श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थसर्वाभिधानरूपां तद्बुद्धिं व्याप्नोति । पुरुषयत्नजा वक्त्रोद्घाताः परं नश्यन्ति, न शब्दः । स च तदनुरक्तोऽर्थप्रत्ययं जनयति इति तत्रत्यपदत्वादिकं वक्त्रोद्घातेष्वारोपयन्ति, तद्गतनाशादि च तस्मिन् । पुरुषबुद्ध्यवस्थस्यैव चार्थस्य प्रत्ययमादधाति शब्दः, तेनैव तस्य सम्बन्धात्' इति ।

बौद्धशब्दार्थयोर्बोध्य-बोधकभावक्रमप्रदर्शनम्

(रत्न०)—आन्तरस्फोटस्यैव वाचकत्वमिति निरुक्ततद्भाष्यसम्मत-मित्येतद्दर्शयति — ॐनिरुक्तभाष्येऽपीति । ॐउक्तरीत्येति — वर्णाना-मुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वमितिरीत्येत्यर्थः । अस्य 'पदसत्ताऽभावे' अन्वयः । ॐअभावाशङ्केति—अभावेनाशङ्का इति विग्रहः, तथाच—पद-सत्ताऽभावप्रयोज्यपदचतुष्ट्वशङ्कोत्तरभूतमित्यर्थः । ॐव्याप्तिमत्त्वादिति — ( निरुक्तभा० नैघ० १।१।२ ) तत्रहि भाष्ये शब्दानामनित्यत्वपक्षे शास्त्रकृतो योगश्च—"उपसर्गस्य धातुना, धातोः प्रत्ययेन, प्रत्ययस्य लोपा-गमवर्णविकारैः । अयं वचनानित्यत्वान्नोपपद्यते ( उच्यतेऽनेनेति वचनं वाक्यम् इति निरुक्तम् ) । किं कारणम्, अयुगपदुत्पत्तौ हि धातुरुच्चारितो विनष्टः, स वाऽयमुपसर्गेण योक्ष्यते, प्रत्ययेन वा । नहि विनष्टाविनष्टयोर्योगोऽस्ति । तस्माद्य एव नामाख्यातयोरितरेतरगुण-प्रधानभाव उपसर्गनिपातानां नामाख्याताभ्यां योगे यच्च पदचतुष्टय-मुक्तम्, सर्वमेतदसम्यगिति" इत्याशङ्क्य "व्याप्तिमत्त्वात्तु शब्दस्य सर्व-मेतदुपपद्यते । कस्मात् ? व्याप्तिमत्त्वाच्छब्दस्य । व्यापनं व्याप्तिः सा यस्मिन्नस्ति, सोऽयं व्याप्तिमान् शब्दः, तद्भावो व्याप्तिमत्त्वम्, तस्मा-द्व्याप्तिमत्त्वाच्छब्दस्य सर्वमेतदुपपद्यत इति वाक्यशेषः । आह—कथं पुनर्व्याप्तिमान् शब्द इति ? शृणु—शरीरे ह्यभिधानाभिधेयरूपा बुद्धि-र्हृदयान्तर्गताकाशप्रतिष्ठितयोरभिधानरूपाभिधेयरूपयोर्बुद्ध्योर्मध्ये ऽभिधा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नरूपया शास्त्राभिमतप्रयोजनविजिज्ञापयिषया तु पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतेन प्रयत्नेनोदीर्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानः पुरुषप्रयत्नेन बहिर्विनिक्षिप्तोऽविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यास्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां व्याप्नोतीत्येवं व्याप्तिमान् शब्दः" इति । "परस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते, न तु शब्दाकृतयः । तास्तु तयाऽभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्यः स्थिता एव भवन्ति" इति चानुपूर्व्योक्तिः । बुद्धेरेव विषयाकारेण परिणामादाह – ॐअभिधानेति— अभिधानम् = वाचकम्, अभिधेयम् = वाच्यम् । ॐहृदयेति — हृदयदेशावच्छिन्नो य आकाशस्तत्र स्थितेत्यर्थः । आभ्यन्तरौ यौ शब्दार्थौ तद्रूपा बुद्धिर्वक्त्राभिघातेन वाक्यार्थशब्दरूपवर्णात्मिका भूत्वा श्रोत्रद्वारेण परबुद्धिविषयो भवतीत्यर्थः । उदीर्य्यमाणा = प्रेर्य्यमाणा । ॐस्वस्वरूपमिति — आन्तरस्यैव वाह्यरूपताऽध्यवसायात् । वक्त्रोद्घाताः = वर्णरूपा ध्वनयः । ॐस चेति — श्रोतृबुद्धिश्चेत्यर्थः । ॐतदनुरक्त इति — वर्णरूपध्वन्यनुरक्त इत्यर्थः । एतेन शब्दस्य नित्यत्वे सर्वदाऽर्थबोधापत्तिरित्यपास्तम् । ॐतत्रत्येति — शब्दगतेत्यर्थः । आदिना — वाक्यस्य संग्रहः । ॐतद्गतेति — वक्त्रोद्घातगतेत्यर्थः । तस्मिन् = शब्दे । बौद्धस्यैव वाच्यत्वमाह — ॐपुरुषबुद्ध्यवस्थस्यैवेति — आन्तरस्यैवेत्यर्थः । प्रत्ययमादधाति = बोधं जनयति । तेनैव = बौद्धार्थेनैव । तस्मिन् = बुद्धिस्थे । तस्य = आन्तरशब्दस्य ।

**स च शब्दो वस्तुत एकोऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपोऽनन्तपदरूपतामिवापन्न इति सर्वपदरूपः सर्वार्थाभिधानशक्तिः ।**

सर्वपदादिरूपतया सर्वार्थवाचकत्वस्य लोकशास्त्रयोः कल्पितरूपत एव व्यवहारस्य च निरूपणम्

**सा शक्तिश्च — योगिप्रत्यक्षगम्या नास्मज्ज्ञानगम्या । 'यत्रैव व्यवहारादिना तज्ज्ञानं तत्रैवास्माकम् बोधः' इति मर्यादा । एवमेकैकवर्णोऽपि सहकारिवर्णान्तरसम्बन्धाद् अनन्तपदरूप इति सोऽपि तच्छक्तिरिति 'गकारौकारविसर्जनीया गोर्वाचकाः' इति लोक-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याविचारितरमणीये तत्समूहे वाचकत्वग्रहः । तादृशस्यैव च शास्त्रेणान्वाख्यानं तद्दृष्ट्या बोध्यम् ।

तदुक्तं भाष्ये—"अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः" ( महाभा० पस्पशा० ) इति लोकेऽर्थबोधकत्वेन गृहीतो ध्वनिर्वर्णात्मकः तत्समूहः शब्द इति तदर्थः । "अथ 'गौः' इत्यत्र कः शब्दः ?" ( महाभा० पस्पशा० ) इति प्रश्ने इदमुत्तरम् ।

अखण्डोऽपि स्फोटो गकाराद्यवस्थाभ्यो भिन्नोऽभिन्नश्च चरमावस्थया विसर्जनीयादिरूपया पदादिरूपेण व्यज्यत इति वर्णेषु तत्त्वव्यवहारोपपत्तिर्लोकस्येति बोध्यम् ।

( रत्न० )—❀स चेति—स्फोटात्मकश्चेत्यर्थः । ❀वर्णसंस्कारैरिति—वर्णजन्याभिव्यक्तिरूपसंस्कारैरित्यर्थः । ❀प्रतिबिम्बेति—प्रतिबिम्बितं तत्तद् ( पदम् ) रूपं यस्य स इत्यर्थः । प्रतिबिम्बिततत्तत्पदरूप इति यावत् । ❀सर्वपदरूप इति—एक एव स्फोटः तत्तत्पदप्रतिबिम्बनेन सर्वपदरूप अत एव 'सर्वार्थाभिधानसमर्थः' इत्याह—❀सर्वार्थेति । ❀सा शक्तिश्चेति—सर्वार्थाभिधाने शक्तिश्चेत्यर्थः । ❀योगीति—तेषामेव सर्वशब्दसर्वार्थविषयकज्ञानवत्त्वादिति भावः । एवञ्च यत्रार्थे शक्तिग्रहस्तत्रैव बोधोऽस्माकमित्याह—❀यत्रैवेति । ❀व्यवहारेति—आदिना—कोशादिसंग्रहः । तज्ज्ञानम् = शक्तिज्ञानम् । प्रक्रियासिद्धान्तमाह—❀एवमिति । ❀अनन्तेति—अनन्तानि पदानि रूपाणि यस्य वर्णस्य स इत्यर्थः । सोऽपि = वर्णोऽपि । ❀सम्बन्धादिति—अस्य सर्वपदभवनशक्तिमत्त्वादिति शेषः । ❀तत्तच्छक्तिरिति—तत्तदर्थनिरूपितशक्तिविशिष्ट इत्यर्थः । वस्तुतो वर्णसमूहे वाचकत्वाभावादाह—❀अविचारितरमणीय इति—विचारमन्तरा तत्त्वेन ज्ञात इत्यर्थः । तादृशस्य = अविचारितरमणीयस्य । तद्दृष्ट्या = लोकदृष्ट्या । तदर्थः = भाष्यार्थः । अत्रापि भाष्यप्रमाणमाह—❀तदुक्तमिति । तत्समूहः = वर्णसमूहः । ननु "लोके ध्वनिः शब्दः" इत्युक्त्या नहि ध्वनेः शब्दत्वमनेन लभ्यतेऽत आह—❀अथ गौरिति—प्रश्नस्य शब्दविषयकत्वेनोत्तरस्य शब्दरूपबोधकत्वमेव तात्पर्यविषयीभूतं भगवत इति भावः । ननु



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचकत्वस्य स्फोटमात्रनिष्ठत्वात् पदादिरूपत्वेऽपि कथं तत्त्वमित्यतो भाष्यतात्पर्य्यमाह— ❀अखण्डोऽपीति । ❀भिन्न इति — गकाराद्यवस्थाप्रयोज्यभेदवान् इत्यर्थः। ❀ अभिन्न इति — प्रतिबिम्बप्रयोज्यभेदाभाववान् इत्यर्थः। † १❀चर्मेति—अस्य पदादेरित्यादिः । ❀तत्त्वव्यवहारेति—वाचकत्वव्यवहारेत्यर्थः ।

**एवं सर्वपदेषु पदान्तरसहकारेण नानावाक्यभवनशक्तिमत्त्वं तत्तद्वाक्यार्थभवनशक्तिमत्त्वं † २ च ।**

( रत्न० )—❀एवमिति — वर्णेषु पदादित्वशक्तिभवनवदित्यर्थः । ❀तत्तद्वाक्यार्थेति — अनेनान्तरस्फोटस्यैवार्थरूपेण परिणतिर्दर्शिता ।

वाक्यवाक्यार्थयोरखण्डत्वस्य पदपदार्थयोः काल्पनिकत्वस्य च निरूपणम्

**मू०—यद्यपि परस्य बुबुत्सितार्थप्रत्यायनाय शब्दप्रयोगः, परस्य च प्रवृत्त्यादिविषय एव प्रायेण बुबुत्सितः स च वाक्यार्थ एवेति सर्वे शब्दाः तत्परा एव । यत्रापि केवलम् 'वृक्ष' इति प्रयुज्यते तत्राप्याकाङ्क्षातात्पर्य्यादिवशात् 'अस्ति', 'चलति' 'छिद्यते' वा इति पदान्तरार्थानामध्याहारः। क्रियाविशेषतात्पर्य्यानवधारणेऽप्यस्तीत्यध्याहारः, बुद्धिसत्ताया बोधविषयबौद्धपदार्थेनाव्यभिचारात्, लोकेऽस्त्यर्थं विना शुद्धपदार्थानवगतेश्च। एवं क्रियापदादिमात्रप्रयोगे सर्वकारकाद्यध्याहारः । 'चैत्रोऽग्निना तण्डुलान्पचति' इत्यादिप्रयोगस्तु कारकान्तरनिवृत्त्यर्थः, क्रियान्तरनिवृत्त्यर्थो नियमाय इति स्पष्टम् "अर्थवत्" ( पा० सू० १।२।४५ ) सूत्रे भाष्ये।**

---

† १ अत्रेदं तत्त्वम्—यथा वृक्षो बीजाङ्कुराद्यनेकावस्थाविशिष्टश्चरमावस्थया पूर्णतयाऽभिव्यज्यते । स च बीजादिभ्यो भिन्नः प्रत्येकावस्थया, अभिन्नश्च समुदितावस्थया, भेदाभेदयोरनुगमस्यानुभवसिद्धत्वात् । एवं गकाराद्यनेकावस्थाविशिष्टं पदं विसर्जनीयादिरूपचरमावस्थया पर्य्याप्तत्वेन अभिव्यज्यते, 'इदं गौरिति पदम्' इत्यादिरूपेण । गकारादिभ्यः प्रत्येकावस्थया भिन्नं समुदितावस्थया अभिन्नं च इति भेदाभेदौ तत्रेति ।

† २ 'तत्तद्वाक्यार्थबोधजननशक्तिमत्त्वं च' इति क्वचित्पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथाऽपि ( यौगिकेषु ) अन्वाख्यानलाघवाय पदानि, तत्र प्रकृति-प्रत्ययभागाः, तत्तदर्थविभागाश्च कल्प्यन्ते। तद्द्वारा पदार्थबोधनं वाक्यार्थबोधनं च शास्त्रफलम्। केवलरूढेषु तु वर्णसाजात्यादि-नाऽवयवकल्पनम्। स्पष्टं चेदं निरुक्ते।

यत्र तु वाक्यस्यैव शास्त्रेण संस्कारस्तत्र नैव पदात्पदार्थ-बोधः। यथा—'षट् त्सन्तः' इत्यादौ। अत एव "डः सि" (पा० सू० ८।३।२९) इति सूत्रे भाष्ये—"धुडादयः पूर्वान्ता एव किं न क्रियन्ते" इत्याशङ्क्य पूर्वान्ते ष्टुत्वापादनेन समाहितम्। अन्यथा-तकारविशिष्टस्य सत्पदार्थबोधकत्वाय परादित्वमेवावश्यकमिति तद्विचारासङ्गतिः ( तेः ) निर्दलत्वात्। मम तु वाक्यार्थबोधे भेदा-भावान्न दोषः। एतेन पदात्पदार्थज्ञानपूर्वक एव वाक्यार्थबोध इत्यपास्तम्॥

(रत्न०)—*प्रवृत्त्यादिविषयेति—प्रयोज्यप्रयोजकवृद्धयोर्व्यवहारस्य तद्विषय एव सम्भवात् तस्य च वाक्यार्थत्वादिति भावः। तत्परा एव = वाक्यार्थपरा एव। *बुद्धिसत्ताया इति—अत्रेदं तत्त्वम्—'अस्ति' इत्यनेन साध्यावस्थापन्ना क्रिया प्रतीयते। सिद्धेन च साधनेन साध्या क्रिया जायते। तदुक्तं हरिणा—

"प्राक् च सत्ताऽभिसम्बन्धान्मुख्या सत्ता कथं भवेत्।
असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववत्॥"
( वाक्यप० कां० ३ का० ४८ )

इति बुद्धिसत्तासमाविशिष्टस्यैव बाह्यसत्तोपचार इत्यभिप्रायेणैवोक्तम्—"एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते" (वाक्यप० कां० ३ का० ५१) इति। *अस्त्यर्थं विनेति—आत्मधारणरूपास्त्यर्थस्य पदार्थमात्रव्यापक-त्वादिति भावः। ननु सर्वत्र वाक्यस्यैव बोधकत्वे व्याकरणेन पदान्वाख्या-नासिद्धिः। किञ्च, पदवाक्ययोरप्यखण्डत्वेन तत्र पदादीनामभावात्तेषा-मप्यन्वाख्यानासम्भव इत्यर्थवत्सूत्रस्थपूर्वपक्षभाष्यतात्पर्यमाह—*अर्थ-वत्सूत्रे भाष्य इति—( पा० सू० १।२।४५ ) तत्र हि पदार्थाभिसम्बन्धस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यार्थत्वमभिधाय "इह देवदत्त इत्युक्ते कर्ता निर्दिष्टः, कर्मक्रियागुणौ चानिर्दिष्टौ । 'गाम्'इत्युक्ते कर्मनिर्दिष्टं कर्त्ता क्रियागुणौ चानिर्दिष्टौ । 'अभ्याज' इत्युक्ते क्रिया निर्दिष्टा कर्तृकर्मणी गुणश्चानिर्दिष्टः । इहेदानीम् 'देवदत्त गामभ्याज शुक्लाम्' इत्युक्ते सर्वं निर्दिष्टम् । 'देवदत्तः' एव कर्त्ता नान्यः । 'गाम्' एव कर्म नान्यत् । 'अभ्याज' एव क्रिया नान्या । शुक्लामेव न कृष्णामिति" इत्युक्तम् । तथाऽपि = सर्वत्र वाक्यार्थस्यैव विषयत्वेऽपि । ❀पदानीति–अस्य'कल्प्यन्ते'इत्यत्रान्वयः । तद्द्वारा = प्रकृतिप्रत्ययार्थद्वारा । ननु रूढेष्ववयवार्थाभावादवयवार्थकल्पनाऽसम्भवोऽत आह—❀वर्णसाजात्यादिनेति–वर्णपदमुपलक्षणं प्रकृतिप्रत्ययादेः । रूढशब्दघटकवर्णादीनामानर्थक्येऽपि अर्थवत्साजात्यात् तत्राप्यर्थवत्त्वं बोध्यम् । ❀निरुक्त इति–निरुक्ते नैघ० प्रकरणे (१।४।१) प्रकृतिविचारे उक्तम् । क्वचिद् वाक्यमात्रस्यैवार्थवत्त्वमित्यत्र महाभाष्यं प्रमाणयति —❀डःसीतीति । ❀पूर्वान्ता एवेति—धुगेवेत्यर्थः । ❀अन्यथेति — पदस्यार्थवत्त्वे इत्यर्थः । ❀आवश्यकमिति — अयम्भावः — पदस्यैवार्थवत्त्वे धुटि 'षट्त्सन्तः' इत्यत्र 'त्सन्तः' इति तकारविशिष्टस्यैव 'षट्' इति तकाररहितस्यैवार्थवत्त्वम् । धुक्कि तु पूर्वत्र तकारस्याधिक्यादुत्तरत्र न्यूनत्वादन्यूनानतिरिक्तानुपूर्वीविशिष्टस्यैव वाचकतयोभाभ्यामर्थबोधानापत्तिः । वाक्यस्यैव तत्रार्थवत्त्वस्वीकारे तु धुक्कि धुटि वा वाक्यानुपूर्वीभेदाभावेनार्थवत्त्वं सुलभमिति भाष्ये ष्टुत्वमात्रापादनं नासङ्गतम् । ❀अपास्तमिति — भाष्यप्रामाण्यात् 'षट्त्सन्तः' इत्यत्र पदानामानर्थक्यस्यैव स्वीकारेण 'पदार्थज्ञानपूर्वकवाक्यार्थज्ञानम्' इति नैयायिकोक्तमपास्तम्, अत्र नियमस्य व्यभिचारादिति भावः ।

मू०—वस्तुतः सर्वं वाक्यमखण्डमेव । पदान्यसत्यान्येव । 'पदात्पदार्थबोधः' इत्यङ्गीकारे चैत्रादिपदानां सकलक्रियासाधारणेऽर्थे गृहीतशक्तिकानां तत्तदर्थान्वितविशेषबोधाय लक्षणाऽऽपत्तौ शक्त्या बोधकत्वभङ्गः । 'सामान्यरूपेण विशेषबोधेऽपि लक्षणा' इति स्पष्टं काव्यप्रकाशे ।

पदादीनां सत्यत्वे दूषणाभिधानम्

किञ्च, पदानां सत्यत्वे 'राजा' 'राजानम्' 'राज्ञा' 'राजनि' इत्यादौ राजरूपार्थप्रत्यायकस्यानियतत्वं न स्यात्, सत्यस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नियतत्वात्, 'हे राजपुरुष' इत्यत्र 'राज' इति क्रियापदार्थप्रतीत्यापत्तेश्च । अत एव भाष्ये—"न लक्षणेन पदकारा अनुवर्त्त्याः" इत्यादिना "आशितः कर्त्ता" ( पा० सू० ६।१।२७ ) इत्यादौ पदानामसत्यत्वं दर्शितम् । सत्यत्वे तु लक्षणेन तदननुवर्तनासङ्गतिः । "पदप्रकृतिः संहिता" इत्यत्र तु षष्ठीसमासः ।

तथा च तत्रैव कैयटः—"संहितैवापौरुषेयी पदानि तु पौरुषेयाणि" इति ।

किञ्च, तेषां सत्यत्वे अश्वकर्णादौ अश्वाद्यर्थप्रतीत्यापत्तिः । 'इदं रूढम्' 'इदं यौगिकम्' 'इदं योगरूढम्' इत्याद्यपि शास्त्रकृत्कल्पनैव विशिष्टार्थबोधार्था । बुद्धे च तत्र प्रयोजनसंपत्तेरुपायपरित्यागः । अत एव व्याकरणभेदेनोपाया अनियताः । तदुक्तम्—

"उपादायापि ये हेयास्तानुपायान् प्रचक्षते ।
उपायानाञ्च नियमो नावश्यमवतिष्ठते ॥" इति ।
(वाक्यप० कां० २ का० ३८)

(रत्न०)—*सर्वं वाक्यमिति—बाह्यमान्तरञ्चेत्यर्थः । असत्यान्येव = कल्पितान्येव । *पदादिति—अस्य 'यतः' इत्यादिः । ननु "कर्मणि द्वितीया" ( पा० सू० २।३।२ ) इत्यादिशास्त्रैः कर्माद्यर्थे विभक्तीनां विधानात् कर्मत्वादीनाञ्च साध्यक्रियानिरूपितत्वात्सामान्यक्रियामादाय कर्मादिसंज्ञायां विभक्तौ च सत्यां साधारणक्रियानिरूपितकर्मत्वादिविशिष्टे एव गृहीतशक्तिकानां पदानां विशेषक्रियान्वितकर्मत्वादिविशिष्टार्थबोधनाय लक्षणैव शरणं स्यादिति शक्त्या पदानां बोधकत्वं भज्येत इत्याह—*लक्षणाऽऽपत्ताविति । ननु पदेषु बोधकत्वाभावे "जनपदतदवध्योश्च" (पा० सू० ४।२।१२४) इति सूत्रे कथं तच्छब्देनावयवार्थबोधः ? इति चेदत्रोच्यते—'प्रतिभाविशेष एव वाक्यार्थः' इति स्वीकारेण तच्छब्दस्य तदर्थकत्वेनावयवार्थबोधेऽपि क्षतिविरह इति । न च वाक्यार्थवाचकत्वे सर्वनामत्वाभावः, तत्त्वस्येष्टत्वात्, सर्वनामसदृशत्वेन सर्वनामत्वव्यवहारात्, तच्छब्दस्य बुद्धिविशेषविषयतोपलक्षित-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्तद्धर्म्मावच्छिन्ने शक्तिस्वीकारेणादोषाच्च । *चैत्रादिपदानामिति — साधारणक्रियाऽन्विते शक्ताच्चैत्रादिपदाद्विशेषबोधे लक्षणाऽऽपत्तिरित्यर्थः। *पदानामिति — पदानां सत्यत्वे 'राज' रूपार्थबोधनायानियतानुपूर्वीकं पदं न स्यात्, सत्यस्यैकरूपत्वादिति भावः। दूषणान्तरमाह — *हे राजेति — दीप्तिरूपक्रियाबोधक 'राज' पदस्य नियतत्वात्तादृशानुपूर्वी सत्त्वे 'हे राजपुरुष'! इत्यत्रापि 'हे पुरुष ! दीप्यस्व' इति बोधापत्तिरित्यर्थः। पदानामसत्यत्वे भाष्यसम्मतिमाह — *अत एवेति — पदानामसत्यत्वादेवेत्यर्थः। *भाष्य इति — तत्र हि—"आशितः कर्त्ता" (पा० सू० ६।१।२०७) इति सूत्रे "आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वञ्चेति। आद्युदात्तत्वमनिपात्यमधिकारात्सिद्धम्, उपधादीर्घत्वमनिपात्यम् आङ्पूर्वस्य प्रयोगः। यद्येवमवग्रहः प्राप्नोति। न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नामलक्षणमनुवर्त्यम्। यथालक्षणं पदं कर्तव्यम्" इत्युक्तम्। अनेन लक्षणाधीनं पदं न तु पदाधीनं लक्षणमित्युच्यते, पदानां सत्यत्वे लक्षणानुसरणं नोपपद्येत। किञ्च, वृद्धौ 'आशितः' इत्येकं पदम्, आङः प्रयोगे 'आ' 'अशितः' इति पदद्वयमित्यवग्रहे भेदः, इति रूपभेदादप्यसत्यत्वं तस्य। न च "ऊदनोर्देशे" (पा० सू० ६।३।९८) इति सूत्रे भाष्ये — 'उत्' इति ह्रस्वादेशेऽपि "सवर्णदीर्घत्वेन सिद्धम् न सिध्यति, अवग्रहे दोषः स्यात्" इत्युक्तं विरुध्येत, पदकाराणां लक्षणानुवर्त्यत्वे एव तत्सङ्गतेरिति वाच्यम्, सहेतुकोक्तभाष्यविरोधेनास्यैकदेश्युक्तत्वात्, 'अनूपो गोमान्' इत्यादौ ऋग्वेदिनामवग्रहादर्शनाच्च। किञ्च, पदानां सत्यत्वे पदकारकर्तृकलक्षणानुरोध एव न विरुध्येत किन्तु तेषां स्वतः सिद्धत्वात् 'यतः पदानि कुर्वन्त्यतः पदकाराः' इति समाख्याऽपि विरोधमासादयेत्। ननु तेषामसत्यत्वे तदर्थाभावेन 'धव-खदिर-पलाशाः'— इत्यादौ बहुवचनं न स्यादिति चेत्, न, 'दाराः' इतिवत् शब्दशक्तिमहिम्ना द्वन्द्वस्यापि बहुत्वविशिष्टे शक्तिस्वीकारात्। एवम् 'ब्राह्मणा भोज्यन्ताम्' इत्यादौ पदार्थव्यतिरेकेण वाक्यार्थाभावेऽपि यथा प्रत्येकम् 'भुजि' क्रिया परिसमाप्यते एवं द्वन्द्वावयवेष्वपि प्रत्येकं तत्सम्भवः' इति कुञ्जिका। ननु पदानामसत्यत्वे 'पदप्रकृतिः संहिता' इति निरुक्तिविरोधः, तथाहि— पदानि प्रकृतिर्यस्याः सा संहिता। संहन्यमानि पदान्येव संहितेत्यत

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आह—*षष्ठीसमास इति—यतः संहिताऽतः पदानि क्रियन्तेऽतः पदानां या प्रकृतिः सैव संहितेति निर्वचनमेव ज्यायः, पदविभागस्याधुनिकत्वेन संहितयैव पाठस्यानादित्वात् । *तत्रैवेति—"आशितः कर्ता" इति सूत्रे भाष्ये एवेत्यर्थः । वस्तुतस्तु पदानि प्रकृतिर्यस्या इति निर्वचनस्याप्यध्यस्तपदत्वमादायोपपत्तिरिति न दोषः । अश्वकर्णः=ओषधिविशेषः । ननु पदानामसत्यत्वे यौगिकत्वादिना पदविभागानुपपत्तिरत आह—*कल्पनैवेति । *बुद्धे च तत्रेति—विशिष्टार्थे ज्ञाते चेत्यर्थः । *अत एवेति—पदानामसत्यत्वादेवेत्यर्थः । *तदुक्तमिति—हरिणेति शेषः । शब्दानां परिज्ञाने शास्त्रमुपाय ज्ञातेषु च तेषु प्रयोजनसम्पत्तेरनुपयोग इति तस्य परित्यागः । कश्चित्पाणिनिविरचितेन लक्षणशास्त्रेण शब्दानधिगच्छति, कश्चिदन्येनेति न नियमस्तदाह—*उपायानामिति ।

सू०—ननु पदानामसत्यत्वे प्रतिनिध्युच्छेदः । तथा हि—"व्रीहिभिर्यजेत" इत्यादौ यागेन सकलद्रव्याक्षेपे व्रीहिश्रुतिर्नियमार्था—व्रीहिभिरेव नान्यैरिति । तत्र व्रीह्यभावे नित्यकर्मणः प्रारब्धकाम्यस्य च लोपो मा भूदिति प्रतिनिधिरुपादीयते । तत्र व्रीहित्वस्य शक्त्युपलक्षणत्वात्प्रतिनिधेरपि श्रौतत्वमित्यग्रे निरूपयिष्यामः ।

*पदादोनामसत्यत्वे दूषणोपन्यासपूर्वकं तन्निराकरणम्*

तत्र प्रतिनिध्युपादानेऽपि तद्वाक्याखण्डार्थस्याननुष्ठानित्यादेर्विलयः, नीवारकरणकक्रियाया अन्यत्वात् । एवं च 'क्रिया न प्रतिनिधीयते द्रव्यं तु प्रतिनिधीयते एव' इति न्यायोच्छेदः । किञ्च, 'वनात्पिक आनीयताम्' इत्युक्ते 'कः पिकः' ! इति—प्रश्नानुपपत्तिः । अपि च—"श्वेतं छागमालभेत" इत्यादौ क्रियायाश्छागद्रव्येण श्रौतः सम्बन्धः, द्वितीया श्रुत्या साक्षात्प्रापितत्वात् ।

श्वेतगुणस्य तु तत्सामानाधिकरण्याद्वाक्यीयः, निर्गुणद्रव्यस्य निरधिकरणगुणस्य चाभावात्, तस्य च्छागेन सम्बन्धपूर्वकमेव क्रियया सम्बन्धात् । तत्र श्रुतिप्रापितद्रव्याद् वाक्यप्राप्तगुणस्य दुर्बलत्वात् । श्वेतच्छागाभावेऽन्यवर्णश्छाग आलभ्यते न तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्वेतगुणयुक्तो मेषः, श्रुतिबाधाऽऽपत्तेरिति सिद्धान्तः। अखण्डार्थत्वे सर्वस्यैकरूपत्वात्केन कस्य बाधः। अपि च–पदार्थनिबन्ध-वाक्यीयसकलमीमांसान्यायासिद्धिरिति चेत्, न, अखण्डादेव वाक्यात्तदर्थाच्च, कल्पनया शास्त्रे पदपदार्थापोद्धारेण तमादाय सकलेष्टसिद्धेः। एवं च कल्पितपदपदार्थाश्रयैर्मीमांसान्यायैस्ता-दृशाखण्डार्थबोधनम्।

किञ्च, पदैः पदार्थबोधे 'हरेऽव' 'दध्यानय' इत्यादौ संहितया पदस्वरूपनाशादर्थबोधानापत्तिः।

किञ्च, राजपुरुषादौ पृथगुपस्थित्यपृथगुपस्थिती विरुद्धे आपद्येताम्; पदानां पृथगुपस्थापकत्वस्वभावत्वात्, वृत्तेस्तद्वि-परीतत्वात्। वृत्तौ जहत्स्वार्थत्वादिविकल्पोऽपि — वाक्यादेव वृत्तिनिष्पत्तिरिति मन्यमानानबुधान्प्रति कल्पनैव। एवमुत्तरप-दार्थप्राधान्याद्यपि। 'श्वेतो धावति' इत्यादावखण्डमेव वाक्यं तन्त्रेणोभयार्थबोधकम्। एवं च सकलशास्त्रव्यवहारस्तदनुसारि-लोकव्यवहारश्चापोद्धाराश्रयेणैव बोध्यः।

(रत्न०)—पदानामसत्यत्वे = वाक्यस्याखण्डत्वे। ❀प्रतिनिध्युच्छेद इति — तत्तत्क्रियोपकारकमुख्यद्रव्यालाभे तत्तत्क्रियोपकारकं मुख्यसदृशं यद् द्रव्यान्तरमुपादीयते तदेव प्रतिनिधिरित्युच्यते। पदानामसत्यत्वे तद्बोध्यार्थस्याभावात्तदर्थाज्ञाने प्रतिनिधेरसंभव इति भावः। "व्रीहि-भिर्यजेत" इति — 'व्रीहिमता यागेनेष्टं भावयेत्' इत्यर्थः। ❀यागेनेति — मन्त्रपूर्वकं देवोद्देशेन द्रव्यत्यागो हि यागः। ❀लोपो मा भूदिति — नित्यकर्मणोऽननुष्ठाने प्रत्यवायश्रवणादशक्याङ्गपरित्यागेनाप्यनुष्ठेयत्वात्, प्रारब्धस्य काम्यकर्मणोऽपि "प्रारब्धं काम्यमपि नित्यायते" इति न्यायात् "दोषश्चासमाप्तौ स्यात्" इति कात्यायनसूत्राच्चावश्यक्रियमाणत्वात् प्रति-निधिद्वारा सम्पाद्यते। ननु प्रतिनिध्युपादाने श्रौतविरोधोऽत आह — ❀तत्र व्रीहित्वस्येति — अत्र व्रीहित्वं यागोपकारकशक्त्युपलक्षणमिति "व्रीहिभिर्यजेत" इति श्रुत्या यागोपकारकशक्तिविशिष्टस्य यागाङ्गत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोध्यते इति नास्ति श्रौतत्वबाध इति भावः । अत एव "केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम्" (वाक्यप० कां० ३का० ३) इति हर्य्युक्तं संगच्छते। 'जातिः पदार्थः' इति मते व्रीहित्वस्यैव व्यक्तिद्वारा क्रियासाधनतया व्रीहित्व-सहचरितशक्तेश्च नीवारेऽपि सत्त्वात्तस्यापि ग्रहणम् । शक्तिश्चात्रादृष्टोपकारकत्वरूपैव । अग्रे = विधिवादे । श्रौतत्वम् = श्रुत्या तत्तद्रूपेण बोधितत्वम् । *अखण्डार्थस्येति— अखण्डत्वेनाविभक्तावयवकस्य व्रीहिकरणकयागस्य वाक्यार्थतया तस्य च नीवारकरणकयागतोऽत्यन्तभिन्नतया तत्करणेऽपि तत्कर्मविलोपः स्यादेवेति भावः । कर्मणो विलोपश्च – तत्कर्मणोऽश्रौतत्वेनेष्टापूर्वानुत्पत्त्या अपूर्वसाधनत्वाभावरूपः । *नित्यादेरिति – आदिना - प्रारब्धस्य काम्यकर्मणः संग्रहः । *एवञ्चेति — प्रतिनिध्युच्छेदे चेत्यर्थः । *क्रिया न प्रतिनिधीयते इति — वाक्यार्थभूतायाः क्रियायाः प्रधानत्वेन तत्त्यागे प्रकृतकर्मत्याग एव स्यात् । वाक्यार्थावयवस्य व्रीहेः पदार्थत्वे तु तस्याप्रधानत्वेन नीवारस्य प्रतिनिधित्वं संगच्छत इति भावः । अत एवोक्तं हरिणा—

"अपूर्वस्य विधेयत्वात्प्राधान्यमवसीयते ।
विहितस्य पदार्थत्वाच्छेषभावः प्रतीयते ॥" इति ।
(वाक्यप० कां० ३ का० ६९)

अस्यार्थस्तु — अपूर्वस्य विधेयत्वात् तद्बोधकतया क्रियायाः प्राधान्यम् । विहितस्य = सिद्धस्य द्रव्यस्य तु परार्थत्वाद् गुणत्वम् इति । दोषान्तरमाह — *किञ्चेति । *प्रश्नानुपपत्तिरिति — 'वनात्पिक आनीयताम्' इत्यखण्डस्य वाक्यस्याखण्डार्थत्वेन पृथक् पिकपदस्य तदर्थस्य चाज्ञानात्, पिकमात्रविषयकः 'कः पिकः' ? इति प्रश्नानुपपत्तिरित्यर्थः । पदपदार्थसत्त्वे तु 'वनात्' 'आनीयताम्' इति पदद्वयस्यार्थो ज्ञायते । पिकपदस्य तु अर्थो न ज्ञायते इति तद्विषयकः प्रश्नः सम्भवतीति भावः । *श्रौतः सम्बन्ध इति — छागरूपद्रव्यस्यालम्भनरूपक्रियायाश्च क्रियाकारकभावः सम्बन्धः । श्रूयते या सा श्रुतिर्द्वितीयारूपः शब्दस्तेन बोधितत्वात् श्रौतत्वं तत्सम्बन्धस्य, 'श्वेतं छागम्' इति सामानाधिकरण्येन निर्देशात् यत्र छागपदार्थस्यान्वयस्तत्रैव श्वेतपदार्थस्याप्यन्वयो भवेदिति वाक्यार्थपर्यालोचनया लभ्यो वाक्यीयः सम्बन्धो विलम्बोपस्थितिकत्वाद् दुर्बलः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदुक्तं हरिणा —

"क्रियाया योऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः ।
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ॥" इति ।
( वाक्यप० कां० ३ का० ७५ )

कारकस्य क्रियया यः सम्बन्धः स विभक्तिरूपश्रुतिप्रापितः श्रौतः । आश्रयाश्रयिणोर्द्रव्यगुणयोर्यः सम्बन्धः स वाक्याल्लभ्यते । तथा च — छागस्य श्वेतगुणस्य च सम्बन्धो दुर्बल एव । 'अखण्डो वाक्यार्थः' इति मते तु—अखण्डार्थस्योपस्थितौ क्रियाकारकयोरपि सम्बन्धस्य श्रौतत्वासम्भवः । श्रौतवाक्यीयसम्बन्धयोर्भेदोऽपि हरिणा दर्शितः—

"अप्राप्तो यस्तु शुक्लादिः सन्निधानेन गम्यते ।
स यत्र प्रापितो वाक्ये श्रुतिधर्मविलक्षणः ॥" इति ।
(वाक्यप० कां० ३ का० ७६ )

क्रियया द्रव्यस्य साक्षात् सम्बन्धः । शुक्लादिगुणस्य सन्निधानरूपयत्नेनावगतः वाक्यीयः सम्बन्धः । स च द्वितीयादिरूपश्रुतिबोधितधर्माद्विलक्षणः । ननु 'जातिः पदार्थः' इति मते जातिक्रिययोरेव साक्षात् सम्बन्धः, द्रव्यगुणयोस्तु आक्षेपादियत्नान्तरेण लाभात्तुल्यतया गुणान्तरस्य ग्रहणं स्यान्नतु द्रव्यान्तरस्य इत्यत्र विनिगमकाभावेन श्वेतच्छागालाभे गुणान्तरविशिष्टस्य ग्रहणवच्छागस्यालाभे श्वेतगुणविशिष्टस्य पश्वन्तरस्य ग्रहणं स्यादिति चेत्, न, क्रियायां द्रव्यस्यैव शक्तत्वात्, तत्रैव जातेश्च साक्षात्सम्बन्धात्, गुणानां द्रव्योत्तरकालभावित्वेन विप्रकृष्टत्वाच्च । तदुक्तं हरिणा—

"साक्षाद् द्रव्यं क्रियायोगि गुणस्तस्माद् विकल्पते ॥" इति ।
( वाक्यप० कां० ३ का० ६९ )

गुणद्रव्ययोः सम्बन्धः पाश्चात्य इत्याह—❀निर्गुणद्रव्यस्येति । तस्य = गुणस्य । ❀छागेनेति—छागरूपद्रव्येण सह पूर्वं क्रियायाः सम्बन्धस्ततो निर्गुणद्रव्यस्य, द्रव्यरूपाश्रयरहितस्य गुणस्य चाभावान्नान्तरीयको गुणद्वारा क्रियया सम्बन्ध इति भावः । ❀द्रव्यादिति—द्रव्यसम्बन्धादित्यर्थः । ❀गुणस्येति—गुणसम्बन्धस्येत्यर्थः । ❀अन्यवर्णश्छाग इति–वाक्यप्राप्तगुणसम्बन्धस्याप्राधान्याद्बाधेनेति भावः । ❀श्रुतिबाधेति–श्रुतिबोधितसम्बन्धबाधाऽऽपत्तेरित्यर्थः । तत्सम्बन्धस्य बलवत्त्वात्तद्बा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धोऽनुचित इति भावः । *सर्वस्येति– द्रव्यसम्बन्धस्य गुणसम्बन्धस्य च तुल्यत्वादित्यर्थः । पृथगुपस्थित्यभावाच्च बाध्यबाधकभावासम्भव इत्यपि बोध्यम् । अयम्भावः— वाक्यवाक्यार्थयोरखण्डत्वे श्रौतवाक्यीयसम्बन्धयोर्वैषम्यस्य निर्णेतुमशक्यतया वाक्यशक्तिबोधितत्वेनोभयोरपि श्रौतत्वान्न कस्यापि बाधः स्यादिति । वाक्यवाक्यार्थयोरखण्डत्वे दोषमाशङ्कते — *अपि चेति । *पदार्थनिबन्धनेति — पदपदार्थाद्यस्वीकारे "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" (मीमा०द०३।३।१४) इति सूत्रोक्तबलवत्त्वाबलवत्त्वमादाय श्रुतितात्पर्य्यनिर्णयाय प्रवृत्तसकलमीमांसान्यायासिद्धिरिति भावः। एवञ्च ये ये पदार्थनिबन्धना भेदास्ते ते पदपदार्थयोरसत्यत्वे नैव व्यवस्थां लभेरन्निति तत्त्वम् । *अखण्डादेवेति–अखण्डादेव वाक्यादित्यस्य 'अपोद्धारेण' इत्यत्रान्वयः, तथाच अखण्डादेव वाक्यात्तदर्थाच्च कल्पनया पदपदार्थौ पृथक्कृत्य तम् = पदपदार्थभेदम् , आदाय सकलेष्टसिद्धेरित्यर्थः । तदुक्तं हरिणा —

"अविभक्तेऽपि वाक्यार्थे शक्तिभेदादपोद्धृते ।
वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥" इति ।
( वाक्यप० कां० २ का० ९० )

अविभक्तेऽपि = अखण्डेऽपि। वाक्यार्थे शक्तिभेदात् = नानाशक्तिवशात् । अपोद्धृते = कल्पनाबुद्ध्या पृथक्कृते सति । वाक्यान्तरविभागेन=अवान्तरवाक्यार्थोपजननद्वारा । यथोक्तं पदपदार्थयोः सत्त्वं न विरुध्यत इत्यर्थः । एतेन — पदपदार्थयोरसत्त्वे 'गौर्वाहीकः' इत्यादौ गौणमुख्यविभागानुपपत्तिरित्यपास्तम् । अखण्डवाक्यवाक्यार्थयोरस्वीकारे दोषमाह — *किञ्चेति। *अर्थबोधानापत्तिरिति–पदस्वरूपाप्रतिपत्त्याऽर्थबोधानापत्तिरित्यर्थः । वाक्यस्याखण्डत्वस्वीकारे दोषान्तरमाह — *किञ्चेति । *विरुद्धे इति–पदशक्तिस्वभावात्पृथगुपस्थितिः, वृत्तिशक्तिस्वभावाच्चापृथगुपस्थितिरिति तयोर्विरोधः स्यादिति भावः। नन्वखण्डवाक्यस्यैवाखण्डार्थबोधकत्वे जहत्स्वार्थत्वादिविकल्पानुपपत्तिरत आह — *वृत्ताविति । *वाक्यादेवेति — "जनि कर्तुः" ( पा० सू० १।४।३ ) इति अपादानत्वम् । वाक्यमेव वृत्तिरूपेण परिणमत इत्यर्थः । *अबुधानिति — वाक्यस्य वृत्तिरूपेण परिणामाभावेऽपि तद्विषयकज्ञानवत्त्वेन अबुधत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

❀एवमिति — कल्पनयैवेत्यर्थः । नन्वखण्डत्वे 'श्वेतो धावति' इत्यत्र 'श्वा इतो धावति' इति अवग्रहस्य वक्तुमशक्यत्वेन 'एतद्देशावधिकं वर्तमानकालिकं श्वकर्तृकं धावनम्' इति बोधो न स्यात्, केवलः 'श्वेतगुणविशिष्टाश्वकर्तृकं वर्तमानकालिकं धावनम्' इत्येव बोधः स्यादत आह — ❀श्वेत इति । ❀तन्त्रेणेति — अनेकार्थबोधनाभिप्रायेण सकृदुच्चारणं तन्त्रम् । ❀उभयार्थकमिति — अयम्भावः — यथैक एव ध्वनिरुपाधिभेदात् षड्जादिस्वरभेदवानुपजायते तथैक एव श्वेतशब्दोऽवग्रहादिकारणवशाद् भिन्नार्थविषयकं बोधं जनयतीति । ❀एवञ्चेति – पदादीनामसत्यत्वे चेत्यर्थः । ❀अपोद्धाराश्रयेणेति – कल्पनयेत्यर्थः ।

मू०—प्रकृतिप्रत्ययविभागोऽप्येवमेव । तदुक्तम् —

"धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते ।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः ॥
प्राग् विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ।" इति ।
( वाक्यप० कां० २ कारि० २१२–२१३ )

अत एव प्रकृतिप्रत्ययोभयार्थं क्वचिदन्यतर एवाभिधत्ते । यथा— 'इयान्' इति 'अहन्' इति च । तथा – क्वचित्प्रत्ययद्वयेन कर्त्राद्यर्थबोधो यथा — 'पचति' इति । क्वचिदेकेनैव यथा – 'अत्ति' इति ।

किञ्च, ये कस्मिंश्चिद् व्याकरणे प्रत्ययार्थत्वेनोक्तास्तेऽन्यत्र प्रकृत्यर्थत्वेनोक्ताः । तस्मात् पदपदार्थाद्यसत्यमेव । शास्त्रमप्यसत्यव्युत्पादकमेव । तदुक्तम् —

"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।"
( वाक्यप० कां० २ कारि० २३५ )

"उपायाः शिक्ष्यमाणानां बालानामुपलालनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥" इति ।
( वाक्यप० कां० २ कारि० २४० )

अनादिमिथ्याभूतशास्त्राभ्यासानुसारेणैव शब्दाः शास्त्रज्ञलोकेनार्थप्रत्यायकतया गृह्यन्ते केनचित् । यथा — घटादिकं परिच्छिन्नं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्ट्वा सर्वोऽपि विश्वप्रपञ्चः परिच्छिन्नत्वेन गृह्यते । भावानामुत्पादं दृष्ट्वा च शाश्वतमपि ब्रह्मोत्पादवदिति मन्यते लोकेन तद्वत् । तदुक्तम्—

"घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयते ।
समारम्भाच्च भावानामादिमद्ब्रह्म शाश्वतम् ॥" इति ।
( वाक्यप० कां० २ कारि० २३९ )

लोकः=विश्वप्रपञ्चः । समारम्भः = उत्पत्तिः ।

किञ्च, 'त्वं ग्राममश्वः', 'अश्वो गच्छति', 'अजापयः शत्रून्', 'अजापयः पिब' इत्यादौ नामाख्यातसारूप्ये वाक्यार्थादेव पश्चात् पदपदार्थनिर्णय इत्यखण्डमेव वाक्यं बोधकमखण्डार्थस्येत्युचितम् । तदुक्तम्—

"यथैवानर्थकैर्वर्णैर्विशिष्टार्थोऽभिधीयते ।
पदैरनर्थकैरेवं विशिष्टार्थोऽभिधीयते ॥"
( वाक्यप० कां० २ कारि० ४१६ )

"न हि किञ्चित्पदं नाम रूपेण नियतं क्वचित् ।
पदानामर्थरूपं च वाक्यार्थादेव जायते ॥" इति ।
( वाक्यप० कां० ३ कारि० ७६ )

वाक्येऽखण्डत्वं च—अपृथगुपस्थितिजनकत्वम् । अपृथगुपस्थितिविषयत्वं चार्थेऽखण्डत्वम् । पदानां केवलानां पृथगुपस्थापकत्वं वृत्तिघटकानामपृथगुपस्थापकत्वमिति तु शास्त्रकृत्कल्पनैव । यदपि केवलं पदं सदित्यादिप्रयुज्यते तदप्यन्ततोऽस्तिक्रियाघटितार्थबोधकमिति तदपि वाक्यमेव, साधनस्य साध्यक्रियाऽऽकाङ्क्षत्वात्, साध्यक्रियायाश्च साधनाऽऽकाङ्क्षत्वात् ।

( रत्न० )—एवमेव = काल्पनिक एव । ननु प्रकृत्यादीनामसत्यत्वे "हयवरट्" (माहेश्व० सू० ५) सूत्रे भाष्ये "किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः ? । अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्" इति भाष्यविरोध इति चेत्, न, काल्पनि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्थवत्त्वमादायैव तदुपपत्तेः । विशुद्धानाम् = प्रत्ययरहितानाम् । ॐलौकिक इति—एतेन काल्पनिकोऽस्तीति सूचितम् । केवलानाम् = प्रकृतिरहितानाम् । अलौकिकः = शास्त्रकृत्कल्पितः । तदन्तस्य = कृत्तद्धितान्तस्य । तथैव = प्रकृतिप्रत्ययादिवत् । अत एव = प्रकृतिप्रत्ययादिविभागस्य तत्तदर्थस्य च कल्पितत्वादेव । ॐअन्यतर एवेति — उभयार्थवाचकत्वकल्पनाया अनुभवानुरोधेन तत्तन्मात्रेऽपि सम्भवादिति भावः । ॐपचतीति—अत्र 'शपा' 'तिपा' च कर्त्रर्थबोधः । ॐक्विच्च य इति—सत्यत्वे तु तादृशभेदो दुरुपपाद एवेति भावः । ॐअसत्यमेवेति—सत्यत्वे हि 'अधिहरि' इत्यत्र 'अधिः' वाक्येऽपि अधिकरणरूपार्थं बोधयेत् । 'प्रज्ञुः' इत्यादौ पूर्वोत्तरपदयोरर्थाप्रतीतिश्च, 'चित्रगुः' इत्यादिबहुव्रीहौ देवदत्तादिरूपान्यपदार्थस्य बोधानापत्तिश्च । नन्वसत्यत्वे प्रकृतिप्रत्ययाद्यर्थबोधकशास्त्राप्रामाण्यापत्तिरत आह — ॐशास्त्रमपीति । प्रक्रियाभेदैः = नानोपायैः । नन्वविद्यावर्णनमनुपयुक्तमत आह — ॐउपाया इति — उपायाः = शास्त्राणि । उपलालनाः = प्रलोभनमात्रम् । वाक्यपदीये तु—

"उपायाः शिक्षमाणानां बालानामपलापनाः ।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" ।। इति पाठः ।

अयम्भावः—उपायाः = शास्त्राणि । जिज्ञासूनामबुधानामपलापनाः = प्रतारणा एव बोद्धव्याः । असत्यस्वरूपे शास्त्रप्रक्रियामात्रेऽर्थे स्थित्वा अविद्यामुत्सृज्य सत्यं विद्यास्वरूपं ब्रह्म समीहते प्राप्नोतीति यावत् । अविद्यावर्णनञ्च-तन्निवर्तनद्वारा विद्याप्राप्त्यर्थमेवेतिभावः । अत्रेदं बोध्यम्—यद्वशादद्वये नित्ये ब्रह्मणि तत्त्वं तिरोधत्ते भेदश्च प्रतीयते, साऽनादिजीवात्मशक्तिभूता 'अविद्या' इत्युच्यते । सर्वोऽपि व्यवहारस्तत्कृत एव । ननु कथमविद्यातः सर्वथा भिन्नविद्योत्पत्तिरिति चेदुच्यते—यथा हि — विलक्षणं दण्डादिकारणं घटादिकमुत्पादयति तथाऽविद्यापि विद्योत्पत्तिं प्रयोजयति, सुखदुःखादिवैषम्यभोगतो वैराग्यसम्पादनद्वारा विद्योपकारकत्वादिति । ॐअनादीति — अनादिर्मिथ्याभूतो यः शास्त्राभ्यासस्तदनुसारेणेत्यर्थः । शब्दः = स्फोटात्मकः । ॐकेनचिदिति — अस्य 'लोकेन' पूर्वोक्तेनान्वयः । ॐपरिच्छिन्नत्वेनेति — तत्तत्परिच्छेदेनैव प्रपञ्चप्रतीतेः । ॐभावानामिति—भावानाम् = पदार्थानाम् । समा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रम्भात् = उत्पत्तेः । शाश्वतं ब्रह्म आदिमत् = उत्पत्तिशालि अवसीयते । भावानामुत्पत्तिं दृष्ट्वा ब्रह्म 'आदिमत्' इति व्यवह्रियते इति यावत् । पदानां सत्यत्वे दोषान्तरमप्याह — *किञ्च त्वमिति — 'त्वत्कर्तृकं ग्रामकर्मकं भूतकालिकं गमनम्' इति बोधः । 'अश्वो गच्छति' इत्यनेन 'अश्वकर्तृकं गमनम्' इति बोधः । उभयत्राश्वशब्दस्य सत्त्वेऽपि बोधे वैलक्षण्यमखण्डवाक्यार्थकृतमेव । एवम् — 'अजापयः शत्रून्' इत्यनेन 'त्वत्कर्तृकः शत्रुकर्मको भूतानद्यतनकालिकः क्षयः जयो वा' इति 'अजापयः पिब' इत्यनेन 'अजासम्बन्धि पय कर्मकं त्वत्कर्तृकं प्रवर्त्तनाविषयः पानम्, इति बोधयोर्वैषम्यमप्येकानुपूर्वीकपदसत्वेऽप्यखण्डवाक्यार्थप्रयोज्यमेव । अत्रोभयत्रापि 'अश्वः' इति, 'अजापयः' इति सुबन्ततिङन्तयोः साम्यम् । 'श्वि'धातोर्लुङि, 'सिपि' "जृस्तम्भु" ( पा० सू० ३।१।५८ ) इत्यङि "श्वयतेरः" ( पा० सू० ७।४।१८ ) इत्यकारादेशे, 'अश्वः' इति रूपम् । 'अश्वः' इति स्वन्तोऽपि । 'जि' धातोः 'जै' धातोर्वा ण्यन्ताल्लङि "क्रीङ्जीनां णौ" ( पा० सू० ६।१।४८ ) इत्यात्वे, "अर्तिह्री" ( पा०सू० ७।३।३६ ) इति पुकि, 'अजापयः' इति । अजापयशब्दात्सोर्लुक्यपि 'अजापयः' इति । *इत्यादाविति — आदिना — 'घटो भवति' 'भवति भिक्षां देहि' इत्यादीनां ग्रहणम् । *नामाख्यातेति — नाम चाख्यातञ्च तयोः सारूप्यं यत्र वाक्ये तस्मिन्नित्यर्थः । *वाक्यार्थादेवेति — वाक्यार्थबोधानन्तरमित्यर्थः । अस्य 'निर्णयः' इत्यत्रान्वयः । बोधात्प्राक् तु न पदार्थनिर्णयः, सरूपतया सन्देहेन क्रियाकारकान्यतरार्थत्वेनानिश्चयादिति भावः । * तदुक्तमिति — हरिणेति शेषः । स्फोटरूपमखण्डमेव वाक्यं निराकाङ्क्षं वाचकमभ्युपगन्तव्यमिति दृष्टान्तद्वारेणाह — *यथैवेति — "यथा त्वन्मते—वर्णैरनर्थकैरभिव्यक्तो विशिष्टार्थः = विशिष्टोऽर्थो यस्य सः पदरूपः = स्फोटात्मा वाचकोऽभिधीयते । एवं पदैरनर्थकैरभिव्यक्त एव विशिष्टार्थः = विशिष्टार्थो यस्य स स्फोटात्मा ( वाक्यरूपः ) वाचकोऽभिधीयत इति" इति हेलाराजः । यथाऽनर्थकैर्वर्णैरभिव्यक्तः पदस्फोटो वाचकः, तथाऽनर्थकैः पदैरभिव्यक्तो वाक्यस्फोटो वाचक इति यावत् । अत्र 'विशिष्टार्थः' इत्येव पाठ उभयत्र, वाक्यपदीये — 'विशिष्टार्थः पदरूपः, विशिष्टार्थः स्फोटात्मा' इति पुण्यराजव्याख्यानात्, तथैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाठलाभाच्च । *नहि किञ्चिदिति—किञ्चित्पदं स्वरूपेण न नियतं नाम किन्तु वाक्यार्थादेव पदार्थविभागो यथा—'ग्राममश्वः' 'अश्वो गच्छति' इत्यादौ । *केवलानामिति—वृत्त्यघटकानामित्यर्थः । ननु वाक्यार्थस्याखण्डत्वे व्यपेक्षैकार्थीभावात्मकभेदो न स्यादत आह—*शास्त्रकृत्कल्पनैवेति । ननु एकपदेनापि बोधदर्शनादिदमसङ्गतमत आह—*यदपीति । *तदिति—'तद्' इत्यस्य वाक्यैकदेशन्यायेन प्रयोगात् तदस्तीत्यादिरर्थं इति तदित्यस्यापि वाक्यत्वमेव । 'सद्' इति पाठे यत्राप्येकमेव पदं निराकाङ्क्षं कृदन्तं सदित्यादि प्रयुज्यते तत्रापि 'सद्भूत्', 'अस्ति', नास्ति वेत्यादिक्रियासम्बन्धं विना न परिसमाप्तार्थं भवतीति व्याख्येयम् । एवञ्च वाक्यार्थव्यतिरेकेण पदार्थो नास्तीतिभावः । *साधनस्येति—यावन्तः सम्बन्धास्ते क्रियानिमित्ता एव । तथा हि—'उपगोरपत्यम्' इत्यत्रोत्पत्तिक्रियानिमित्त एवापत्यापत्यवद्भावसम्बन्धः । 'राज्ञः पुरुषः' इत्यत्र भरणक्रियानिमित्तः स्वस्वामिभावसंबन्धः । 'भूतले घटः' इत्यत्र स्थितिक्रियानिमित्तको भूतलघटयोः 'आधाराधेयभावः' इति साधनस्य साध्यक्रियाऽऽकाङ्क्षत्वम्, साध्यक्रियायाश्च साधनाकाङ्क्षत्वमिति सर्वत्र साध्यसाधनभावं नियतमेव केवलमाकाङ्क्षादिकारणवशादितरपदार्थसन्निधाने नियत एव भासते ।

मू०—एवमर्थेऽपि ये वादिनां नानापक्षास्तेऽपि तत्तच्छास्त्रवासनावशात्कल्पिता एव । यथा—अभिहितान्वयः, अन्विताभिधानमिति । संसर्गो वाक्यार्थः, संसृष्टाः पदार्थाः स इति । जातिः पदार्थो व्यक्तिर्वेत्यादि । अत एव 'घटः' इति प्रयुक्ते वैशेषिकोऽतिरिक्तमवयविनं बुध्यते, सांख्यो गुणसमूहम्, बौद्धादिः परमाणुसमूहम् ।

ऋषीणां मतभेदनिरासः ।

यद्यपि ऋषीणां दर्शनं तत्त्वविषयं भवति, तथापि तत्त्वभूतेन वस्तुना व्यवहारासम्भवाद्व्यवहारकाले तेऽप्यदृष्टतत्त्वसदृशा नानाप्रकारैर्व्यवहरन्तीति न तद्वचसाऽपि पदपदार्थसत्यत्वं मन्तव्यम् ।

अत्र वाक्यार्थस्यापेक्षिकं सत्यत्वं द्रष्टव्यम्, सर्वव्यवहारस्यासत्यविषयत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)—*एवमिति — प्रकृत्यादिवदित्यर्थः । अर्थेऽपि = अर्थ-विषयेऽपि । *वासनावशादिति — वासनावैलक्षण्यमेव ज्ञानवैलक्षण्ये कारणमिति भावः। ननु वासनावैलक्षण्याज्ज्ञानवैलक्षण्यं ज्ञानवैलक्षण्याच्च वासनावैलक्षण्यमिति परस्पराश्रयत्वमिति चेत्, न, संसारस्यानादित्वेन वासनाया अपि अनादित्वात्। यत्तु 'वासनाऽभावेऽपि अपूर्वपदार्थ-सन्निधाने ज्ञानवैचित्र्यदर्शनान्नान्योऽन्याश्रयः' इति कुञ्जिकाकारास्तन्न, संसारस्यानादितया वासनाभावाभावयोः शपथैकनिर्णेयत्वात्। *अभि-हितान्वय इति — अयम्भावः — पदानामप्यर्थवत्त्वे पदार्थमात्रनिरूपितैव शक्तिस्तेषु नत्वन्वयांशनिरूपिता, एकपदार्थनिरूपितसंबन्धानामानन्त्येन तत्र शक्तौ गौरवात्, आकाङ्क्षाऽऽदिलभ्यत्वेन 'अनन्यलभ्यो हि शब्दार्थः', इति न्यायाच्च। तथा च — पदात् प्रथमं पदार्थमात्रोपस्थितिः पश्चादा-काङ्क्षाऽऽदिवशादन्वयांशरूपवाक्यार्थस्योपस्थितिः। एवञ्च तात्पर्य्यवशाद-शक्य एवान्वयांशरूपो वाक्यार्थः शाब्दबोधे प्रतीयते। तदुक्तं भाष्ये— "यदाधिक्यं स वाक्यार्थः" इति, न चाशक्यार्थस्य शाब्दविषयत्वेऽ-तिप्रसङ्गः, स्वरूपसतः शक्यार्थान्वयस्य नियामकत्वात्। एवञ्च 'आका-ङ्क्षाऽऽदिविशिष्टपदसमूहो वाक्यम्' 'वाक्यार्थश्च संसर्गः' इति मीमांसकाः। अत्र केचित् — 'संसर्गो वाक्यार्थः' इत्ययुक्तम्, पदानामाशुविनाशित्वेन समुदायासम्भवात्। न च स्मृतिविषयतया समुदायसम्भव इति वाच्यम्, एवमपि सामान्येऽवस्थितानां पदानां विशेषेऽवस्थानस्य दुरुपपादत्वात्, अशक्यस्याप्युपस्थितौ शब्दार्थसंबन्धस्यानित्यताऽऽपत्तेश्च। वाक्यार्थस्य शाब्दविषयत्वाभावे पदार्थोऽपि शाब्दाविषय एव स्यात्, वर्णानामाशु-विनाशित्वादित्याहुः। प्रभाकरमतमाह — *अन्विताभिधानमिति — अयम्भावः — प्रयोज्यप्रयोजकवृद्धव्यवहारेणान्वयांशविशिष्ट एव शक्ति-ग्रहादन्वयांशोऽपि पदशक्य एव। तथा च — 'इतरान्वितो घटो घटपद-शक्यः' इत्याकारकमेव शक्तिज्ञानं तन्मते। न चेतरान्वितस्य घटस्य वाक्यप्रतिपाद्यतया शाब्दबोधात्प्रागन्वयांशस्यानुपस्थितत्वाच्छक्तिग्रहास-म्भव इति वाच्यम्, आनयनादिविशेषरूपेण पदार्थान्तरघटितस्य घटादेः शाब्दबोधात्प्रागनुपस्थितावपीतरपदार्थत्वादिरूपसामान्यधर्मेणानयनाद्यन्वि-तघटादेः प्रागुपस्थितिसम्भवेन तत्रेतरपदार्थत्वादिसामान्यधर्मेणानयनाद्य-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्वितघटादौ शक्तिग्रहस्य सम्भवात्। तथात्वेऽपि विशेषान्तरसन्निधानाद्विशेषे विश्रान्त्या विशेषान्वयांशविषयकोऽपि बोधः स्यात्। आक्षिप्तपदान्तरविशिष्टपदान्येव वाक्यम्। शाब्दविषयत्वस्य शक्तिग्रहनियम्यतयाऽन्वयस्याशक्यत्वे शाब्दविषयता न स्यादिति तत्रापि शक्तिः। अशक्यस्य शाब्दविषयत्वेऽतिप्रसङ्गः। पदार्थत्वेनैव रूपेण विशेषपदार्थान्वये शक्तिग्रहात् "ननु पदार्थसामान्यान्विते एव शक्तिग्रहात् संसर्गविशेषोऽशक्य एव। अन्यथा 'घटमानय' इति वाक्यं श्रुत्वा 'पटमानय' इति वाक्यं श्रुतवतः 'तदेवेदं आनय पदम्' इति प्रत्यभिज्ञा न स्यात्पूर्ववाक्यस्य घटानयने शक्तस्य पटानयनेऽशक्ततयाऽर्थभेदेन शब्दभेदात्" इत्यपास्तम्। एतन्मतेऽन्यरूपेण शक्तिग्रहेऽन्यरूपेण भानेऽतिप्रसङ्गः, किञ्च, सम्बन्धविशेषबोधाय पदान्तरसन्निधानरूपाकाङ्क्षायाः कारणत्वकल्पनमावश्यकमित्यन्वयांशे शक्तिमस्वीकृत्यैवाकाङ्क्षाऽऽदित एव बोधसम्भवे तत्र शक्तिकल्पने गौरवमित्यतः सिद्धान्तभूतमभिहितान्वयवादिमतमाह—† ॐसंसर्ग इति।

---

† तदयं निर्गलितोऽर्थः—'अभिहितानां स्वस्वपदैरुपस्थापितानामर्थानामन्वयोऽभिहितान्वयः' इति भट्टमीमांसकाः। अत एवाभिहितान्वयवादिन एते। एतन्मते तत्प्रकारकतद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्प्रकारकतद्विशेष्यकशक्तिज्ञानस्य कारणत्वम्। तथा च संसर्गे प्रकारताया विशेष्यताया वाऽभावेन शक्तिज्ञानस्य अभावेऽपि न क्षतिः, आकाङ्क्षादिनैवान्वयबोधसम्भवात्। संसर्गविशेषबोधायाभिहितान्वयवादिनोऽप्याकाङ्क्षाज्ञानकारणत्वस्यावश्यकत्वात्। तथा च 'संसर्गो वाक्यार्थः' इति सम्यगेव। आकाङ्क्षादिमत्पदसमूहस्यैव वाक्यत्वादाकाङ्क्षाभास्यः संसर्ग इत्यपि व्यवहारस्तत्र।

अन्विताभिधानवादिनः प्रभाकरास्तु—अन्वितानां स्वार्थप्रतियोगिकपरार्थानुयोगिकसम्बन्धविशिष्टानामर्थानामभिधानमन्विताभिधानम्, इत्यन्विताभिधानवादिन एते। 'देवदत्त गामानय' इत्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादयमर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावरूपं सम्बन्धमवधार्य व्युत्पद्यते द्रष्टा। अनन्तर तेनैवोत्तमेन 'चैत्र अश्वमानय' 'देवदत्त गां नय' इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्धारे च यस्य पदस्य येनार्थेन सहान्वयव्यतिरेकावुपलभते तत्र तस्य शक्तिं निश्चिनोति।

तच्च शक्त्यवधारणमन्विते एव पदार्थे, पूर्वमन्वये एव वाक्यस्य शक्तिग्रहात्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्बन्धित्वेन लक्षणैवास्त्विति चेत्, न, तत्संबन्धस्य शब्दबोधानुपयोगित्वाल्लक्षणाया असम्भवात्, मुख्यार्थबाधादिकारणसत्त्वे एव लक्ष्यार्थ-

---

पदार्थमात्रे शक्तावुपजीव्यविरोधात्, व्यवहारेणान्वयविशिष्टज्ञानस्यैवोपस्थापनाच्च । न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः, व्यवहारेणैवाद्यव्युत्पत्तेः, प्रवृत्तिनिवृत्तिरूपस्य च व्यवहारस्य पदमात्रेण कर्त्तुमशक्यत्वात् । अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु शक्तिग्रहादन्विता एव पदशक्याः । एतन्मते 'तद्विषयकशाब्दबोधं प्रति तद्विषयकशक्तिज्ञानं कारणम्' इत्येव कार्य्यकारणभाव इति संसर्गविषयकबोधं प्रत्यपि शक्तिज्ञानस्य कारणत्वमपेक्षितम् । ननु तथापि संसर्गविशेषोऽशक्य एव पदार्थसामान्यान्वित एव, शक्तिग्रहात् । अन्यथा 'गामानय' इति पदं श्रुत्वा 'अश्वमानय' इति वाक्ये 'तदेवेदमानय पदम्' । इत्यादिप्रत्यभिज्ञा न स्यात्, पूर्वस्य गवान्वितानयनपदस्याश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन भेदादिति चेत्, न, पदार्थत्वेन सामान्येन विशेषाणामन्वये शक्तिग्रहात् । नहि निर्विशेषं सामान्यमित्याहुः । तथा चैतन्मतेऽपि सामान्यरूपेणैव संसर्गः पदशक्यो विशेषरूपेण तु पदाशक्यो वाक्यशक्य एव । अत्राभिहितान्वयवादिमतमेव ज्यायः – विधिवाक्यात्कार्य्यान्वितत्वेन बोधेऽपि कार्य्यांशत्यागवदन्वयांशत्यागस्याप्याकाङ्क्षादिलभ्यत्वेन 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायेनौचित्यात् । किञ्चान्वयविशेषस्य विशेषरूपेण भानायाकाङ्क्षादिकमवश्यं कारणं वाच्यम् । एवञ्च विशेषरूपेणाशक्य एव संसर्गस्तव मतेऽपि । किञ्च संसर्गस्यापि प्राक् पदेनोपस्थितावगृहीतग्राहित्वरूपं प्रामाण्यं शब्दस्य भज्येत, अन्वयव्यतिरेकाभ्यां तस्यान्यलभ्यत्वाच्च । न च लक्षणा, तत्प्रयोजकशक्यार्थान्वयबाधादीनामसत्त्वात् इति तत्त्वम् । यत्तु बलवता प्रेरित इषुर्यथा एकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरोभेदं प्राणापहरणं च रिपोर्विधत्ते, तथैक एव शब्दोऽभिधाऽऽख्यव्यापारेण पदार्थोपस्थितिं वाक्यार्थबोधञ्च जनयेत् । 'यत्परः शब्दः स शब्दार्थः' इति न्यायादिति तन्न, 'यत्परः शब्दः' इत्यस्य हि उपात्तशब्दशक्यार्थेषु यदंशे विधेयत्वं तत्र वाक्यतात्पर्य्यम्, यत्र तात्पर्य्यं स शब्दार्थस्तदंशे शब्दस्यानधिगतार्थगतत्वरूपं प्रामाण्यम् । ननु यत्तात्पर्य्येण शब्दः स शब्दार्थः, तात्पर्य्यस्यानियतत्वेन शक्तेरप्यनियतत्वापत्तेः । ननु मीमांसकमते विधेयत्वं प्रवर्तनारूपविधिविषयत्वं तच्च क्रियाया एव न द्रव्यादेरिति 'दध्ना जुहोति' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यादौ 'लोहितोष्णीषत्वस्य च दधिकरणत्वस्य विधेयत्वं न स्यादिति वाच्यम्, भूतभव्यसमुच्चारणे 'भूतं भव्यायोपदिश्यते' इति न्यायेन सिद्धसाध्ययोः समभिव्याहारे कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि साध्यक्रियावैशिष्ट्येन साध्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बोधाच्च। ❀स इति—'संसर्गविशिष्टः पदार्थ एव' वाक्यार्थ इत्यर्थः । इदञ्च न युक्तम्, अन्वयविशिष्टे पदानां शक्तिस्वीकारे एकेनैव पदेन वाक्यार्थबोधे पदान्तरवैयर्थ्यात्, सर्वेषां पदानां नानाऽर्थकत्वापत्तेश्च । न च पदान्तराणां तदर्थव्यञ्जकत्वम्, तावतैव संसर्गस्य वाक्यार्थत्वसिद्धेः । ❀जातिरिति—'जातिः पदार्थः' इति वाजप्यायनः । न च 'घटं करोति' इत्यादौ जातेः साध्यत्वासम्भवः, नित्यायामपि तस्यां व्यक्तिद्वारकसाध्यत्वसत्त्वात् । आश्रयं विना जातेरनवस्थानात्सामर्थ्याद् द्रव्यं प्रतीयते । तत्र द्रव्यगताया जातेरेकार्थसमवायसम्बन्धेन क्रियाऽन्वयित्वम् । गुणक्रियाशब्दानामपि गुणक्रियागतजातिवाचकत्वमेव । नामाख्यातसहभाव्युपसर्गादिरपि जातिपदार्थक एव, तदर्थविशेषद्योतकत्वात्, अर्थविशेषस्य विशिष्टविश्रान्तस्यैवावगमात् । कर्मप्रवचनीयोऽपि सम्बन्धनिष्ठजातिरेव । ननु जातिशक्तिवादिनये 'गामानय' इत्यादौ जात्यानुमानरूप एवाक्षेप इति व्यक्तेर्न शाब्दबोधविषयत्वम्, शब्दशक्त्यनुभवशाब्दबोधयोः 'समानप्रकारकत्वेन कार्य्यकारणभावः' इति प्रवादासङ्गतेरिति चेत् उच्यते—समानवित्तिवेद्यत्वस्यैवाक्षेपपदार्थत्वेन व्यक्तेरपि शाब्दबोधविषयत्वात्। समानवित्तिवेद्यत्वञ्च—स्वग्राहकसामग्रीग्राह्यत्वम् । 'द्रव्यमेव पदार्थः' इति व्याडिः, तस्यैव क्रियाऽन्वययोग्यत्वात् । न चैवं व्यक्त्यन्तरबोधानापत्तिः, जातेरुपलक्षणत्वेन व्यक्त्यन्तरेऽपि शक्तिग्रहसम्भवात् । 'देवदत्तः पचति' इत्यादौ द्रव्यस्यैव साक्षात्साधनत्वोपपत्तेः क्रियाविशिष्टं द्रव्यमेवार्थः। ❀अत एवेति—तत्तच्छास्त्रवासनावशात् तत्तदर्थस्य कल्पितत्वादेवेत्यर्थः । तदतिरिक्तम् = परमाणुसमूहातिरिक्तम् । ❀गुणसमूह इति— रूपादिगुणसमूह इत्यर्थः । विशकलितेषु रूपादिषु घटादिव्यवहारो न भवति, विलक्षणसम्बन्धस्यैव तन्नियामकत्वात् । विलक्षणसम्बन्धत एव 'घट उत्पन्नः' इत्यादिव्यवहारः । ❀अदृष्टेति—अदृष्टं तत्त्वं यैस्तेऽदृष्टतत्त्वाः = अदृष्टतत्त्वसदृशाः । तदुक्तं हरिणा—

---

इव भवन्ति, तथा च 'अदग्धदहन' न्यायेन पूर्ववाक्यात्प्रचरणस्य हवनस्य च प्राप्तत्वाल्लोहितोष्णीपत्वं दध्नः करणत्वं च विधेयम् । विधेयता च तत्रारोपितैव न वास्तविकीति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"ऋषीणां दर्शनं यच्च तत्त्वे किञ्चिदवस्थितम् ।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम् ॥" इति ।
( वाक्यप० कां० २ का० १४१ )

परमर्षीणां भगवतां दर्शनं तात्त्विकं भवति किन्तु परमार्थेन व्यवहारासम्भवः । परमार्थो हि व्यवहारसाधनानां शब्दानां निबन्धनं न भवतीति न तेन व्यवस्था । व्यवहारवेलायां तेऽप्यदृष्टतत्त्वसदृशा इति पुनरव्यवस्थैव । तदुक्तं पुण्यराजेन—

"रूपेण व्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ ।
ज्ञाने प्रत्यभिलापे च सदृशौ बालपण्डितौ ॥" इति ।

❀ नानाप्रकारैरिति — शास्त्रवासनाभेदवशात्कल्पितभिन्नभिन्नोपायैरिति भावः । ननु पदपदार्थयोरिव वाक्यवाक्यार्थयोरप्यसत्यत्वमुचितमन्यथाऽद्वैतसिद्धान्तभङ्गापत्तिरत आह —❀आपेक्षिकाविति — घटपटाद्यपेक्षया चिरस्थायित्वेन व्यावहारिकमित्यर्थः । "पश्वादिभिश्चाविशेषात्" इति सूत्रयता व्यासेनापि व्यवहारकाले विवेकिनामपि पश्वादिवदविवेकित्वं दर्शितम् । किञ्चाबुधबोधनाय प्रवृत्तं शास्त्रं कथं तत्त्वं वक्तुं प्रभवेत् ।

वाक्यार्थस्वरूपस्य तच्छक्तिग्रहप्रकारस्य च निर्णयः

मू०—वाक्यार्थश्च—प्रतिभामात्रविषयः । प्रतिभा च—जन्मान्तरसंस्कारजाऽपि । यथा—मधौ पिकस्य पञ्चमस्वरविरावो जन्मान्तरसंस्कारजः । अत एव 'शशश्रृङ्गमस्ति' इत्यादितोऽपि सः । प्रतिभाविषयत्वाच्च प्रतिभा वाक्यार्थः' इति व्यवहार इत्यलम् ।

ननु पदपदार्थकल्पनायामपि 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादौ क्रियाकारकभावसंबन्धस्य विभक्त्यैवोक्तत्वेन को वाक्यार्थः ?' सम्बन्धसम्बन्धस्य तु भाने न मानम्, अनवस्था चेति चेत्, न, पदार्थानां परस्परविशेष्यविशेषणभावरूपान्वयस्य वाक्यार्थत्वात् । यद्यपि विभक्तिप्रकृत्यर्थगतविशेषणत्वमपि विभक्तिशक्यमेव तथापि विशेषनिष्ठम् इतरपदार्थनिष्ठविशेषणतानिरूपितविशेष्यत्वं वाक्यशक्यमिति बोध्यम् । एतच्चोपपादयिष्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननूक्तान्वयरूपवाक्यार्थस्य तद्घटकपदानुपस्थितत्त्वेनापूर्वत्वात्तत्रशक्तिग्रहासम्भवः, तथोपस्थिततद्विषयकशक्तिग्रहे च तस्यापूर्वत्वहानिरिति चेत्, न, वृद्धव्यवहारदर्शनसहकृतमनसोपस्थितिविशिष्टे तद्ग्रहसम्भवात्, क्वचिदुपदेशेन तद्ग्रहसम्भवाच्च । क्वचिदाकाङ्क्षावशात्तदैव तत्र शक्तिग्रहो बोधश्च । पश्चाच्छास्त्रकृत्कल्पितान्वयव्यतिरेकाभ्यां तत्तत्पदार्थे तत्तत्पदशक्तौ व्यवस्थितायामर्थाद्वाक्ये उक्तान्वयविषया शक्तिरवतिष्ठते ।

(रत्न०)—ननु वाक्यस्याखण्डत्वे पदपदार्थयोरभावात् 'क्रियाकारकभावरूपसम्बन्ध एव वाक्यार्थः' इति व्यवहारानुपपत्तिरत आह—*वाक्यार्थश्चेति । तदुक्तं हरिणा—

"विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ।।" इति ।
( वाक्यप० कां० २ का० १४५ )

अस्यार्थः—देवदत्तादिपदेभ्यो विच्छिन्नेभ्यस्तदर्थानां विच्छेदेनैव ग्रहणे प्रत्ययवेलायामेका प्रतिभा पदार्थमतिव्यतिरिक्तैव जायते ताञ्च वाक्यार्थं वैयाकरणा आहुः । कस्तस्या उपाय ? इत्याह—*"पदार्थैरुपपादिताम्" इति पदार्थैरसत्यैरेवोपाधिभूतैरुपपादिताम् = अभिव्यक्तामिति । कीदृशी तामित्याह—

"इदं तदिति साऽन्येषामनाख्येया कथञ्चन ।
प्रत्यात्मवृत्तिसिद्धा सा कर्त्राऽपि न निरूप्यते ।।" इति ।
( वाक्यप० कां० २ का० १४६ )

सा च प्रतिभोपजायमानाऽऽख्यातुमन्यस्य न शक्यते, केवलं स्वसंवेदनसिद्धैवासौ प्रतिपन्नाऽपि स्वसंवेदनसमये नियतेन रूपेण निरूपयितुमशक्यैव । सा प्रतिभा किं स्वभावा ? तत्राह—

"उपश्लेषमिवार्थानां सा करोत्यविचारिता ।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्त्तते ।।" इति ।
( वाक्यप० कां० २ का० १४७ )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असंसृष्टानां पदार्थानामसावुपश्लेषम् = मेलनं करोति । सर्वरूपे च वाक्ये पदार्थानां वाऽसौ विषयत्वेन वर्त्तते । ताञ्च न किञ्चित्प्राणिमात्रमतिवर्त्तत इत्याह—

"साक्षाच्छब्देन जनितां भावनानुगमेन वा ।
इति कर्त्तव्यतायां तां न कश्चिदतिवर्त्तते ॥" इति ।
( वाक्यप० कां० २ का० १४८ )

सा साक्षाच्छब्देन कदाचिद् व्यवहारकाले जन्यते, जन्मान्तरभावनावशेन वा गजवाजिप्रभृतीनां तन्मूल एव सर्वव्यवहारः । सिद्धैव चेयं प्रतिभा सर्वस्येत्याह—

"यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः ।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात् ॥" इति ।
(वाक्यप० कां० २ का० १४९ )

अन्तःकरणवृत्तिविशेषरूपा चेयं प्रतिभा एतज्जन्मसंस्कारजा जन्मान्तरसंस्कारजापीत्याह—*प्रतिभा चेति । *मधाविति—तदुक्तं हरिणा—

"स्वरवृत्तिं विकुरुते मधौ पुँस्कोकिलस्य कः ।
जन्त्वादयः कुलायादिकरणे केन शिक्षिताः ॥" इति ।
( वाक्यप० कां० २ का० १५१ )

मधुमासे कोकिलस्य पञ्चमस्वरविरावः केन शिक्षितः । लूतातन्तूनां कुलाय रचना च प्रतिभामहात्म्यादेव जायते । एवञ्च 'अखण्डः स्फोटलक्षण एकः शब्दो वाक्यम्' प्रतिभावाक्यार्थः, अध्यास एव सम्बन्ध इति लब्धम् । *पञ्चमेति—तदुक्तम्—

"वायुः समुत्थितो नाभेरोष्ठकण्ठशिरो हृदि ।
पञ्चस्थानसमुद्भूतः पञ्चमस्तेन कथ्यते ॥" इति ।

*अत एवेति—जन्मान्तरसंस्कारजायाः प्रतिभायाः ग्रहाणादेवेत्यर्थः । सः = जन्मान्तरसंस्कारजन्यप्रतिभाविषयो वाक्यार्थः । ननु प्रतिभा—अन्तःकरणवृत्तिविशेषरूपा, तथा च तद्विषयस्य वाक्यार्थत्वेऽपि प्रतिभा—वाक्यार्थ इत्यसङ्गतमत आह—*प्रतिभाविषयत्वाच्चेति—तद्विषयत्वात्त च्छब्देन व्यवहार इति भावः । *व्यवहार इति—हर्य्यादीनां सिद्धान्त इति भावः । वाक्यत्वमत्र—कारकाद्यन्वितक्रियाबोधकत्वरूपम् । अत एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रागुक्तसंगतिरित्याह—*इत्यलमिति । ननु क्रियाकारकभावरूपसम्बन्धस्य विभक्त्योक्तत्वेऽप्युक्तसम्बन्धप्रतियोगिकसम्बन्धस्यानुक्तत्वेन स एव वाक्यार्थोऽस्त्वित्याह—*सम्बन्धसम्बन्धस्येति — संसर्गताऽऽख्यविषयताऽऽश्रयप्रतियोगिकयत्किञ्चित्पदार्थानुयोगिकसम्बन्धस्य सत्त्वेऽपि शाब्दविषयत्वन्न भवति, अनुभवविरोधादिति भावः । शाब्दबोधे प्रकारता—विशेष्यता-संसर्गताविषयता त्रितयं भासते तत्र संसर्गता नाम—प्रकारताविशेष्यतोभयनिरूपितत्वे सति विशिष्टबुद्धिनियामकत्वम्, तच्च न सम्बन्धप्रतियोगिकसम्बन्धत्वेनाभिमतं इति सम्बन्धत्वाभाव एव तस्येत्युपाध्यायाः । सम्बन्धसम्बन्धस्यापि भावेऽनवस्थामाह—*अनवस्था चेति ।*वाक्यार्थत्वादिति—अत्र व्याडिमते भेदो वाक्यार्थः, पदवाच्यानां द्रव्यान्तरनिवृत्तितात्पर्यकत्वात् । जातिवादिमते तु वाक्यार्थः संसर्गः । स च सामान्येऽवस्थितानां पदार्थानां संश्लेषरूपः । यत्तु 'नीलो घटः' इत्यादौ विशेषणताप्रयोजकपदस्यैवाभेदादिसम्बन्धबोधकत्वमिति तन्न, केवलनीलादिपदानां तत्र शक्त्यभावात् । समभिव्याहारस्य प्रयोजकत्वे तु वाक्यशक्तावेव विश्रान्तेः । *विभक्तिशक्यमेवेति — प्रकृत्यर्थगतविशेषणत्वं विभक्तिवाच्यमित्यस्य सुबर्थनिर्णये वक्ष्यमाणत्वादिति भावः । *विशेष्यत्वं वाक्यशक्यमिति — विशेष्यत्वस्य तु न विभक्त्यर्थत्वम्, विभक्त्या विशेष्यताया अप्रतीतेः । तथा च विशेष्यत्वमेव वाक्यशक्यमिति भावः । *उपपादयिष्यत इति — सुबर्थनिर्णये इति शेषः । *उक्तान्वयेति—इतरपदार्थनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपवाक्यार्थस्येत्यर्थः । *तद्घटकेति — वाक्यघटकेत्यर्थः । *अपूर्वत्वादिति—पदादनुपस्थित्या तत्र शक्त्यभावादिति भावः । अपूर्वत्वञ्च — शाब्दबोधात्प्राग्वर्ति तज्जनकशब्दज्ञानजन्यज्ञानाविषयत्वम् । *तथोपस्थितेति — नियमेन ततः पूर्वं तत्कल्पनया तद्घटकपदादुपस्थितवाक्यार्थविषयकशक्तिग्रहे चेत्यर्थः । *अपूर्वत्वहानिरिति — अन्वयांशेऽपि पदशक्तिग्रहे तु वाक्यर्थत्वहानिरित्यर्थः । *तद्ग्रहेति — वाक्यार्थशक्तिग्रहेत्यर्थः । *उपदेशेनेति — 'एतस्यायमर्थः' इत्याद्युपदेशेनेत्यर्थः । *क्वचिदाकाङ्क्षेति—प्रागविज्ञातहरिद्रनामकनदीविशेषेण पुंसा 'हरिद्रायां नद्यां घोषः' इति वाक्ये श्रुते नदीपदसमभिव्याहारेण हरिद्राशब्दस्य शक्तिज्ञानपूर्वकं नदीरूपाल्लिङ्गात्तत्सम्बन्धित्वेन तीरप्रतीतिवत् पदैः पदार्थोपस्थितावा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काङ्क्षाज्ञानादिसहकारेण तत एवोपस्थिते वाक्यार्थे तत्सम्भव इत्यर्थः । नन्वेवम् 'संसर्गो वाक्यार्थः' इति प्रवादभङ्गोऽत आह—*पश्चादिति—प्रथमतो वाक्यार्थेऽवगते कल्पितान्वयव्यतिरेकाभ्यां पदानां स्वार्थमात्र-परत्वावधारणादन्वयरूपे वाक्यार्थे वाक्यशक्तिः पर्यवस्यतीत्यर्थः । एतावतैव 'संसर्गो वाक्यार्थः' इति प्रवाद इति भावः ।

सू०–सर्वथाऽज्ञातस्य सम्बन्धस्य भानं त्वनुभवविरुद्धम् । इदं च "अर्थवत्"–( पा० सू० १।२।४५ ) सूत्रे भाष्ये स्पष्टम् ।

वाक्यवाक्यार्थयोः शक्तिनिरूपणम् ।

तथा "प्रातिपदिकार्थ"–(पा० सू० २।३।४६) सूत्रे "षष्ठी शेषे" ( पा० सू० २।३।५० ) इति सूत्रे च भाष्ये । तत्र हि—'वीरः पुरुषः' इत्यादौ "विशेषणविशेष्य-भावरूपं यद् आधिक्यं स वाक्यार्थः" इत्युक्तम् । तत्राधिक्यमिति स्वार्थे ष्यञ् । तत्र नान्यत्प्रवृत्तिनिमित्तम् ।

तदुक्तम्— "वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया" ।

( वाक्यप० कां २ कारि० २६४ ) इति ।

नन्वाकाङ्क्षाऽऽदिसहकारेण पदैरेवोक्तसंसर्गस्यापि भानोपपत्तौ तत्र वाक्यस्य शक्तिकल्पने मानाभावः, गौरवञ्च, आकाङ्क्षा च वक्ष्यते, इति चेत्, न, तत्तत्समभिव्याहारेऽर्थासंबद्धे बोधजनक-त्वानुपपत्त्या सम्बन्धावश्यकत्वात्, पदेषु तत्तदर्थसम्बन्धवत् । तदुक्तं भट्टपादैः—

†"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते ॥"

( श्लोकवा० वाक्याधि० ७ श्लो० २२९ ) इति ।

हि = यतः । सर्वत्रैव = एकपदप्रयोगेऽपि 'प्रविश' 'पिण्डीम्'

---

† "श्लोकवार्तिके तु—

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि नः ।
तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥"

इत्युक्तम् । अस्यार्थः—नः = अस्माकम् मते पदानि वाक्यार्थाभिधानविषयकं



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादौ । एतदर्थश्चाग्रे वक्ष्यते । एवञ्च वाक्यार्थत्वं स्पष्टमेवोक्तम् । तत्र प्रत्येकं पदस्य सामर्थ्यमिति न युक्तम्, विनिगमनाविरहात् । पदानां तद्विषयसामर्थ्यत्यागे युक्त्यन्तरमप्युक्तं तैः—

"साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्त्या नान्तरीयकम् ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥"

( श्लोकवा० वाक्याधि० ७ श्लो० ३४२-३४३ ) इति ।

एवञ्च पदतात्पर्यविषयता वाक्यसंबद्धत्वं च स्पष्टमेव । एवञ्च पदवृत्तिः केवलपदार्थबोधिका, वाक्यवृत्तिस्तु विशिष्टार्थस्यैव बोधिकेति बोध्यम् ।

(रत्न०)—'अज्ञातस्यापि सम्बन्धस्य भानम्' इति मतं निराकरोति—*सर्वथेति—प्रकारत्रयेऽपीत्यर्थः । *"अर्थवत्" सूत्र इति—तत्र हि वाक्यस्य प्रातिपदिकत्वमाशङ्क्य "न वै पदार्थादन्यस्यार्थस्योपलब्धिर्भवति वाक्ये" इत्युक्त्वा "येषां पदार्थानां सामान्ये वर्तमानानां यद्विशेषेऽवस्थानं स वाक्यार्थस्तस्मात्प्रतिषेधः" इति शङ्कासम-

---

सामर्थ्यं न विमुञ्चन्ति । इति पूर्वार्धेन वाक्यार्थस्य पदबोध्यत्वं प्रतिपाद्योत्तरार्धेन खण्डयति—*तन्मात्रेति—अत्र पार्थसारथिमिश्रैः—"पदार्थमात्राभिधानायावसितव्यापारेषु पदेषु पश्चात् पदार्थेभ्यः स सम्बन्धो गम्यते इति । नन्वेवं वाक्यार्थोऽशाब्दः स्यादत आह—

"अशाब्दे चापि वाक्यार्थे न पदार्थेष्वशाब्दता ।
वाक्यार्थस्येव नैतेषां निमित्तान्तरसम्भवः ॥"

( श्लोकवा० वाक्याधि० ७ श्लो० २३० ) इति ।

पदार्थानां शाब्दत्वेन वाक्यार्थस्यापि शब्दप्रतिपाद्यत्वम्, तथा च—तत्परत्वाच्च शब्दानां शाब्दत्वं सिद्ध्यति, वाक्यार्थे हि शब्दानां तात्पर्यं न पदार्थेषु, तेषां प्रमाणान्तरसिद्धत्वात्, अतो यद्यप्यभिधाव्यापारः पदार्थेष्वेव पर्यवसितस्तथापि तात्पर्यव्यापृतेरपर्यवसिताया वाक्यार्थपर्यन्तत्वात्तात्पर्ये शब्दस्य प्रामाण्यात्सिध्यति शब्दे प्रमेयतया वाक्यार्थस्य शाब्दत्वमिति" इत्युक्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्थनायोक्तम् । एतेन सामान्येन ज्ञातस्यैव विशेषरूपेण भानाय वाक्यार्थत्वं प्रदर्शितम् । विशेषे = पदार्थसंसर्गरूपे । ❀प्रातिपदिकार्थसूत्र इति— "प्रथमालक्षणे पदसामानाधिकरण्ये उपसंख्यानमधिकत्वात् । 'वीरः पुरुषः' 'वीरपुरुषः' इति । किं पुनः कारणम् न सिद्ध्यति ?, अधिकत्वात् । व्यतिरिक्तः प्रातिपदिकार्थ इति कृत्वा प्रथमा न प्राप्नोति । कथं व्यतिरिक्तः ? । पुरुषे वीरत्वम् । "न वा वाक्यार्थत्वात्"—न वा वक्तव्यम्, किं कारणम् ? वाक्यार्थत्वात् । यदत्राधिकं वाक्यार्थः सः" इत्युक्तम् । अत्र कैयटः—"मात्रग्रहणात् "सम्बोधने च" (पा० सू० २।३।४७) इति ज्ञापकाद्वाऽधिकार्थप्रतीतौ प्रथमया न भाव्यम् । अस्ति च 'वीरः पुरुषः' इत्यादौ सामानाधिकरण्याद्विशेष्यविशेषणभावस्याधिकस्य प्रतीतिः···। ❀नवेति—वीरप्रातिपदिकादनपेक्षितशब्दान्तरार्थसंसर्गोपहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते, एवं पुरुषशब्दादपि। पश्चात्त्वाकाङ्क्षाऽऽदिवशाद्विशेषणविशेष्यभावावगतिरूपजायमाना बहिरङ्गत्वादन्तरङ्गं संस्कारं पूर्वप्रवृत्तं बाधितुं नोत्सहते।"इति। अनेन विशेष्यविशेषणभावसत्त्वेऽपि प्रातिपदिकसंस्कारवेलायां तज्ज्ञानाभावात्प्रथमा सिध्यतीत्युक्तं भवति । तथा चाज्ञातस्य सम्बन्धस्य भानं नेति स्पष्टमेवोक्तम् । ❀तत्र हीति—प्रातिपदिकार्थसूत्र इत्यर्थः । ❀विशेषणविशेष्येति—इदञ्च "षष्ठी शेषे" इति सूत्रे भाष्ये उक्तम्—अत्र हि "राज्ञः पुरुषः" इत्यत्र राजा विशेषणं पुरुषो विशेष्यः । तत्र प्रातिपदिकार्थो व्यतिरिक्त इति कृत्वा प्रथमा न प्राप्नोति । तत्र षष्ठी स्यात्, तस्याः प्रतिषेधो वक्तव्यः······ । उक्तं पूर्वेण । किमुक्तम् ? । न वा वाक्यार्थत्वादिति । यदत्राधिक्यं वाक्यार्थः सः" इति । ❀आधिक्यमिति—अभिहितान्वयवादिमतेनेदम् । अन्विताभिधाने तु संसर्गस्यापि पदार्थत्वेनाधिक्याभावः । तत्र = वाक्ये । ❀आधिक्यमिति—अत्र स्वार्थे एव 'ष्यञ्' न तु भावे, संसर्गपदार्थानन्वयापत्तेः । ❀अन्यदिति—विशेष्यविशेषणभावातिरिक्तमित्यर्थः। यथा हि—घटादिशब्दानां घटत्वादिकं प्रवृत्तिनिमित्तम्, नहि तथा वाक्यस्य विशेष्यविशेषणभावरूपस्वार्थप्रतिपादनाय शक्यताऽवच्छेदकरूपं प्रवृत्तिनिमित्तं किञ्चिदस्तीति भावः । विशेष्यविशेषणभावस्य स्वरूपत एव भाना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुभवात्प्रमाणमप्याह—*वाक्यरूपस्येति—वाक्यपदीयपूर्वापरपर्यालोचनया तु सर्वेषां शब्दानामानुपूर्वीरूपप्रवृत्तिनिमित्तमादायैवार्थबोधकत्वम् । न चार्थे तदभावः, आरोपितायास्तस्या अर्थेऽपि सत्त्वात् । तदुक्तम्—

"अर्थस्वरूपे शब्दानां स्वरूपाद् वृत्तिरिष्यते ।"

(वाक्यप० कां० २ कारि० २६३) इति ।

अत्र पुण्यराजः—"अर्थस्वरूपे = अर्थवस्तुनीति यावत्, सर्वेषां स्वरूपादेव निमित्तात्प्रवृत्तिर्बोद्धव्या । न केवलं पदानां सर्वत्र स्वरूपमेव प्रवृत्तिनिमित्तम्, यावद्वाक्यरूपस्यापि शब्दस्य वाक्यार्थे प्रवर्त्तमानस्य वृत्तिरन्यानपेक्षया स्वरूपेणैव बोध्येति प्रसङ्गेन प्रतिपादयितुमाह-

"वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया ।"

( वाक्यप० कां० २ कारि० २६४ ) इति ।

एवञ्च वाक्यस्यापि वाक्यार्थप्रतिपादनाय वाक्यस्वरूपमेव प्रवृत्तिनिमित्तम्, न तु तत्र प्रवृत्तिनिमित्तान्तरापेक्षाऽस्ति । तथा च—नान्यत् प्रवृत्तिनिमित्तमित्यत्र 'अन्यत्' इत्यस्य वाक्यस्वरूपातिरिक्तमित्यर्थः । प्रतिज्ञातं प्रतिपादयन् नैयायिकमतमपाकरोति—*नन्वाकाङ्क्षाऽऽदीति । *तत्तत्समभीति—आकाङ्क्षारूपे समभिव्याहारे इत्यर्थः । नन्वाकाङ्क्षाया आत्मादिनिष्ठत्वेन कथं तद्वैशिष्ट्यं पदेऽत आह—*आकाङ्क्षा चेति । *अर्थासम्बद्ध इति—अयम्भावः—समभिव्याहारस्य संसर्गवाचकत्वं तेन सम्बन्धं विना नैव सम्भवति, प्रकाशासम्बद्धार्थवत् । तथा च तत्र सम्बन्धस्वीकारे शक्तिःसिद्धैव, शक्तेःसम्बन्धरूपत्वादिति । *तदुक्तमिति—वाक्येऽपि शक्तत्वमुक्तमित्यर्थः । *न विमुञ्चन्तीति—नः = अस्माकं मते पदानि वाक्यार्थेऽपि सामर्थ्यम् = वाक्यार्थनिरूपितामपि शक्तिं न विमुञ्चन्ति । ननु पदार्थातिरिक्तो वाक्यार्थो नास्त्येवात आह—*वाक्यार्थ इति—हि = यतः सर्वत्रैव लक्ष्यमाणः = प्रतीयमानो वाक्यार्थो दृश्यते । अत्र 'वाक्यार्थः' इत्युक्त्या वाक्येऽपि शक्तिः सूचिता । ननु 'यत्परः शब्दः' इति लक्षणापरं न शक्तिपरमिति कथं प्रकृतार्थसाधकमत आह—*एतदर्थञ्चेति । *न युक्तमिति—कस्य पदस्य तत्र शक्तिरित्यत्र विनिगमकाभावात्समुदायस्यैव वाचकत्वं युक्तमित्यर्थः । अत एव वक्ष्यति—'वाक्यार्थे' इति, समभिव्याहारविशिष्टपदानामेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यत्वात् । *युक्त्यन्तरमिति — यद्यपि वर्णाःसाक्षात्पदार्थप्रतिपादन-मेव कुर्वन्ति तथाऽपि तस्य निष्फलत्वाद् वाक्यार्थे एव पर्यवस्यन्तीत्यर्थः । *नान्तरीयकमिति — विनाऽर्थकेनान्तराशब्देन 'न' शब्दस्य "सुपा" ( पा० सू० २।१।४ ) इत्यनेन समासे "गहादिभ्यश्च" ( पा० सू० ४ । २ । १३८ ) इति 'छे' सिध्यति । 'येन विना कार्यं न निष्पद्यते' तत् 'नान्तरीयकम्' इत्युच्यते । अत्र पदार्थप्रतिपादनं विना वाक्यार्थप्रतिपादनं न सम्भवतीति पदार्थप्रतिपादनस्य नान्तरीयकत्वम् । वाक्यार्थमितये = वाक्यार्थज्ञानाय । तेषाम् = वर्णानाम् । *पाक इति — पाके काष्ठानां ज्वालेव यद्यपि वह्निकृततांप एव पाकप्रयोजकस्तथापि ज्वालां विना तापा-सम्भवाज्ज्वालाया नान्तरीयकत्वम् । *एवञ्चेति — पदार्थप्रतिपादनस्य निष्फलत्वे चेत्यर्थः । *पदतात्पर्य्येति — वाक्यार्थप्रतिपादनेऽपि पदानां तात्पर्यम्, वाक्यस्य वाक्यार्थेन सम्बद्धत्वञ्चेत्यर्थः ।

मू०—यत्तु-पदैः पदार्थोपस्थितौ पदार्थानां परस्पराकाङ्क्षाऽऽ-दिवशादन्वयबोधो न तु स वाक्यसम्बद्धः। 'वाक्यार्थः' इत्यस्य च—वाक्यप्रयोजनमित्यर्थ इति, तन्न, अन्वयस्य शब्दासंबद्धत्वे तद्विषयक-बोधस्य 'शाब्दयामि' इत्यनुव्यवसायानापत्तेः, धूमपदोपस्थित-धूमेन जातवह्न्यनुमितेरपि शाब्दत्वापत्तेश्च ।

किञ्च, शब्दानामर्थद्वारकसंबन्धस्यैवाङ्गीकारेण वाक्यानां च तदभावात् 'परस्परमिमे वाक्ये संबद्धे' इत्यादिव्यवहाराना-पत्तेः । न च प्रयोजनभूतवाक्यार्थद्वारक एव तयोः सम्बन्ध इति वाच्यम्, ईदृशस्यापि सम्बद्धव्यवहारप्रयोजकत्वे मथुरापाटलिपुत्र-योरपि सम्बद्धत्वव्यवहारापत्तेः, स्वसंयुक्तावयवकदेशसंबद्धत्वा-दित्यलम् ।

यत्तु-बोधजनकत्वानुपपत्त्या न सम्बन्धकल्पना किन्तु स्मृति-रूपपदार्थोपस्थित्यनुपपत्त्या । सा ह्येकसम्बन्धिज्ञानादपरसम्ब-न्धिस्मरणविधयेति तत्कल्पना। बालोऽपि वाक्यार्थज्ञानकारणत्वेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदार्थस्मृतिं कल्पयित्वा तदनुपपत्त्यैव शक्तिं कल्पयतीति, तन्न, पदार्थस्मृत्यनुपपत्त्या कल्प्यमानशक्तेः पदेष्वेव कल्पनौचित्येन प्राथमिकशक्तिग्रहस्यैव पदविषयत्वसिद्धावन्वयव्यतिरेकाभ्यां पश्चात्तत्पदशक्तिग्रह इति सर्वतन्त्रसिद्धान्तविलयापत्तेः ।

किञ्च, एवम् 'इतरान्विते शक्तिः' इत्यादिपक्षाणां विलय एव ।

(रत्न०)–नैयायिकमतं खण्डयति—*यत्त्विति । *परस्परेति—आकाङ्क्षाया अर्थनिष्ठत्वाभिप्रायेणेदम् । वाक्यसमयग्राहिका चाकाङ्क्षा, सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः ?' इत्येवंरूपा पुरुषनिष्ठैव, तथाऽपि तस्याः स्वविषयेऽर्थे आरोपः । अभिधानापर्यवसानमाकाङ्क्षा चेत्यनर्थान्तरम् । सः = अन्वयबोधः । वाक्यसंबद्धः = वाक्यनिष्ठशक्तिज्ञानजन्यबोधविषयः । ननु अन्वयस्य वाक्याशक्यत्वे 'वाक्यार्थः संसर्गः' इति व्यवहारानुपपत्तिरत आह—*वाक्यार्थ इति । *शब्दासम्बद्धत्व इति—वाक्यरूपशब्दाशक्यत्वे इत्यर्थः । *तद्विषयकेति—अन्वयविषयकेत्यर्थः । *शाब्दयामीति–शब्दजन्यज्ञानविषयीकरोमीत्यर्थः । *अनुव्यवसायानापत्तेरिति—अन्वयस्य शाब्दाविषयत्वे 'अन्वयं शाब्दयामि' इत्यनुव्यवसायो न स्यात्, अनुभवानुव्यवसाययोरन्यूनानतिरिक्तविषयकत्वनियमात् । ननु शब्दशक्यप्रतियोग्यनुयोगिकत्वाच्छाब्दत्वमत आह—*धूमेति—परार्थानुमितौ 'पर्वतो वह्निमान्, धूमात्' इति वाक्यघटकधूमपदेत्यर्थः । *शब्दानामिति—यथा—'घटम्' 'आनय' इति पदयोरर्थद्वारकसम्बन्धमादाय 'इमे पदे सम्बद्धे' इति व्यवहारस्तथा 'चक्षुषा गृह्यताम्' 'घटो वर्त्तते' इति वाक्ययोरप्यर्थद्वारकसम्बन्धमादाय 'इमे वाक्ये सम्बद्धे' इति व्यवहारो जायते । वाक्यार्थाभावे अर्थद्वारकसम्बन्धस्य वक्तुमशक्यतया तादृशव्यवहारानुपपत्तिरित्यर्थः । आदिना—महावाक्यासिद्धेः संग्रहः । *न च प्रयोजनेति–'वाक्यार्थः' इत्यस्य वाक्यप्रयोजनमित्यर्थः । तथा च—वाक्यद्वयस्य यत्संसर्गद्वयबोधनरूपं प्रयोजनं तादृशप्रयोजनभूतपदार्थयोः संसर्गमादायैव वाक्ययोः सम्बन्धव्यवहारः, यथा–'चक्षुषा गृह्यताम्' 'घटो वर्त्तते' इत्यत्र वाक्यप्रयोजनभूतो यश्चक्षुर्ग्रहणक्रिययोर्घटवर्त्तनक्रि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ययोश्च सम्बन्धस्तादृशसम्बन्धविशिष्टत्वरूपसम्बन्धमादाय वाक्ययोः सम्बन्धत्वव्यवहारात् । वाक्यविशिष्टत्वं यत्र वाक्ये तत्र सम्बद्धत्वव्यवहार इति फलति । वैशिष्ट्यञ्च—स्वजन्यबोधीयमुख्यविशेष्यतासमानाधिकरण-प्रकारतानिरूपितसंसर्गतानिरूपितप्रधानताप्रयोजकपदघटितत्वसम्बन्धेन । समन्वयश्च—स्वम्—'घटो वर्तते' इति वाक्यम्, तज्जन्यबोधीयमुख्यविशे-ष्यता—वर्तननिष्ठा, तत्समानाधिकरणप्रकारता—दर्शनक्रियानिरूपिता, तन्निरूपिता या कर्मतानिरूपकत्वनिष्ठा संसर्गता, तन्निरूपिता या प्रधानता (विशेष्यता) दर्शननिष्ठा, तत्प्रयोजकपदघटितत्वम् 'चक्षुषा गृह्यताम्' इति वाक्ये, इति तयोः सम्बद्धत्वव्यवहारः । ईदृशस्यापि = परम्परा-सम्बन्धस्यापि । ❀सम्बद्धत्वव्यवहार इति—'मथुरापाटलिपुत्रौ सम्बद्धौ' इत्यपि व्यवहारः स्यादिति भावः । सम्बन्धश्चात्र — स्वघटितदेशघ-टकवृत्तित्वादिरूपः, स्वसंयुक्तावयवघटितदेशवृत्तित्वात्तत्त्वमित्याह — ❀स्वसंयुक्तेति । ननु तत्राकाङ्क्षाऽऽदीनां नियामकत्वमत आह — ❀इत्य-लमिति—तत्कल्पनाऽपेक्षया शक्तिकल्पनैव ज्यायसीति भावः । ❀यत्त्विति—एवं हि क्रमः—प्रथमं पदादिप्रत्यक्षम्, ततः शक्तिस्मरणम्, ततश्च पदार्थोपस्थितिः (स्मृतिः), ततश्च शाब्दबोधः । एवञ्च स्मृतिरूपपदार्थो-पस्थितिः पदपदार्थसम्बन्धं विना न सम्भवतीति पदे शक्तिकल्पना, वाक्यार्थस्मृतिस्तु पदार्थस्मृतिरूपैकसम्बन्धिज्ञानाद्वाक्यार्थरूपापरसम्बन्धि-स्मरणविधयेति न वाक्यशक्तिकल्पनाया आवश्यकत्वमिति भावः । ननु वृद्धव्यवहारेण प्राथमिकशक्तिग्रहे नैतस्य सम्भव इत्याह— ❀बालोऽपीति । ❀वाक्यार्थेति — शाब्दबोधेत्यर्थः । ❀तदनुपपत्त्यैवेति — पदार्थोपस्थि-त्यनुपपत्त्येत्यर्थः । शक्तिम् = पदे शक्तिम् । तथा च—वाक्ये शक्त्यभावे-ऽपि वाक्यार्थबोधे बाधकाभाव इति भावः । ❀तन्नेति—वाक्यार्थज्ञानका-रणभूताया उपस्थितेः कारणस्य शक्तिज्ञानस्य प्रथममपेक्षितत्वेन पद-शक्तिकल्पनैव प्रथमं स्यात्तथाचान्वयव्यतिरेकाभ्यां वाक्यार्थबोधानन्तरं तत्तत्पदे शक्तिग्रह इति सर्वशास्त्रसिद्धान्तो विरुध्येतेति भावः । अन्वय-व्यतिरेकाभ्याम् = आवापोद्वापाभ्याम् । ❀विलय इति—अन्वयज्ञाने पदार्थ-ज्ञानस्य कारणत्वेन प्रथमं पदे पदार्थमात्रनिरूपितशक्तेरेवावश्यक-त्वादिति भावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—किञ्च, पदार्थोपस्थितेर्न स्मृतित्वम्, तत्ताया अभानात्। तत्ता च--पूर्वानुभूततैव। अत एव "अनुभवविषयासंप्रमोषः स्मृतिः" (यो० द० १।११) इति पातञ्जलसूत्रम्। अनुभवस्य यौ विषयौ = वृत्तितदारूढविषयरूपौ तयोरसम्प्रमोषः = अनपहरणं यत्र सा वृत्तिः=स्मृतिरित्यर्थः। तदुक्तं पातञ्जलभाष्ये—'वृत्तिग्राह्यविषयं ज्ञानं ग्राह्यविषय-ग्रहणवृत्त्युभयाकारप्रतिबिम्बवच्चैतन्यरूपं स्वबिम्बाश्रये तज्जातीयमेव संस्कारमारभते। तस्य च संस्कारस्य स्वाभिव्यञ्जककालाद्युद्बुद्धस्य स्वसमानाकारग्राह्यग्रहणोभयविषयकस्मृतिजनकत्वम्' इति। अनुभव-संस्कार-स्मृतीनां समानाकार (क) त्वेनैव कार्यकारणभावादेवमेव युक्तम्।

पदार्थोपस्थितेः स्मृतिरूपत्वनिरासः।

न च तत्तांशे उद्बोधकासमवधानात्तदभानम्, दृश्यते हि—समूहालम्बनात्मकनानापदार्थानुभवेऽपि कस्यचिदेव स्मरणमिति वाच्यम्, तत्तद्विषयांशोद्बोधकस्यैव नियमेन तद्विषयकज्ञानांशोद्बोधकत्वेन तदंशे प्रमोषासम्भवात्। किन्तु ग्राह्यांशे एव सः। तत्तद्देशकालवृत्तित्वरूपतत्तायास्तु न भानं स्मृतावुचितम्, कालादेस्तदनुभवेऽभानात्। नच दोषवशात्तत्प्रमोषः, नियमतस्तादृशदोषकल्पने गौरवात्। क्लृप्तस्य भ्रमजनकदोषस्य तन्मोषकत्वे तु विनष्टरजतस्य रागान्धस्य शुक्त्यादिदर्शने 'तद्रजतत्वविशिष्टमिदं रजतम्' इति तत्तांशोल्लेखिभ्रमानापत्तिः, दोषस्य विद्यमानत्वात्।

(रत्न०)—नैयायिकाभिमतं पदार्थोपस्थितेः स्मृतिरूपत्वं खण्डयति—*किञ्चेति। *तत्ताया इति—स्मरणं प्रत्यनुभवजन्यसंस्कारस्य हेतुत्वात्तस्य चात्राभाव इति भावः। *पूर्वानुभूततेति — अतीतकालिकानुभवाख्यज्ञानविषयतेत्यर्थः। 'मया पूर्वमयमनुभूतः' इति बुद्ध्या विषयीकृत्यैव स्मरणोदयादिति भावः। *अत एवेति — स्मृतौ तत्तायाः विषयीकरणादेवेत्यर्थः। *अनुभवविषयेति — "प्रमाणादिभिरनुभूते विषये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

याऽसम्प्रमोषः = अस्तेयम् सा स्मृतिः । संस्कारमात्रजस्य हि ज्ञानस्य संस्काराणामनुभवावभासितो विषय आत्मीयः, तदधिकविषयपरिग्रहस्तु सम्प्रमोषः = स्तेयम् । कस्मात् ? सादृश्यात्, 'मुष्' स्तेये (धातुपाठे ९ ग० ५८) इत्यस्मात्प्रमोषपदव्युत्पत्तेः । एतदुक्तं भवति-सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति । स्मृतिः पुनर्नानुभवमर्यादामतिक्रामति, तद्विषया तदूनविषया वा, न तु तदधिकविषया । सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति" इति पातञ्जलभाष्यव्याख्यायां वाचस्पतिमिश्राः । ननु न्यूनविषयस्यापि स्मृतित्वे तत्तारहितस्यापि स्मृतित्वे बाधकाभावात्त्वदभीष्टासिद्धिरिति चेत्, न, अनुभवानुरोधेन तत्ताभिन्नस्यैव न्यूनविषयस्य ग्रहणात् । साम्प्रतं योगदर्शने "अनुभूतविषयासम्प्रमोषः स्मृतिः" इति पाठो लभ्यते । ननु स्मृतिरपि सम्प्रमोषम् ( स्तेयम् ) अवगाहते । देशकालान्तरानुभूतपित्रादेरननुभूतचरदेशकालान्तरसम्बन्धं दर्शयति स्वप्ने इति चेत्, न, विपर्ययलक्षणाक्रान्तत्वेन तत्र स्मृतित्वाभावात् । ननु "न तत्र रथा न रथयोगाः" इत्याद्युपक्रम्य "स्मृतिरेषा यत्स्वप्नदर्शनम्" । ( शा० भा० २।२।२९ ) इति शारीरकभाष्यं विरुध्येतेति चेत्, न, संस्कारजन्यत्वेन सादृश्यमादाय स्मृतित्वव्यवहारात् । *वृत्तितदारूढेति — घटाद्याकारकश्चित्तपरिणामो वृत्तिः । वृत्तिश्च तदारूढस्तद्विशिष्टो घटादिविषयश्च रूपं ययोस्तौ वृत्तितदारूढविषयरूपौ । *तयोरसंप्रमोष इति—वृत्तिविषययोरुभयोरपि अनुभवे भानादनुभवविषयत्वं तयोः । सा वृत्तिः = तादृशी अन्तःकरणवृत्तिः । वृत्तेर्विषयस्य चानुभवविषयत्वमित्यत्र प्रमाणमाह — *तदुक्तमिति । *वृत्तिग्राह्यविषयमिति—वृत्तिश्च ग्राह्यश्च तौ विषयौ यस्य चैतन्यरूपज्ञानस्य तद्वृत्तिग्राह्यविषयम् । तदेव ज्ञानम् = अनुभवात्मकम् । यद्यपि 'अयं घटः' इत्याद्याकारक एवानुभवस्तत्र च वृत्तेर्विषयत्वं न प्रतीयते, तथापि 'घटमहं जानामि' इत्याद्यनुव्यवसाये ज्ञानरूपवृत्तेरपि विषयत्वादनुभवानुव्यवसाययोः समानविषयकत्वनियमेनानुभवस्यापि वृत्तिविषयकत्वमावश्यकम् । तद्विवरणमेव—*ग्राह्यविषयग्रहणेति — ग्राह्यो यो विषयः स च, ग्रहणरूपा या वृत्तिः सा चेत्युभयाकारप्रतिबिम्बवद्यच्चैतन्यं तद् रूपं यस्य तत्, इदम् 'ज्ञानम्' इत्यस्य विशेषणम् । स्वबिम्बाश्रये = अन्तःकरणे ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*तज्जातीयमिति–अनुभवस्य ग्राह्यग्रहणोभयविषयकत्वात्संस्कारोऽपि विषयवृत्त्युभयविषयक एव जायत इति भावः । *स्वाभिव्यञ्जकेति — संस्काराभिव्यञ्जकेत्यर्थः । *स्वसमानेति — स्वसंस्कारसमानाकारा या ग्राह्यग्रहणोभयविषयकस्मृतिस्तज्जनकत्वं संस्कारस्येत्यर्थः । पातञ्जलभाष्याभिप्रायवर्णनमात्रम्, न तु तत्रत्यानुपूर्वीविशिष्टम्। ननु पातञ्जलं सूत्रम् न तु भाष्यमिति मूले–'पातञ्जलभाष्ये' इत्यनुपपन्नमिति चेत्, न, पातञ्जलसूत्रस्य भाष्यमित्यर्थकत्वात्। नन्वनुभवस्मृत्योः समानप्रकारकत्वनियमात् 'अयं घटः' इत्यनुभवस्य विषयप्रकारकज्ञानविशेष्यकत्वेन 'अयं स घटः' इति स्मृतेस्तु विषयविशेष्यकज्ञानप्रकारिकात्वेन समानविषयताकत्वं तयोरिति नियमभङ्ग इति चेत्, न, लाघवात्समानाकारकत्वेनैव कार्यकारणभावात्, प्रकारतानिवेशे गौरवाच्च । तदुक्तमत्रैव योगभाष्ये – "ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिः" ( यो० भा० १।११ ) इति । अत्र पूर्वशब्दो विशेष्यपरः । बुद्धिशब्दोऽनुभवपरः । अत एवोक्तं मूले— 'अनुभव-संस्कार-स्मृतीनां समानाकारकत्वेनैव'इति। नन्वेवं गोत्वविषयकशक्तिज्ञानानन्तरं गोविषयकस्मरणानुपपत्तिरितिचेत्, न, गोविषयकशाब्दबोधं प्रति गोत्वशक्तिज्ञानत्वेनैव कारणत्वात्। एतावतैव जातेर्वाच्यत्वव्यवहारः । *तत्तांश इति–तत्तांशविषयकसंस्कारेत्यर्थः । उद्बोधकाभावात् = संस्कारोद्बोधकाभावात्। तदभानम् = तत्ताया अभानम्। अस्य 'स्मरणे'इति शेषः। दृष्टान्तमाह — *दृश्यत इति । *तत्तद्विषयेति — यश्च तत्तद्विषयविषयकसंस्कारोद्बोधकः स एव तत्ताविषयकसंस्कारोद्बोधकोऽपीति विषयविषयकसंस्कारोद्बोधे तत्तांश ( ज्ञानांश ) विषयकसंस्कारोद्बोधो न स्यादित्यस्य वक्तुमशक्यत्वमिति भावः । स्मृतावनुभूतस्यापि कस्यचिद्भानं न भवतीति तु तत्ताऽतिरिक्तविषये एव । तदाह — *ग्राह्यांशे एवेति — अनुभवविषयघटाद्यंशे एव सः = प्रमोषः । लोके तत्तद्विषयांशविषयकस्मरणाभावस्य दर्शनाद्विषयांशे प्रमोषकल्पना, न तत्तांशे ( वृत्त्यंशे ) इति भावः । न च यद्देशे यत्कालेऽनुभवस्तद्देशतत्कालादेरपि स्मरणं स्यादिति वाच्यम्, देशकालादेरनुभवेऽप्यभानात्। *न च दोषेति — तत्तांशविषयकस्मरणं प्रति कस्यचिद्दोषविशेषस्य प्रतिबन्धकत्वं कल्प्यते इति न वाच्यमित्यर्थः । *न्नियमत इति — यत्र यत्र स्मरणं तत्र तत्र सर्वत्रेत्यर्थः । तादृशदोष-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पने = प्रतिबन्धकदोषकल्पने । ॐगौरवादिति — 'तत्तांशविषयकस्मरणम्प्रति दोषविशेषः प्रतिबन्धकः' इति प्रतिबन्ध्यप्रतिबन्धकभावकल्पनारूपगौरवादित्यर्थः । नन्वक्लृप्तस्य प्रतिबन्धकस्य कल्पने गौरवं स्यान्नतु क्लृप्तस्य, तथा च – यथा चाकचिक्यादिदोषस्य काचादिदोषस्य वा 'इयं शुक्तिः' इत्याकारकप्रमात्मकज्ञानं प्रति प्रतिबन्धकत्वं तथाऽत्रापि तादृशदोषस्यैव प्रतिबन्धकत्वमस्त्विति गौरवाभावोऽत आह — ॐक्लृप्तस्येति । 'तदेवेदं रजतम्' = पूर्वानुभूतरजतत्वविशिष्टमिदमिति भ्रमो न स्यात्, भ्रमजनकदोषस्यैव तत्तांशविषयकस्मरणं प्रति प्रतिबन्धकत्वात्, तस्य च भ्रमस्थले नियमतः सत्त्वादिति भावः ।

मू०— किञ्च, पदजपदार्थज्ञाने 'स्मरामि' इति नानुभवः, 'शाब्दयामि' इत्यनुभवश्च । पदजपदार्थज्ञाने उद्बुद्धशक्तिग्रहजसंस्कारस्य हेतुत्वम्, फलबलात् । यथा तव वाक्यार्थबोधजनकत्वग्रहसंस्कारस्योद्बुद्धस्य वाक्यार्थबोधहेतुत्वम् ।

उपस्थितेः शक्तिसंस्कारजत्वस्य, वाक्ये शक्तिज्ञानप्रकारस्य, शाब्देऽनुभूतिस्मृतित्वाभावस्य च निरूपणम् ।

किञ्च, पदार्थानुभवस्य शक्तिग्रहात्मकतया तत्र च शक्तिविशेषणतयैव तद्भानेन तद्विशेषणकस्मृतिरेव स्यान्न तद्विशेष्यिका त्वदभिमता ।

किञ्च, पदार्थोपस्थितिर्न शाब्दे कारणम्, किन्तु पदज्ञानोद्बुद्धः पदार्थविषय (क) संस्कार एव तत्र कारणम् । स शक्तिविषयोऽपीत्यन्यत् ।

वाक्यशक्तिसत्त्वादेव 'समासग्रहणं वाक्ये प्रातिपदिकसंज्ञाऽतिव्याप्तिवारणार्थम्' इति भाष्यं संगच्छते ।

तत्र केषाञ्चिद्विशिष्यैव तत्तद्वाक्यस्य तत्तद्वाक्यार्थे शक्तिग्रहः । अत एव समुदायतो विशिष्टबोधेऽपि पदविभागसामर्थ्याभावो दृश्यते तेषाम् ।

एतेन विशिष्टशक्तिग्रहे पदशक्तिग्रहः कारणमित्यपास्तम् । कस्यचित्कारकत्वादि जानतः कारकपदधातुघटितपदयोर्विशिष्टयोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारकविशिष्टक्रियाशक्तत्वमिति सामान्यत एव, ततः पदविशेषसमभिव्याहारज्ञाने सति तात्पर्यवशात्पदार्थविशेषविशिष्टक्रियाबोधः । सामान्यशक्तिग्रहोऽपि तत्तत्पदार्थनिष्ठप्रकारतानिरूपिता, तत्तत्संसर्गनिरूपिता, या तत्तत्पदार्थनिष्ठविशेष्यता तद्वत्यर्थे समुदायः शक्त इत्येवं विशेष्यविशेषणभावापन्नेऽर्थे एवेति न विपरीतो विशेष्यविशेषणभावः ।

( रत्न० )—"एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्" इति तार्किकमतं खण्डयति—*किञ्चेति । ननु पदार्थोपस्थितेः स्मृतित्वाभावे तां प्रति कारणान्तरकल्पनाऽऽपत्तिरत आह—*पदजेति—पदजपदार्थज्ञानम् = उपस्थितिः, ताम्प्रत्युद्बुद्धो यः शक्तिग्रहजः संस्कारस्तस्य हेतुत्वमित्यर्थः । ननु शक्तिग्रहजसंस्कारेण शक्तेरेव ज्ञानं स्यान्नतु पदार्थस्येति चेत्, अत्राह—*फलबलादिति—'कार्यानुसारेण कारणकल्पना' इति न्यायादिति भावः । तत्र दृष्टान्तमाह—*यथेति । तव = नैयायिकस्य । *वाक्यार्थेति—वाक्यार्थबोधजनकत्वग्रहजन्यो य उद्बुद्धः संस्कारस्तस्य वाक्यार्थबोधे हेतुत्वं यथा, तथा पदार्थबोधजनकत्वज्ञानजन्यसंस्कारस्य पदजपदार्थज्ञाने हेतुत्वमिति भावः । तस्याः स्मृतित्वे दोषान्तरमाह—*किञ्चेति । *पदार्थानुभवस्येति—यादृशो हि अनुभवस्तादृश्येव स्मृतिः, तथा च–पदार्थस्मृतिकारणस्यानुभवस्य 'घटपदस्य घटे शक्तिः' इति शक्तिज्ञानस्वरूपतया तत्र चार्थस्य विशेषणतयैव भानात् स्मृतिरपि घटाद्यर्थविशेषणिका शक्तिविशेष्यिकैव स्यान्न तु घटार्थविशेष्यिकेति भावः । शाब्दबोधं प्रति उपस्थितेः कारणत्वमेव खण्डयति—*किञ्चेति । *पदार्थविषयसंस्कारेति—पदार्थविषयकः शक्तिज्ञानात्मको यो हि अनुभवस्तज्जन्यसंस्कार एव शाब्दबोधं प्रति कारणम् । सः = संस्कारः । *शक्तिविषय इति—अनुभवस्य शक्तिविषयकत्वेन तज्जन्यसंस्कारोऽपि शक्तिविषय इति भावः । *अन्यदिति–पदार्थोपस्थितेः स्मृतित्वाभावेन संस्कारसमानविषयकत्वं तस्या वक्तुमशक्यमिति भावः । यत्तु कुञ्जिकाकाराः—"न शाब्दे कारणमिति—अन्यथाऽवान्तरबोधकाले पदार्थस्मरणस्य नष्टत्वान्महावाक्यार्थबोधो न स्यात् । मम तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्कारस्य सत्त्वाददोषः । अवान्तरस्मरणंतु न संस्कारनाशकम् , अत एव पुनः पुनः स्मरणाद्दृढतरसंस्कार इति तत्सिद्धान्तः" इति । तत्रावान्तर-स्मरणन्तु न संस्कारनाशकमिति शङ्का-समाधाने चिन्त्ये, उपस्थितेः स्मृतित्वस्य खण्डितत्वात् । 'सिंहावलोकन' न्यायेन वाक्यशक्तौ मानान्तरं दर्शयति — *वाक्यशक्तीति । *इति भाष्यमिति — इत्यर्थकं भाष्यमित्यर्थः । "अर्थवत्समुदायानां समासग्रहणं नियमार्थम्" इति हि अर्थवत्सूत्रे ( पा० सू० १।२।४५ ) भाष्यम् । तत्र = वाक्ये । केषाञ्चित् = क्रियाकारकविभागज्ञानरहितानाम् । *विशिष्यैवेति— अस्यैवार्थः—तत्तद्वाक्येति । *अत एवेति— समुदितस्य समुदित-रूपेण समुदितार्थनिरूपितशक्तिज्ञानादेवेत्यर्थः । तेषाम् = क्रियाकारका-दिज्ञानरहितानाम् । *एतेनेति — वाक्यशक्त्या वाक्यार्थबोधेऽपि व्या-करणव्युत्पत्तिं विना पदादिविभागे शक्तेरभावस्यानुभवसिद्धत्वेनेत्यर्थः । विशिष्टशक्तिग्रहे = वाक्यशक्तिज्ञाने । *अपास्तमिति — प्रत्येकपदशक्ति-ज्ञानाभावे वाक्यशक्तिज्ञानेन बोधात् प्रत्येकपदशक्तिज्ञानसत्त्वेऽपि अपूर्व-वाक्यश्रवणे बोधस्यादर्शनात्, 'हरेऽव' इत्यादौ व्यभिचाराच्चेति भावः । कस्यचित् = कारकत्वादि जानतः, अस्य 'शक्तिग्रहः' इत्यनुकृष्यान्वयः कार्यः । सामान्यतः = सामान्यरूपेणैव । विशेषाविषयकसामान्यबुद्ध्य-भावादाह — *ततः पदविशेषेति । क्रियाबोधः = क्रियाविशेषबोधः । ननु क्रियाविशिष्टकारकशक्तत्वेन कारकविशिष्टक्रियाशक्तत्वेन च सामा-न्यतः शक्तिज्ञानस्य सम्भवेन विशेष्यविशेषणव्यत्यासेनापि शक्तिज्ञानं स्यादत आह — *सामान्यशक्तिग्रहोऽपीति । *प्रकारतानिरूपितेति — अस्य विशेष्यतायामन्वयः । *संसर्गेति — अस्यापि तत्रैवान्वयः । *विपरीत इति —शक्तिज्ञानापेक्षयेति भावः ।

मू०—यत्तु-सर्वस्य सामान्यतः शक्तिग्रह एव बोधक इति, तन्न, कारकत्वधातुत्वाद्यजानतस्तथाशक्तिग्रहासम्भवात् ।

एतेन प्रातिपदिकार्थप्रकारकशाब्दबोधे तदर्थकपदोत्तरसार्थक-प्रत्यय - तदर्थबोधकपद-निपातान्यतमजन्योपस्थितिर्हेतुरित्याद्यपास्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

म्। 'कर्मत्वं घटः' 'अम् घटः' इत्येतत्समभिव्याहारव्युत्पन्नानां ततस्तथाबोधे व्यभिचाराच्च ।

न च 'स्वाव्यवहितोत्तरोत्पत्तिकत्व–स्वसामानाधिकरण्योभयसम्बन्धेन तत्तद्व्युत्पत्तिविशिष्टबोधे तत्तद्व्युत्पत्तिः कारणम्' इति न दोष इति वाच्यम्, अनन्तकार्यकारणभावापत्तेः ।

यत्तु-वाक्यशक्त्यङ्गीकारे पदार्थानामिव वाक्यार्थस्यापि स्मरणमेव स्यान्नत्वनुभवः, सम्बन्धिज्ञानतयैव पदज्ञानवत् तदुपयोगादिति, तन्न, पदार्थानामपि स्मरणाभावस्योपपादनात्। किञ्च, वाक्यार्थप्रतीतेर्नानुभवत्वम्, स्वर्गनरकादिकं शृण्वतः 'तदनुभवामि' इत्यप्रतीतेः । तस्माच्छाब्दत्वं ज्ञानत्वव्याप्यजातिविशेष एव, नानुभवत्वव्याप्यमित्यलम् ।

(रत्न०)— *सर्वस्येति — कारकत्वादि जानतोऽजानतो वेत्यर्थः । एतेन = प्रातिपदिकत्वाद्यजानतस्तथाशक्तिज्ञानासम्भवेन । *तदर्थकेति – प्रातिपदिकार्थार्थकेत्यर्थः । तथा च — प्रातिपदिकार्थार्थकं यत्पदं तदुत्तरं यत् सार्थकप्रत्यय-तदर्थ ( प्रातिपदिकार्थार्थ ) बोधकपद-निपातैतदन्यतमं यत्तज्जन्या या उपस्थितिः, सा हेतुरित्यर्थः । यथा — 'घटं करोति' इत्यत्र घटरूपप्रातिपदिकार्थार्थकपदोत्तरत्वविशिष्टः कर्मत्वबोधकाम्प्रत्ययः । यथा वा 'घटजलम्' इत्यत्र प्रातिपदिकार्थार्थकपदोत्तरत्वविशिष्टं तादृशं जलपदम्। यथा वा 'तदिव' इत्यत्र तत्पदोत्तरम् 'इव' इति निपातरूपम् । आदिना — 'प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रत्ययजन्योपस्थितिः कारणम्' इति कार्यकारणभावादिपरिग्रहः । 'घटः कर्मत्वम्' इत्यतः विपरीतव्युत्पन्नस्य तथा बोधाव्यभिचारवारणाय तदर्थबोधकपदेत्युक्तम् । नन्वेवमपि पटलाक्षणिकघटपदघटितवाक्याद् घटबोधवारणाय तदर्थबोधकेत्यत्र बोधे फलोपहितत्वं निवेश्यम्, एवञ्च परस्पराश्रयत्वात् तादृशकार्यकारणभावासम्भव इति चेत्, न, तत्र घटस्य वृत्तिज्ञानजन्योपस्थित्यभावादेव तथा बोधस्य वक्तुमशक्यतया स्वरूपयोग्यत्वनिवेशेऽपि क्षतिविरहात् । *अपास्तमिति — प्रातिपदिकत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रत्ययत्व-पदत्व-निपातत्वान्यजानतो बोधानापत्तेरित्यर्थः । ॐव्युत्पन्नानामिति—'कर्मत्वं घटः' इति वाक्यं घटनिष्ठं कर्मत्वमित्येतदर्थबोधकमित्येतत्समभिव्याहारज्ञानवतामित्यर्थः । ततः = 'कर्मत्वं घटः' 'अम् घटः' इति वाक्याद् बोधो जायते, उक्तकार्यकारणभावस्वीकारे तु न स्यात्, तादृशकार्यकारणभावलक्षणानाक्रान्तत्वादिति भावः । प्रातिपदिकार्थेत्याद्युक्तकार्यकारणभावे पूर्वोक्तं व्यभिचारं वारयितुमाह—ॐ न चेति—अयम्भावः—यत्र यत्र यया व्युत्पत्त्या बोधश्चिकीर्षितस्तादृशव्युत्पत्तिविशिष्टबोधं प्रत्येव तादृशव्युत्पत्तेः कारणत्वम् । तथा च—'कर्मत्वं घटः' इति व्युत्पत्त्या बोधस्थले मूलोक्तसम्बन्धद्वयेन प्रातिपदिकार्थेत्यादिव्युत्पत्तिविशिष्टबोधाभावान्नास्ति व्यभिचार इति भावः । तत्तद्व्युत्पत्त्या चिरकालानन्तरं बोधवारणायाद्यः सम्बन्धः । अन्यस्य व्युत्पत्तिमादायान्यस्य बोधवारणाय द्वितीयः सम्बन्धः । ॐसम्बन्धिज्ञानेति—'एकसम्बन्धिज्ञानम्' इति न्यायाभिप्रायेणेदम् । ॐपदज्ञानवदिति—यथा पदज्ञानेन पदार्थस्मरणं तथा वाक्यज्ञानेन वाक्यार्थस्मरणं स्यादिति भावः । तदुपयोगात् = वाक्यशक्त्युपयोगात् । ॐपदार्थानामिति – पदार्थोपस्थितीनामित्यर्थः । यदुक्तम्—'नत्वनुभवः' इति, तत्साधयति—ॐकिञ्चेति । ॐशृण्वत इति–पुरुषस्येति शेषः । तद् = स्वर्गनरकादिकम् ।ॐ अनुभवामीति—अनुव्यवसायस्यैव ज्ञानस्वरूपनिर्णायकत्वात् प्रकृते 'अनुभवामि' इत्यनुव्यवसायाभावान्नानुभवत्वमिति भावः । तदेतदाह—ॐतस्मादिति—नानुभवत्वं नापि स्मृतित्वं तत्रेति भावः ।

मू०—तत्र सम्बन्धस्य सम्बन्धिद्वयनिरूपितत्वेनैव बोधाद्वाक्यतो न पृथक् तद्बोधः ।

तदुक्तं हरिणा—

"नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वात् षष्ठ्येवास्य तु वाचिका ॥" इति ।
( वाक्यप० कां० ३ समु० ३ कारि० ४ )

षष्ठ्येव सम्बन्धस्य वाचिका, नतु सम्बन्धशब्दादीति तदर्थः । अभिधानम् = पदम् । सम्बन्धिनोः संघटनस्वभावत्वेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यपरतन्त्रत्वात् । षष्ठीपदं विभक्तीनां वाक्यस्य चोपलक्षणम् । पदानां तु पृथक् स्वार्थबोधकत्वमपि ।

यत्तु मीमांसकैकदेशिनः—वाक्यार्थे वाक्यस्य लक्षणा इति, तन्न, वाक्यबोध्यान्वयस्य सम्बन्धरूपत्वेन तत्र वाक्यबोध्यस्य सम्बन्धस्य पदार्थस्य वा सम्बन्धग्रहाननुभवेन वाक्यबोध्यनिरूपितसम्बन्धमूलिकायास्तद्रूपाया वा तस्या असम्भवात्, अनुपपत्तिप्रतिसन्धानं विनाऽपि तद्बोधेन तदप्रसराच्च । न च तात्पर्यविषयीभूतवाक्यार्थानुपपत्तिस्तद्बीजम्, नियमतः पूर्वं तात्पर्यज्ञानस्यापि कल्पनाऽपेक्षया शक्तिकल्पनस्यैवौचित्यात् ।

"न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः ।"

( श्लोकवा० वाक्याधि० ७ श्लो० २२९ )

इति पूर्वार्धोक्तेऽर्थे हेतुत्वेनोपन्यस्तायाम्—

"वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते ।"

इति भट्टकारिकायाम् 'लक्ष्यमाणः' इत्यस्य प्रतीयमान इत्यर्थः । 'दृश्यते' इत्यस्य प्रतीतिविषयत्वेनानुभूयत इत्यर्थः ।

"सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितिः ।"

इति पाठे 'लक्ष्यः' इत्यस्य प्रतीतिविषय इत्यर्थकस्य 'अस्ति' इति शेषः । सर्वत्रैव हि वाक्यार्थः प्रतीयमानोऽस्त्येवेति स्थितिर्वक्ष्यमाणरीत्या वाक्यैकदेशन्यायेनेत्यर्थः । अत एव केवलपदप्रयोगेऽपीत्यर्थकम् 'सर्वत्रैव' इति सार्थकमित्याहुः ।

(रत्न०)—ननु पदार्थसंसर्गस्यैव वाक्यार्थतया पदार्थानाञ्च तत्तत्पदलभ्यत्वेन तन्निरूपितवाक्यशक्तेरभावाद्वाक्येन केवलसम्बन्धबोधापत्तिरत आह—*तत्रेति—वाक्यविषये इत्यर्थः । *न पृथगिति—सम्बन्धस्य सम्बन्धिपरतन्त्रत्वेन सम्बन्धिनमपहाय केवलसम्बन्धभानं नेत्यर्थः । *नाभिधानमिति—स्वधर्मेण = स्वासाधारणधर्मेणोपलक्षितस्य सम्बन्धस्याभिधानं षष्ठीव्यतिरिक्तं नास्ति । यद्यपि द्रव्याधीना अपि गुण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रियादयो गुणक्रियादिशब्देनोच्यन्ते, तथापि सम्बन्धस्त्वत्यन्तपरतन्त्रः । अस्य सम्बन्धस्य षष्ठी एव वाचिका नान्यः कश्चन् शब्दः । इदमेवात्रात्यन्तपरतन्त्रत्वं यत्प्रातिपदिकावाच्यत्वमिति । अभिधीयतेऽनेनेत्यभिधानं करणे 'ल्युट्' तदाह — *पदमिति । *सम्बन्धिनोरिति — सम्बन्धिनोः = सम्बन्धिद्वयस्य यत्संघटनं सम्मेलनं तत्स्वभावत्वात्सम्बन्धस्य नित्यपरतन्त्रत्वादित्यर्थः । † *उपलक्षणमिति — विभक्त्या वाक्येन च सम्बन्धस्य स्वधर्मेण भानसम्भवादिति भावः । षष्ठ्यर्थे विहितविभक्तय एव सम्बन्धार्थिका, नान्या इति कश्चित् । *पृथगिति — वाक्यार्थसम्बन्धमन्तरेत्यर्थः । 'तुना' वाक्यस्य पदार्थं विना स्वार्थसंसर्गबोधकत्वं सूचितम् । वाक्यघटकपदानां स्वार्थमात्रे शक्तिः, स्वार्थविशिष्टसंसर्गस्तु लक्षणया बोध्य इति भावः । *तन्नेति — अयं भावः — 'शक्यसम्बन्धः' 'शक्यताऽवच्छेदकारोपः' एव वा लक्षणा । तथा च — वाक्यशक्यो यदि अन्वयस्तर्हि शक्यार्थान्वयेनैव बोधसिद्धौ लक्षणा व्यर्था । न च

---

† वाक्यपदीये तु —

"अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते ।
योगः शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते ॥"

( वाक्यप० कां० ३ समुद्दे० ३ कारि० ३ )

इत्यनेन शब्दार्थयोः सम्बन्धमभेदव्यवहारञ्चोपपाद्य सम्बन्धस्य स्वरूपनिवेशिलक्षणं किम् ? इत्याकाङ्क्षायामुक्तम् —

"नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वाद् रूपं नास्यापदिश्यते ॥"

( वाक्यप० कां० ३ समुद्दे० ३ कारि० ४ ) इति ।

अत्र पुण्यराजः — "इह पदार्थानां स्वरूपमवधार्य तदनुगामिशब्दनिवेशेन तल्लक्षणं क्रियते । तत्र स्वेनासाधारणेन धर्मेण स्वभावेनोपलक्षितस्य सम्बन्धस्य वाचकं प्रत्यायनमभिधानं षष्ठीव्यतिरिक्तं नास्ति, इदन्तया स्वरूपानवधारणात् । गुणा द्रव्याधीना अपि प्राधान्येन शुक्लादिशब्देन कदाचिदुच्यन्ते, नैवं सम्बन्ध इत्यत्यन्तग्रहणम् । नित्यपरतन्त्रो हि सम्बन्धः परोपाधिस्वरूपसम्बन्धिनोः परस्परौन्मुख्यस्वभावो धर्ममात्रलक्षणः । ततो निष्क्रियसम्बन्धशब्देन स्वप्रधानः सम्बन्धिरूपतयाऽभिधीयमानो न साक्षात्स्प्रष्टुं शक्यते, इत्यसंविज्ञातपदः कार्यैकगम्यः" इत्युक्तवान् । एवञ्च "षष्ठ्येवास्य तु वाचिका" इति पाठानुसारेण व्याख्यानं चिन्त्यम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यार्थसम्बन्धसम्बन्धो लक्ष्यः, तस्य शाब्दबोधेऽभानात् । अथ यदि पदार्था एव वाक्यबोध्यास्तदा तेषामपि सम्बन्धग्रहो नानुभवसिद्धस्तथा च वाक्यार्थसंसर्गोऽलक्ष्य एवेति । *पदार्थस्येति — अत्रापि 'वाक्यबोध्यस्य' इति सम्बध्यते । *सम्बन्धग्रहेति — वाक्यबोध्यसम्बन्धस्य वाक्यबोध्यपदार्थस्य ( पदार्थसमुदायस्य ) वा यः सम्बन्धस्तस्य भानाननुभवेनेत्यर्थः । *सम्बन्धमूलिकाया इति — स्वबोध्यसम्बन्धज्ञानजन्योपस्थितिरूपाया इत्यर्थः । *तद्रूपाया वेति — स्वबोध्यसम्बन्धरूपाया वेत्यर्थः । लक्षणायां मतभेदस्योक्तत्वात् भेदद्वयस्योपादानम् । तस्याः = लक्षणायाः । तद्बोधेन = अन्वयबोधेन । तदप्रसरात् = लक्षणायाः अप्रवृत्तेः । *तात्पर्यज्ञानस्यापीति — 'अपिना'-शक्तेः संग्रहः, तात्पर्यस्यानियतत्वेन शक्तेरावश्यकत्वात् । ननु श्लोकवार्तिके — "न विमुञ्चन्ति" इति कारिकायाम् 'लक्ष्यमाणः' इत्युक्त्या भट्टानामपि लक्षणासम्मतत्वात् 'एकदेशिनः' इत्युक्तिरसङ्गतैवेत्यत आह — *न विमुञ्चन्तीति । ननु 'लक्ष्यमाणः' इत्यस्य प्रतीयमानार्थकतया 'दृश्यते' इत्यसङ्गतमत आह — *दृश्यते इत्यस्येति । पाठान्तरं स्वमते सङ्गमति — *इति पाठे इति । *इत्यर्थकस्येति — 'लक्ष्यः' इत्यस्येत्यर्थः । शेषपूरणेन वाक्यार्थमाह — *सर्वत्रैवेति । *वाक्यैकदेशन्यायेनेति – यथा 'गृहम्' इत्यस्य 'गृहं प्रविश' इत्यर्थकत्वम् । *अत एवेति — अस्यैवार्थस्य भट्टसम्मतत्वादेवेत्यर्थः । *केवलपदेति — एकपदेत्यर्थः ।

मू०—यत्तु-पदानामेवान्विते शक्तिः, पदैरेव तदर्थप्रतीत्युपपत्तौ वाक्येऽपि शक्तिकल्पने मानाभावात् । तदुक्तम् — 'एवं हि सम्बन्धग्रहणम्, अयमर्थोऽनेन शब्देनाकाङ्क्षितसन्निहितयोग्येतरान्वितः सन्नभिधीयते' इति ।

भट्टपादाभिमतान्विताभिधानखण्डनम् ।

पदानां सामान्यत इतरान्विते शक्तावपि विशेषाविषयसामान्यबुद्ध्यभावात्समभिव्याहारविशेषकारणत्वरूपाकाङ्क्षाज्ञानबलात् तत्तत्पदार्थविशेषनिरूपितान्वयविशेषबोधसिद्धिः । अत एव पदप्रयोगेऽप्यन्वयविशेषजिज्ञासोपपत्तिः, तस्या अन्वयसामान्यज्ञानपूर्वकत्वनियमात् । विशेषतः पदार्थान्तरघटितस्य तदन्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यविशेषरूपवाक्यार्थस्य प्रागनुपस्थितावपि अन्वितत्वादिसामान्यधर्मप्रकारेणोपस्थिते शक्तिग्रहः सुलभः ।

इतरान्विते शक्तिरिति तु न युक्तम्, इतरस्य पदान्तरलभ्यत्वात् । पदान्तरसमभिव्याहारे एव तच्छक्त्युद्बोध इति 'घटः' इत्येतन्मात्रान्नान्वयधीः । ततो घटमात्रबोधस्तु शक्तिभ्रमात् । विशिष्टविषयायाः शक्तेस्तन्मात्रविषयत्वमपीति भ्रमः ।

यद्वा, पदैकदेशन्यायेन विशिष्टे एकदेशे च पदानां शक्तिग्रह इत्यदोषः ।

एतेन कार्यान्विते शक्तिः पदानामित्यपास्तम्, कार्यस्यापि लिङादिलभ्यत्वात्, लिङादिसमभिव्याहार एव तद्बोधानुभवात्, आनयनाद्यर्थकपदसमभिव्याहार एवानयनादिबोधवदिति ।

तन्न, अन्वये शक्तिस्वीकारेऽपि विशेषबोधाय समभिव्याहारस्य तद्बोधकारणत्वस्वीकारे, तथा कारणत्वाग्रहवतो बोधवारणाय तद्ग्रहस्यापि कारणत्वस्वीकारे, समभिव्याहारे तदसम्बद्धे तद्बोधजनकत्वानुपपत्त्या समभिव्याहारेऽपि तत्सम्बन्धाङ्गीकारे, विपरीतगौरवापत्तेः, अन्यलभ्यत्वरूपतर्केण कार्यत्वाद्यंशत्यागवदेतत्त्यागस्याप्यौचित्याच्च ।

(रत्न०)—भट्टमते—पदानां जातिरेव शक्या, व्यक्तेस्त्वाक्षेपादेव बोधः, अन्वयस्य तु आक्षेपेणालभ्यतया तत्रापि पदानां शक्तिः, तथा च जातावन्वये च शक्तिरिति सिद्धम्, तद्दूषयति—*यत्त्विति । *मानाभावादिति—'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादिति भावः । नन्वन्वयविशिष्टार्थे पदानां शक्तौ सर्वत्रैवान्वयप्रतीतिः स्यादिति, चेत्, न, अन्वयविषयकशाब्दबोधे तत्तदानुपूर्वीज्ञानस्य हेतुत्वात् । अन्वयस्य वाक्यार्थत्वस्वीकर्तृनयेऽन्वयविशेषभानाय तत्तदानुपूर्वीज्ञानहेतुताया आवश्यकत्ववत् । 'गौरश्वः' इत्यादिनिराकाङ्क्षस्य व्यावृत्तये *आकाङ्क्षितेति, इदानीमुच्चारितस्य दिनान्तरोच्चारितेनान्वयवारणाय *सन्निहितेति, 'वह्निना सिञ्चति' इत्यादिवारणाय *योग्येति । *सामान्यत इति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतरपदार्थत्वेनेत्यर्थः । नन्वेवमन्वयविशेषस्य शाब्दत्वानापत्तिः, शक्तिज्ञान-शाब्दबोधयोः समानप्रकारताकत्वनियमादत आह—*विशेषाविषयेति—सामान्यबुद्धेरपि स्वरूपतो विशेषपदार्थ एव विषयः, 'नहि निर्विशेषा बुद्धिः सामान्यमवगाहते' इति न्यायात् । ननु सामान्यबुद्धेर्वस्तुतो विशे-षावगाहनेऽपि विशेषधर्मप्रकारकत्वेन तद्भानासिद्धिरत आह—*सम-भिव्याहारविशेषेति । *बोधसिद्धिरिति—तत्तदन्वयबोधे समभिव्याहारविशे-षस्य कारणत्वस्वीकारेण 'पदानामन्विते शक्तौ घटादिपदशक्तिम् 'घटमा-नय' इत्यानुपूर्वीञ्च जानतः प्रागुक्तकार्यकारणभावमजानतोऽपि घटपदाद् 'घटकर्मकमानयनम्' इति बोधापत्तिः । किञ्च, विनिगमनाविरहेण विशे-ष्यविशेषणभावनियमस्य वक्तुमशक्यतया सामान्यतः शक्त्या 'घटमानय' इत्यनेन 'इतरान्वितो घटः' 'इतरान्वितं कर्मत्वम्' 'इतरान्वितमानयनम्' 'इतरान्विता कृतिः' इत्येवं चतुष्पञ्चादिबोधापत्तिः । किञ्च, 'घटः' 'कर्मत्वम्' 'कृतिः' इत्यतोऽपि 'अन्वितो घटः' 'इतरान्वितं कर्मत्वम्' इत्यादिबोधा-तिप्रसङ्गश्च' इत्युक्तिर्निरस्ता । *अत एवेति—पदानां सामान्यरूपेणा-न्वये शक्तिस्वीकारादेवेत्यर्थः । *पदप्रयोगेति—एकपदप्रयोग इत्यर्थः । *जिज्ञासेति—'अस्यान्वयी कः' इत्येवंरूपेण जिज्ञासेत्यर्थः । तस्याः = विशेषजिज्ञासायाः । *नियमादिति—'या या विशेषजिज्ञासा सा सा सामान्यज्ञानपूर्विका' इत्येवंरूपनियमादित्यर्थः । ननु पदान्तरासमभि-व्याहारदशायामन्वयविशेषरूपवाक्यार्थस्य शाब्दबोधात् प्रागनुपस्थितेः कथं तत्र शक्तिग्रहोऽत आह—*विशेषत इति । *इतरान्वित इति—घटादिपदस्य घटे, तत्सम्बन्धे, सम्बन्धानुयोगिनि च शक्तिरिति भावः । इतरस्य = सम्बन्धानुयोगिन आनयनादेः । नन्वन्विते शक्तौ घटादिपद-मात्रादन्वयबोधापत्तिरत आह—*पदान्तरेति । ननु पदान्तरसमभिव्या-हारेऽन्वयविशेषबोधस्य नियतत्वेऽपि सामान्यतोऽन्वयविशिष्टस्यैव बोधः स्यात्, न केवलघटस्येत्यत आह—*ततो घटमात्रेति । ननु तदभाव-वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकज्ञानस्य भ्रमत्वात्प्रकृते तदनुप-पत्तिरत आह—*विशिष्टविषयाया इति—घटपटोभयवति भूतले 'घटमात्रवद्भूतलम्' इति ज्ञानस्य यथा भ्रमत्वम्, तथा अन्वयविशिष्टघट-निरूपितशक्तिमति घटपदे 'घटमात्रनिरूपितशक्तिमद् घटपदम्' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञानस्यापि भ्रमत्वम्, उभयनिरूपितशक्तिमति घटपदे घटमात्रनिरूपितशक्त्यभावस्य सत्त्वेन घटमात्रनिरूपितशक्त्यभाववद् घटपदनिष्ठविशेष्यतानिरूपितघटमात्रनिरूपितशक्तिनिष्ठप्रकारताकत्वसत्त्वाद् । प्रकारान्तरेणान्विताभिधानवादे घटमात्रबोधमुपपादयति — ❀यद्वेति । ❀पदैकदेशन्यायेनेति — यथा भीमपदेन भीमत्वरूपानुपूर्व्यवच्छिन्नस्य भीमसेनत्वरूपानुपूर्व्यवच्छिन्नस्यापि बोधो जायते, अत एव 'नामैकदेश' न्यायेन 'नाममात्रग्रहणम्' इति प्रवादः, तथा विशिष्टार्थनिरूपिता, एकदेशार्थनिरूपिता च पदे शक्तिरिति घटमात्रबोधस्तादृशशक्त्या सूपपादः । न चानेकशक्तिकत्वापत्तिः, 'एकवृन्तगतफलद्वय' न्यायेन शक्तेरैक्यात्, शक्यताऽवच्छेदकताभेदेन शक्तिभेदस्वीकाराच्च । प्रकृते शक्यताऽवच्छेदकभेदेऽपि अन्वयत्व-घटत्वोभयपर्याप्ताया एकस्या एवावच्छेदकतायाः स्वीकारात् । गुरुमतं निराकरोति — ❀एतेनेति — इतरस्य सम्बन्धानुयोगिनः पदाशक्यत्वनिरासेनेत्यर्थः । ❀कार्यान्वित इति — कार्यत्वम् = कृतिसाध्यत्वम्, तद्विशिष्टे आनयनाद्यन्वित इत्यर्थः । अयं भावः — प्रयोज्यवृद्ध-प्रयोजकवृद्धयोर्व्यवहारदर्शनस्यैव मुख्यशक्तिग्राहकत्वात्तत्र च विधिबोधकलिङ्-लोट्-तव्यदाद्यन्तस्यैव प्रयोगदर्शनेन लिङादीनाञ्च कार्यार्थतया ( विध्यर्थकतया ) कार्यान्विते एव घटादिपदानां शक्तिः स्यात् । न च कार्यतावाचकलिङादीनां कार्यत्वान्वितस्वार्थवाचकत्वानुपपत्तिः, स्वस्मिन् स्वान्वयाभावादिति वाच्यम्, लिङादीतरपदानामेव कार्यान्वितार्थवाचकत्वात्, लिङाद्यर्थकार्येतरपदार्थानामेव कार्यान्वयित्वेन वृद्धव्यवहारविषयत्वात्। एवञ्च लिङादिविषये एव शाब्दबोधः स्यात्, तेषामेव प्रवृत्त्यादिजनकत्वात् । वैदिकानामर्थवादवाक्यानां तु तूष्णीम्भाव एव स्यादित्याह — ❀अपास्तमिति । गुरुमते — पदानां कार्यान्विते शक्तिः, भट्टपादमते — इतरपदार्थान्विते शक्तिरिति विशेषः । ❀ लिङादिलभ्यत्वादिति — तन्मते कार्यत्वस्यैव विधित्वात्, 'घटमानय' इत्यादिना 'घटानयनं मत्कार्यम्' इति बोधात् । न च लिङाद्यसमभिव्याहारे कार्यत्वबोधाय कार्यान्विते शक्तिरत आह — ❀लिङादिसमभिव्याहारे इति । 'अन्विते पदानां शक्तिः' इति मतं खण्डयति — ❀तत्रेति । ❀अन्वय इति — पदानां सामान्यतोऽन्वये शक्तिस्वीकारेऽपि विशेषरूपेण (कर्मतानिरूपक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वादिना ) अन्वयबोधाय 'अन्वयविशेषविषयकबोधं प्रति आनयादिपदसमभिव्याहारः कारणम्' इत्येवंरूपेण समभिव्याहारस्य कारणत्वं वाच्यम्। किञ्चान्वयविशेषबोधं प्रति नहि स्वरूपतः तत्तत्समभिव्याहारस्य कारणत्वम्, आनयादिपदसत्त्वेऽपि तदश्रृण्वतो बोधादर्शनात्। तद्ग्रहस्य = समभिव्याहारगतकारणत्वज्ञानस्य कारणत्वं कल्पनीयम्, कार्येणासम्बद्धे कारणे कार्यानुत्पाददर्शनात्, अन्वयबोधरूपकार्येण सहान्वयबोधरूपकार्यानुपपत्त्या तत्तत्समभिव्याहारस्य बोधजनकतोपपादकः कश्चन सम्बन्धः कल्प्यः, इत्यनेकविधाक्लृप्तकारणकल्पनाऽपेक्षयाऽन्वयांशनिरूपितशक्तेर्वाक्ये एव कल्पनायां लाघवमिति। *औचित्यादिति—यथा लिङादिलभ्यत्वान्नहि कार्यत्वांशे शक्तिः पदानाम्, तथाऽन्वयस्य वाक्यलभ्यत्वात्तदंशनिरूपिताऽपि शक्तिस्तत्रैवेत्यौचित्यमिति भावः।

मू०—न चोपजीव्यविरोधः, उपजीव्यत्वे मानाभावात्। दैवाद्धि प्रथमं तद् वृत्तम्, न तु पदशक्तिग्रहे तस्य हेतुत्वम्, मातापित्रादिभिः 'चन्द्रः' 'गौः' इत्यादिशब्देषु चन्द्राद्यभिमुखाङ्गुलीदर्शनपूर्वकमुच्चार्यमाणेषु बालस्याद्यशक्तिग्रहे व्यभिचारात्।

यत्र त्वनन्यथासिद्धतयोपजीव्यत्वं सिद्धम्, यथा — यागस्य स्वर्गजनकतानिर्वाहाय कल्पितेऽपूर्वे, तत्र तदेव कारणमस्तु न यागः, इति शङ्कायां स दूषणम्, न चैवं प्रकृते। न च प्राथमिकत्वेन बलवत्त्वात्तेन †पश्चात्तनस्य बाधः। यथा—'दर्पणे चैत्रमुखं नास्ति' इति पूर्वप्रत्यक्षेण चैत्रमुखसन्निधानान्तरभाविनो दर्पणे चैत्रमुखप्रत्यक्षस्य भ्रमत्वकल्पनमिति वाच्यम्, 'इदं रजतम्' इति

† अत्र "दक्षिणापश्चात्पुरसस्त्यक्" ( पा० सू० ४।२।९८ ) इति विशेषविहितेन त्यका ट्युट्युलोर्बाधस्यौचित्यात्पाश्चात्यस्येति भाव्यम्। न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ परत्वाद् बाधेते, इति वाच्यम्, "सायं चिरम्" ( पा० सू० ४।३।२३ ) इति सूत्रे "अग्रादिपश्चाड्डिमच्" इति वार्तिकविहितेन डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वात्। यद्वा पश्चात्तनोति गमनादिनेति पश्चात्तनः पचाद्यचि कथञ्चित्समाधेयम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहस्य पाश्चात्येन 'नेदं रजतम्' इति ग्रहेण बाधात् । न च सर्वैः प्रथमं प्रतीयमानत्वेन बलवत्त्वम्, सर्वेषां शरीरात्मप्रत्यये चन्द्र-ताराऽल्पत्वप्रत्यये च व्यभिचारात्, उक्ते मात्रादिनिर्दिष्टचन्द्रादौ बालीयाद्यशक्तिग्रहे व्यभिचाराच्च । तस्माल्लोके प्रवृत्तिसंवादादिना, वेदे तदर्थनिर्णायकन्यायेन यद्बलवत् तद्बाधकम्, इतरद्बाध्यमिति व्यवस्था । तत्र परेण पूर्वस्य भ्रमत्वप्रत्यायनमेव बाधः । पूर्वेण तु परस्य सोपाधिकज्ञानस्थले भ्रमत्वप्रत्यायनम् । क्वचित्तूत्पत्तिप्रति-बन्धः । यथा--श्रौतविनियोगेन लैङ्गिकस्य तस्य बाधः । जिज्ञा-साऽपि फलविशेषदर्शने रसविशेषजिज्ञासावदुपपन्ना ।

ननु तद्वदेव तद्यत्रापि जिज्ञासानियमो न स्यादिति चेत्, इष्टापत्तेः । न च 'अनयोः संसर्गविशेषज्ञानं भवतु' इतीच्छायां तादृशज्ञानधार्मिकेष्टसाधनताज्ञानस्य हेतुत्वेन तद्घटकतया विशेष-ज्ञानस्यापि सिद्ध्या जिज्ञासोच्छेद इति वाच्यम्, विशेषधर्मत्वेन ज्ञानेऽपि तत्तद्रूपेण जिज्ञासोपपत्तेः ।

किञ्च, सिद्धिर्न स्वरूपतः प्रतिबन्धिका, किन्तु सिद्धत्वप्रका-रकज्ञानमेव तथा । अत एव वस्तुसिद्धावपि तत्सिद्धत्वज्ञानेनेच्छा-निवृत्तिः । वस्तुतः पदज्ञाने तादृशजिज्ञासैवासिद्धा किन्त्वन्वयि-जिज्ञासैवेत्यलम् ।

(रत्न०)—नन्वेवमन्वयांशनिरूपितशक्तेः पदेष्वकल्पने अन्वयांशे वाक्यशक्तिज्ञानानन्तरमेवावापोद्वापाभ्यां पदशक्तिकल्पनया पदशक्तिं प्रति अन्वयांशज्ञानस्योपजीव्यत्वात्पदे तदंशनिरूपितशक्त्यकल्पने तद्वि-रोधोऽत आह—*न चेति । *मानाभावादिति—यत्र साक्षात्परम्परया वा कार्यकारणभावस्तत्रैवोपजीव्यत्वम्, प्रकृते च तदभावादुपजीव्यत्वा-भावेन विरोधाभाव इति भावः । तद् = वाक्यार्थान्वयज्ञानम् । वृत्तम् = जातम् । तस्य = अन्वयज्ञानस्य । ननु कार्याव्यवहितप्राक्क्ष-णावच्छेदेन नियतपूर्ववृत्तितया तस्योपजीव्यत्वमत आह—*माता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पित्रादिभिरिति — तथा चान्वयज्ञानं विनापि तत्राङ्गुल्यादिव्यापारसह-कारेण बालस्याद्यशक्तिग्रहदर्शनात्तस्य नियतपूर्ववृत्तित्वाभाव इति भावः । ※अनन्यथासिद्धतयेति — अन्यथासिद्धशून्यतयेत्यर्थः । उपजीव्यत्वम् = कारणत्वम् । ※यागस्येति — "स्वर्गकामो यजेत" इति स्वर्गं प्रति यागस्य कारणत्वं बोध्यते, तच्च नोपपद्यते, यागस्य क्रियारूपतया क्रियायाश्च पञ्चमक्षणवृत्तिध्वंसप्रतियोगितया स्वर्गस्य च कालान्तरभावितया तयोः कार्यकारणभावानुपपत्त्या तज्जन्यमदृष्टं कल्प्यते, एवञ्च स्वजन्यादृष्टवत्त्वसम्बन्धेन यागस्वर्गयोः कालिकसामानाधिकरण्येन कार्यकारणभाव उपपद्यते । यदि तत्र यागनिष्ठकारणत्वोपपत्तये कल्पितेऽदृष्टे एव स्वर्गकारणत्वं कल्प्येत तदा यागस्य कारणत्वं भज्येतेत्यदृष्टं प्रति कारणभूतयागनिष्ठकारणत्वनाशेनोपजीव्यविरोधो भवति, तथा पदशक्त्यन्वयशक्त्योः नास्ति कार्यकारणभाव इत्युपजीव्यत्वं दुर्वचम् । अत एव व्यापारिणा व्यापारस्येव व्यापारेण व्यापारिणोऽपि नान्यथासिद्धत्वमिति प्रवादः । स्वस्वरूपनिर्वाहाय कल्पितेन स्वस्यान्यथासिद्धत्वाभावादेव 'व्यापाररूपसम्बन्धावच्छिन्नकारणताशालित्वम्' 'करणत्वम्' इत्याहुर्वृद्धाः । 'व्यापारवत्कारणं करणम्' इति तु न युक्तम्, नष्टस्यापि कारणस्य व्यापारद्वारा कार्यजनकत्वात् । ननु शाब्दबोधस्थले प्रथमं पदप्रत्यक्षम्, ततः शक्तिस्मरणम्, ततः पदार्थोपस्थितिः, ततश्च वाक्यशक्तिज्ञानम्, तस्माच्च शाब्दबोध इति पदशक्तिज्ञानस्य वाक्यशक्तिज्ञानापेक्षया पूर्वकालिकत्वेन ज्येष्ठतयाऽन्वयांशे कनिष्ठस्य वाक्यशक्तिज्ञानस्य बाधः; यथा—पूर्वकालिकेन मुखप्रत्यक्षेण पाश्चात्यस्य दर्पणे चैत्रमुखप्रत्यक्षस्य बाधोऽत आह — ※इदं रजतमिति — पूर्वकालिकत्वेन ज्येष्ठस्य 'रजतत्ववदिदम्' इति ज्ञानस्य पाश्चात्त्येन 'रजतत्वाभाववदिदम्' इति ज्ञानेन बाधदर्शनाज्ज्येष्ठज्ञानेन कनिष्ठज्ञानस्य बाध इति नियमो नास्तीति भावः । ※बाधादिति—ननु 'घटोऽयम्' इति ज्ञानान्तरं मुद्गरादिना घटनाशे 'नायं घटः' इति ज्ञानस्य बाधापत्तिरिति चेत्, न, उपस्थितिसामान्याभावप्रतियोगिन एव बाध्यत्वात् । इह तु सत्कार्यवादे तिरोहितरूपत्वेन घटस्य विद्यमानतया दोषाभावात् । ननु 'इदं रजतम्' इति भ्रमस्थलीयं ज्ञानं पूर्वकालिकमपि न सार्वजनीनम्, पदशक्तिज्ञानं तु सार्वजनीनत्वेन पूर्वकालिकमिति, तेन वाक्यशक्तिज्ञानस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बाधः स्यादत आह—*न च सर्वैरिति । *शरीरात्मप्रत्यय इति—सार्वजनीनस्य शरीरे आत्मप्रत्ययस्य, चन्द्रताराल्पत्वप्रत्ययस्य च पाश्चात्त्येन शास्त्रजन्येन च शरीरात्मभेदज्ञानेन चन्द्रतारादिमहत्त्वज्ञानेन च बाधानुभवेन तादृशोऽपि नियमो नोचित इति भावः । *व्यभिचारा-च्चेति—पाश्चात्त्येनापि पूर्वकालिकस्य बाध इति प्रकृतम्, उक्तरीत्या चन्द्रादौ शक्तिज्ञानस्थले तु पदशक्तिज्ञानस्यैव प्राथम्यमिति पूर्वतो नास्ति वैषम्यमिति 'नापि बाध्यबाधकभाव.' इत्यत्र व्यभिचारप्रदर्शनमसंगतम् । वस्तुतस्तु—उक्ते मात्रादिनिर्दिष्टे बालीयाद्यशक्तिग्रहस्थले कार्यानन्वित-पदार्थे एव पदानां शक्तिग्रहसम्भवात्, 'वृद्धव्यवहारेण कार्यान्वितपदार्थे एव शक्तिग्रहसम्भवः' इति नियमस्य व्यभिचारोऽत्र बोध्यः । नन्वेवं बाध्यबाधकभावाननुगमोऽत आह—*प्रवृत्तिसम्वादादिनेति—अत्र 'घटोऽस्ति तमानय' इत्युक्ते घटानयने प्रवृत्तो यदि घटमुपलभेत, तदा 'घटोऽस्ति' इति वाक्यस्य प्रामाण्यम्,अन्यथा नेति लोकव्यवस्था, वेदे तु वेदार्थनिर्णायकेन "श्रुतिलिङ्ग"—इति बलाबलन्यायेन सेति भावः । तत्र = पूर्वपरयोः । *परेणेति—बलवतेति शेषः । *पूर्वस्येति—दुर्बल-स्येति शेषः । *भ्रमत्वेति—'इदं ज्ञानमप्रमा' इति बोधनमेवेत्यर्थः । *पूर्वेणेति—अत्र तुना वैषम्यं सूचितम्, बलवता पूर्वेण परस्य नहि सर्वत्र भ्रमत्वप्रत्यायनरूपो बाधः, किन्तु यत्र सोपाधिकं ज्ञानं तत्रैव, यथा—दर्पणावच्छेदेन मुखज्ञानं पूर्वेण मुखप्रत्यक्षेण बाध्यते । *क्वचि-दिति—क्वचित्पूर्वेण परस्योत्पत्तिरेव प्रतिबाध्यते । तथाहि—श्रुत्यादयो हि षडिह विनियोजकाः, तत्र विरुद्धयोरेकत्रोपनिपाते एकेनापरस्य बाधो वक्तव्यः, स च बलवता दुर्बलस्येति । कस्य दौर्बल्यमित्याकाङ्क्षायां परदौर्बल्यप्रतिपादकम्—

"श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां
समवाये पारदौर्बल्यमर्थविप्रकर्षात्"

( मीमां० द० ३।३।१४ ) इति

सूत्रं प्रणिनाय महर्षिर्जैमिनिः । श्रुत्यादीनां पठितानां समवाये = एकत्रो-पनिपाते, पारदौर्बल्यमिति—पर एव पारः = उत्तरपठितं तथा चैषां मध्ये यदपेक्षया यत्परं तद्दुर्बलमित्यर्थः । तत्र हेतुमाह—अर्थविप्रकर्षा-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिति — अर्थस्य = विनियोजकस्य लिङ्गादेर्विप्रकर्षात् = उत्तरवर्त्तित्वात् । लिङ्गादेर्विलम्बेन पूर्वापेक्षया विनियोजकत्वावगतेरिति यावत् । तथा च परापेक्षया पूर्वस्य प्रथमं ज्ञानमिति पूर्वेण परस्य बाधः । श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी यथा —

"कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे ॥" इति ।

इयमृगग्निहोत्रप्रकरणे श्रूयते । इन्द्र ! त्वं कदाचन = कदाचिदपि न स्तरीरसि = न हिंसको भवसि, किन्तु दाशुषे = आहुतिं दत्तवते यजमानाय सश्चसि — प्रीयसे इत्यर्थः । अस्या इयं विनियोजिका श्रुतिः —"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति । 'ऐन्द्र्येति' करणे तृतीया । "कदाचन स्तरीरसि" इत्यसावैन्द्री ऋक्, इन्द्रेति सम्बुद्ध्यन्तपदेनेन्द्रप्रकाशनात् । तथा च ऐन्द्र्या = इन्द्रसम्बन्धिन्या ( इन्द्रप्रकाशिकया ) ऋचा गार्हपत्यम् = गार्हपत्यनामानमग्निमुपतिष्ठते = आराधयति । अत्रायं संदेहः — इन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गाद् गार्हपत्यपदस्य लक्षणया इन्द्रपरत्वं प्रकल्प्य गार्हपत्यमिति द्वितीयायाः सप्तम्यर्थकतया गार्हपत्यसमीपे इत्यर्थं प्रकल्प्य च ऐन्द्रोपस्थाने एवास्या ऋचो विनियोगः प्राप्नोति । एवं संदेहे प्राप्ते श्रुत्या लिङ्गं बाध्यते इति सिद्धान्तः । तथाहि—गार्हपत्यमिति कारकविभक्तिरुपतिष्ठते इति क्रियाऽन्विता सती प्रथमत एवाभिधया गार्हपत्याग्नेरुपस्थाने इमामृचं विनियोजयति । नैवं लिङ्गम् । इन्द्रपदमिन्द्रप्रकाशकमिति प्रथमं ज्ञानं ततोऽन्यप्रकाशकमन्त्रस्य नान्यत्र विनियोगः सम्भवतीत्यनुपपत्तिज्ञानम्, ततश्चेन्द्रोपस्थाने एव विनियोग इति रीत्या लिङ्गेन श्रुतिः कल्पनीयेति विलम्ब इति निरपेक्षा श्रुतिर्लिङ्गं बाधते बलवत्त्वादित्याह — *श्रौतविनियोगेनेति — निरपेक्षरवः श्रुतिः, निरपेक्षत्वञ्च — इतरप्रामाण्यानधीनप्रामाण्यकत्वम् । 'गार्हपत्यम्' इति द्वितीयाश्रुतिरितरानपेक्षा स्वरूपसत्सामर्थ्यमपेक्षते, लिङ्गन्तु विनियोजने श्रुतिमपेक्षते । नहि अनया 'इन्द्र उपस्थातव्यः' इति शब्दतो बोध्यते, किन्तु 'इन्द्र एतादृक्' इत्येव प्रतीयत इतीन्द्रप्रकाशनसामर्थ्यरूपं लिङ्गं दुर्बलम्, अन्यथाऽनुपपत्त्या 'अनया इन्द्र उपस्थातव्यः' इति कल्प्यमानश्रुतिसापेक्षत्वेन दुर्बलत्वादित्यन्यत्र विस्तरः । अत्र श्रौतविनियोगेन लैङ्गिकस्यानुत्पत्तिरेव । पूर्वं विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वमभ्युपेत्योक्तम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साम्प्रतं विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वं खण्डयति—*जिज्ञासाऽपीति । *फलविशेषेति—फलविशेषदर्शने हि 'कोऽस्मिन् रसः' इति जिज्ञासा जायते, नहि तत्र रसस्य सामान्यज्ञानमस्ति, रसबोधकसामग्र्यभावादिति सामान्यज्ञानाभावेऽपि यथा विशेषजिज्ञासा तथाऽत्रापि स्यादिति भावः । यदि तु फलस्थलेऽनुमानादिना सामान्यतो रसज्ञानम्, तदाऽत्रापि तथैवास्तु, किमन्विते शक्तिकल्पनेन ? । *तद्वदेवेति—फलविशेषे रसविशेषजिज्ञासावदित्यर्थः । *नियमो न स्यादिति—फलविशेषदर्शने रसविशेषजिज्ञासा जायते एवेति व्याप्तिर्यथा नास्ति, तथाऽत्रापि अन्वयविशेषजिज्ञासा कदाचिन्न स्यादत आह—*इष्टापत्तेरिति—अन्वयविशेषजिज्ञासा जायते एवेति नियमो नास्तीति भावः । *न चानयोरिति—'पदार्थद्वयसंसर्गविशेषविषयकज्ञानेच्छां प्रति पदार्थद्वयसंसर्गविशेषज्ञानं मदिष्टसाधनम्' इतीष्टसाधनत्वप्रकारकज्ञानविशेष्यकज्ञानं कारणम्, तादृशज्ञानाभावे इच्छाया अदर्शनात् । तथाच इष्टसाधनताज्ञानेऽपि विषयज्ञानस्य कारणत्वमिति प्रकृते इष्टसाधनताज्ञानकारणस्य विषयज्ञानस्य विषयोऽन्वयविशेष एवेतीष्टसाधनताज्ञानघटकतया सोऽपि सिद्ध एवेतीच्छां प्रति सिद्धेः प्रतिबन्धकत्वादन्वयविशेषजिज्ञासांऽपि न स्यादत आह—*न चेति । समाधिमाह—*विशेषेति—'संसर्गविशेषज्ञानं मदिष्टसाधनम्' इतीष्टसाधनताज्ञाने विशेषधर्मत्वेनैव विशेषधर्मों निविष्ट इति विशेषधर्मत्वव्याप्यकर्मतानिरूपकत्वादिरूपेण जिज्ञासोदये बाधकाभावादित्यर्थः । ननु संसर्गस्य न केनापि रूपेण भानमिति पूर्वमुक्तत्वाद् विशेषधर्मत्वेन ज्ञानेऽपि सिद्धिसत्त्वाज्जिज्ञासोच्छेद एवात आह—*किञ्चेति । *स्वरूपत इति—अयम्भावः—यस्य वस्तुनो यस्य पुरुषस्यावश्यकता वर्तते, तस्य वस्तुनः सत्त्वेऽपि तज्ज्ञानाभावे तद्विषयिणीच्छा जायते, तथा च 'इदं वस्तु सिद्धम्' इति सिद्धत्वप्रकारकज्ञानमेवेच्छायाः प्रतिबन्धकम् । प्रकृते चान्वयविशेषजिज्ञासातः प्रागन्वयविशेषस्य ज्ञानसत्त्वेऽपि सिद्धत्वप्रकारकतद्विषयकज्ञानाभावेन सिद्धेः प्रतिबन्धकत्वाभाव इति । *अत एवेति—इच्छां प्रति सिद्धत्वप्रकारकज्ञानस्यैव प्रतिबन्धकत्वादेवेत्यर्थः । *वस्त्वसिद्धावपीति—अपेक्षितवस्तुनोऽसत्त्वेऽपि सिद्धत्वप्रकारकज्ञानदशायामिच्छानिवृत्तिरुपपद्यते इत्यर्थः । अन्वयविशेषजिज्ञासां स्वीकृत्यैतत्सर्वमुक्तम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतः सैव नेत्याह—*वस्तुत इति—नन्वन्वयसामान्ये पदशक्तौ विशेषान्वयस्यानुमानेन भानसम्भवे वाक्येऽन्वयविशेषविषयाऽपि शक्तिर्न सिद्ध्येदिति चेत्, न, अन्वयसामान्यस्याप्यनुमानेनैव भानसिद्धौ 'अन्विते शक्तिः' इति तव सिद्धान्तस्य विलयापत्तेः। नन्वनुमानेनैव संसर्गोपस्थितिसिद्धावन्वयांशे शक्तिर्नाभ्युपेयेति चेत्, न, 'नानुमितम्' 'न साक्षात्कृतम्' किन्तु 'शब्दादेवावगतम्' इत्यनुभवेन अन्वयांशनिरूपितशक्तेर्वाक्ये आवश्यकत्वात्।

पदैकदेशपदे पदार्थबोधकत्वस्य, वाक्यैकदेशपदे वाक्यार्थबोधकत्वस्य च निर्वचनम्।

मू०—क्वचित्तु पदैरितरान्वितस्वार्थबोधनमस्त्येव। यथा—'प्रविश' 'पिण्डीम्' इत्यादौ। तथा हि—यथा भीमादयः पदैकदेशाः पदस्यार्थे प्रयुज्यन्ते, विशिष्टशक्तिग्रहकालेऽनुनिष्पाद्यवयवानामपि तत्र शक्तिग्रहात्। 'भीमसेन' पदं पृथक् प्रयुज्यमानं तदवयवपदं च भीमसेने शक्तमिति शक्तिग्रहः। न च 'सेन'-पदादपि तद्बोधापत्तिः, तत्तत्पदस्य तत्रार्थे शिष्टप्रयोगाभावेन शक्तिग्रहे तद्विषयकत्वांशेऽप्रामाण्यकल्पनेन ततो बोधानुदयात्, अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव बोधजनकत्वात्। शक्तिभ्रमाद्बोधोऽपि भ्रमत्वेनाज्ञातादेव। एवं वाक्यस्यापि तत्तत्पदार्थालिङ्गिते विशेष्यविशेषणभावे शक्तिग्रहकाले तदवयवानाम्—'प्रविश' 'पिण्डीम्' इत्यादीनामपि तत्तद्वाक्यार्थे शक्तिग्रहेण 'प्रविश' इत्यादिपदादेव तत्तद्वाक्यार्थबोधः। अनेककारकाणां क्रियाणाञ्च सम्भवेऽपि योग्यतावशात् तात्पर्यवशाच्च तत्तदर्थबोधः, तव तत्तत्पदाध्याहारवत्।

तदुक्तम्—"समर्थ सूत्रे" (पा० सू० २।१।१) भाष्ये—निष्कौशाम्ब्यादौ क्रान्तादिपदाभावेनासामर्थ्यात् समासाभावमाशङ्क्य—"तदर्थगतेः सिद्धम्, सोऽर्थः = तदर्थः, तद्गतेः। योऽर्थः कौशाम्ब्या समर्थः, स निसोच्यते" इति। उक्तरीत्या विशिष्टोऽर्थो निसोच्यते इति तदाशयः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत एव "लुपि युक्तवद्"—(पा० सू० १।२।५१) इति सूत्रे 'एकवचनाद्यवयववचनशब्दः पारिभाषिकः' इत्युक्तम् । तदुक्तम्—

"वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम् ।
आख्यातशब्दे नियतं साधनं यत्र गम्यते ॥
तदप्येकं † समाप्तार्थं वाक्यमित्यभिधीयते ॥" इति ।
(वाक्यप० कां० २ कारि० ३२६-३२७)

'ग्रामं प्रविश' 'पिण्डीं भक्षय' इत्यादि तु शब्दान्तराण्येव । तान्यपि लौकिके प्रयोगे लाघवानादरात्प्रयुज्यन्ते एव ।

(रत्न०)—स्वमतेऽपि क्वचिदन्वयस्य पदेनाभिधानमित्याह—❀क्वचित्त्विति । ❀'प्रविश' इति—'प्रविश' पदस्यैव गृहादिकर्मकप्रवेशने शक्त्या गृहकर्मकप्रवेशनविषयको बोध इति भावः । तत्र प्रथमं सर्वसम्मतदृष्टान्तमाह—❀भीमादय इति । ❀पदैकदेशा इति—भीम-सेनादिरूपपदैकदेशा इत्यर्थः । ननु वृत्तिज्ञानजन्योपस्थितिविषयस्यैव शाब्दे भाननियमेन प्रविशादिपदस्य तादृशार्थे शक्त्यभावादिदमसङ्गतमत आह—❀विशिष्ट-शक्तिग्रहेति । ❀अनुनिष्पादीति—नान्तरीयकेत्यर्थः । यद्वा, अनु = पश्चात्, निष्पद्यते = कल्प्यते, इत्यनुनिष्पादी, आवापोद्वापाभ्यां कल्पित इत्यर्थः । ❀तत्रेति—वाक्यार्थे इत्यर्थः । समुदायार्थनिरूपितायाः शक्तेरवयवेऽपि कल्पनेति भावः । "चतुर्थादनजादौ च लोपः पूर्वपदस्य च" इति वार्तिकेन दत्तादिशब्दानामेवानुनिष्पादिनां संज्ञात्वबोधनात्पद-घटकवर्णानां न पदार्थशक्तत्वम् । वस्तुतस्तु—तुल्ययुक्त्या पदावयवेऽपि पदार्थनिरूपितशक्तिमत्त्वम् । अत एव पदैकदेशलेखनप्रणाली सङ्गच्छते, इत्युपाध्यायाः । ❀पृथक् प्रयुज्यमानमिति—पदान्तरासन्निधानेनेत्यर्थः । तत्पदस्य = सेनादिपदस्य । ❀शक्तिग्रह इति—पदघटकपदस्य शक्तत्व-बोधनेन पदस्यापि तदवयवत्वात् शक्तिग्रहस्तु स्यादेवेति भावः । ❀अप्रा-माण्येति—'सेन' पदम् 'भीमसेनार्थनिरूपितशक्तिमत्' इति ज्ञानमप्रमा,

---

† अत्र वाक्यपदीयमूले "समासार्थम्" इति पाठो लभ्यते । परन्तु 'परिपूर्णार्थम्' इति पुण्यराजव्याख्यादर्शनात्, तथैवार्थसङ्गतेश्च एष एव पाठो ज्यायान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शिष्टोपदेशाद्यजन्यत्वादित्येवंरूपेणेति भावः । *बोधानुदयादिति— प्रमाऽऽत्मकबोधानुदयादित्यर्थः । प्रमाऽऽत्मकशक्तिज्ञानस्यैव बोधजनकत्वे तु यथोक्तमेव साधु, तदाह—*अप्रामाण्येति । *भ्रमत्वेनेति—सेनादिपदे शक्तिज्ञानन्तु भ्रमात्मकमेवेति बोधाभाव इति भावः । * एवं वाक्यस्यापीति–प्रयोज्यप्रयोजकवृद्धव्यवहारादिना वाक्ये शक्तिज्ञानकाले तद्घटकपदेष्वपि वाक्यार्थनिरूपितशक्तिग्रहः । तथा च प्रकरणादितात्पर्यग्राहकसत्त्वे पदमात्रेणापि वाक्यार्थबोधः । तत्र = नैयायिकस्य । *कौशाम्ब्या समर्थः इति — कौशाम्बीपदार्थेन सह सामर्थ्यविशिष्टो यः क्रान्तादिरूपोऽर्थस्तस्य निःशब्द एव वाचक इत्यर्थः । वाचकता चोक्तरीत्यैवेति तदाशयः । अत एव = पदानामपि वाक्यार्थे शक्तत्वादेव । *लुपीति–तत्र हि भाष्ये—'व्यक्तिवचने' इत्यस्याभावे "कटुकबदर्य्या अदूरभवो ग्रामः कटुकबदरी । षष्ठी युक्तवद्भावेन मा भूदिति । अथ व्यक्तिवचन इत्युच्यमाने कस्मादेवात्र न भवति ? । षष्ठ्यपि हि वचनम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम्, किं तर्हि ?, अन्वर्थग्रहणम्, उच्यते वचनमिति । एवमपि षष्ठी प्राप्नोति । षष्ठ्यपि हि उच्यते । लुपोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् । किं कारणम् ? उक्तार्थानामप्रयोग इति" इत्युक्तम् । "व्यक्तिवचने" इत्यप्युच्यमाने कस्मादेवात्र न भवति । "षष्ठ्यपि हि वचनम्" इति भाष्यमादाय कैयटेनोक्तम्– "वचनशब्देन हि एकवचनादयः प्रत्यया उच्यन्ते, तत्र वाक्यावस्थायां षष्ठीदर्शनात्तस्या एवात्रातिदेशः प्राप्नोति । एकवचनादिसंज्ञाविधानकालेऽनुनिष्पादिवचनशब्दोऽपि संज्ञात्वेन नियुक्त इति प्रत्ययः पारिभाषिकं वचनमुच्यते" इति षष्ठीप्रत्ययस्यापि वचनत्वात् अतिदेशः प्राप्नोतीत्याशङ्क्य "नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि ? अन्वर्थग्रहणम्, उच्यते वचनमिति" इति समाहितम् । अयम्भावः—'उच्यतेऽसौ वचनम्' इति संख्यारूपोऽर्थो वचनम्, तदतिदेशे संख्यायाः 'यः शिष्यते' इति न्यायेन प्रकृत्योक्तत्वेन षष्ठी न भवति । अत्र "षष्ठ्यपि वचनम्" इति भाष्यात् अत्रत्यकैयटाच्च स्पष्टमेव समुदायघटकपदस्य समुदायार्थत्वमुक्तम् इति । मूले 'एकवचनाद्यवयव' इत्यनेन भाष्याभिप्रायमात्रमुक्तम्, न तु तत्रत्यानुपूर्वी । *तदुक्तमिति — हरिणेति शेषः । सन्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यैकदेशाः प्रसिद्ध्यादिना वाक्यार्थप्रत्यायका इति तदप्येकमेव पदं वाक्यमेव । चरितक्रियमिति, चरिता = गर्भीकृता, आख्यातक्रिया यस्य तद् गर्भीकृतक्रियापदं नामपदं वाक्यं प्रयुज्यते । चरितक्रियापदादस्मादर्थावगतिर्निराकाङ्क्षोपजायमाना दृश्यते इति पदमात्रस्यैवात्र वाक्यत्वम्। नामपदमिवाख्यातपदमपि विशिष्टाभिधायकं वाक्यमेवेत्याह —*आख्यातशब्द इति — यत्राख्यातशब्दे 'वर्षति' इत्यादौ 'देवो जलम्' इति कर्तृकर्मरूपं साधनम् ( कारकम् ) गम्यते तदप्येकं पदं समाप्तार्थम् = परिपूर्णार्थम् 'वर्षति देवो जलम्' इतिवद् वाक्यमेवाभिधीयते । अत एवोक्तं हरिणा—

"अन्तरेण क्रियाशब्दं वाक्यादेर्द्वित्वदर्शनात् ।" इति ।

'माणवक ! माणवक ! त्वमभिरूपः' इत्यत्र वाक्यादित्वप्रयुक्तद्वित्वदर्शनात्पदमात्रमपि वाक्यमित्यर्थः । ननु 'प्रविश' 'पिण्डीम्' इत्यनेनैव गतार्थत्वात् गृहमित्यादि व्यर्थमत आह —*ग्राममिति । *लाघवानादरेति — लाघवमनादृत्य प्रयुज्यन्ते इत्यर्थः ।

मू०—यत्तु—पदावयवेन पदस्मरणम्, एवं वाक्यैकदेशेनापि वाक्यस्मरणम्, अयमेवाध्याहार इति, तन्न, भीमादिपदांशात्स्मरणाननुभवात् ।

किञ्च, एवं सत्युच्चारितपदस्य वृत्त्याऽर्थबोधकत्वाभावेनाप्रातिपदिकत्वात् तदुत्तरं विभक्त्युत्पत्त्यनापत्तेः । † न च पदैकदेशस्य तत्तत्पदार्थे लक्षणा, बाधप्रतिसन्धानाभावेऽपि शक्यसम्बन्धज्ञानाभावेऽपि बोधानुभवात् ।

किञ्च, एकदेशेन भिन्नस्वरूपस्य संघातस्य कथं स्मरणम्,

---

† 'न च पदैकदेशस्य' इत्यारभ्य 'बोधानुभवात्' इत्यन्तग्रन्थस्यात्रैव पाठो युक्तः, प्रातिपदिकत्वोपपादकत्वेन तत्प्रसङ्गात् 'इग्यणः सम्प्रसारणमिति सूत्रे भाष्ये' इत्युक्तेरनन्तरम् 'अणुदित्सूत्रभाष्ये च' इत्युक्तेरेवमेव स्वारस्याच्च । तेनाग्रे मूले 'अणुदित्सूत्रभाष्ये चोच्चारितस्यैव' इत्यतः पूर्वमेतदुपन्यासोऽसङ्गतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सादृश्याभावात्, स्मृतस्यानुच्चरितत्वेन ततो बोधानापत्तेश्च । तदुक्तम्—

"एकदेशात् स्मृतिर्भिन्ने सङ्घाते जायते कथम् ।
कथं प्रतीयमानः स्याच्छब्दोऽर्थस्याभिधायकः ॥" इति ।

(वाक्यप० कां० २ कारि० ३६३)

तदेतदभिप्रेत्योक्तम्—"इग्यणः सम्प्रसारणम्" (पा० सू० १।१।४५) इति सूत्रे भाष्ये—"दृश्यन्ते हि वाक्येषु वाक्यैकदेशान्प्रयुञ्जानाः पदेषु पदैकदेशान् । 'प्रविश, पिण्डीम्, प्रविश, तर्पणम्, देवदत्तः, दत्तः, सत्यभामा, भामा †इति" । वाक्येष्वित्यादेर्वाक्यार्थेष्वित्यादिरर्थः ।

अणुदित्सूत्रभाष्ये ( पा० सू० १।१।६९ ) चोच्चारितस्यैव शब्दस्य प्रत्यायकत्वमुक्तम् । अन्यथा ज्ञानमात्रे शब्दभानाच्छाब्दधाराऽऽपत्तिः । तत्र तन्निवृत्तये प्रतिबन्धककल्पने गौरवम् ।

न च लिपिस्मृतशब्दादर्थबोधानापत्तिः, अनुच्चारणादिति वाच्यम्, तत्र चेष्टावल्लिपेरेवार्थबोधकत्वेनाक्षतेः । अत एव लिपौ शब्दत्वभ्रमो बालानाम् । तच्छक्तिग्रहश्च—शब्दसङ्केतग्रहाधीन इत्यन्यत् । लिपौ शब्दत्वभ्रमवतां तत्स्मरणानुपयोगाच्च । अत एव लिपौ 'अयं ककारः' इति व्यवहारः पण्डितानां लिपौ शब्दत्वबाधज्ञानवतामपि, अनादिसिद्धारोपात् । अन्तःकरणादावात्मप्रत्यये भ्रमत्वज्ञानवतां पण्डितानां व्यवहारनिर्वाहस्यैवमेवोपपाद्यत्वात् ।

यद्वा, तत्रापि सूक्ष्मतरताल्वोष्ठपुटव्यापारात्सूक्ष्मतरमुच्चारणमेव, मानसजपस्थल इव । निरूपितञ्चैतत्प्राक् । तस्माच्छब्दसत्ताज्ञानं शाब्दबोधकारणम् । अत एवान्यस्मिन् शब्द उच्चारिते तत्रान्यशब्दत्वभ्रमदशायां तदर्थबोधानुभवः । 'उच्चारितः शब्दः' इत्यस्य उच्चारितत्वेन गृहीत इत्यर्थो बोध्यः ।

---

† 'सत्या, भामा, सत्यभामा' इति सर्वेषूपलब्धपुस्तकेषु पाठः । कलाकारसम्मतो भाष्यानुसारी च पाठो मूले स्थापितः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(रत्न०)—पदावयवेन = भीमादिना । पदस्मरणम् = सेनादिपदस्मरणम् । ※अयमेवेति — स्मरणमेवेत्यर्थः । विधेयप्राधान्यात्पुंस्त्वनिर्देशः । यद्वा, अयमेव = स्मरणात्मकप्रत्यय एव । एवम् = स्मरणेन बोधकत्वे । ※वृत्त्यर्थेति — अर्थवत्सूत्रे 'गवित्ययमाह' इत्यादौ प्रातिपदिकत्ववारणाय तादृशार्थवत्त्वस्यैव ग्रहणात् । तदुत्तरम् = भीमादिपदोत्तरम् । नन्वेकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्, न तु सादृश्यज्ञानम्, श्लोकादिवर्णेन श्लोकस्मरणमुपलभ्यतेऽत आह—※ स्मृतस्येति । ※तदुक्तमिति—हरिणेति शेषः । ※ एकदेशादिति —एकदेशाद् भिन्ने संघाते स्मृतिः कथम् ? । भिन्ने इत्युक्त्या सदृशस्य स्मृतिप्रयोजकत्वं दर्शितम्, सदृशवस्तुदर्शनात् स्मृतिरुपजायते इति प्रसिद्धम् । प्रतीयमानः शब्दोऽर्थस्याभिधायकः कथं स्यात् ? श्रुतिपथमवतीर्णा एव शब्दा वाचकाः । ※एतदेवेति — वाक्यैकदेशसदृशस्यापि वाक्यार्थे शक्तिरित्यभिप्रेत्यैवेत्यर्थः । ※भाष्ये इति — तत्र हि "किमियं वाक्यस्य सम्प्रसारणसंज्ञा क्रियते 'इग्यणः' इत्येतद्वाक्यं सम्प्रसारणसंज्ञं भवतीति, आहोस्वित् वर्णस्य, इग्यो यणः स्थाने वर्णः स सम्प्रसारणसंज्ञो भवतीति" इति । तत्र वाक्यस्य संज्ञायां वर्णनिमित्तकं पररूपादिकं वाक्येऽसम्भवान्न प्राप्नोति । वर्णसंज्ञायां यणः स्थानिक इगेव दुर्लभः । "अनेन ( ष्यङः सम्प्रसारणम् इत्यनेन ) चैव ह्यसौ व्यवस्थाप्यते । "तदेतदितरेतराश्रयं भवति" इत्युक्त्वा "अथवाऽस्तु पुनर्वाक्यस्यैव, ननु चोक्तं संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद् वर्णविधि र्न सिद्ध्यतीति, नैष दोषः, यथा—काकाज्जातः काकः······ एवं सम्प्रसारणाज्जातं सम्प्रसारणमिति" इत्युक्तम् । एवञ्च-सम्प्रसारणनिष्पन्नेऽपि संप्रसारणत्वारोपे वर्णकार्य्यं स्यात् । "अथवा दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान् । वाक्येषु वाक्यैकदेशान् यथा — 'प्रविश' 'पिण्डीम्' 'प्रविश' 'तर्पणम्' इति । पदेषु पदैकदेशान् यथा—'देवदत्तः' 'दत्तः' 'सत्यभामा' 'भामा' इति" । अत्र–'सत्यभामा' 'भामा' इत्येव पाठः, भाष्ये तथैवोपलम्भात्, भामेतीति प्रतीकमादाय इदं सत्याया अप्युपलक्षणम्, इति कलाकारोक्तेश्च । तथा च – सम्प्रसारणादित्यस्य सम्प्रसारणनिर्वृत्तादित्यर्थ इति न दोषः । अनेन सम्प्रसारणशब्दस्य सम्प्रसारणनिर्वृत्तार्थकत्वमुक्तम् । ※वाक्येष्विति–भाष्ये इत्यादिः । ※पदैक-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देशस्येति — भीमादिशब्दस्येत्यर्थः । *बाधेति — 'भीमं पश्य' इत्यादावन्वयानुपपत्तिर्नास्तीत्यर्थः । *शक्यसम्बन्धेति–सर्वत्र लक्षणायां शक्यसम्बन्धज्ञानस्यानुभवसिद्धत्वेनात्र तदभावेन लक्षणाऽभाव इति भावः । *अणुदित्सूत्रे भाष्य इति — तत्र हि— "प्रत्याहारग्रहणे सवर्णग्रहणमनुपदेशात् । तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति, "अकः सवर्णे दीर्घः" इति । किं कारणम् ? अनुपदेशात् । यथाजातीयकानां संज्ञा कृता तथाजातीयकानां सम्प्रत्यायिका स्यात् । ह्रस्वानाञ्च क्रियते, ह्रस्वानामेव सम्प्रत्यायिका स्याद्, दीर्घाणां न स्यात् । ननु च ह्रस्वाः प्रतीयमाना दीर्घान् प्रत्याययिष्यन्ति । ह्रस्वसम्प्रत्ययादिति चेदुच्चार्यमाणशब्दसम्प्रत्यायकत्वाच्छब्दस्यावचनम् । ह्रस्वसम्प्रत्ययादिति चेदुच्चार्य्यमाणशब्दः सम्प्रत्यायको भवति न सम्प्रतीयमानः । तद्यथा —'ऋक्' इत्युक्ते सम्पाठमात्रं गम्यते" इत्युक्तम् । *ज्ञानमात्र इति — ज्ञानमात्रे शब्दभानस्य सिद्धान्तितत्वात् शाब्दबोधधाराऽऽपत्तिः स्यादिति भावः । तन्निवृत्तये = शाब्दबोधधारानिवृत्तये । *प्रतिबन्धकेति —'प्रतीयमानशब्दजन्यशाब्दबोधं प्रति शाब्देतरज्ञानं प्रतिबन्धकम्' इति कल्पने गौरवमित्यर्थः । *चेष्टावदिति — हस्तादिचेष्टयाऽर्थज्ञानमिवेत्यर्थः । *लिपेरेवेति — न तु शब्दस्य बोधकत्वमिति भावः । अत एव = लिपेर्बोधकत्वादेव । *शब्दत्वभ्रम इति — लिपेश्चित्ररूपत्वात् शब्दस्य च सर्वथा तद्भिन्नत्वात् तत्र शब्दत्वज्ञानं भ्रम एव । ननु लिपौ शक्तिग्रहासम्भवोऽत आह —*तच्छक्तीति — शब्दे संकेतज्ञाने लिपौ तद्भ्रमात्संकेतज्ञानमित्यर्थः । *स्मरणानुपयोगादिति — लिपावेव शब्दत्वप्रकारकतद्विशेष्यकज्ञानवतां भ्रमात्मकशब्दज्ञानसत्त्वेन तदनुपयोगादित्यर्थः । ननु परेषां लिपौ शब्दतादात्म्यारोपः किमर्थः ? अत आह —*अत एवेति — तादात्म्यारोपादेवेत्यर्थः । ननु भेदस्य निश्चितत्वे कथमारोपोऽत आह —*अनादीति — एतादृशारोपस्यानादित्वादित्यर्थः । *भ्रमत्वज्ञानवतामिति — बाधज्ञानवतामिति भावः । भेदज्ञानसत्त्वेऽपि व्यवहार उपपादनीय एव इति भावः । *एवमेवेति —आरोपादेवेत्यर्थः । तत्रापि = लिपिद्वाराऽर्थबोधस्थलेऽपि । *सूक्ष्मतरेति — इतराज्ञेयेत्यर्थः । अनुमीयमानव्यापारकत्वाच्च तादृशस्थले मानसजपव्यवहारः । *तस्मादिति — लिपौ शब्दत्वभ्रमेणार्थबोधदर्शनादित्यर्थः । *शब्दसत्तेति —

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दसत्ताज्ञानं कारणम्, न तु शब्दः कारणम्, लिपिस्थले व्यभिचारात् । ॐअत एवेति–शब्दसत्ताज्ञानस्य कारणत्वादेवेत्यर्थः । नन्वेवमणुदित्सूत्रभाष्यविरोधः, तत्र स्वरूपसत्यास्तस्याः कारणत्वस्योक्तत्वात्, अत आह—ॐउच्चारित इति–भाष्ये तु उच्चार्यमाणशब्दः सम्प्रत्यायको भवतीत्येव पाठः । एवमपि उच्चार्यमाणत्वेन ज्ञात इत्येवार्थो बोध्यः । "यस्येति च" (पा० सू० ६।४।१८४) इत्यादौ तु ग्राह्यग्राहकयोरभेदादिकारादीनां ग्राहकत्वं हरिणोक्तम् ।

मू०—एतेन 'प्रविश' 'पिण्डीम्' इत्यादौ कारकक्रियाशब्दमनुमाय ततो बोध इति परास्तम् ।

पदैकदेशेन पदार्थबोधे, वाक्यैकदेशेन वाक्यार्थबोधे चाक्षेपानुमानयोर्निरासः ।

किञ्च, किं शब्देन शब्दस्याक्षेप उतार्थेन ?, नाद्यः, स्वार्थप्रतिपादनव्यग्रेण तेन अन्यानाक्षेपात् । नान्त्यः, तस्यार्थस्य शब्दान्तरेण सम्बन्धाभावात् ।

एतेन—'शब्देनार्थाक्षेपः' इत्यप्यपास्तम्, अस्य शब्दस्य शब्दान्तरार्थेन सम्बन्धाभावात् । यथाकथञ्चित् परम्परासम्बन्धसत्त्वेऽपि तस्य नानुमितिप्रयोजकत्वम्, लक्षणाप्रयोजकत्वाभाववत् । अर्थेनार्थानुमानेऽपि तस्य शाब्दत्वं न स्यात् । तस्मादर्थेनार्थान्तरस्यैतद्वाच्यत्वानुमानमेवोचितम् ।

न च 'पिण्डीम्' इत्येतन्नाम सिद्धार्थकं कथं साध्यक्रियाबोधकमिति वाच्यम्, नामसरूपं भिन्नमेवेदमित्यदोषात् । नामसारूप्यादेव द्वितीयाद्यन्तताव्यवहारः । न चाख्यातलक्षणस्यात्रातिव्याप्तिः, 'शास्त्रबोधितक्रियाऽर्थकघटितत्वे सति' इति विशेषणदानेनादोषात् । 'पिण्डीम्' इत्यादेरनेकक्रियाऽर्थत्वेऽपि प्रकरणान्निर्णयः ।

(रत्न०)—ॐएतेनेति–'प्रविश' इत्यादीनामेव तादृशवाक्यार्थे शक्तिस्वीकारेणेत्यर्थः । ॐकारकक्रियेति—'प्रविश' इत्यत्र 'गृहम्' इति कारकम् 'पिण्डीम्' इत्यत्र 'भुङ्क्ष्व' इति क्रियाशब्दमनुमायेत्यर्थः । ततः = प्रविशादिशब्दात् । ॐस्वार्थप्रतिपादनव्यग्रेणेति—प्रतिभाऽऽख्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यापारेण स्वार्थबोधनपरः शब्दः कथं शब्दान्तरमाक्षेप्तुं शक्नुयात्?। ❀नान्त्य इति–अर्थेन शब्दस्याक्षेप इत्यपि नेत्यर्थः। ❀सम्बन्धाभावादिति– असम्बद्धस्याप्याक्षेपे यस्य कस्यचनाक्षेपप्रसङ्गः। ❀एतेनेति — सम्बन्धाभावादाक्षेपनिरासेनेत्यर्थः। एतेनेत्यस्यैवार्थमाह — ❀अस्य शब्दस्येति। ❀परम्परासम्बन्धेति — स्वार्थान्वययोग्यताऽवच्छेदकधर्मवत्त्वादिरूपपरम्परासम्बन्धसत्त्वेऽपीत्यर्थः। ❀नानुमितिप्रयोजकत्वमिति–परम्परासम्बन्धस्यानुमितिप्रयोजकत्वे यस्य कस्यापि अनुमित्यापत्तेरिति भावः। ❀लक्षणेति — यथा च परम्परासम्बन्धस्य लक्षणाप्रयोजकत्वं नास्ति तथेत्यर्थः। अत एव प्रकाशे (उल्ला० २ का० १६) श्रीमम्मटेनोक्तम् — "योगः फलेन नो" इति। अस्यार्थः—"नच गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्ध इति।" परम्परासम्बन्धमुपेत्याह–❀अर्थेनेति। तस्मात् = शाब्दत्वानापत्तेः। ❀एतद्वाच्यत्वेति — अर्थान्तरम्, एतत्पदवाच्यम्, एतदर्थविशिष्टत्वात्, इत्यनुमानप्रयोगः। एवञ्च शाब्दत्वमुपपद्यत इति भावः। ❀इत्येतन्नामेति–सिद्धार्थकम् 'पिण्डीम्' इति नाम कथं साध्यक्रियां बोधयेदित्यर्थः। सुबन्तमिह नामपदेन गृह्यते, नामप्रकृतिकत्वात्त्वम्। नामसरूपम् = नामसदृशम्। ❀भिन्नमेवेति—विभक्त्यन्तप्रतिरूपकमव्ययमिति भावः। ननु 'क्रियाप्रधानमाख्यातम्' इति आख्यातलक्षणातिव्याप्तिरत आह—❀ न चेति। ❀शास्त्रबोधितेति—शास्त्रबोधितक्रियार्थका ये भ्वादयः 'तद्घटितत्वविशिष्टक्रियानिष्ठमुख्यविशेष्यताकबोधजनकत्वम्' इति लक्षणेनादोषात्। ननु 'पिण्डीम्' इत्यस्य 'पिण्डीम्' इति पदघटितवाक्यार्थकत्वेन तादृशवाक्यस्य च बहुत्वात् निर्णीतार्थबोधानापत्तिरत आह—❀ पिण्डीमित्यादेरिति।

मू०—पदानामानर्थक्येऽपि "क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" "चत्वारि पदजातानि" (निरुक्त० नैघ० कां० १।१।१) इत्यादिशास्त्रकृत्कल्पनामात्रमेव। यथा—असत्येनाप्यर्थेन मरीचिकाजलेन 'इदं जलमानय' इत्यादिव्यवहारो लोकानां दृश्यते, तद्वत् सर्वत्रापि पदेऽर्थव्यवहार इति स्पष्टम्—

"न लोके प्रतिपत्तृणामर्थयोगात् प्रसिद्धयः"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(वाक्यप० कां०२ कारि०३४९) इत्यादिना हरिग्रन्थे। प्रसिद्धयः शास्त्रे इति शेषः। एतेनोच्चारितं पदमनुक्तार्थान्वयित्वेन स्वार्थबोधेच्छया वक्त्रुच्चारितमिति तात्पर्यग्रहे कस्यचित्पदाध्याहारेण कस्यचिदर्थाध्याहारेण बोध इति यथाऽनुभवं व्यवस्था।

'शब्दं विनाऽपि गुडादिशब्दैर्माधुर्यादिरूपार्थस्याक्षिनिकोचादिना चार्थस्य बोधस्य दर्शनात्' इति स्पष्टम्—"अन्नेन व्यञ्जनम्" (पा० सू० २।१।३४) इति सूत्रे भाष्ये।

अर्थस्यापि तत्तत्पदविशिष्टस्याध्याहारः। एतेनार्थाध्याहारे 'चैत्र ओदनम्' इत्यत्र तृतीयाऽऽपत्तिः, प्रत्ययेन कर्तुरनभिधानात्। 'शब्दानुविद्धं सर्वं ज्ञानम्' इति नियमभङ्गश्चेति परास्तम्, "अनभिहिते" (पा० सू० २।३।१) इत्यत्र कर्त्रादावनभिहितत्वस्य समभिव्याहृतेन पदेन, समभिव्याहृतज्ञानविषयीभूतार्थविशेषणीभूतपदेन वाऽभिधानयोग्यत्वाभावरूपस्य विवक्षणेनादोषात्। उपस्थितपदात्पदार्थबोधानङ्गीकारेण चार्थाध्याहारव्यवहारो बोध्यः। अध्याहारश्च—मानसं ज्ञानमित्यपास्तम्।

(रत्न०)—प्रागुक्तमेवार्थं द्रढयति—*पदानामिति—पदानां काल्पनिकमेवार्थवत्त्वं न तु वास्तविकमिति भावः। *क्रियाप्रधानमिति—निरुक्ते तु—"चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च, तानीमानि भवन्ति, तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति—भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इत्युक्तम्। *यथाऽसत्येनेति—यथा—असत्येन मरीचिकाजलेन लोकानाम् 'इदं जलमानय' इत्यादिव्यवहारो दृश्यते, तद्वत्सर्वत्रापि पदेऽसत्येनाप्यर्थवत्त्वेन पदानामर्थवत्त्वव्यवहार इत्यर्थः। *स्पष्टमिति—अस्य हरिग्रन्थे इत्यत्र सम्बन्धः। तत्र हि—'अथ यदि पदपदार्थविभागः सर्वथैवासत्यभूतस्तत्कथं लौकिकानां तदाश्रयेण प्रवृत्त्यादयः' इत्याशङ्क्याह—*न लोक इति—यथा—लोके प्रतिपत्तॄणां सर्वथा न सत्यार्थयोगादेव प्रसिद्धयो व्यवहारनिष्पत्तयोऽसत्येनाप्युपायेन मरीचिकास्वपि जलप्रसिद्धिस्तेषां दृश्यते, तथा—शास्त्रेऽप्यसत्त्वेनैवार्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वत्त्वादिना प्रसिद्धयो व्यवहारा इत्यर्थः । *एतेनेति — कल्पितवाक्यार्थबोधकत्वस्य पदेऽपि व्यवस्थापनेनेत्यर्थः । अस्यान्तिमेन — 'अपास्तम्' इत्यनेनान्वयः । नन्वेवं सर्वस्यैवासत्यत्वे मुख्यरजत–शुक्तिरजतयोरविशेषापत्तिरिति चेत्, अत्रोच्यते — त्रिविधं हि सत्यत्वम् — पारमार्थिकम्, व्यावहारिकम्, प्रातिभासिकञ्च । कालत्रयाबाधितत्वरूपमाद्यम् । यावत्संसारमबाधितत्वात्मकं द्वितीयम् । आगन्तुकदोषजन्यत्वरूपं तृतीयम् । तथा च — शुक्तिरजतस्यागन्तुककाचादिदोषजन्यत्वाद् व्यावहारिकरजतस्य तदजन्यत्वाच्च भेदो बोध्यः । नन्वागन्तुकदोषजन्यत्वं न प्रातिभासिकत्वे प्रयोजकम्, ध्वंसं प्रति तादात्म्येन प्रतियोगिनोऽपि कारणतया काचादिदोषध्वंसस्यागन्तुकदोषजन्यत्वेनातिव्याप्तेरिति चेत्, न, दोषत्वावच्छिन्नजनकतानिरूपितजन्यताया विवक्षितत्वात् । नन्वेवमपि काचादिदोषसंयोगेऽतिव्याप्तिः, तस्यापि काचादिदोषजन्यत्वादिति चेत्, न, तत्र द्रव्यत्वेन कारणतया दोषत्वावच्छिन्नजनकत्वाभावात् । घटादेरप्यविद्यारूपदोषजन्यत्वादतिव्याप्तिवारणाय–आगन्तुकेति । दोषे आगन्तुकत्वञ्च – जननमरणमध्यकालिकबाधविशिष्टत्वम् । *उच्चारितमिति — 'द्वारम्' इत्यादिपदमित्यर्थः । *अमुकेति — असन्तत्वेनोत्वाद्यप्राप्त्या 'अदक' इति उचितम् । 'अमुकशर्मा' इत्यादिशिष्टप्रयोगदर्शनादव्युत्पन्नामुकशब्दोऽयमिति केचित् । "न लुमता–" इत्यस्यानित्यत्वेनादःशब्दस्यैवेदमित्यन्ये । *अन्वयित्वेनेति — पदस्यार्थान्वयित्वाभावादन्वय्यर्थकत्वेनेत्यर्थः । कस्यचित् = पुरुषस्य । अस्य बोधेऽन्वयः । अर्थाध्याहारे आह — *शब्दं विनेति — तत्तद्रूपेण तद्वाचकशब्दं विनेत्यर्थः । ननु शब्दमन्तरैव बोधे शाब्दत्वानुपपत्तिरत आह — *गुडादिशब्दैरिति । *भाष्ये इति — तत्र हि — 'दध्योदनः' इत्यादौ सामर्थ्याभावात्समासाभावमाशङ्क्य "सिद्धन्तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपदोत्तरपदलोपश्च । क्तान्तस्तृतीयापूर्वपदः समस्यते, उत्तरपदस्य च लोपो भवति । दध्ना उपसिक्तो दध्युपसिक्तः, दध्युपसिक्त ओदनो दध्योदनः" इत्युक्त्वा "सम्प्रतीयमानार्थलोपे हि अनवस्था दधीत्युक्ते बहवोऽर्था गम्यन्ते, मन्दकम्, उत्तरकम्, निलीनकमिति तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात्" तस्मात् "युक्तसम्प्रत्ययाच्च सामर्थ्यम्" "दध्ना युक्तार्थता सम्प्रतीयते इत्युक्तम् ।" "अन्तरेणापि खलु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दप्रयोगं बहवोऽर्था गम्यन्तेऽक्षिनिकोचैः पाणिविहारैश्च तद्वाचिनां शब्दानां लोपो वक्तव्यः स्यात्। "सम्प्रत्ययाच्च तदर्थाध्यवसानम्" इति चोक्तम्। एवञ्च दध्ना युक्तार्थप्रतीतेस्तदर्थ एव स इति भावः। एतेनार्थाध्याहार उक्तः। अत एव "यथैतैः ( अक्षिनिकोचादिभिः ) वृद्धव्यवहारवशादर्था गम्यन्ते, तथा शब्दैरिति भावः" इति कैयटः। नन्वर्थाध्याहारे 'चैत्रो ग्रामं गच्छति' इत्यर्थके 'चैत्रः' इति वाक्ये तिङादिभिरनुक्तत्वात्तृतीयाऽऽपत्तिरत आह — ❀अर्थस्यापीति — तत्तत्पदविशिष्टस्यैवार्थस्याध्याहारादध्याहृततिङादिभिः कर्त्रादेरभिधानान्नेति भावः। ❀एतेनेति — पदविशिष्टस्यैवार्थस्याध्याहारेणेत्यर्थः ❀नियमभङ्गश्चेति — अत एव —

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥"

( वाक्यप० कां० १ कारि० १२४ )

इति हर्युक्तं संगच्छते। ननु तत्तत्पदविशिष्टार्थस्याध्याहारेऽपि स्वघटितवाक्यघटकतिङादिभिरनुक्तत्वात्तृतीयाऽऽपत्तिस्तदवस्थैवात आह — ❀अनभिहित इत्यत्रेति। ❀समभिव्याहृतज्ञानेति — समभिव्याहृतस्य यज्ज्ञानं तादृशज्ञानविषयीभूतो यः पचत्यादिरूपोऽर्थस्तद्विशेषणीभूतं यत्पचत्यादिरूपं पदं तेनेत्यर्थः। नन्वेवमपि तादृशपदाभावेनात्राभिधानासम्भवोऽत आह — ❀अभिधानयोग्यत्वस्येति। उपस्थितपदात् = चैत्रादिपदात्। ❀पदार्थबोधानङ्गीकारेणेति — अर्थाध्याहारवादिमते पदे वाक्यार्थनिरूपितशक्तेरभावादिति भावः। ❀अपास्तमिति — उच्चारितं पदमित्यारभ्य, मानसं ज्ञानमित्यन्तग्रन्थप्रतिपाद्यं मतमपास्तम्, अनुच्चारितस्य बोधकत्वासम्भवात्, केवलपदस्यापि वाक्यार्थनिरूपितशक्तिमत्त्वाच्चेति भावः।

मू०—"क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (पा० सू० २।३।१४) इत्येतदुदाहरणे 'फलेभ्यो याति' इत्यादौ तुमुन्नन्ताप्रयोगे तादृशवाक्यैकदेशप्रयोग एव चतुर्थी साधुर्न तु तत्प्रयोगे, स्थानिन इत्युक्तेः। "स्पृहेरीप्सितः" (पा० सू० १।४।३६) इत्युदाहरणे 'पुष्पेभ्यः स्पृहयति' इति सम्पूर्णवाक्यप्रयोगे

पदवाक्यैकदेशयोः शक्तिस्वीकारे शास्त्रप्रक्रियाव्यवस्थापनपूर्वकं परमतखण्डनम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदेकदेशप्रयोगे च चतुर्थ्याः साधुत्वम् । "ल्यब्लोपे"–(पा० वा०) इत्यादि च ल्यबन्तरहितवाक्यैकदेशप्रयोगे एव प्रवर्तते । शास्त्रबलाल्लोकव्यवहाराच्च अस्य पञ्चम्यन्तघटितवाक्यैकदेशस्यैव विशिष्टेऽर्थे शक्तिकल्पनमिति बोध्यम् । "युष्मद्युपपदे"–(पा० सू० १।४।१०५) इति सूत्रे "स्थानिन्यपि" इति तु उपपदग्रहणात् तत्पदसत्ताया एव निमित्तत्वभ्रमवारणाय । "स्थानिनि" इत्युक्ते तत्पदप्रयोगे न स्यादतः 'अपि' इति । 'उपपदे' इति तु वैचित्र्यायैव, 'आचार्याः कृत्वा न निवर्तन्ते' इति न्यायात् ।

एतेनैतद्बलात् स्थानिपदमज्ञायमानार्थकम् । तेन युष्मदाद्यर्थाध्याहारेऽपिनोपपदोच्चारणे तदध्याहारे च मध्यमादि । 'फलेभ्यो याति' इत्यादि चार्थाध्याहारे एव साधु, न पदाध्याहारे । 'पुष्पेभ्यः' इत्यादि पदाध्याहारे एव साधु, नार्थाध्याहारे इत्यपास्तम्, एकस्यैव पक्षभेदेन साधुत्वासाधुत्वयोः "न वा"–(पा० सू० १।१।४४) इति सूत्रे भाष्यकृता तिरस्कारात् ।

किञ्च, एतत्पदाज्ञानं पदज्ञानं च वक्तृनिष्ठं साधुत्वनियामकम्, उत श्रोतृनिष्ठम् ? नाद्यः, अर्थस्य बुद्धिस्थत्वे तद्वाचकपदस्यापि तद्बुद्धिस्थताया आवश्यकत्वात् । नान्त्यः, "इग्यणः"–(पा० सू० १।१।४५) इति सूत्रभाष्योक्तन्यायेन 'पुष्पेभ्यः' इत्येकदेशस्यापि तादृशवाक्यार्थे शक्तिग्रहसत्त्वे ततः पदज्ञानं विनाऽपि बोधेन तत्र पदज्ञानस्य दुर्लभत्वात्, पदानालिङ्गितार्थाध्याहारासम्भवेन 'फलेभ्यो याति' इत्यादावपि श्रोतुः पदाज्ञानस्य दुर्लभत्वाच्च, "परः सन्निकर्षः"–(पा० सू० १।४।१०९) इति सूत्रभाष्योक्तरीत्या वक्तृज्ञानस्यैव साधुत्वनियामकत्वाच्च । वाक्यत्वम्–कारकाद्यन्वितक्रियाबोधकत्वमेवेति वक्ष्यते ।

(रत्न०)—परसिद्धान्तं निराकर्तुं स्वसिद्धान्ते शास्त्रप्रक्रियाव्यवस्थामाह—*क्रियार्थोपपदस्येति । ननु स्वरूपसती पदसत्ता एव शाब्दबोध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारणं तथा च सर्वत्रैव पदसत्ताभानात् 'फलेभ्यो याति' इत्यादौ चतुर्थ्यनापत्तिरत आह—*फलेभ्यो यातीति। *तादृशेति—वाक्यार्थबोधकेत्यर्थः। *तत्प्रयोग इति—तुमुन्नन्तोच्चारणे इत्यर्थः। *इत्युक्तेरिति—स्थानिनि इत्युक्त्याऽनुच्चार्यमाणस्यैव तस्य कर्मणि चतुर्थीविधानात्। *तदेकदेश इति—पुष्पेभ्य इत्यत्र, उभयत्रापि प्रवृत्तिरित्यर्थः, विशेषानुक्तेः। ननु "स्पृहेरीप्सितः" इत्यत्रेव स्थानिन्यपीत्यस्याभावेऽपि विशेषानुक्त्यैव सम्पूर्णवाक्यप्रयोगे तदेकदेशप्रयोगे च चतुर्थी स्यात्, स्थानिन्यपीति व्यर्थमत आह—*युष्मद्युपपद इति। *भ्रमवारणायेति—'युष्मदि समानाधिकरणे' इत्युक्तावपि तत्प्रयोगसत्त्व एव मध्यमः स्यादिति भ्रमवारणायेत्यर्थः। *न स्यादिति—पदसत्त्वे एव मध्यम इति भ्रमनिवृत्तये 'स्थानिनि' इत्युक्तौ युष्मच्छब्दसत्त्वे न स्यात्, अतः—*अपीति। *वैचित्र्यायैवेति—पुण्यपाठार्थमेवेत्यर्थः। न तु दृष्टं फलमस्ति। तदेवाह—*आचार्य्या इति—एतेन—स्थानिन्यपीत्यस्यापि वैचित्र्यार्थत्वं ध्वनितम्। एतेन—"युष्मदि" इति सूत्रे 'स्थानिन्यपि' इति व्यर्थम् "स्पृहेरीप्सितः" इत्यत्रेवाविशेषादुभयत्रापि प्रवृत्तेरित्यपास्तम्, तद्वृत्तस्यापीष्टत्वात्। तदेव खण्डयति—*एतेनेति—उक्तरीत्या शास्त्रप्रक्रियान्यवस्थापनेनेत्यर्थः। ननूपपदत्वे सत्यप्रयुज्यमानत्वमसम्भवीति तदुक्तिरसङ्गतेति तदभिप्रायमाह—*अज्ञायमानार्थकमिति—तथा च—युष्मत्पदाप्रयोगे तदर्थाध्याहारे तदज्ञाने च मध्यम इत्यर्थः। स्थानिन्यपीत्यत्र'अपि' इत्यस्य फलमाह—*अपिनेति। तदध्याहारे = युष्मदाद्यध्याहारे। *एकस्यैवेति—प्रयोगस्येति शेषः। *पक्षभेदेनेति—शब्दाध्याहारार्थाध्याहाररूपपक्षभेदेनेत्यर्थः। *भाष्ये इति—तत्र हि 'कार्य्याः शब्दाः' इति पक्षे दूषणमुक्तम्—तथा हि—"आचार्यदेशपरिशीलनेन च तद्विषयता। आचार्यदेशशीलनेन (संकीर्तनेन) च यदुच्यते तस्य तद्विषयता प्राप्नोति। "इको ह्रस्वोऽङ्यो गालवस्य" "प्राचामवृद्धात्फिन् बहुलम्" इति। गालवा एव ह्रस्वान् प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात्। तद्यथा—"जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत्। 'तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति'। यस्य पुनर्नित्याः शब्दा गालवग्रहणं तस्य पूजार्थम्, देशग्रहणञ्च कीर्त्यर्थम्" इति। अनेनैकस्यैव शब्दस्य देशभेदेन व्यक्ति-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भेदेन च साधुत्वासाधुत्वयोरन्याय्यत्वं स्पष्टमेवोक्तम्। "यस्य पुनर्नित्याः शब्दाः" इत्यनेन दूषणं परिहृतम्। नित्यत्वपक्षेऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुं गालवः स्मर्तृत्वेन निर्दिष्टः। देशकीर्तनञ्च प्रयोगबाहुल्यद्योतनार्थम्, इति सर्वदेशे सर्वप्रयोगे साधुत्वम्। 'युष्मत्पदाज्ञाने मध्यमः' इति मते दोषान्तरमाह—*किञ्चेति। *आवश्यकत्वादिति—ज्ञानमात्रे पदभानस्य पूर्वमुपपादितत्वादिति भावः। तथा च—पदाज्ञानासम्भवाच्छास्त्रवैयर्थ्यापत्तिः। *नान्त्य इति—नहि श्रोतृनिष्ठमिति पक्षे इत्यर्थः। *भाष्योक्तन्यायेनेति—'वाक्यैकदेश'न्यायेनेत्यर्थः। यथा भाष्ये—सम्प्रसारणपदस्य सम्प्रसारणनिर्वृत्तार्थकत्वमुक्तम्, वाक्यस्य संज्ञात्वपक्षे, तथा च—'यणः स्थाने इक्' इति वाक्यस्य सम्प्रसारणसंज्ञायामपि 'विध्यति'इत्यादौ वाक्यस्वरूपसम्प्रसारणपरत्वाभावात्पूर्वरूपादिकं न स्यादिति न शङ्क्यम्, सम्प्रसारणासत्त्वेऽपि सम्प्रसारणनिर्वृत्तस्येकारादेः सत्त्वात्। *दुर्लभत्वादिति—वाक्यैकदेशन्यायेन प्रयोगे स्पृहयतेरज्ञानात् 'पुष्पेभ्यः' इत्यत्र चतुर्थी न स्यादिति भावः। *भाष्योक्तरीत्येति—तथाहि—एकैकवर्णवृत्तित्वाद्वाचः उच्चरितप्रध्वंसितत्वाद्वर्णानां पौर्वापर्याभावात्संहिता न प्राप्नोतीत्याशङ्क्य "एवं तर्हि बुद्धौ कृत्वा" इत्याद्युक्त्वा बुद्धिविषय एव शब्दानां पौर्वापर्यम्" इति निर्णीय वक्तृबुद्धिस्थत्वं स्पष्टमेवोक्तम्। तथा हि—"य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्णस्ततोऽयं ततोऽयमिति"। एतत्सर्वं पूर्वं निरूपितम्। ननु वाक्यैकदेशन्यायपक्षे पदमात्रस्य वाक्यत्वानापत्तिः, वाक्यलक्षणानाक्रान्तत्वात्, वाक्यत्वस्य सुप्तिङन्तसमुदायात्मकत्वात्, सविशेषणाख्यातरूपत्वात्, कारकान्वितक्रियारूपत्वाद्वाऽत आह—*वाक्यत्वमिति। अत एव चन्द्रालोके प्रथममयूखे—

"विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥१३॥
युक्तार्थता तां च विना खण्डकाव्यं स इष्यते।
वाक्यञ्च खण्डवाक्यञ्च पदमेकमपि क्वचित् ॥१४॥
धूमवत्त्वादिति यथा देवेत्यामन्त्रणं यथा।
वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥१५॥"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति जयदेवेनोक्तम् । ननु वाक्यैकदेशस्य वाक्यार्थबोधकत्वे पस्पशायाम्— "ननु चोक्तं न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः, आत्, ऐजिति, किं तर्हि उदाहरणम्, प्रत्युदाहरणम्, वाक्याध्याहारश्चेत्येतत्समुदितं व्याख्यानं भवतीति" इति भाष्ये "वाक्याध्याहारश्च" इत्युक्तिर्विरुद्ध्येत् इति चेत्, न, तद्भाष्यस्य 'वाक्यैकदेश' न्यायेन वार्तिककृद्वाक्येषु सूत्रकृत्तात्पर्यविषयताबोधकत्वपरकत्वेनादोषात् ।

सू०—तत्र "प्रकृतिप्रत्ययनिपातानामेकवर्णानामर्थवत्त्वदर्शनात्" इत्यादिना प्रत्याहाराह्निके भाष्ये उक्तः प्रकृतिप्रत्यययोर्वाचकत्वमित्येवंरूपो वर्णस्फोटः शास्त्रीयप्रक्रियोपयोग्येव न वास्तवः, वस्तुतत्त्वे विकल्पायोगेन प्रातिपदिकार्थविषये एकम्, द्विकम्, त्रिकम्, चतुष्कम्, पञ्चकमित्यादिवादिविकल्पानुपपत्तेः । काल्पनिके तु यथेच्छमिति तत्सम्भवः ।

वर्णस्फोटप्रस्तावेन शास्त्रप्रक्रियोपपादकपदार्थानां काल्पनिकत्वनिरुक्तिः ।

अत एव "अतिशायने तमप्"–(पा० सू० ५।३।५५) इति सूत्रे 'शुक्लादयो गुणा एके । न च शुक्लतर इति प्रकर्षप्रत्ययानुपपत्तिः, तेषां सावयवत्वेनाल्पत्व-महत्वकृतविशेषेण तदुपपत्तेः । अथवा एके निरवयवाः, नैर्मल्यादिगुणान्तरमिश्रणात्तु प्रकर्षः । यथा—जात्युत्पलादिवासितायां मल्लिकायां गन्धप्रकर्षः । अथवा नानाशौक्ल्यादिः' इति भाष्ये उक्तम् । अनेन ह्येकत्रवस्तुनि अनेकपक्षोपन्यासेन व्यवहारोपपादकपदार्थानामवास्तवत्वं सूचितम् ।

किञ्च, अस्यैव वास्तवत्वे "कर्तरि कृत्" (पा० सू० ३।४।६७) इत्यस्यास्मदादीन्प्रत्यबोधकत्वापत्तिः, कर्तृपदस्याप्यवयवशक्त्यैव बोधकत्वेनैतद्वाक्यार्थबोधात् प्राक् तत्र शक्तिग्रहासम्भवेनात्माश्रयापत्तेः । यदि तस्य मानान्तरेण शक्तिग्रहस्तदाऽन्येषामपि तेनैव शक्तिग्रहसम्भवेनास्य वैयर्थ्यापत्तिः । शक्तिग्रहाभावे शक्यसम्बन्धरूपा, तन्मूलिका वा लक्षणाऽपि वक्तुमशक्या । एव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ञ्चेदृशे विषये समुदायशक्त्यैव वोधकत्वमस्मदादीन्प्रत्यावश्यकम ।

गौतमोऽपि प्रकृतिप्रत्ययार्थस्यावास्तवत्वं ध्वनयन्—"ते विभक्त्यन्ताः पदम्" (न्या० दर्शन० २।२।५९) इति पदपदार्थमुक्त्वा "जात्याकृतिव्यक्तयस्तु पदार्थः" (न्या० दर्शन० २।२।६७) इत्याह । विभक्तिपदेन सुप्तिङाविति तद्वार्तिककारः ।

(रत्न०)—* तत्रेति—अखण्डयोरेव वाक्यवाक्यार्थयोर्वाच्यवाचकभावव्यवस्थापने सतीत्यर्थः । *भाष्ये इति—"हयवरट्" (माहे० सू० ५) सूत्रे भाष्ये हि—"किं पुनरिमे वर्णा अर्थवन्त आहोस्विदनर्थकाः ?, अर्थवन्तो वर्णा धातु-प्रातिपदिक-प्रत्यय-निपातानामेकवर्णानामर्थदर्शनात् । धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीत इति । प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु । प्रत्यया एकवर्णा अर्थवन्तः—औपगवः, कापटवः । निपाता एकवर्णा अर्थवन्तः—अ अपेहि, इ इन्द्र, उ उत्तिष्ठ, अ अपक्रामय" इत्युक्तम् । *उक्त इति—अस्य 'वर्णस्फोटः' इत्यत्रान्वयः । *वर्णस्फोट इति—वर्णपदेन—प्रकृतिप्रत्ययघटकभिन्ना ग्राह्याः । भाष्ये—"उभयमिदं वर्णेषूक्तम्—अर्थवन्तोऽनर्थका इति । किमत्र न्याय्यम् ? उभयमित्याह । कुतः ? स्वभावतः । तद्यथा—समानमीहमानानां चाधीयमानानां केचिदर्थैर्युज्यन्तेऽपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुं कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम् । यद् धातु-प्रत्यय-प्रातिपदिक-निपाता एकवर्णा अर्थवन्तोऽन्येऽनर्थका इति । स्वाभाविकमेतत्" इत्यत्र तादृशानामेवार्थवत्त्वस्योक्तत्वात् । अत्र वर्णपदं प्रकृत्याद्यवयवस्योपलक्षणम् । *न वास्तव इति—लौकिकव्यवहारोपयोगी नेत्यर्थः । *वस्तुतत्त्व इति—यथा—व्यवहारकाले वस्तुतो नहि 'घटोऽघटः कदाचिदपि' इति विकल्पायोगः, तथा प्रकृतेऽपीति भावः । *यथेच्छमिति—असत्यभानस्य कल्पनाऽधीनत्वात्कल्पनाया नानात्वेन नानात्वं तदेकत्वेनैकत्वमिति भावः । *अत एवेति—काल्पनिकत्वादेवेत्यर्थः । तत्र हि—"किं पुनरेकं शौक्ल्यम्, आहोस्वि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाना ?। किञ्चातः। यद्येकम्, प्रकर्षो नोपपद्यते। नहि तेनैव तस्य प्रकर्षो भवति । अथ नाना, समानगुणग्रहणं कर्त्तव्यम्। शुक्लात् कृष्णे मा भूदिति" इत्युक्तम्। अत्र एकत्वपक्षे जातिवद्गुणस्य प्रकर्षानुपपत्तिः। किञ्च, तुल्ये भेदे यथा शौक्ल्यस्य शौक्ल्यान्तरापेक्षः प्रकर्षः, एवं कृष्णाद्यपेक्षोऽपीति, कृष्णाद्यपेक्षेऽपि प्रकर्षे शुक्लादिशब्दात् प्रत्ययनिवृत्त्यर्थं समानगुणग्रहणं कर्त्तव्यम्। शुक्लापेक्षे प्रकर्षे शुक्लशब्दात् कृष्णापेक्षे प्रकर्षे कृष्णशब्दादित्येवं प्रत्ययो विधेय इत्यर्थः। "अस्त्वेकं शौक्ल्यं तत्तु विशेषवत्। किं कृतो विशेषः ? अल्पत्वमहत्त्वकृतः। अथवा पुनरस्त्वेकं निर्विशेषञ्च। ननु चोक्तं प्रकर्षो नोपपद्यते, नहि तेनैव तस्य प्रकर्षाप्रकर्षौ स्त इति। गुणान्तरेण प्रच्छादनात् (मिश्रीकरणात्) प्रकर्षो भविष्यति। अथवा पुनरस्तु नाना। ननु चोक्तं समानगुणग्रहणं कर्त्तव्यमिति। न कर्त्तव्यम्। समानगुण एव स्पर्द्धा भवति। न हि आढ्याभिरूपौ स्पर्द्धेते" इति चोक्तं तत्रैव। द्रव्यस्य स्वतः प्रकर्षाभावेन संसर्गिधर्मप्रयोज्य एव प्रकर्षः। 'शुक्लतरः पटः' इत्यत्र शुक्लगुणनिमित्तको द्रव्यप्रकर्षः। यथाहि—उपाधिरहितस्य द्रव्यस्य प्रकर्षो नास्ति, तथा द्रव्यान्निष्कृष्टस्य गुणस्यापि 'शुक्लतरं रूपम्' इति स्वतः प्रकर्षो नास्तीति भावः। तदुक्तं भाष्ये—

"गुणी वा गुणसंयोगाद् गुणो वा गुणिनो यदि।
अभिव्यज्येत संयोगात्कारितार्थो भविष्यति॥" इति

अस्यार्थः—गुणसम्बन्धाद् गुणवानतिशेते। गुणिसम्बन्धाद् गुणो वा प्रकृष्टत्वेनाभिव्यज्येत। गुणो गुणिनमतिशाययति, गुण्यपि गुणम्, इत्यस्ति ण्यर्थोपपत्तिरित्याह—कारितार्थो भविष्यति इति। ननु—

"संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम्॥"

(वाक्यप० कां० ३ समु० ५ कारि० १)

इत्युक्तं हरिणा। संसर्गिण आधारस्य यद्यद्भेदकं सव्यापारं प्रतीयते, तस्य सर्वस्य गुणत्वं शास्त्रे उदाहृतम्। तत्र हेतुमाह—*परतन्त्रत्वादिति—'परतन्त्रो हि गुणः' इत्युच्यते। तथा च—जातेरपि परतन्त्रत्वाद् गुणत्वं प्राप्नोति। भाष्येऽप्युक्तम्—"अन्यो हि वीरत्वं गुणः, अन्यः पुरुषत्वम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति । यथा 'शुक्लः' 'नीलः' इत्याश्रयान्तरव्यवच्छेदः । एवम् 'गौरश्वः' इत्यादावप्याश्रयान्तरव्यवच्छेदो जायते, इति जातेरपि गुणत्वात् तत्प्रकर्षे तरबापत्तिरिति चेत्, न, शुक्लादिगुणैरेव व्यक्तीनां भेदनात्तत्प्रकर्षे तरब्विधानात् । नहि गोत्वेन गोषु प्रकर्षाप्रकर्षौ स्तः । कथं तर्हि 'गोतरः' इति ? नैष जातेः प्रकर्षः । कस्य तर्हि ? । गुणस्य । गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरञ्च" इति भाष्याद् गुणप्रकर्षे एव तत्र तरपो लाभात् । एवम् 'निकृष्टतरः' 'प्रकृष्टतरः' इत्यत्र निकर्षप्रकर्षातिशय एव तरप् । 'नतराम्' इत्यत्र गमनादेरत्यन्तायुक्तत्वप्रतिपादनाय निषेधस्य प्रकर्षे तरप् । 'द्योत्यार्थप्रकर्षे एव तरप्' इति तु प्रायिकम् । एवं गुणप्रकर्षे तरपं निरूप्य गुणानामेकत्वादि निरूपयति —❀शुक्लादय इति । ननु शुक्लादिगुणानामेकत्वे समानगुणनिरूपितप्रकर्षाभावात्प्रत्ययो न प्राप्नोति, एकत्वे स्वस्मिन्स्वनिरूपितप्रकर्षासम्भवादत आह —❀ न च शुक्लतर इति । तेषाम् = शुक्लादिगुणानाम् । ❀अल्पत्वेति — सावयवे एवाल्पत्वमहत्त्वयोः सम्भवात् । सांख्यमेतेनेदम्, तन्मते — रूपादीनां सावयवत्वात् । ❀एकेति — अस्य 'शुक्लादयो गुणाः' इति शेषः । ननु प्रकर्षानुपपत्तिरत आह – ❀नैर्मल्यादीति — नैर्मल्यादिगुणान्तरवैशिष्ट्येन शुक्लगुणस्य प्रकर्ष इत्यर्थः । एतेन रूपादिचतुर्विंशतिसाधारणगुणत्वजातौ मानाभाव इति ध्वनितम् । तथाहि— न तावत्तत्र प्रत्यक्षप्रमाणम्, धर्मादीनामप्रत्यक्षात् । यथा हि–तुरगादिषु गत्यादिगतोत्कर्षमादाय 'गुणवान् अयम्' इति व्यवहारः । यथा वा–ब्राह्मणादेर्द्वेषाभावे गुणव्यवहारः, तथा–रूपादिष्वपि उत्कर्षादिकमादायैव गुणव्यवहारः । ❀यथा जातीति–मालत्यपरपर्यायः पुष्पप्रधानो लताविशेषः। यद्वा जातीपदेन हिन्दीभाषायाम् 'चमेली' इति प्रसिद्धस्य ग्रहणम् । ❀मल्लिकाया इति — हिन्दीभाषायां बेलाजातीयो 'मोतिया' इति प्रसिद्धः पुष्पविशेषः । ❀नानेति – नचात्र पक्षे -- कृष्णाद्यपेक्षया प्रकर्षेऽपि तरबापत्तिः, "नद्याढ्याभिरूपौ स्पर्द्धेते" इति भाष्यात् सजातीयगुणापेक्षप्रकर्षे एव तद्विधानात् । ❀अनेनेति – अस्यैवार्थः – ❀एकत्रवस्तुनीति । ❀अस्यैवेति – कल्पितप्रकृतिप्रत्ययाद्यर्थस्यैवेत्यर्थः । ❀अबोधकत्वापत्तिरिति — अयम्भावः – वस्तुतः प्रकृतिप्रत्ययादीनामर्थवत्त्वे "कर्तरि कृत्" ( पा० सू० ३।४।६७) इति सूत्ररूपवाक्यजन्यबोधो न स्यात्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्पक्षे वाक्यार्थबोधे पदार्थोपस्थितेः कारणत्वनियमेन कर्तृपदार्थोपस्थितेरावश्यकत्वात् । तदर्थोपस्थितिश्च — कृधात्वर्थतृच्प्रत्ययार्थनिरूपितशक्तिज्ञानाधीना, तृच्प्रत्यये शक्तिज्ञानञ्चैतस्य कृत्संज्ञकत्वात् "कर्तरि कृत्" इति सूत्रस्यैव तत्र शक्तिग्राहकतयैतद्वाक्यार्थबोधाधीनम्, इत्यात्मीयवाक्यार्थबोधे, आत्मीयवाक्यार्थबोधकारणत्वादात्माश्रय इति । तस्य = तृचः । मानान्तरेण = वृद्धव्यवहारादिना । अन्येषामपि = ण्वुलादीनामपि । तेनैव = वृद्धव्यवहारादिनैव । अस्य = "कर्तरि कृत्" इति सूत्रस्य । ननु तृचः कर्तरि लक्षणया निर्वाहोऽत आह — *शक्तिग्रहाभावे इति । तन्मूलिका = शक्यसम्बन्धमूलकशक्यताऽवच्छेदकारोपरूपा । ईदृशे विषये = तत्तत्पदनिष्ठशक्तिग्राहकशास्त्रघटकतत्तत्पदविषये, "कृत्याः" ( पा० सू० ३।१।९५ ) "भावे" ( पा० सू० ३।३।१८ ) इत्यादिसूत्रघटकपदविषये इति यावत् । अस्मदादीन्प्रति = लक्षणैकचक्षुष्कान्प्रति । प्रकृत्यादीनामर्थवत्त्वं काल्पनिकमित्यत्र दर्शनान्तरसम्मतिमाह — †*गौतमोऽपीति । 'शक्तं पदम्' इत्याधुनिकनैयायिकमतनिरासायाह — *ते विभक्त्यन्ता इति — ते = अभिमतानुपूर्वीविशिष्टा वर्णाः विभक्त्यन्ताः 'पदम्' इत्युच्यते इत्यर्थः । बहुत्वं वर्णाभिप्रायेण । 'पदम्' इत्येकवचनं जात्यभिप्रायेण । ननु वर्णसमुदायानां पदत्वेऽर्थप्रत्ययो न प्राप्नोति, इति चेत्, न, पूर्वपूर्ववर्णप्रतिसन्धानप्रत्ययापेक्षादन्त्यवर्णप्रत्ययादर्थप्रतीतेः । तथा च — 'पूर्वपूर्ववर्णस्मृतिविशिष्टोऽन्त्यवर्णो नश्यदवस्थोऽनुभवविषयीक्रियमाणः पदम्' इति फलितम् । एवम् 'पूर्वपूर्वपदस्मृतिविशिष्टमन्त्यपदं नश्यदवस्थमनुभवविषयीक्रियमाणं वाक्यम्' इत्युच्यते । पूर्वपूर्वपदार्थस्मृतिविशिष्टे नान्त्यपदेन जायमानः प्रत्ययो वाक्यार्थः । पदपदार्थम् = पदशब्दार्थम् । *जात्याकृतीति — व्याख्यातमिदं प्राक् । अत्र त्रयाणामेकपदार्थत्वसूचनाय 'पदार्थः' इत्येकवचनम् । जातौ, व्यक्तौ, तद्वैशिष्ट्ये चेति त्रिषु पदार्थत्व-

---

† एतेन वर्णस्फोटो नहि गौतमसम्मत इति ध्वनितम् । वर्णस्फोटस्य तदभिमतत्वे प्रथमं प्रकृतिप्रत्ययाद्यर्थमेव प्रदर्शयेत् , तमपि वा । तस्मात्पदस्फोट एव तत्सम्मतः । आधुनिकन्यायग्रन्थेषु सुबर्थादिविचारस्तु व्याकरणवासनावासितान्तःकरणतयेति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्य्याप्त्या केवलगोत्वस्य, व्यक्तेश्च न बोधः । एवमवयवसंयोगरूपाकृतिपदार्थे, तद्वैशिष्ट्ये च शक्तिः, जात्याकृतिविशिष्टाया एव व्यक्तेर्बोधात् । अत एवोक्तं हरिणा—

"अनुप्रवृत्तिधर्मो वा जातिः स्यात्सर्वजातिषु ।
व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते ॥" इति ।
( वाक्यप० कां० ३ समु० १ कारि० १४ )

जातीनामेतज्जातित्वं येयं स्वाश्रयानुवृत्तिः । सर्वैव हि जातिः स्वव्यक्तीरनुवर्तते । उपलक्षणश्चैष धर्मः । प्राप्ताश्रयपरिसमाप्ता अपि च गुणाः प्रतिद्रव्यं भिन्नाः; जातिस्त्वेकैव । यथा—गोत्वादिजातिः सर्वा व्यक्तीर्व्याप्नोति, तथा—विषाणादयोऽपीति । जात्या तुल्यरूपत्वाज्जातिकार्याय कल्पन्ते । एवं सर्व एव विशेषा व्यावर्तन्ते । अन्यथाऽनुगमात् सामान्यानि स्युर्न विशेषा इति । सर्वविशेषेषु साधारणी व्यावृत्तिः । नन्वेवं गोरपि सास्नाद्यवयवसम्बन्धस्य साधारणत्वात् सैव जातिरस्तु इति चेत्, न, सास्नादिमत्त्वस्य 'सास्नादिमानयम्' इति प्रत्ययमात्रजनकत्वात् 'गौरयम्' इति प्रत्ययाजनकत्वात् । *सुप्तिङावितीति—तदुक्तं न्यायवार्तिककृतोद्योतकरेण-विभक्तिर्द्वयी—नामिकी चाख्यातिकी च । नामिकी = स्वादयः । आख्यातिकी = तिङादयः । तया विशिष्यमाणं पदं द्वेधा भवति—नाम चाख्यातञ्चेति इति। विभक्तिरन्तःसम्बन्धस्तेन वाचकत्वं पदत्वमित्युच्यते।

मू०—तत्र—जातिः प्रवृत्तिनिमित्तोपलक्षणम् । आकृतिपदेन रूपक्रियाऽऽदिविशिष्टमवयवसंस्थानं जातिलिङ्गमेव । अत एव 'गां लिख' इत्यादौ लेखनकर्मत्वोपपत्तिः । व्यक्तिपदेन च सङ्ख्याऽऽदिविशिष्टा व्यक्तिः ।

जात्यादीनां पदार्थत्वे, ज्ञानमात्रे तद्भाने च भाष्यसम्मतिप्रदर्शनम् ।

अत एव 'गौः' इति विज्ञाने प्रतिभासमानेषु वस्तुषु 'कः शब्दः ?' इति प्रश्ने सास्नादिविशिष्टस्यार्थस्य, क्रियायाः, गुणस्य, जातेश्च शब्दत्वम् 'किम् ? यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः' यत्तर्हि तदिङ्गितम्, निमिषितम्, 'स शब्दः ?, यत्तर्हि तत् शुक्लः, नीलः, कपिलः, कपोत इति स शब्दः ?, यत्तर्हि भिन्ने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः ?" इत्येतद्ग्रन्थेन इतिशब्दबलात्, तदिति नपुंसकवशाच्च शुक्लसुरभ्यादिविशेष-शब्दैर्व्यवह्रियमाणं वस्तु रूपगन्धस्पर्शादिकं लिङ्गसंख्याऽऽदिकं च शब्द इत्याद्यर्थकेचाशङ्क्य "नेत्याह"—वक्ष्यमाणगुणाश्रयः "द्रव्यं नाम तत्" "क्रिया नाम सा" उक्तद्रव्य ( वृत्तिः ) गुणो नाम सः "आकृतिर्नाम सा" इत्येवं तेषां तत्त्वाभावमुपपाद्य "येनो-च्चारितेन सास्नालाङ्गूलखुरककुदविषाणिनां सम्प्रत्ययो भवति स शब्दः" ( महाभा० पस्पशाह्नि० ) इत्युत्तरितं पतञ्जलिना ।

अत एव कैयटेन "अथ गौरित्यत्र कः शब्दः ?" इति प्रश्नस्य "गौः, इति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्दः" इत्याश-यमुक्त्वा 'तान्येव वस्तूनि क्रमेण निर्दिशति' इति "किं यत्तत् सास्ना"इत्यादिभाष्यमवतारितम् ।

'येन' इत्यादि सिद्धान्तभाष्ये विषाणस्योपलक्षणत्वाद् गुण-क्रियाजातिग्रहणम् । अत एव (च) आम्रफलादौ श्रुते रसविशेषा-दिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात् । चक्षुरादि-भिरपि सामान्यतो रसादिग्रहणं भवत्येव । विशेषस्तु रसनाऽऽदि तत्तदिन्द्रियग्राह्य एव । अत एव आम्रफले दृष्टे रसविशेषादिजि-ज्ञासा, "अथ गौरित्यत्र"इत्यत्र गौरित्यनेनाविशेषात् ज्ञानमात्रस्य ग्रहणेन ज्ञानमात्रे शब्दगुणक्रियाऽऽदिसामान्यभानस्य भाष्यकृता ध्वननात् । अत एव 'कम्बुग्रीवादिमान्नास्ति' इत्यादितो घटत्वा-वच्छिन्नाभावप्रतीतिरुक्ता न्यायविद्भिः, जातेरपि तत्पदार्थत्वात् , आकृतेर्घटपदार्थत्ववत् ।

(रत्न०)—तत्र = सूत्रे । *उपलक्षणमिति — तेनाकाशत्वादेरपि पदार्थत्वं सिध्यति । *आकृतिपदेनेति — आकृतेः पदवाच्यत्वं परमतेन । वस्तुतस्तु — गवादिषु य आकारविशेषसम्प्रत्ययः स नान्तरीयकतया प्रती-यते । अन्यथा देवताऽपूर्वादिशब्देऽपि तत्प्रत्ययापत्तिः । तदुक्तं हरिणा —



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"प्रयोगदर्शनाभ्यासादाकारावग्रहस्तु यः ।
न स शब्दस्य विषयः स हि यत्नान्तराश्रयः ॥" इति ।

यत्नान्तराश्रयः = अनुमानगम्यः । ॐलिङ्गमेवेति — एवेन जातित्वनिरासः । जातेः सूचकम्, न तु जातिरिति भावः । ॐअत एवेति — जात्यादीनां पदार्थत्वादेवेत्यर्थः । ॐलेखनेति — जातौ लेखनकर्मत्वस्य बाधादिति भावः । अत एव = आकृतेः पदार्थत्वादेव । 'गौः' इति ज्ञानाकारमिदम् । यद्वा, 'गौः' इति वाक्यजन्यबोधे इत्यर्थः । कः शब्दः ? = शब्दपदवाच्यः कः ? । ॐसास्नादीति — 'सास्नादिविशिष्टस्य' इत्यादेः षष्ठ्यन्तचतुष्टयस्य 'शब्दत्वम्' इत्यत्रान्वयः। तस्य च 'आशङ्क्य' इत्युत्तरत्रान्वयः । ॐइङ्गितमिति — अभिप्रायसूचकः शरीरव्यापारः। चेष्टितम् = हस्तादिव्यापारः। निमिषितम् = चक्षुर्व्यापारः। ॐशुक्ल इति — अत्र शुक्लादिशब्दा गुणपरा एवेति भावः । ॐकपोत इति — 'कपोतो धूसरवर्णः' इति मेदिन्याम् । ॐभिन्नेष्वभिन्नमिति — आश्रयभेदेऽप्येकमित्यर्थः । व्यक्तीनामानन्त्येऽपि सामान्यस्यैकत्वं समवेतत्वं च बोधितम् । ॐछिन्नेष्विति — आश्रयनाशेऽपि नाशाप्रतियोगि । एतेन नित्यत्वमुक्तम् । ॐसामान्यभूतमिति — "सत्ताऽऽख्यं महासामान्यं गोत्वादेः सामान्यस्योपमानं निर्दिष्टम्। सामान्यमिव सामान्यभूतम् । भूतशब्द उपमार्थे, यथा—'पितृभूतः' इति ।" इति कैयटः । अत्र कैयटेन — 'सामान्यभूतम्' इत्यत्र भूतशब्दानुपपत्तिं मत्वोक्तम् — 'भूतशब्द उपमार्थे' इति । अत्रेदं वक्तव्यम् — सामान्यविशेषयोरुपमानोपमेयभावस्वीकारे 'मनुष्यवद् ब्राह्मणाः' इत्याद्यापत्तेः । जातिमात्रस्य नित्यत्वाद्युपपादनप्रसङ्गे संकोचे मानाभावः, उपमायाः प्रकृतेऽनुपयोगश्चेति । तस्मादत्र भूतशब्दः स्वरूपवाची, वृद्धिसंज्ञासूत्रभाष्यस्थप्रमाणभूत आचार्य्य इतिवत्। 'पितृभूतः' इत्यत्रापि अन्यार्थेऽन्यशब्दप्रयोगः सादृश्यपरः, इति सादृश्यार्थप्रतीतिर्बोध्या । भूतशब्दस्य सदृशार्थकत्वे मानाभावोऽपि । यद्वा, सामान्यशब्दः समानस्य भावः सामान्यमिति यौगिकत्वेन धर्ममात्रपरः । अत एव 'सामान्यधर्मः' 'विशेषधर्मः' इत्यादिव्यवहारः । तथाच — न्यायपारिभाषिकसामान्यशब्दोऽयमिति सूचनायैवात्र भूतशब्दप्रयोग इति । गुणस्य शब्दत्वशङ्कापरे वाक्ये प्रकारार्थकेतिशब्दबलात्, नपुंसकतच्छब्दबलाच्च सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसं-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्याऽऽदिरूपगुणसङ्ग्रह इत्याह — *इतिशब्दबलात् तदिति नपुंसकवशाच्चेति । तत्त्वाभावम् = शब्दत्वाभावम् । *उच्चारितमिति—आकृतेः पदार्थत्वेन तस्याश्च रूपक्रियाऽऽदिविशिष्टावयवसंस्थानरूपत्वादेव भाष्ये प्रश्नोत्तरभावः सङ्गच्छते इति भावः । नन्वेवमुक्तरीत्या प्रश्नग्रन्थे न्यूनतापरिहारेऽपि सिद्धान्तभूतोत्तरवाक्ये गुणक्रियाऽऽदीनामनुपादानान्न्यूनत्वमेवात आह — *येनेत्यादीति । *उपलक्षणत्वादिति — तेन नास्ति न्यूनतेति भावः । *अत एवेति—शब्दैः सामान्यतो गुणक्रियाऽऽदिबोधादेवेत्यर्थः । ननु विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वमनुपपन्नम्, चक्षुरादिना फलदर्शनेऽपि रसविशेषजिज्ञासादर्शनात् । चक्षुषा च सामान्यतोऽपि रसज्ञानासम्भवोऽत आह — *चक्षुरादिभिरिति — ननु चाक्षुषप्रत्यक्षे एव चक्षुःसंयोगादेर्हेतुत्वाच्चक्षुषा रसग्रहणानुपपत्तिरिति चेत्, न, प्रत्यक्षसामान्यं प्रति, इन्द्रियसंयोगादेरपि हेतुत्वस्यावश्यकत्वात् । अन्यथाऽत्र प्रत्यक्षसामान्याभावः कस्मादिति प्रयोजकजिज्ञासायां तत्तदिन्द्रियसम्बन्धाभावस्य प्रयोजकत्वस्वीकारे प्रयोज्यप्रयोजकभावस्य नानात्वादतीव गौरवं स्यात् । प्रत्यक्षसामान्यं प्रति इन्द्रियसम्बन्धस्य हेतुत्वस्वीकारे तु प्रत्यक्षसामान्याभावं प्रति एकस्यैवेन्द्रियसम्बन्धाभावस्य प्रयोजकत्वेनोपपत्तौ महल्लाघवम् । किञ्च, चक्षुष्ट्वादिनाऽपि कारणत्वे स्वसंयुक्तसमवायादिरूपकारणबलाद् रूपादिचाक्षुषप्रत्यक्षे बाधकाभावः । ननु चक्षुषैव रसादिग्रहणसम्भवे इतरेन्द्रियवैयर्थ्यम्, विशेषरूपेण प्रत्यक्षं प्रति, तत्तदिन्द्रियाणामेव कारणत्वात् । तदाह — *विशेषतस्तु रसनाऽऽदीति । अत एव = विशेषरूपेण रसादिज्ञाने तत्तदिन्द्रियाणां कारणत्वादेव । *रसविशेषेति — अन्यथा विशेषतोऽपि चक्षुषैव ज्ञानसिद्धौ जिज्ञासाऽनुपपत्तिरिति भावः । चक्षुरादिभी रसादीनामपि सामान्यज्ञाने भाष्यं प्रमाणयति — *अथ गौरिति — अत एव "अथ गौरिति विज्ञाने" विज्ञानमात्रोपादानम् । *अविशेषादिति — 'गौरिति' ज्ञानमात्रोपलक्षणमिति भावः । *अत एवेति — ज्ञानमात्रे जात्याकृतिव्यक्त्यादीनां भानादेवेत्यर्थः । *कम्बुग्रीवादिमान्नास्तीति — एतद्वाक्यजन्यज्ञानीयप्रतियोगिताऽवच्छेदकता लाघवाद् घटत्वरूपजातावेव, न तु संयोगरूपे संस्थानगतजातिरूपे वा कम्बुग्रीवादिमत्त्वे, संयोगरूपत्वे नानात्वेन,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संस्थानगतजातिरूपत्वे प्रतियोगिताऽवच्छेदकताऽवच्छेदकस्य स्वसमवायिसामानाधिकरण्यरूपपरम्परासम्बन्धस्य स्वीकारेण च गौरवात् । जातित्वे सम्बन्धप्रयुक्तमेव गौरवम्, स्वरूपतस्तु द्वयोरपि जातित्वाद् गुरुत्वाभावः । वस्तुतस्तु — अनुभवबलाद् गुरुधर्मस्यापि प्रतियोगिताऽवच्छेदकत्वेन तत्र कम्बुग्रीवादिमत्त्वस्यैवावच्छेदकत्वम् । प्रतियोगितायाम् 'कम्बुग्रीवादिमत्त्वावच्छिन्नत्वं भ्रमः' इति ज्ञानस्यैव भ्रमत्वं बोध्यम्, अनुभवस्यैव सर्वतो बलवत्त्वात् । एवञ्च 'कम्बुग्रीवादिमान्नास्ति' इति ज्ञाने घटत्वाभानेऽवच्छेदकत्वासम्भवः, अनुपस्थितस्याप्यवच्छेदकत्वेऽतिप्रसङ्गात् । यथाकथञ्चिद् उपस्थितस्य तत्त्वे, बहूपप्लवापत्तेः । अत एव नीलधूमत्वादीनां व्याप्यताऽवच्छेदकता स्वीकृता दीधितिकृता । कम्बुग्रीवादिमत्त्वस्यावच्छेदकत्वादेव 'कम्बुग्रीवादिमान्नास्ति' 'घटो नास्ति' इति वाक्यद्वयजन्यज्ञानयोर्वैलक्षण्यम् । यत्तु 'घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यताशाली बोधः' इति स्वीकारेणोभयोर्वैलक्षण्यमिति, तन्न, कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतानिरूपिताभावनिष्ठविशेष्यताशालिबोधम्प्रति, घटत्वावच्छिन्नप्रकारताशालिज्ञानस्य कारणत्वभङ्गप्रसङ्गात्, उक्तस्थले प्रकारताया घटत्वानवच्छिन्नत्वेन व्यभिचारात् । तादृशज्ञानं प्रति तस्याहेतुत्वे निर्विकल्पकघटत्वादिज्ञानानन्तरमपि तादृशाभावप्रत्यक्षापत्तेः, कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारताशालिज्ञानस्यैव कारणत्वेऽक्लृप्तकल्पनायां गौरवापत्तेश्चेति दिक् ।

मू०—तत्र जातिरनुगताकारप्रतीत्या, स्वरूपत एकत्वेन च सिद्धा । अत एव "सरूप"–( पा० सू० १।२।६४ ) सूत्रे भाष्ये "कथं पुनर्ज्ञायते–एकाकृतिरिति, प्रख्याऽविशेषात् । नहि 'गौः' इत्युक्ते विशेषः प्रख्यायते–शुक्ला, नीला" इत्यादि । 'प्रख्या =बुद्धिः, तस्या अविशेषः= एकरूपता, तेन तद्विषयस्यार्थस्यैक्यं प्रतीयते' इति कैयटः । इयमेवानुगताकारप्रतीतिशब्देनोच्यते, एकाकारप्रतीतिशब्देन च ।

अनुगताकारप्रतीत्या जातिसाधनम् ।

अत एव प्राणप्रदत्वं जातेरुक्तं प्रकाशे–(काव्य० प्र० उल्ला० २

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारि० ८) 'यावत्स्थितिसम्बन्धित्वं च तत्त्वम्' इति तद्व्याख्यातारः । यावत्स्थिति एकाकारप्रतीतिर्हि प्राणः, तत्प्रदत्वं हि जातेरेव, न पाचकत्वादेरिति स्पष्टमेव, पाकक्रियाणामाश्रयभेदेन भेदात्। 'स्वगतजात्यैव तासामेकाकारप्रतीतिजनकत्वम्' इत्यन्ये ॥

( रत्न० )—तत्र = जात्याकृत्यादीनां मध्ये । ॐअनुगताकारप्रतीत्येति — एकरूपेण प्रतीत्येत्यर्थः । सर्वेष्वपि वस्तुषु 'इयमपि गौरियमपि गौः' 'अयमपि वृक्षोऽयमपि' इति व्यावृत्तानुवृत्तानुकारं प्रत्यक्षं देशकालावस्थाऽन्तरेष्वविपर्य्ययस्तमुदीयमानं सर्वमेव तर्काभासं विजित्य द्व्याकारं वस्तु व्यवस्थापयत् । तदुक्तम् — शास्त्रदीपिकायाम्—

"प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ।
न शक्योऽपह्नवः कर्तुं सर्वं विजयते हि तत् ॥" इति ।

ॐस्वरूपत इति — किञ्चिद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यताशून्यत्वेनेत्यर्थः । एकत्वेन = अभेदेन । अत एव = अनुगतप्रतीत्या जातिसिद्धेरेव। ॐभाष्ये इति – तत्र हि – "सरूप"सूत्रप्रत्याख्यानाय "आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः । आकृत्यभिधानाद्वा एकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते" । जातिः पदार्थस्तस्या एकरूपत्वादनेकशब्दप्रयोगप्रसङ्ग एव नास्ति किमेकशेषेणेत्यर्थः । "एका आकृतिः सा चाभिधीयते इति । कथं पुनर्ज्ञायते एका आकृतिः सा चाभिधीयते इति ? प्रख्याऽविशेषात्"। प्रख्या = बुद्धिः,तस्या अविशेषात् = एकरूपत्वात्तद्विषयस्याप्यैक्यं प्रतीयते, विषयभेदेनैव बुद्धेर्भेददर्शनात् । गुणप्रमाणादिभिन्नेष्वपि गोपिण्डेषु 'गौः' इत्येकाकारप्रतीतेरवश्यमेकेनावलम्बनेन सामान्येन भवितव्यमिति जातिसद्भावः, तस्या एकत्वञ्चाध्यवसीयते । "नहि 'गौः' इत्युक्ते विशेषः प्रख्यायते — शुक्ला, नीला, कपोतिकेति । यद्यपि तावत्प्रख्याऽविशेषाज्ज्ञायते'एकाकृतिः' इति, कुतस्त्वेतत्साऽभिधीयते ? इति"। एकाकृतिरस्ति, सा चाभिधीयते, इति अंशद्वयमुक्तं तत्र, भवतु सामान्यमेकं तस्य तु वाह-दोहादिकायामर्थक्रियायामयोग्यत्वाद्द्रव्यस्यैव योग्यत्वादभिधानं न्याय्यम, इति प्रश्नः – 'कुतस्त्वेतत्साऽभिधीयते' इति, तत्राह – "अव्यपवर्गगतेश्च । अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'इदम्' 'तद्' इति सर्वनामपरामर्शयोग्यम्, तत्तदुपाध्यवच्छिन्नं ब्रह्म वा द्रव्यमित्यत आह—*अतिरिक्तेति । *विशेषानालिङ्गितस्येति–शुक्लादिविशेषानालिङ्गितस्येत्यर्थः । स एव = शुक्लादिविशेषावगम एव । नन्वाकृतेरपि वाच्यत्वे कथं न शुक्लादिविशेषभानं स्यादत आह — *उक्ताकृतेरपीति — जातिशक्तिवादे तु सामान्यतः स्वाश्रयव्यक्तीनामाक्षेपेण सामान्यरूपेणैव गुणादीनां भानमिति भावः । *यद्यपीति — वृद्धव्यवहारदर्शनाद्यद्यपि बालानां शक्तिज्ञानं शुक्लादिविशेषगुणालिङ्गिततत्तद्व्यक्तावेव, तथाऽपि–पुरुषान्तरोच्चरित 'गामानय' इति वाक्यं श्रुत्वा गवान्तरमानयन्ति पुरुषान्तराणि दृष्ट्वा व्यक्तिविशेषे गृहीतामपि शक्तिमावापोद्वापाभ्यां तज्जात्याश्रयव्यक्तिमात्रे निश्चिनोति बालः । ननु तत्तद्घटनिरूपितकारणतायास्तत्तद्दण्डे एव दर्शनाद्यथा – सामान्यलक्षणप्रत्यासत्या दण्डान्तरे कारणताऽवधार्य्यते, तथा तत्तद्व्यक्तावेव शक्तिग्रहेऽपि सामान्यलक्षणया व्यक्त्यन्तरेऽपि शक्तिज्ञानं स्यादत आह — *कारणत्वादीति — दण्डत्ववति घटकारणताज्ञानाद्व्यक्त्यन्तरेऽपि तत्सम्भवेन सामान्यलक्षणाया नोपयोग इति भावः । अत एवोक्तं हरिणा—

"निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियायाः प्रयोजिका ॥" इति ।

अस्यार्थः — यद्यपि 'घटं करोति' इत्यादावसतो घटस्य क्रियासाधनता न संभवति, तथाऽपि जातिरूपाश्रयेण साधनता, व्यक्तिरूपाश्रयेण निर्वर्त्यतेति भावः। एवमेकस्मिन् घटे चक्षुःसंयोगाद्देशान्तरस्थघटस्यापि बोधसम्भवे तदर्थमपि सामान्यलक्षणा न स्वीकार्य्या। यत्तु — अतीतघटादेर्वर्त्तमानकालानवच्छेदकतया तत्प्रत्यक्षानापत्तिः । अतः सामान्यज्ञानस्य प्रत्यासत्तित्वमावश्यकम् । तन्न, अतीतघटादावपि बुद्ध्या विषयीकृत्य घटत्वाश्रयत्वेन ज्ञानसत्त्वात् । *शक्तिग्रह इति — तदुक्तम्—

"ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानान्तु शक्तिधीरुपमाफलम्" ॥ ८० ॥

( मुक्ता० उपमा० खं० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति । नहि गौरित्युक्ते व्यपवर्गो गम्यते शुक्ला, नीला, कपिला, कपोतिकेति" इति । अव्यपवर्गः = अभेदः, तस्य गतिः – प्रतीतिरित्यर्थः । अथ प्रख्याऽविशेषादव्यपवर्गगतेश्चेति किमर्थं हेतुद्वयोपादानम् ? अर्थात एकरूपत्वात्तयोरिति चेत्, अत्रोच्यते — शब्दाशक्याऽपि जातिः स्वरूपसती एव प्रख्याऽविशेषे निमित्तं भवति । यथा — द्रव्यशब्देन घटाभिधाने घटत्वस्याशक्यत्वेऽपि स्वरूपसदेव चक्षुषा प्रतीयते । इति प्रख्याऽविशेषेणैकरूपप्रत्ययेन स्वरूपसदेकं सामान्यं प्रतीयते, नाभिधानम् । यथा—'वनम्' इति शब्देन सर्वविशेषाभ्यन्तरीकरणेनाव्यपवर्गगतावपि चक्षुषा दर्शने प्रख्याऽविशेषो नास्ति, भिन्नवृक्षावलम्बनत्वात् 'वनम्' इति प्रत्ययस्य । तस्मात् 'प्रख्याऽविशेषात्' इत्यनेन सामान्यस्य सत्ता दर्शिता, अव्यपवर्गगतेश्चेत्यनेन तस्य शब्दवाच्यत्वं प्रतिपाद्यते, इति फलति । अत एव = तस्या एकरूपत्वादेव । ॐप्राणप्रदत्वमिति — प्राणः = हानोपादानरूपव्यवहारः । तस्य स्वज्ञानद्वारा साधकतया प्राणप्रदत्वं जातेः । ॐप्रकाश इति — ( उल्ला० १ कारि० ८ ) तत्र हि —"संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा" इत्यत्र यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तयाऽप्यानन्त्यात्, व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यते, इत्यतः 'गौः' 'शुक्लः' 'चलः' 'डित्थः' इत्यादिशब्दानां विषयविभागो न प्राप्नोति, इत्यतश्च तदुपाधावेव संकेतः । उपाधिश्च द्विविधः — वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च । वस्तुधर्मोऽपि द्विविधः – सिद्धः, साध्यश्च । सिद्धोऽपि द्विविधः – पदार्थस्य प्राणप्रदः, विशेषाधानहेतुश्च । तत्राद्यो ( प्राणप्रदः ) जातिः, तदुक्तं वाक्यपदीये — 'नहि गौः स्वरूपेण गौर्नाप्यगौः । गोत्वाभिसम्बन्धात्तु गौः' इति । गौः स्वरूपेण न गोव्यवहारस्य नाप्यगोव्यवहारस्य विषयः । गोत्वाभिसम्बन्धात्तु व्यवहारविषयः । तथा च — यावत्स्थितिसम्बन्धिस्वरूपं प्राणप्रदत्वं जातेः सिद्ध्यति । "द्वितीयः — ( विशेषाधानहेतुश्च ) गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः = पूर्वापरीभूतावयवः क्रियारूपः । वक्त्रा यदृच्छया डित्थादिष्वर्थेषु संनिवेशितः वक्तृयदृच्छासंनिवेशितश्च" इत्यलमप्रकृतेन । ॐयावत्स्थितीति — व्यक्तेः स्थितिपर्यन्तमित्यर्थः । ॐन पाचकत्वादेरिति — व्यक्तिसत्त्वेऽपि क्रियाया गुणस्य चापायदर्शनात् । ननु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राणप्रदस्य जातित्वस्वीकारे परमाणुत्वादीनामपि जातित्वं स्यात्, इति, चेत्, अत्रोच्यते—परमाणुत्वादीनां जातित्वमिष्टमेव, गुणत्वव्यवहारस्तु तेषां तार्किकानुसारेण। पाचकत्वादेर्जातित्वे बाधकान्तरमाह—*पाकक्रियाणामिति—आश्रयभेदेन भेदादनुगतप्रतीत्यजनकत्वादिति भावः। ननु ये ये पाककर्तारस्तेषु सर्वत्र पाचकव्यवहारदर्शनादनुगतप्रतीतिजनकतया पाचकत्वादेरपि जातित्वं स्यादत आह—*स्वगतजात्यैवेति—पाकादिक्रियागतजात्यैव पाकादेरपि जातितया व्यवहार इति भावः। तासाम् = पाकादिक्रियाणाम्॥

मू०—अत एव कणादेनापि—"सामान्यं विशेष इति बुद्ध्यपेक्षम्" (वैशे० द० १।२।३) इत्युक्तम्। 'अनुवृत्तिबुद्धिजनकत्वं सामान्यलक्षणम्, व्यावृत्तिबुद्धिजनकत्वं विशेषलक्षणम्' इति तद्व्याख्यातारः। तथा—'सदिति यतो द्रव्यगुणकर्मसु सा सत्ता' (वैशे० द० १।२।७) इत्युक्तम्। 'इति' इत्यस्य व्यवहारप्रत्ययावित्ति शेषः। अनेन इदमेव सर्वजातिषु मानमिति सूचितम्। तथा—"भावोऽनुवृत्तेरेव हेतुरिति सामान्यमेव।" (वैशे० द० १।२।४) "भावः = सत्ता, अनुवृत्तेरेव हेतुरिति सामान्यमेव। द्रव्यत्वादि तु अनुवृत्तेः, इतरव्यावृत्तिबुद्धेश्च हेतुरिति सामान्यम्, विशेषश्च। यावत्स्थिति एकाकारप्रतीतिरनुवृत्तिः" इति तद्व्याख्यातारः। यावत्स्थितीत्यस्याभावे पाचकत्वादेरपि जातित्वापत्तिः, कादाचित्कैकाकारप्रत्ययहेतुत्वात्। भाष्ये—"भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नम्" इत्यनेनोपलक्षितनित्यत्वेनापीदं सूचितम्।

गौतमोऽपि—"समानप्रसवात्मिका जातिः" (न्या० द० २।२।७०) इत्याह। यावत्स्थिति एकाकारबुद्धिजननस्वभावेत्यर्थः। "आकृतिर्जातिलिङ्गाख्या" (न्या० द० २।२।६९) इति चाह। जातिलिङ्गमित्याख्या यस्या इत्यर्थः। रूपादिष्वपि रूपत्वादिजातिव्यञ्जकं यत् साऽऽकृतिरिति तदाशयः। व्यक्तिस्तु—आकृतिविशेषं समवायिकारणमेव, "मृत् कयाचिद् आकृत्या युक्ता

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिण्डो भवति, सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति" इति पस्पशायां पतञ्जल्युक्तेः। तत्राकृतेरनित्यत्वाद्विशिष्टेऽनित्यत्वम्। विशेष्यांशमादाय नित्यत्वमपि । तमादाय गौतमीये व्यक्तिः पृथग् गृहीतेति ॥

( रत्न० )—अत एव = अनुगतप्रतीत्या जातिसिद्धेरेव । "सामान्य-मिति"—( वैशे०द० १।२।३ ) — नेदं जातिलक्षणपरं सूत्रम्, किन्तु-तद्विभागपरम् । तथा चानुवृत्तबुद्धिजनकं परं सामान्यम्, व्यावृत्तबुद्धिजनकमपरं सामान्यमिति फलति । अत एव "सामान्यं द्विविधं प्रोक्तं परं चापरमेव च" ( मुक्ता० प्रत्य० कारि० ८ ) इति संगच्छते । "तत्र सामान्यस्य तद्विशेषस्य च लक्षणं बुद्धिरेव । अनुवृत्तबुद्धिः सामान्यस्य, व्यावृत्तबुद्धिर्विशेषस्य । इतिना द्वयमवच्छिद्य परामृश्यते । तेन बुद्ध्यपेक्षमिति नपुंसकनिर्देशः" इति वैशेषिकसूत्रोपस्कारे । *अनुवृत्तीति—अस्ति हि सर्वेषु घटेषु अनुस्यूतस्य घटत्वस्य प्रतीतिरिति तदेव सामान्यम् । एवं सर्वासु जातिषु 'जातिरियम्' इत्येकाकारप्रतीत्या जातित्वमपि जातिरेव । *सदितीति —(वैशे० द० १।२।७) अत्र 'इति' इत्यनेन व्यवहारप्रत्यययोः संग्रहः । तथा च — द्रव्यादिषु 'सत्सत्' इति प्रकारको यतः प्रत्ययः, 'सदिदं सदिदम्' इत्याकारकः शब्दप्रयोगो वा यदधीनः सा †सत्तेति । द्रव्यादिषु त्रिष्वित्युक्त्या 'सामान्यादिष्वपि सदिति प्रत्ययाज्ञोक्तयुक्त्या तत्र द्रव्यत्रयसाधारणी सत्ताजातिः' इत्यपास्तम् । धर्मादिष्वतीन्द्रियेषु सत्तायाः प्रत्यक्षासम्भवात्तत्रासिद्धिरित्यपि न, शब्दप्रयोगरूपव्यवहारस्य तत्रापि सम्भवात् । यद्वा, द्रव्यादित्रिकवृत्तिं सत्तामादायानेकार्थसमवायेन सामान्यादिष्वपि 'सत्' इति प्रतीतिर्नानुपन्ना इति केचित् । अन्ये तु

---

† न्यायनये—सत्ताजातिस्तु ध्वंसकारणताऽवच्छेदकतया सिध्यति—'यत्र प्रतियोगितासम्बन्धेन ध्वंसोत्पत्तिस्तत्रैव तादात्म्यसम्बन्धेन सत्' इति सामानाधिकरण्यप्रत्यासत्त्या कार्य्यकारणभावात् । न च प्रागभावे व्यभिचारः—तत्र सत्ताविरहादिति वाच्यम्, प्रागभावीयप्रतियोगिताभिन्नप्रतियोगिताया एव कार्य्यताऽवच्छेदकसम्बन्धतया निविष्टत्वात् । वस्तुतस्तु 'समवायेन सत्ताऽवच्छिन्नम्प्रति तादात्म्येन द्रव्यं कारणम्' इति कार्य्यकारणभावानुरोधेन कार्य्यताऽवच्छेदकतया सत्ताजातेः सिद्धिर्बोध्येति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तादृशप्रतीतेः सर्वत्र समत्वात् वर्तमानत्वमेव सत्ता । वर्तमानत्वञ्च—भावत्वरूपम्, इति नाननुगम इति । ॐइदमेवेति—अनुगताकारकप्रतीतिजननमेवेत्यर्थः । तथा च गौतमः—"समानप्रसवात्मिका जातिः" इति 'समानाकारः प्रसवः = बुद्धिजननं स्वरूपं यस्या सा' "या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनि इतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यम्, यच्च केषाञ्चिद्भेदं केषाञ्चिद् भेदं करोति तत्सामान्यविशेषो जातिरिति" इति वात्स्यायनः । ॐअनुवृत्तेरेवेति—अधिकदेशवृत्तित्वबुद्धेरेवेत्यर्थः । यद्वा, अनुवृत्तेरनुवृत्तबुद्धेरेवेत्यर्थः । एवकारेणाल्पदेशवृत्तित्वबुद्धि—इतरव्यावृत्तत्वबुद्ध्योर्निरासः । तादृशबुद्धिस्तु—सत्ताद्रव्यत्वाद्यपेक्षयाऽधिकदेशवृत्तिरित्यात्मिका । तस्या हेतुत्वं सत्तायां विषयमुद्रया बोध्यम् । ॐद्रव्यत्वादि तु अनुवृत्तेरिति—पृथिवीत्वाद्यपेक्षयाऽधिकदेशवृत्तित्वबुद्धेरित्यर्थः । ॐइतरव्यावृत्तेरिति—सत्ताऽऽद्यपेक्षया न्यूनदेशवृत्तित्वबुद्धेरित्यर्थः । यद्वा, अनुवृत्तेः—एकाकारप्रतीतेः—इतरव्यावृत्तेः—इतरव्यावृत्तबुद्धेरित्यर्थः । ॐद्रव्यत्वादीति—सर्वद्रव्येष्वनुवृत्तत्वात् सामान्यम्, गुणादिभ्यो व्यावृत्तत्वाद्विशेषोऽपीत्यर्थः । ननु 'सदिदम्' 'सदिदम्' इति व्यावृत्तबुद्धिहेतुत्वात्सामान्यत्वम्, असतो व्यावृत्तबुद्धिहेतुत्वाद् विशेषत्वं सत्ताया अपि स्यादिति चेत्, न, जातिमदपेक्षया व्यावृत्तबुद्धेरेवग्रहणादित्युपाध्यायाः। ननु सामान्यं द्विविधम्—सामान्यम्, विशेषश्चेत्यनुपपन्नम्, अनुवृत्तबुद्धिहेतुत्वस्य, व्यावृत्तबुद्धिहेतुत्वस्य च द्रव्यत्वादौ सत्त्वेन मिथो विरुद्धत्वाभावाद् विभागानुपपत्तेरिति चेत्, न, अनुवृत्तबुद्धिमात्रहेतुत्वरूपस्य सामान्यलक्षणस्य विवक्षितत्वात् । द्रव्यत्वादौ सामान्यत्वन्तु—अनुवृत्तबुद्धिहेतुत्वरूपम्, इति तत्रेतरव्यावृत्तबुद्धिहेतुत्वस्य सत्त्वेऽपि पूर्वोक्तसामान्यलक्षणस्यासत्त्वान्न क्षतिः।ॐयावत्स्थितीति—आश्रयस्थितिपर्यन्तमित्यर्थः ।ॐभिन्नेष्वभिन्नमिति—अनेनैकत्वमुपलक्षितम् । ॐछिन्नेष्वच्छिन्नमिति—नित्यत्वमनेन बोधितम् । नित्यस्यैवानुगतप्रतीतिहेतुत्वाज्जातावनुगतप्रतीतिरेव मानम्, इति सूचितमिति भावः । ॐसमानेति—समानः = समानाकारः, प्रसवः = बुद्धिजननम्, आत्मा = स्वरूपं यस्याः सा समानप्रसवात्मिका = समानज्ञानजननीति यावत् । ॐजातिलिङ्गाख्ये-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ति — जातिश्च लिङ्गञ्च जातिलिङ्गे, ते आख्यायेते अनयेति जातिलिङ्गाख्या, यया जातिर्जातिलिङ्गानि चाख्यायन्ते तामाकृतिं विद्यात् । सा चाकृतिः – व्यक्त्यवयवानां शिरःकरादीनां शिरःकराद्यवयवानाञ्च नियताद् व्यूहात् संयोगतो नान्या, किन्तु अवयवसंयोगरूपैव । अनाकृतिव्यङ्ग्यायां जातौ 'मृत्' 'सुवर्णम्' 'रजतम्' इत्येवमादिषु आकृतिर्निवर्तते = जहाति पदार्थत्वमिति, न तत्राकृतिः शब्दवाच्येति भावः । नन्वेवं रूपादावाकृत्यभावेन जातिसिद्धिर्न स्यादत आह — ॐरूपादिष्वपीति । वस्तुतस्तु — आकृतिर्जातिलिङ्गाख्या" ( न्या० द० २।२।६९ ) इत्यनेन 'या या आकृतिः सा सा जातिलिङ्गाख्या' इति व्याप्तिरुच्यते, नहि 'या या जातिर्यद्यल्लिङ्गञ्च तत्सर्वमाकृत्या व्यज्यते' इति । "मृत्सुवर्णरजतादिका हि रूपविशेषव्यङ्ग्या, नाकृतिव्यङ्ग्या, ब्राह्मणत्वादिजातिर्योनिव्यङ्ग्या, आज्यतैलादीनां जातिस्तु गन्धेन रसेन वा व्यज्यते" इति तात्पर्यटीका । तदाशयः = गौतमाशयः ॐविशिष्टे इति — आकृतिविशिष्टे समवायिकारण इत्यर्थः । तमादाय = विशेष्यांशमादाय । ॐगौतमीये—"व्यक्त्याकृतिजातयस्तु पदार्थः" इति सूत्रे ( न्या० द० २।२।६७ ) ॐपृथगिति — आकृतितो जातिश्चेत्यर्थः ।

अनुगताकारेण जातिसिद्धौ चरकसम्मतिः, अद्वैतिमते जातिलक्षणम्, अवच्छेदकत्वादिनैव जातिसिद्धेर्निरासश्च ।

मू०—चरकेऽप्युक्तम्—

"सामान्यमेकत्वकरं विशेषस्तु (च) पृथक्त्वकृत्"
( चरकसं० सूत्रस्था० १।४४ )

इति । एकत्वकरत्वम् = एकत्वबुद्धिकरत्वम् । यदनेकासु गवादिव्यक्तिषु 'अयं गौः' 'अयं गौः' इत्येवमाद्येकाकारबुद्धिरेकं सामान्यं विना नाभ्रान्ता भवति । एवं च तदेकत्वालम्बना सत्यपि व्यक्तिभेदे एकत्वबुद्धिर्युक्तैव । तदेव 'गोत्वम्' अश्वादिभ्यो व्यावृत्तिबुद्धिजनकतया विशेष इति तदर्थः । एतद्बीजमप्युक्तं तत्रैव—

"तुल्यार्थता हि सामान्यं विशेषस्तु (च) विपर्ययः ॥"

इति । तुल्यार्थता = तुल्यानामर्थानां भावः । अर्थेषु तुल्यत्वञ्च — एकाकारप्रतीतिजनकधर्मवत्त्वम् । एवं च तेषां भावः स धर्म एव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवञ्च एकाकारप्रतीतिजनकं यतः सामान्यम् अतस्तत् तदेकत्वकरम्। यथा–सकलगवीनां गोत्वम्। विपर्ययः=अतुल्यार्थता, अनेकाकारप्रतीतिजनको धर्मः, स यतो विशेषोऽतः पृथक्त्वकृत्सः। यथा–'गवाश्वयोर्गोत्वाश्वत्वे' इति तदर्थः, इति तद्व्याख्यातारः। एवञ्च पाचकत्वमपि सामान्यं भवत्येव। जातित्वं तु यथा न, तथोक्तम्। "अतिशायने" (पा० सू० ५।३।५५) इति सूत्रे भाष्येऽपि–"जननेन या प्राप्यते सा जातिः" इत्युक्तम्। अनेनापि तस्या नित्यत्वं बोधितम्।

(रत्न०)—वैशेषिकसिद्धान्ते भाष्यं प्रमाणयति—*चरकेऽपीति—ननु नहि सामान्यमेकत्वजनकमिति 'एकत्वकरम्' इत्यनुपपन्नमत आह—*एकत्वकरत्वमिति। वस्तुतस्तु—एकत्वकरम्=एकत्वबुद्धिकरमित्येव विवरणं युक्तम्, तथैवाक्षरस्वारस्यात्। *विशेष इति—'विशेषस्तु' इत्येव पाठः, चरके तथैव दर्शनात्, एवमुत्तरत्रापि। व्यक्त्यन्तरावगाहिन्यपि प्रत्यये एकत्वबुद्धिर्भ्रमात्मिका मा भूदत आह—*यदिति—यत इत्यर्थः। *एवञ्चेति—जातिं विना तादृशबुद्धेर्भ्रमत्वापत्तौ चेत्यर्थः। *तदेकत्वेति—तस्याः=जातेरेकत्वमालम्बम्=निमित्तं यत्रैकाकारबुद्धौ सा एकत्वबुद्धिर्युक्तैवेत्यर्थः। तदेव=सामान्यमेव। तुल्यार्थता=अनुगताकारप्रतीतिः। विपर्ययः=व्यावृत्तिबुद्धिः। *एवञ्चेति—तादृशधर्मसिद्धौ चेत्यर्थः। भावः=प्रकृतिजन्यबोधे प्रकारीभूतः। *एवञ्चेति—यतस्सामान्यमेकाकारप्रतीतिजनकमतः तत्सामान्यं तदेकत्वबुद्धिकरमित्यन्वयः। सामान्यम्=अनुगतबुद्धिकरम्। *तथोक्तमिति—तदाश्रयस्थितिपर्यन्तमनुगतप्रतीतिजनकत्वाभावादिति भावः। † *जननेति—अत्र जननपदं पुरुषप्रयत्नाभावपरम्, परमाण्वादीनां

---

† ननु विधिरूपं सामान्यं नास्त्येव। न चानुगतप्रतीत्यनापत्तिः, अतद्व्यावृत्त्यैव तदुपपत्तेः। 'गौरयम्' इति प्रतीतिः 'अगोव्यावृत्तोऽयम्' इति विषयमेवावगाहते जातिवादिनाऽपीतरव्यावृत्तबुद्धिहेतुत्वस्य जातावभ्युपगमात्। न च गवादिपदप्रवृत्तिनिमित्तासिद्धिः, अगोव्यावृत्तेरेव तत्प्रवृत्तिनिमित्तत्वात्। किञ्च, गोत्वं कुत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जननाभावात्तद्गताया जातेर्जननेनाप्राप्यत्वात् । घटादिके द्रव्ये जननेनोत्पाद्यमाने पुरुषप्रयत्नेन नित्या जातय आविर्भवन्ति । ननु गवादिगतशौक्ल्यादेः पुरुषप्रयत्नालभ्यत्वाज्जातित्वापत्तिरिति चेत्, न, आश्रयभेदेन तद्भेददर्शनात्तत्रैकत्वाभावात् । तथा च यदा 'पिण्ड उत्पद्यते' तदैव तेन सामान्यं सम्बद्ध्यते । पिण्डोत्पत्तिः, जातिसम्बन्धश्च युगपदेव भवतीति भावः । अनेनापि = जननेन प्राप्यते इति कथनेनापि । तथाच—'नित्यत्वे सति अनेकसमवेतत्वम्' लक्षणं सिद्धम् ॥

**मू०—एतच्च लक्षणमद्वैतिमते, ब्रह्मातिरिक्तस्य सर्वस्य तन्मते जन्यत्वात् । अविद्याऽऽदेरपि जन्यत्वमुक्तम् । जीवानामप्युपाधीनां जन्यत्वेन विशिष्टानां जन्यत्वमेव । ब्रह्मणस्तु निर्धर्मकत्वात्तत्र जात्यभाव एव । अन्यथा न्यायादिनये परमाण्वादीनाम-**

---

वर्तते ? न तावद् गवि, गोत्ववृत्तेः पूर्वं तस्याभावात् । नाप्यगवे, विरोधात् । यत्र 'गोपिण्ड उत्पद्यते' तत्र कुत आगत्य गोत्वं वर्तते । न तावत्तत्रैवासीत्, देशस्यापि गोत्वापत्तेः । नापि गोत्वमपि तदानीमेव जायते, त्वन्मते तस्य नित्यत्वात् । नाप्यन्यत आगतम्, निष्क्रियत्वात् । न चैकस्य नित्यस्य नानाव्यक्तिवृत्तित्वमनुभवसिद्धम्, कार्त्स्न्यैकदेशविकल्पानुपपत्तेः । तथाहि—नहि कृत्स्नमेकत्रैव वर्तते, अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात् । नाप्येकदेशेन वृत्तित्वम्, जातेर्निरवयवत्वात् । तदुक्तम्—

"न याति न च तत्रासीन्न चोत्पन्नं न चांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥" इति ।

सामान्यमस्ति, तच्च संस्थानमात्रव्यङ्ग्यं गोत्वघटादिवत्, न तु गुणकर्मगतमपीति सगोत्रकलहः । अत्रोच्यते—सामान्यं नित्यं व्यापकञ्च । व्यापकत्वमपि स्वरूपतः सर्वदेशसम्बद्धस्वरूपपरमिति न देशानां गोव्यवहारापत्तिः, समवायेन गोत्वविशिष्टे एव तादृशव्यवहाराभ्युपगमात् । काले रूपादिमत्त्वेऽपि 'कालो रूपवान्' इति प्रतीतिव्यवहाराभाववत् । तथा च—यत्र 'पिण्ड उत्पद्यते' तत्रत्यमेव सामान्यं तेन सम्बध्यते । एतेन 'कीदृशि आश्रये वर्तते ?' इति प्रश्ने 'यत्र प्रतीयते' इत्युत्तरम् । 'कुत्र प्रतीयते?' इति प्रश्ने 'यत्र वर्तते' इत्युत्तरम् । गोत्ववृत्तेः पूर्वं 'स पिण्डः कीदृगासीत् ?' इत्यनुयोजने 'नासीत्' इत्येवोत्तरम् । कार्त्स्न्यैकदेशविकल्पस्तदा भवेत्, यद्येकस्य कार्त्स्न्यमेकदेशो वा भवेत् । तस्मात्सामान्यं समानमेवेति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जन्यत्वेन परमाणुत्वादिजात्यव्यापकत्वमस्य लक्षणस्य स्यात् । "सरूप" ( पा०सू० १।२।६४ ) सूत्रे भाष्ये तु "भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः" इत्युक्तम् । तन्निष्कर्षस्तूक्तः ।

एतेन 'कारणताऽवच्छेदकत्वादिनैव जातिसिद्धिः' इत्यपास्तम् । सखण्डोपाधावपि तत्तद्रोगनाशत्वादौ, तत्तच्चूर्णत्वादौ च तस्य सत्त्वेन कारणताऽवच्छेदकत्वादिना जातेरन्वयव्यतिरेकयोरुभयोरपि व्यभिचारेण कारणताऽवच्छेदकत्वादिना जातित्वसाधनासम्भवात् । 'बाधकाभावे' इत्यादिविशेषणदाने तु गौरवम् ।

किञ्च, घटत्वशरावत्वाद्यनेकधर्मपुरस्कारेणानेककार्यकारणभावस्वीकारापेक्षया सर्वानुगतं यं कञ्चित्सखण्डधर्ममवच्छेदकीकृत्यैककार्यकारणभावे लाघवेन कार्यताऽवच्छेदकत्वादिना न जातिसिद्धिरित्यलम् ।

( रत्न० )—*अद्वैतिमत इति—ब्रह्मातिरिक्तसर्वपदार्थानां जन्यत्वेन परमाण्वादीनामपि जन्यतया सर्वत्र जन्मना जातिसम्बन्धस्याद्वैतिमते एव सम्भवात् । यदि तु जननपदं पुरुषप्रयत्नाभावपरं तदा तार्किकादिनयेऽप्येतल्लक्षणं बोध्यम् । अयं भावः—जात्यात्मना सूक्ष्मकारणेषु कार्याणामवस्थानात्तत्र साधनप्रवृत्तौ कार्य्यकारणयोरभेदात्तत्समवेतजात्यभिव्यक्तिः । यथैकस्मिन्घटे नष्टेऽपि घटान्तरे सा जातिरवतिष्ठत इति । ननु प्रलये सर्वेषां विनाशादाश्रयाभावेन जातेरवस्थानासम्भव इति चेत्, न, युगपत्सर्वेषां प्रलयास्वीकारात्, प्रलये स्थूलरूपेणैव विनाशित्वाच्च । यद्वा, एकब्रह्माण्डविनाशेऽपि ब्रह्माण्डान्तरसत्त्वात्तद्वृत्तित्वं जातेः । तदुक्तम्—

"अण्डानामीदृशानान्तु परिसंख्या न विद्यते ॥" इति ।

महाप्रलयवादिनां मते तु—विशेषेषु प्रकृतौ लीनेषु प्रधाने ब्रह्मणि वा मूलकारणे लय एव प्रलय इत्युच्यते । शक्तिरूपेषु पदार्थेषु तदानीमपि जातिसम्बन्धोऽविरुद्ध एव । द्रव्यात्मना जातीनामवस्थितेः, ब्रह्मात्मकद्रव्यरूपत्वात् । ननु सर्वेषां जन्यत्वमयुक्तम्, अविद्याया नित्यत्वश्रवणादत आह—*अविद्याया अपीति । नन्वेवमपि जीवानां नित्यतया सर्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जन्यत्वासम्भवोऽत आह — ※जीवानामिति — अन्तःकरणावच्छिन्न-चैतन्यस्यैव जीवत्वेनान्तःकरणस्य जन्यतया विशिष्टस्यापि तव मते जातिविशिष्टघटादेरिव जन्यत्वमेवेति भावः। यद्यप्यग्निविस्फुलिङ्गोदाहरणेन जीवस्योत्पत्तिः श्रूयते, तथाऽपि स्थूलशरीरग्रहणस्य तत्रोत्पत्तिपदार्थत्वेना-दोषः । अन्यथा = पदार्थमात्रस्य जन्यत्वाभावे । तप्तायःपिण्डनिक्षिप्तानां निःशेषं नाशस्यानुभवसिद्धत्वान्नास्ति परमाणूनामपि नित्यत्वमिति भावः । अस्य लक्षणस्य = 'जननेन या प्राप्यते सा जातिः' इति लक्षणस्य । ※"सरूप"सूत्रे भाष्य इति– तत्र हि – सरूपसूत्रप्रत्याख्यानाय "आकृत्यभि-धानाद्वैकं विभक्तौ वाजप्यायनः । आकृत्यभिधानाद्वैकं शब्दं विभक्तौ वाजप्यायन आचार्यो न्याय्यं मन्यते, एका आकृतिः सा चाभिधीयत इति । कथं पुनर्ज्ञायते एकाऽऽकृतिः सा चाभिधीयत इति, प्रख्याऽविशेषात्" । अत्र कैयटः — "प्रख्या = बुद्धिः, तस्या अविशेषात् = एकरूपत्वात्, तद्विषयस्याप्येकरूपत्वं प्रतीयते । गुणप्रमाणभिन्नेष्वपि गोपिण्डेषु 'गौर्गौः' इत्येकाकारप्रत्ययोदयादवश्यमेकेनावलम्बनेन सामान्येन भाव्यमिति जातिसद्भावः, एकत्वञ्चावसीयते इति । 'अव्ययपवर्गगतेश्च' अव्यपवर्गः = अभेदः = अविच्छेदः = अविशेषस्तस्य गतेः — प्रतीतेरित्यर्थः" । अत्र भाष्यतात्पर्य्यमादायैव "भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः" इत्युक्तं मूलकृता । अभिधीयतेऽनेनेत्यभिधानम् = शब्दः, स च प्रत्ययश्चे-त्यभिधानप्रत्ययौ, अभिन्नौ च तावभिधानप्रत्ययौ तयोर्निमित्तं जातिरि-त्यर्थः । अभिधानञ्च–भिन्नेष्वपि 'गौर्गौः' इति शब्दः। प्रत्ययश्च–एकाकारा 'गौरयं गौरयम्' इति बुद्धिः । ※निष्कर्ष इति — अनुवृत्तिबुद्धिहेतुत्वं यत्र सा जातिरिति निष्कर्ष उक्त इत्यर्थः । एतेन = अनुवृत्तिबुद्धिहेतुतया जातिसाधनेन । ※कारणताऽवच्छेदकत्वादिनेति — आदिना – कार्य्यता-ऽवच्छेदकत्वस्य संग्रहः । ※अपास्तमिति — भाष्यादिप्रामाण्येनानुगत-प्रतीतेरेव मुख्यतो जातिसाधकत्वात् । कारणताऽवच्छेदकत्वादिना जाति-सिद्धौ व्यभिचारं दर्शयति — ※सखण्डोपाधावपीति — 'तत्तद्रोगनाशं प्रति तत्तच्चूर्णस्य कारणत्वम्' इति कारणताऽवच्छेदकतया चूर्णत्वस्य, कार्यता-ऽवच्छेदकतया रोगनाशत्वस्य च जातित्वासिद्ध्या 'यत्र यत्र कारणताऽवच्छे-दकत्वम्, कार्य्यताऽवच्छेदकत्वं वा तत्र तत्र जातित्वम्' इत्यन्वयव्याप्तेः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रकृते व्यभिचार इति भावः। क्वचिच्छक्यताऽवच्छेदकत्वादिना जातित्वस्वीकारात्तत्र व्यतिरेकव्याप्तेर्व्यभिचारो बोध्यः। 'साध्यमृद्विकारत्वावच्छिन्नं प्रति पञ्चतन्मात्रपरिणामविशेषत्वावच्छिन्नं कारणम्' इत्येवंरूपेण कार्यकारणभावस्वीकारेणोपपत्तौ कार्यताऽवच्छेदकत्वादिना घटत्वादीनां जातित्वं न स्यादित्याह — ॐकिञ्च घटत्वेति।

मू०—शतशोऽपि 'गौः' इत्युक्ते शुक्लत्वादिविशेषानवगमपूर्वकं सामान्यस्य शब्दतोऽवगतेः सा शब्दशक्या। द्रव्यस्यैव शक्यत्वे तु तस्य गुणसमूहरूपत्वेन शुक्लत्वादिविशेषावगतिप्रसङ्गः। अतिरिक्तद्रव्यवादेऽपि द्रव्यस्य विशेषानालिङ्गितस्य बोधाभावेन स एव दोषः, उक्ताकृतेरपि शब्दवाच्यत्वाच्च। तत्र रूपक्रियाऽऽदि सामान्यरूपेणैव भासते।

जातेः शब्दशक्यत्वस्य, प्रख्याऽविशेषाव्यपवर्गगत्योश्च निर्णयः

यद्यपि प्राथमिकशक्तिग्रहो विशेषालिङ्गितव्यक्तिविशेषे एव, तथाऽपि 'आवापोद्वाप'न्यायेन पुरुषान्तराद्बालः 'गामानय' इत्येतच्छ्रवणोत्तरमेव व्यक्त्यन्तराण्यानयतो दृष्ट्वा विशेषे गृहीतामपि शक्तिं तज्जात्याश्रयमात्रे व्यवस्थापयति। कारणत्वादिग्रहस्थलेऽप्येवमेवेति न कश्चित्सामान्यलक्षणोपयोगः। यथा—'गोसदृशो गवयः' इति शक्तिग्रहे न व्यक्तिविशेषभानं तद्वत्। तदुक्तम्—"सरूप" सूत्रे भाष्ये—"अव्यपवर्गगतेश्च मन्यामहे आकृतिरभिधीयते, नहि 'गौः' इत्युक्ते व्यपवर्गो गम्यते—'शुक्ला' 'नीला'" इत्यादीति। अव्यपवर्गः = अविशेषः, तस्य गतिः—प्रतीतिरित्यर्थः।

(रत्न०)—जातेः शब्दशक्यत्वमाह — ॐशतशोऽपीति — अत्र शतशब्दोऽनन्तपरः। ॐशब्दतोऽवगतेरिति — 'गौः' इत्युक्ते रूपादिविशेषावगमो न जायते, गोत्वादिजातेरवगमस्तु जायते, इति जातिः शब्दवाच्येति भावः। ॐसेति — सा जातिरित्यर्थः। ननु "द्रव्यं पदार्थः" इति वादिव्याडिमते आख्यातेऽपि क्रियाविशिष्टद्रव्याभिधानात् 'गुणसमूहो द्रव्यम्' इत्यसङ्गतम्, किन्त्वतिरिक्तमेव द्रव्यम्। अत एव शुक्लादिगुणानामपि द्रव्यपदार्थता सिध्यति। किं तदतिरिक्तमित्याकाङ्क्षायाम्—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'इदम्' 'तद्' इति सर्वनामपरामर्शयोग्यम्, तत्तदुपाध्यवच्छिन्नं ब्रह्म वा द्रव्यमित्यत आह—*अतिरिक्तेति । *विशेषानालिङ्गितस्येति–शुक्लादिविशेषानालिङ्गितस्येत्यर्थः । स एव = शुक्लादिविशेषावगम एव । नन्वाकृतेरपि वाच्यत्वे कथं न शुक्लादिविशेषभानं स्यादत आह — *उक्ताकृतेरपीति — जातिशक्तिवादे तु सामान्यतः स्वाश्रयव्यक्तीनामाक्षेपेण सामान्यरूपेणैव गुणादीनां भानमिति भावः । *यद्यपीति — वृद्धव्यवहारदर्शनाद्यद्यपि बालानां शक्तिज्ञानं शुक्लादिविशेषगुणालिङ्गिततत्तद्व्यक्तावेव, तथाऽपि–पुरुषान्तरोच्चरित 'गामानय' इति वाक्यं श्रुत्वा गवान्तरमानयन्ति पुरुषान्तराणि दृष्ट्वा व्यक्तिविशेषे गृहीतामपि शक्तिमावापोद्वापाभ्यां तज्जात्याश्रयव्यक्तिमात्रे निश्चिनोति बालः । ननु तत्तद्घटनिरूपितकारणतायास्तत्तद्दण्डे एव दर्शनाद्यथा – सामान्यलक्षणप्रत्यासत्या दण्डान्तरे कारणताऽवधार्य्यते, तथा तत्तद्व्यक्तावेव शक्तिग्रहेऽपि सामान्यलक्षणाया व्यक्त्यन्तरेऽपि शक्तिज्ञानं स्यादत आह — *कारणत्वादीति — दण्डत्ववति घटकारणताज्ञानाद्व्यक्त्यन्तरेऽपि तत्सम्भवेन सामान्यलक्षणाया नोपयोग इति भावः । अत एवोक्तं हरिणा—

"निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।
स्वाश्रयस्याभिनिष्पत्त्यै सा क्रियायाः प्रयोजिका ॥" इति ।

अस्यार्थः — यद्यपि 'घटं करोति' इत्यादावसतो घटस्य क्रियासाधनता न संभवति, तथाऽपि जातिरूपाश्रयेण साधनता, व्यक्तिरूपाश्रयेण निर्वर्त्यतेति भावः। एवमेकस्मिन् घटे चक्षुःसंयोगाद्देशान्तरस्थघटस्यापि बोधसम्भवे तदर्थमपि सामान्यलक्षणा न स्वीकार्य्या । यत्तु — अतीतघटादेर्वर्त्तमानकालानवच्छेदकतया तत्प्रत्यक्षानापत्तिः । अतः सामान्यज्ञानस्य प्रत्यासत्तित्वमावश्यकम् । तन्न, अतीतघटादावपि बुद्ध्या विषयीकृत्य घटत्वाश्रयत्वेन ज्ञानसत्त्वात् । *शक्तिग्रह इति — तदुक्तम् —

"ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥ ७९ ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानान्तु शक्तिधीरुपमाफलम्" ॥ ८० ॥

( मुक्ता० उपमा० खं० )

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तर्कसिद्धान्तविदा विश्वनाथेन । तथाच—यथा सामान्यतः 'गवयो गवयपदवाच्यः' इति यज्ज्ञानं जायते तदुपमितिः, न तु 'अयं गवयपदवाच्यः' इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्। तथा सामान्यतः 'घटं प्रति दण्डः कारणम्' इत्येव कार्य्यकारणभावज्ञानं स्यात्, न विशेषरूपेणेत्याह—*तद्वदिति। यत्तु-सामान्यलक्षणाया अस्वीकारे पर्वतीयधूमे व्याप्तिग्रहो न स्यादिति, तन्न, धूमत्वेनैव रूपेण महानसीयधूमे व्याप्तिग्रहात् । ननु प्रसिद्धधूमे व्याप्तिर्गृहीतैव, अप्रसिद्धस्य चानुपस्थित्या 'धूमो वह्निव्यभिचारी न वा' इति संशयो न स्यादिति चेत्, न, प्रसिद्धधूमे तत्तद्धूमत्वेन व्याप्तिनिश्चयसत्त्वेऽपि धूमत्वेन संशये बाधकाभावात्। जातेः शक्यत्वे भाष्यं प्रमाणयति—*तदुक्तमिति । *अव्यपवर्गगतेरिति—अव्यपवर्गः = अभेदः, तदवगतेश्चेत्यर्थः । विशेषानवगमादिति यावत् । तमेवार्थमाह—*नहि गौरिति । †*शुक्लेति—अयम्भावः—गुणप्रमाणादिभेदेन भिन्नास्वपि व्यक्तिषु एकाकारप्रतीत्या जातेः सिद्धौ तत्रैव शक्तिग्रहः । वृद्धव्यवहारेण शक्तिग्रहस्तु व्यक्तिविशेषस्यैवानयनादिदर्शनाद्व्यक्तिविशेषविश्रान्त एवेति व्यक्तिविशेषस्यैव भानम्, न शुद्धव्यक्तेरिति शक्तिज्ञानात्सामान्येन भाननिर्वाहाय जातौ शक्तिरावश्यकी । जातेः शक्यत्वे तु तदाक्षिप्तव्यक्तेः सामान्येन भानमिति ।

**मू०—ननु प्रख्याऽविशेषाव्यपवर्गगत्योः को विशेषः ? इति चेत्, शृणु,(न) अनभिधीयमानाऽपि जातिः संनिधिमात्रेण प्रख्याया अविशेषे निमित्तं भवति। प्रख्याया अविशेषः—'तदेवेदं ज्ञानम्' इति प्रत्यभिज्ञाविषयत्वम् । तेनैकत्वे, जातिपदार्थे च सिद्धेऽपि अभिधानासिद्धिः (द्धेः) । तथा 'वनम्' इति सर्वविशेषाभ्यन्तरीकरणेनाव्यपवर्गगतावपि प्रख्याया अविशेषो नास्ति, भिन्नवृक्षालम्बनत्वात्, 'वनम्' इति प्रत्ययस्य। यथा 'आम्रवनम्' 'पलाशवनम्' इत्यादिज्ञानेषु 'तदेवेदं ज्ञानम्' इति प्रत्यभिज्ञाऽभावात्, इति**

---

† मूले—शुक्ला, नीला, इत्येव पाठः, भाष्ये तथैव दर्शनात् । 'शुक्लः' 'नीलः' इति त्वपपाठः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कैयटेनैव समाधानात्। अत एव 'सामान्यशक्तात् पदाद्विशेषव्यक्तिबोधे लक्षणा' इति वृद्धाः। सा च शब्दतन्मात्रस्यैव परिणामविशेषः, आकाशवद्विभुः।

(रत्न०)—जातेर्वाच्यत्वसाधनाय हेतुद्वयमुपन्यस्तं भाष्ये—'प्रख्याऽविशेषात्' 'अव्यपवर्गगतेः' इति। तत्र भेदं पृच्छति – ॐनन्विति – एकेनैव हेतुना सिद्धे हेतुद्वयोपादानं व्यर्थमिति भावः। अनभिधीयमानाऽपि = शब्दादप्रतीयमानाऽपि। सन्निधिमात्रेण = इन्द्रियसन्निकर्षमात्रेण। यद्वा, शक्तिग्रहे शक्तावुपलक्षणमात्रेण। ॐप्रत्यभिज्ञेति —'प्रयोज्यवृद्धोच्चरितगोशब्दाद् यादृशं ज्ञानं तादृशमेवैतदुच्चरितगोशब्दात्' इत्येवं प्रत्यभिज्ञाविषयता। सा च बुद्धेरेकाकारतां विना नोपपद्यते, इति 'प्रख्याऽविशेषात्' इति हेतुनैकाकारता साध्यते। बुद्धेरेकत्वे सिद्धेऽपि जातेः शब्दजन्यप्रतीतिविषयता न सिध्येदिति द्वितीयहेतुना 'अव्यपवर्गगतेः' इत्यनेन सा साध्यते। तेन = 'तदेवेदं ज्ञानम्' इति प्रत्यभिज्ञाविषयत्वेन। ॐएकत्वे इति — बुद्धेरेकत्व इत्यर्थः। ॐअभिधानासिद्धिरिति — शब्दवाच्यत्वासिद्धिरित्यर्थः। ॐतथा वनमितीति — सर्वविशेषं तिरोभूय वनत्वजातेरेव शब्दजन्यप्रतीतिविषयत्वे सिद्धेऽपि सन्निधिमात्रेण 'तदेवेदं वनम्' इति प्रत्यभिज्ञा न जायते, भिन्नवृक्षालम्बनत्वादित्याह — ॐयथाऽऽम्रवनमिति। आलम्बनत्वाद् = विषयत्वाद्। ॐकैयटेनेति — उक्तविभागस्य कैयटेन दर्शितत्वादिति भावः। ननु सामान्यशक्ताद्विशेषबोधे लक्षणा चेत्, तदा कथम् 'सर्वनामशब्देषु न लक्षणा' इति प्रवादः, विशेषबोधनार्थं लक्षणाया आवश्यकत्वादिति चेदुच्यते — 'तदादि'न्यायेन 'सामान्ये शक्तस्य विशेषरूपेणोपस्थापकत्वम्' इति मते तथाप्रवादात्। ॐसा चेति — जाति रित्यर्थः। ॐआकाशवद्विभुरिति — शब्दतन्मात्रपरिणाम आकाशो यथा विभुस्तथा समानप्रभवत्वाज्जातिरपि विभुः। अद्वैतिमतेनेदम्, तार्किकमते जातेर्नित्यत्वात्।

जातेर्व्यापकत्वनिरुक्तिः।

मू०—सा च जातिः सर्वत्र, आकाशजाति-समवायादेरप्यौपाधिकानेकत्वात्। तदुक्तं हरिणा—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

"संयोगिद्रव्यभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ।।" इति ।
( वाक्यप० कां० ३ समुद्दे० १ कारि० १५ )

आकाशेत्युपलक्षणम् —

"अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।
व्यापारलक्षणा यस्मात् पदार्थाः समवस्थिताः ।।" इति च ।
( वाक्यप० कां० ३ समुद्दे० १ कारि० ११ )

जात्यभिधायिनः = जातिविशिष्टवाचकाः । व्यापारलक्षणाः = प्रयोजनज्ञाप्याः, शब्दस्यान्वयिरूपमनवच्छेदकीकृत्य अप्रत्यायकत्वात् । एवञ्च 'निस्सामान्यानि सामान्यानि' इत्यनादेयम्, 'सामान्यानि' इत्यस्य शब्दस्याबोधकत्वात् ।

किञ्च, ब्रह्मण एव प्रमाणसिद्धतया सर्वे भावा ब्रह्मणः शक्तिभूताः, न तु ततो भिन्नाः। तत्र यथाव्यवहारं शक्तिकल्पना, इति सर्वत्र जातिद्रव्यविभागः, 'आकाशत्वम्' 'घटत्वम्' इत्यादिव्यवहारस्य तुल्यत्वात् । 'तत्तत्कर्णशष्कुल्यवच्छिन्ननभस एव ( तत्तत् ) श्रोत्रत्वम्' इति मते श्रोत्रत्वजातिवत् ।

(रत्न०)–*सा च जातिरिति—उक्तरीत्या प्रमाणसिद्धा सा चेत्यर्थः । सर्वत्र = पदार्थमात्रे । नन्वाकाशादीनामेकत्वात् तत्र जाति र्न सम्भवेदत आह–*आकाशेति–आकाश–जाति–समवायादीनां सर्वेषामनेकत्वमित्यर्थः। आकाशादीनामनेकत्वे हरिं प्रमाणयति—*तदुक्तमिति । *संयोगीति—यथा सामान्यविशेषाणामन्वयिधर्मः = उपाधिः=भेदस्तथाऽऽकाशस्यापि संयोगोपाधिर्भेद इति प्रकृतापेक्षः समुच्चयः । आकाशेन संयोगो विद्यते येषां घटादीनां ते संयोगिनो घटादयः। आकाशं हि सर्वेषां मूर्त्तानामधिकरणम् । अवकाशदानाद्धि तदाकाशम् । तथाच— संयोगिनो घटादेर्यो धर्मभेदः = परिमितत्वम्, परिमितदेशवृत्तित्वञ्च । तथाच—संयोगिविशिष्टाकाशदेशोऽनेकः । संयोगिधर्मभेदेनाकाशभेद उपाधिकृतो न स्वतः । यदाह—*देशे च परिकल्पित इति—एवञ्च तुल्यन्यायात्कालादीनामपि प्रदेशक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ल्पनया सामान्यं सिद्धम् । युधिष्ठिरादिसंयोगिभेदेन कालस्यानेकत्वम् । एवं मेरुं प्रदक्षिणया वर्त्तमानस्य सवितुर्लोकपालगृहीतैर्देशविशेषैर्ये संयोगास्तदुपाधिना सूर्य्येण संयोगे सति दिक्सामान्यं दिक्शब्दवाच्यं परिकल्प्यम् । अवच्छेदकभेदात्तु भिन्नमेव । समवायस्यापि सम्बन्धिभेदाद् भेदः । जातीनामाश्रयभेदाद् भेदः । ॐतेषु देशेष्विति — आकाशस्यापि परिकल्पितेषु देशेषु परिकल्पितदेशावच्छेदेन सामान्यं परिकल्प्यम् । अत्र सर्वैर्गवादिशब्दैः स्वरूपपरैरर्थपरैश्च गोशब्दत्वादिजातिरेवाभिधीयते, तदनन्तरं शब्दार्थयोस्तादात्म्याद् गोत्वादिरूपार्थवृत्तिजातिषु अध्यासपरिकल्पनया जातित्वम् । तदुक्तं हरिणा—

"स्वजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ॥" इति ।

( वाक्यप० कां० ३ समुद्दे० १ कारि० ६ )

'स्वजातिः' इत्यनेन प्रथमं शब्दगतां जातिं प्रदर्श्याध्यासादर्थेषु जातित्वव्यवहार इत्युक्तम् । इदानीमध्यासानाश्रयणेऽपि अर्थजातिमाह— ॐअर्थजात्यभिधानेऽपीति — पक्षान्तरमिदम् , यदाऽपि शुद्धा एवार्थजातयः शब्दैरभिधीयन्ते इत्याश्रीयते तदाऽपि सर्वे जात्यभिधायिनः = जात्यादिशब्दा अपि तदा जातिवाचिन एव । ननु 'निःसामान्यानि सामान्यानि' इति सिद्धान्तात् कथं जात्यादिशब्दा अपि जात्याधारां जातिमभिदध्युरित्याह — ॐव्यापारलक्षणा इति—व्यापारः = प्रयोजनं तदेव लक्षणम् = हेतुर्येषां ते, अभिधारूपव्यापारवशाद्धि शब्दार्थयोः कल्पना । एकाकारप्रतीत्युपपत्तये यथा द्रव्यादिशब्दानामनुगमकधर्मकल्पना, तथा 'गोत्वाश्वत्वे सामान्ये' इत्यनुगतप्रतीतिवशात्तत्राप्यनुगमकधर्म आवश्यकः । अयम्भावः— वैशेषिकादीनां मते 'निःसामान्यानि सामान्यानि' सन्तु नाम । तानि व्यक्तिष्वन्वयप्रत्ययावसेयानि परोपाधिरूपाणि, स्वतन्त्रव्यक्तिवदिदन्तावभासितत्वाभावात् । सामान्यान्तरेण नोपाधीयन्ते । वैयाकरणानाम् 'शब्दवाच्योऽर्थः' इत्यभ्युपेयतामन्वयिरूपावच्छेदेन शाब्दप्रत्ययस्योत्पत्तेर्जातिष्वपि जातिरभ्युपगम्या । एतदेव हि व्यक्तिष्वपि जात्यभ्युपगमे निमित्तमिति जातावपि तदभ्युपगमे कः प्रद्वेषः । प्रत्यक्षा अपि च पदार्थाः स्वकार्य्यं विज्ञानादिकं कुर्वन्तः, 'सन्ति' इति व्यवह्रियते, किं पुनः शब्दवाच्याः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदार्था इति सामान्यवचनाद् द्रव्यत्वादयोऽपि शब्दवाच्यत्वेनैव लक्ष्यन्ते। शब्दप्रमाणकानां हि यच्छब्द आह, तत्परमार्थरूपम्। अत एव "शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणम्" इति भाष्यं सङ्गच्छते। तथा चान्वयिताऽवच्छेदकरूपेण गुणोऽप्यभिधीयमानो जातिरेव। यथोपमानसमासे श्यामादिः। अत एव च "उपमानानि सामान्यवचनैः" (पा०सू०२।१।५५) इत्याह भगवान् पाणिनिः। तथा 'इदम्' 'तद्' इति स्वातन्त्र्येण विशेष्यतयाऽभिधीयमाना जातिगुणक्रिया अपि द्रव्यम्। एतच्च लौकिकव्यवहारानुगुण्येन शास्त्रेऽस्मिन् व्युत्पाद्यते। शास्त्रान्तरप्रसिद्धा हि व्यवस्था लोकविरुद्धा, लोके 'गवि शृङ्गम्' 'वृक्षे शाखा' इति व्यवहारः। तथैव च व्याकरणेऽप्याधारे सप्तमी। शास्त्रान्तरे पुनरवयवेष्ववयवीति, 'शृङ्गे गौः' 'शाखायां वृक्षः' इति स्यात्। इत्थञ्च-शब्दाभिधेयस्येहार्थत्वात् सर्वेजात्यभिधायिनो यस्मात् शब्दव्यापारेण पदार्था लक्ष्यन्ते। यद्यपि बहिर्वस्तूनि न सन्ति, तथाऽपि शब्दैस्तथा प्रत्याय्यन्ते, अतोऽभिधाव्यापारवशादन्वयिरूपेण प्रत्यायनाद् व्याप्तिर्जातौ पदार्थे सिद्धेत्येषोऽर्थोऽभिधाव्यापारलक्षणत्वमेव व्यक्तयतीति दिक्। व्यापारलक्षणाः = व्यापारः लक्षणं कार्य्यं प्रयोजनन्तदेव हेतुर्येषां ते प्रयोजनहेतुका इति यावत्। प्रयोजनज्ञाप्याः = प्रयोजनहेतुकज्ञानविषयाः। तथाचार्थप्रत्यायनं हि प्रयोजनम्, तच्चान्वयिताऽवच्छेदकरूपं विना जात्यादिशब्दानां नोपपद्यत इति प्रयोजनज्ञाप्यः पदार्थः जातावपि जातिरूपः कल्प्यते तदाह—*शब्दस्यान्वयिरूपमिति। एवञ्च = सर्वत्रैव जातिसिद्धौ च। *अबोधकत्वादिति—जातौ जात्यस्वीकारे 'गोत्वाश्वत्वादीनि सामान्यानि' इति वाक्यघटक 'सामान्यानि' इत्यस्यान्वयिताऽवच्छेदकरूपाभावेन अबोधकत्वापत्तिरित्यर्थः। ननु सामान्यादिशब्दानां सामान्यत्वेन रूपेण बोधकत्वेऽपि नहि सामान्यत्वं जातिः, अनवस्थाभयात्। किञ्च, अनुल्लिख्यमानजातेरेव स्वरूपतो भानस्वीकारेण सामान्यानीत्यस्याबोधकत्वापत्तिदानमसङ्गतमिति चेत्, न, अनवस्थायाः 'वटबीज'न्यायेनेष्टापत्तेः, प्रवृत्तिनिमित्तातिरिक्तस्य शाब्दाविषयत्वस्यैव विवक्षितत्वाच्च। घटशब्दबोध्ये घटत्वे जातित्वाभावे सामान्यशब्दजन्यबोधस्य भ्रमत्वापत्तेः, सामान्यत्वाभाववद्घटत्वनिष्ठविशेष्यतानिरूपितसामान्यत्वनिष्ठप्रकारताकत्वात्। यत्तु—जात्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिषु सामान्याभावे "व्यक्त्याकृतिजातयस्तु पदार्थः" इति गौतमसूत्रस्यापि विरोध इति कुञ्जिकाकारः, तन्न, तत्र जातिः—प्रवृत्तिनिमित्तोपलक्षणम्, इति मूलकृतैवोक्तत्वात् । *ब्रह्मण एवेति—ननु ब्रह्मातिरिक्तस्याताात्त्विकत्वे तदन्तर्गतश्रुतेरप्यतात्त्विकत्वापत्त्याऽनिष्टापत्तिरिति चेत्, न, श्रुत्यर्थस्य ब्रह्मणः "सत्यं ज्ञानम्" इत्यादिना तात्त्विकत्वदर्शनात्तस्यास्तात्त्विकप्रमाकरणत्वात् । *ब्रह्मणः शक्तिभूता इति—अयम्भावः— अविद्याकल्पितस्य प्रपञ्चस्यापारमार्थिकत्वादनादिवासनावशादेकस्य ब्रह्मण नानात्वोन्नीयमानशक्तिभेद एवोचितः । अविद्यावृत्तिरूपभेदस्य सर्वपदार्थगतत्वेनासत्यत्वाद् व्यक्तिरिति व्यवहारः । भेदप्रतीतावपि अन्वयिरूपं जातिः । यथाच—रुचक-स्वस्तिक-कुण्डलादिविकारभेदेऽपि सुवर्णमित्येव सर्वत्रानुयायिरूपं सत्यम् । एवञ्चैकैव जातिर्महासत्ताऽऽख्या ब्रह्मस्वभावा तस्या एव गोत्वाश्वत्वादयो विवर्त्ताः । तदुक्तं हरिणा—

"सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥" इति ।
(वाक्यप० कां० ३ समुद्दे० १ कारि० ३३)

आश्रयरूपसम्बन्धिभिर्भिद्यमाना उपचरितभेदा गवादिषु महासत्तैव गोत्वादिजातिः । तस्यामेव सर्वे शब्दा वाचकत्वेन वर्त्तन्ते । एवञ्चाभावादेरपि पदार्थत्वेन महासत्तया अवियोगात् प्रातिपदिकमात्रवाच्या सा । अत एव 'प्रातिपदिकार्थः सत्ता' इति प्राहुर्वृद्धाः । धातुरपि क्रियारूपव्यक्तिषु समवेतां क्रियारूपोपाधिगृहीतनानात्वां महासत्तामेव तत्तद्रूपामभिधत्ते । तदुक्तं हरिणा—

"तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥" इति ।
(वाक्यप० कां० ३ समुद्दे० १ कारि० ३४)

नन्वेवम् 'गोत्वम्' इति प्रकृतिप्रत्यययोरेकार्थताप्रसङ्ग इति चेत्, न, क्रियाभेदेन सत्ताया भेदात् । प्रातिपदिकेन गवाश्रयायास्तस्या अभिधानम् । प्रत्ययेन तु निष्कृष्टाश्रयस्य = सामान्यस्याभिधेत्यदोषः । जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम् । द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पाश्रयम्, एवञ्च—पक्षद्वयेऽप्येकपक्षीभावरूपः सिद्धान्तः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमार्थदृष्ट्याऽत्र सर्वपार्षदत्वात् पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः । एष च सर्वत्रैवास्य ग्रन्थकारस्याभिप्रायः । ननु सत्यासत्यात्मकभावद्वय-स्वीकारेऽद्वैतहानिरिति, चेत्, उच्यते — अविद्यावशान्नानात्वम् । तत्र योऽप्रकाशः साऽविद्या । न चाप्रकाशो नाम – प्रकाशाभावरूपोऽधिकरणाद-तिरिक्तोऽस्ति । अधिकरणञ्च — ब्रह्मैवेति नास्त्यद्वैतहानिरिति । ॐयथा-व्यवहारमिति — गोत्वजातिर्गव्येव, अश्वत्वजातिरश्वे एवेति यथाव्य-वहारं कल्पनीयमिति भावः । तत्तत्पदार्थाभिव्यक्तजात्योरेकत्रसामाना-धिकरण्ये सति साङ्कर्य्यस्वीकारात्तदपि नात्रेति भावः । ॐजातिद्रव्येति — 'द्रव्य'शब्देनात्र व्यक्तेर्ग्रहणम् । ॐश्रोत्रत्वजातिवदिति — नभस एकत्वेऽपि यथोपाधिभेदान्नानात्वमादायानेकव्यक्तिवृत्तित्वात् श्रोत्रत्वस्य जातित्वम्, तथाऽऽकाशत्वस्यापि जातित्वं बोध्यमिति भावः । श्रोत्रत्वस्य जातित्वव-दिति क्वचित्पाठः ।

मू०—सा च जातिरुत्पत्तेः प्राक्, नाशे च सूक्ष्मरूपेष्वाश्रयेष्व-वतिष्ठते, इति नित्यत्वं तस्याः । अनुगताकारज्ञानजनकं व्यक्तीनां यत्किञ्चिद्रूपं तत्सर्वं जातिः । एवञ्च 'जातिः' 'उपाधिः' इति पर्यायाविति हेलाराजः ।

सर्वजातीनां व्यापकत्वेऽपि पदार्थानां विचित्रशक्तिकत्वात् काञ्चिदेव जातिं कश्चित्पदार्थोऽभिव्यनक्ति, न सर्वां सर्वः । सा च कदाचित्स्त्रीत्वयुक्तेन पिण्डेन व्यज्यते, कदाचित्पुंस्त्वयुक्तेन, कदाचिदेकाधारस्था, कदाचिदनेकाधारस्थेति बोध्यम् ।

तस्याः प्राधान्येऽपि 'स्वाश्रयसमवेतत्वेन' संख्याऽऽदेस्तत्र बोधात् तत्तल्लिङ्गवचनोपपत्तिः, गुणवचनशब्दवत्, इति "सरूप" सूत्रे भाष्ये स्पष्टम् । सा च — नित्येत्युक्तम् ।

अत एव भाष्ये—"सिद्धे शब्दार्थसम्बन्धे" (महाभा० पस्पशाह्नि०) इति वार्तिके सिद्धे, शब्दे, अर्थे, सम्बन्धे चेति विग्रहः, कं पदार्थं मत्वा ? इति प्रश्ने, आकृतिमित्याह । आकृतिर्हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्या द्रव्यमनित्यम् ।" अत्राकृतिपदेन—जातिः, संस्थानं चोभयमपि नित्यम् । अनयोर्यथा नित्यत्वं तथाऽग्रे वक्ष्यते । "अथवा द्रव्ये एव पदार्थे एष विग्रहो न्याय्यः—सिद्धे, शब्दे, अर्थे, सम्बन्धे चेति । द्रव्यं हि नित्यम्, आकृतिरनित्या । एवं हि दृश्यते लोके,— मृत् कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः" इत्यादि ।

(रत्न०)—*सा च जातिरिति—उक्तरीत्या प्रमाणसिद्धा सा चेत्यर्थः । सूक्ष्मरूपेषु = परमाणुषु । *सर्वं जातिरिति—अत्र 'जाति'शब्देन धर्ममात्रमुच्यते, नातः पश्वादिशब्देऽपि तत्प्राप्तिः । *व्यापकत्वेऽपीति—सत्तारूपत्वेन सर्वजातेः सर्वत्र सत्त्वात् । *विचित्रशक्तिकत्वादिति—उपाधिस्वभावादिति भावः । *न सर्वां सर्वं इति—तथाच गोपदार्थो गोत्वमेव, अश्वपदार्थोऽश्वत्वमेवेति नियम उपपद्यत इति भावः । *तस्याः प्राधान्येऽपीति—"आकृति-पदार्थकस्य आकृतिप्रधानभूता, द्रव्यं गुणभूतम् । द्रव्यपदार्थकस्य-द्रव्यं प्रधानभूतम्, आकृतिर्गुणभूता" इति भाष्यात् प्राधान्यमाकृतेरिति भावः । ननु जातेः प्राधान्येन वाच्यत्वे लिङ्गसङ्ख्याऽऽद्यनन्वयाप-त्तिरत आह—*स्वाश्रयेति—स्वम्—संख्याऽऽदिः, तदाश्रयो व्यक्तिः, तत्समवेतत्वं जाताविति परम्परासम्बन्धेन संख्याऽऽद्यन्वय इति भावः । *गुणवचनेति—गुणपरकशुक्लविंशत्यादिशब्दवदित्यर्थः । तत्राप्युक्तसम्बन्धेनैवान्वय इति भावः । *"सरूप" सूत्रे भाष्य इति— तत्र हि 'आकृतिः पदार्थः' इति पक्षे "वचनपरिहारस्तु नोपपद्यते । वचनपरिहारश्चाप्युपपन्नः । इदं तावदयं प्रष्टव्यः—अथ यस्य द्रव्यं पदार्थः, कथं तस्य एकवचन-द्विवचन-बहुवचनानि भवन्ति ?, एवं स वक्ष्यति—एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति । यदि तस्यापि वाचनिकानि न स्वाभाविकानि, अहमप्येवं वक्ष्यामि—एकस्मि-न्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति ।" इति । अत्र परम्परा-सम्बन्धेनान्वये एव भाष्यतात्पर्यम् । केचित्तु—'एकं रूपम्' 'द्वे रूपे' इत्य-बाधितप्रतीतेः संख्या अतिरिक्तपदार्थ एव, न गुणः । नहि तत्र स्वाश्रय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समवायादीनां सम्बन्धत्वसम्भवः, सर्वत्र संख्याऽन्वयस्यैकसम्बन्धेनैवावगाहनात् । किञ्चैकार्थसमवायेन घटादावपि संख्याऽन्वयापत्तिः, तेन सम्बन्धेन तत्र सत्त्वादित्याहुः । ❀सिद्ध इति — नित्य इत्यर्थः । ❀कं पदार्थमिति — कं पदार्थं सिद्धं ( नित्यम् ) मत्वा प्रश्न इत्यर्थः । ❀संस्थानञ्चेति — 'अवयवसन्निवेशः संस्थानम्' इत्युच्यते । यथा — कम्बुग्रीवादिमत्त्वम् । ❀वक्ष्यत इति — अनुपदमेव प्रवाहरूपेण नित्यता वक्ष्यत इत्यर्थः । ❀द्रव्यं नित्यमिति — एकस्मिन्नेव सुवर्णादावनेकाकृतियोगदर्शनात् सुवर्णस्य तु तस्यैव सत्त्वान्नित्यं द्रव्यमित्यर्थः । अयम्भावः — उपाधीनां वस्तुतो व्यतिरिक्तत्वाभावेनोपधेयरूपतया नित्यत्वादुपाधिमद् द्रव्यमेव शब्दार्थ इति ।

व्यक्त्याकृत्योः स्वरूपस्य, नित्यत्वानित्यत्वयोश्च निर्णयः।

मू०—अत्र कैयटः–तत्तदाकारं तत्तद्व्यङ्ग्यत्वजातिरूपं वाऽसत्यमुपाधिमाश्रित्य तदवच्छिन्नं ब्रह्मैव द्रव्यम् ।

एतेन मृदोऽप्यनित्यत्वात् "द्रव्यं नित्यम्" इत्ययुक्तमित्यपास्तम्, मृदोऽप्याकारमात्रतया ब्रह्मण्येव पर्यवसानात् । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दो० उप० ६।१।४ ) ।

आकृतिः—संस्थानम्, तस्या अनित्यत्वे तद्व्यङ्ग्यजातिरप्यनित्येति एतत् तात्पर्यम् ।

"आकृतावपि पदार्थे एष विग्रहो न्याय्यः । ननु चोक्तमाकृतिरनित्येति । नैतत् । नित्या आकृतिः । कथम् ? न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते" इति । अत्राकृतिपदेन-जातिः । उपरमः=अनभिव्यक्तिः । आविद्यकः पदार्थो जातिः, यावद्व्यवहारं ध्रुवत्वात्कूटस्थत्वादविचालित्वादनपायोपजनविकारित्वाद्वारं वारमुत्पत्त्याद्यभावेनानुत्पत्त्यवृद्ध्यव्यययोगित्वान्नित्येति ( ए ) तद्भावः । एतदेवाभिप्रेत्य "भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नम्" इति जातिरूपसामान्यलक्षणमुक्तम् । अथाव-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यवसंस्थानरूपाया आकृतेरुक्तहेत्वभावात् प्रकारान्तरेण नित्यत्वमाह—"अथवा—यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यम्। तस्य भावः तत्त्वम्। आकृतावपि तत्त्वं न विहन्यते" इति। अवयवसंस्थानरूपाया आकृतेः (आश्रय) प्रवाहाविच्छेदात्तद्धर्मस्याविघात इत्याशयेनानेन प्रवाहनित्यतोक्ता।

(रत्न०)—ननु 'पूर्वं द्रव्यं नित्यम्' इत्युक्तम्, तच्च न संगच्छते, घटादिद्रव्याणामनित्यत्वस्य सर्वानुभवसिद्धत्वादत आह — *अत्रेति। तत्तदाकारम् = घटाद्याकारम्। तत्तद्व्यङ्ग्यजातिरूपम् = तत्तदाकारव्यङ्ग्यजातिरूपम्। तदवच्छिन्नम् = तत्तदाकाराद्यवच्छिन्नम्। *ब्रह्मैव द्रव्यमिति — सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन सर्वाधिष्ठानभूतं ब्रह्मैव। विशेष्यमेव चाधिष्ठानम्, 'इदं रजतम्' इत्यत्राधिष्ठानस्यैव विशेष्यत्वदर्शनात्। तथाहि व्याडिमते — सर्वे शब्दा द्रव्यपराः। तदुक्तम्— "सरूप"–(पा० सू० १।२।६४) सूत्रे भाष्ये— "द्रव्याभिधानं व्याडिः– द्रव्याभिधानं व्याडिराचार्यो न्याय्यं मन्यते द्रव्यमभिधीयते इति"। तद्यथा — आत्माद्वैतवादिभिरात्मशब्देन द्रव्यमुच्यते। आत्मैव बुद्ध्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थः। अत एवात्मभूता सत्ता स्वभाव इति वदन्ति। जातिर्वा, द्रव्यं वा, पदार्थावित्युक्त्वा तत्र वाजप्यायनदर्शनेन जातिःशब्दवाच्येति उक्तवान् भाष्यकारः। 'व्याडिदर्शनेन पारमार्थिकं द्रव्यम्' उपदिशति — हरिः—

"आत्मा वस्तुस्वभावश्च शरीरं तत्त्वमित्यपि।
द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम्॥" इति।
(वाक्यप० कां० ३ समुद्दे० २ कारि० १)

इहार्थक्रियायां द्रव्यमेवोपयुज्यते, इति तदेव प्रवर्तकमर्थिनाम्। अतः शब्देन तदेवोच्यते। अनभिधीयमाना तु जातिरवच्छेदिका, गुडशब्दे माधुर्यादय इवेति द्रव्यवादिनां दर्शनम्। द्रव्यञ्च द्विविधम्—पारमार्थिकम्, सांव्यवहारिकञ्च। अनेन च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति। इह तु पारमार्थिकं द्रव्यं निरूप्यते। आत्माद्वैतवादिभिरात्मैव ह्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थः, इति तेषां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दर्शनम् । इहैव वक्ष्यमाणं वस्तु स्वलक्षणमर्थक्रियाकारिद्रव्यम्, इति शाक्यैरुक्तम् । द्वैतवादिभिः सत्तां ( स्वभावः ) आत्मभूतेति । प्रकृतेरेकदेशश्चेतनः पुरुषस्तद्द्वारेण शरीरशरीरिणोरव्यतिरेकात् शरीरं द्रव्यं प्रधानमेवेति प्राकृतिकैः । शरीरमेवैक आत्मा येषां तैः शरीरात्मवादिभिरुच्यते तत्त्वमिति चतुर्भूततत्त्ववादिभिः चार्वाकैः । पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये 'शरीरेन्द्रियविषयसंज्ञा' इति वचनात् । तदैवमेतैः परमार्थत एकमेव वस्तु उच्यते । द्रव्यं नाम यः पदार्थः तस्यैव ते पर्यायाः । 'सिद्धे शब्दार्थसम्बन्धे' इत्यत्र 'द्रव्यं नित्यमाकृतिरन्या चान्या च भवति' इति वदता भाष्यकारेण नित्यं द्रव्यं स्मृतम् । एवञ्च 'घटस्सन्' इति प्रयोगे नहि सत्ता जातिर्निमित्तम्, किन्त्वधिष्ठानसत्तैव । अत एव स्वरूपसत्ताऽपि नोक्तव्यवहारहेतुः, अभावेऽनुगतधर्माभावेनानुगतप्रतीत्यनापत्तेः । एतेन = तत्तदाकाराद्यवच्छिन्नब्रह्मण एव द्रव्यत्वव्यवस्थापनेन । ॐवाचारम्भणमिति — आरभ्यते = स्पृश्यते इत्यारम्भणम् = शब्दः, वाचा = वागिन्द्रियेण नामभेदकल्पनम्, यथा — 'घटः' 'शरावः' इत्यादि । वस्तुतस्तु मृत्तिकैवेति तदर्थः । ॐएकविग्रह इति—"सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके सिद्धे, शब्दे, अर्थे, सम्बन्धे च इति विग्रह इत्यर्थः । 'नित्या आकृतिः' इत्युक्तम्, तत्र हेतुं पृच्छति भाष्यकारः — ॐकथमिति । समाधिमाह—ॐक्वचिदिति—क्वचिद् व्यक्तावनभिव्यक्ता, नैतावता सर्वत्रानभिव्यक्ता, व्यक्त्यन्तरे तूपलभ्यत एवेति नित्यत्वं जातेः । त्रिविधा हि अनित्यता—संसर्गानित्यता, परिणामानित्यता, प्रध्वंसानित्यता चेति तत्राद्या यथा— स्फटिकस्य जपाकुसुमाद्युपधानेन स्वरूपतिरोधानम् । द्वितीया यथा—आम्रफलस्य श्यामतातिरोधाने पीताद्याविर्भावः । तृतीया यथा –मुद्गरपातादिना घटस्य सर्वात्मना विनाशः । एतत् त्रिविधवैपरीत्यप्रदर्शनेन नित्यतां समर्थयति भगवान् पतञ्जलिः — ॐध्रुवेति – ध्रुवत्वादित्यस्यैवार्थः–ॐकूटस्थत्वादिति–कूटम्–अयोघनस्तद्वत्तिष्ठति । अनेन संसर्गानित्यता निरस्ता । यथा — स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन लौहित्याविर्भावः । उपधानापगमे स्वरूपप्रतिभासात्परिणामाभावः । ॐअविचालित्वादिति — रूपान्तरापत्तिः = विचालः, पयसो दधिरूपता यथा, तद्रहितत्वादित्यर्थः । अनेन परिणामानित्यता ध्वस्ता । ॐअनपा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

येति—तदुक्तं निरुक्ते—(नैघ० अ० १ पा० १ खं० ३) 'षड्भावविकारा भवन्ति' इति वार्ष्यायणिः—'जायते' 'अस्ति' 'विपरिणमते' 'वर्धते' 'अपक्षीयते' 'विनश्यति' इति । जन्म, सत्ता, वृद्धिः, परिणामः, अपचयः, विनाश इति यावत् । अनपायेत्यनेन अपचयः, अनुपजनेत्यनेन परिणामः, अनुत्पत्तीत्यनेन जन्म, सत्ता च, अवृद्धीत्यनेन वृद्धिलक्षणः, अव्ययेत्यनेन विनाशः, एतत्षड्विधविकाराः परिहृताः। एतद्विकाररहितं नित्यमित्युच्यते। मुख्यत्वेन नित्यत्वं ब्रह्मविषयम्, यावद्व्यवहारम्, पदार्थविषयं च । *एतदेवेति—यावद्व्यवहारं नित्यत्वमेवेत्यर्थः। *यस्मिंस्तत्त्वमिति —प्रवाहनित्यताऽनेनोक्ता । तन्नाशेऽपि तद्धर्मो न नश्यति, आश्रयप्रवाहाविच्छेदादिति भावः । तत्त्वम् = तद्धर्मः । प्रवाहः = उत्पत्तिविनाशपरम्परा । सा च परम्परा अनाद्यनन्तेत्यर्थः ।

मू०—प्रवाहनित्यतां न्यायवार्तिककारोऽप्याह-( न्या० वा० अ० २ आह्नि० १ सू० ६९) "नित्या वर्णाः, नित्या वेदा इति च, सम्प्रदायाविच्छेदात्। 'नित्या पृथिवी' 'नित्याः पर्वताः' इतिवत्। तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेष्वपि सम्प्रदायाविच्छेदेन प्रवर्तन्ते। एतन् मन्वादिवाक्येष्वपि तुल्यम्" इति ।

(रत्न०)—जातेर्नित्यत्वम्परसम्मतमेव, द्रव्यस्य नित्यत्वं विप्रतिपन्नमिति तत्र प्रमाणमाह — *प्रवाहेति । न्यायवार्तिककारः = उद्द्योतकरः । *आहेति — "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" (न्या० वा० अ० २ आह्नि० १ सू० ६९ ) इति सूत्रे न्यायवार्तिके शब्दार्थयोः सम्बन्धमुपक्रम्योक्तम् — "स च संसारस्य अनादित्वाल्लोकतोऽवगम्यते । ये तु संसारमादिमन्तं वर्णयन्ति त एवमुपलभ्याः । अथ योऽयमभिलापः 'नित्या वर्णाः' ( वेदाः ) इति, स कथम् ? सम्प्रदायस्याविच्छेदात् तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाभ्यासाविच्छेदेन प्रवर्तन्ते, तदपेक्षया लौकिकाः शब्दान्प्रयुञ्जते-'नित्या वेदाः' इति । यथा—'नित्याः पर्वताः' 'नित्याः सरितः' इति । तन्मन्वादिवाक्येषु समानम् । कुत एवम् । सम्प्रदायाविच्छेदान्नित्यत्वं न पुनर्नित्यत्वादेव ? अनित्यत्वोक्तप्रमाणाविघातात् = यानि मयाऽनित्यत्वे प्रमाणान्युपन्यस्तानि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तानि न विहन्यन्ते, तेषामविघातादनित्यत्वे सति सम्प्रदायाविच्छेदान्नित्यत्वोपचार इति" इति । *सम्प्रदायाविच्छेदादिति— 'समाननामरूपाणां परम्पराऽविच्छेद एव प्रवाहः' ।

सू०—व्याससूत्रमपि—"समाननामरूपत्वाच्चावृत्तावप्यविरोधः"( वे० सू० १।३।३० ) इति । वेदस्य, तदर्थानां च नामरूपप्रवाहानुच्छेद एव नित्यत्वमिति तदर्थः । उपाधिसन्निवेशादिशब्दैश्चोपाधीनामपि तदात्मकत्वाद्ब्रह्मैव वाच्यम् ।

( रत्न० )—अत्रैवाद्वैतिसम्मतिमप्याह—*व्यासेति । *समाननामेति—( वे० द० अ० १ पा० ३ सू० ३० ) पूर्वं हि देवादीनां विग्रहवत्त्वे यागादिकर्मणि विरोधमाशङ्क्य परिहृतः । पुनः शब्दे विरोधमुत्प्रेक्ष्य "औत्पत्तिकं हि शब्दस्यार्थेन सह सम्बन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं स्थापितम् । इदानीन्तु विग्रहवती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसम्बन्धीनि हवींषि भुञ्जीत, तथाऽपि विग्रहयोगादस्मदादिवत् जननमरणवती सेति नित्यस्य शब्दस्य ( वेदरूपस्य ) नित्येनाथन नित्ये सम्बन्धे प्रतीयमाने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति चेत्, नायमप्यस्ति विरोधः, कस्मात् ? अतः प्रभवात् । अत एव वैदिकाच्छब्दाद्देवादिकं जगत्प्रभवति ।" ननु "जन्माद्यस्य यतः—"(वे० द० अ० १ पा० १ सू०२) इत्यनेन विरोधः, इति चेत्, न, तेन ब्रह्मण उपादानकारणत्वबोधनात्, वेदस्य तूक्तरीत्या निमित्तकारणत्वात् । ननु वैदिकशब्दाद्देवादीनामुत्पत्तावनित्यत्वे तेषां वैदिकशब्दानामनित्यत्वं दुष्परिहरम्, लोके उत्पन्ने देवदत्ते नामकरणदर्शनात् । तस्माद्विग्रहवत्त्वे शब्दविरोध इति चेत, न, गवादिशब्दवदाकृतिभिः शब्दानां सम्बन्धस्वीकारादाकृतेश्च नित्यत्वात् । आकृतेर्नित्यत्वमापेक्षिकं द्रष्टव्यम् । देवादीनां वैदिकशब्दप्रभवत्वे प्रत्यक्षानुमाने ( श्रुतिस्मृती ) प्रमाणे । स्वप्रामाण्ये निरपेक्षत्वात् श्रुतिः प्रत्यक्षम्, इत्युच्यते । श्रुतिसापेक्षत्वात्स्मृतिरनुमानमित्युच्यते । तत्र श्रुतिश्च—"स भूरिति व्याहरत्" "स भूमिमसृजत्" ( तैत्ति० ब्रा० उप० २।२।४।२ ) ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मृतिरपि—

"नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे परमेश्वरः ॥"

( मनुस्मृ० अ० १।२१ )

तथा च सूत्रम्—"शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्" ( वे० द० अ० १ पा० ३ सू० २८ ) देवादीनां विग्रहवत्त्वे शब्दविरोध इति चेत्, न, प्रभवात् वेदादुत्पत्तेस्तेषाम् । वेदात्प्रभवप्रत्यक्षानुमानाभ्यां सिध्यतीत्यर्थः । नियताकृतेर्देवादेर्वेदादुत्पत्तेरेव नित्यत्वं वेदस्य । तथा च सूत्रम्—"अत एव च नित्यत्वम्" ( वे० द० अ० १ पा० ३ सू० २९ ) । ननु देवादीनामुत्पत्तिविनाशस्वीकारे वेदार्थयोर्वाच्यवाचकभावस्य प्रलयादौ विच्छेदात् सम्बन्धस्य नित्यत्वं हीयत इति चेत्, न, समानरूपत्वादावृत्तावप्यविरोधात् । अनादौ च संसारे यथा स्वाप-प्रबोधयोः प्रलय-प्रसवश्रवणेऽपि पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न कश्चिद् विरोधः । एवं कल्पान्तरमहाप्रलययोरपीति द्रष्टव्यम् । स्वाप-प्रबोधयोश्च प्रलयप्रभवौ श्रूयेते—'यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति' तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वै रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैः ध्यानैः सहाप्येति । स यदा प्रतिबुध्यते, यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेव तस्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते'(कौषित० उप० ३।३।१२)'सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारानुसंधाना दृश्यन्ते, तथाऽपि न प्राकृतवदीश्वराणां भवितव्यम्, लोकेऽपि ज्ञानैश्वर्यादिवैलक्षण्यस्य दर्शनात् । तथा च —सुप्तप्रबुद्धवत् कल्पान्तरव्यवहारानुसंधानोपपत्तेर्नानित्यत्वं शब्दार्थसम्बन्धस्य । आवृत्तौ = पुनः पुनरुत्पत्तौ, समाननामरूपत्वात् = समानशब्दार्थत्वाद्, विवक्षितस्यैकरूपप्रवाहाविच्छेदरूपनित्यत्वस्याविरोधः । श्वासप्रश्वासवत्पुरुषबुद्ध्यजन्यत्वेन च वेदे नाप्रामाण्यशङ्का', समाननामरूपत्वे प्रमाणञ्च —

"यो ब्रह्माणं विदधाति यो वै वेदांश्च प्रहिणोति तस्मै ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥"
(श्वेत० उप० अ० ६। १८)

"सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥"
(ऋग्वेदे अध्या० ८ म० १० सू० १९१)

"अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी भूता यतः सर्वविभूतयः ॥"
(कूर्मपु० अध्या० २)

"यावन्ति प्रतिलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि, तान्येव तथा भावा युगादिषु ॥"
(कूर्मपु० अध्या० ७)

इति सृष्ट्यन्तरेऽपि नामरूपसाम्यान्नित्यत्वं न विरुध्यत इति भावः। तथा च श्रुतिः—

"यज्ञेन वाचः पदवीयमायन्।
तामन्वविन्दन् ऋषिषु प्रविष्टाम् ॥" इति।

अस्यार्थः—यज्ञेन = पुण्येन कर्मणा। वाचः = वेदस्य। पदवीयम् = मार्गम्। आयन् = प्राप्तवन्तः। एवं ब्रह्मणः स्वयं भूतत्वाद्वेदस्यापि तत्त्वम्। सृष्ट्याद्यकाले प्रादुर्भावः, प्रलये च प्रलयः, न तु मध्ये घटादिवन्नाशस्तस्य, इति नित्यत्वम्। तदाह—*वेदस्येति—ननु द्रव्यनित्यतापक्षे तत्तदाकारादिरूपोपाधेर्व्यञ्जकत्वस्योक्तत्वेन तस्य च ब्रह्मरूपद्रव्यादभिन्नत्वेन प्राक् सिद्धान्तिताद्वैतभङ्गोऽत आह—*उपाधीति। सन्निवेशः = अवयवसंस्थानम्। तदात्मकत्वात् = ब्रह्मात्मकत्वात्। *ब्रह्मैवेति—अनादिवासनावशात् परमात्मन एव तत्तदुपाधिरूपेण, तद्वैशिष्ट्येन च भानमिति भावः। तथा च नाद्वैतहानिः।

**मू०—यत्तु-'अविद्या' शब्देनापि विच्छिन्नप्रकाशं ब्रह्मैव, विच्छेदोऽपि तद्रूप एवेति नाद्वैतहानिरिति।**

**अत्र वदन्ति—विच्छेदस्य ब्रह्मरूपत्वे तत्त्वज्ञाननिवर्त्यताऽनापत्तिरिति।**

**वस्तुतस्तु विच्छेदोऽसत्य एव, रज्जूरगवत्। सर्वोऽपि प्रपञ्च**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवमेव । तत्तद्भोगप्रापकप्राण्यदृष्टवासनासहकारेण, प्राण्यदृष्टैश्च ब्रह्मणस्तथा विवर्तः । एवञ्च तन्नाश्यतोपपन्ना, इति प्रपञ्चितं पूर्वत्र परमार्थसारविवरणे चास्माभिः । 'यथा स्वप्ने एकस्यैवान्तःकरणस्य विरुद्धानेकपदार्थरूपत्वम्, तथा जागरे मायासहकारेण ब्रह्मणस्तथात्वम् । यथा च जागरे अप्रतीयमानत्वात्स्वाप्नस्य मिथ्यात्वं तथा तुरीयदशायामननुवृत्तेरस्य प्रपञ्चस्य मिथ्यात्वम् । संविदश्च सत्यत्वम् । उपाधिवैशिष्ट्येन तदेव व्यवहारास्पदम् । निरुपाधिकं तु सर्वव्यवहाराविषयः' इति हेलाराजः ।

(रत्न०)—मतान्तरमाह —*यत्त्विति । *विच्छेदोऽपीति—एतन्नयेऽभावस्याधिकरणस्वरूपत्वम्, भूतलादेः स्वरूपेण भावत्वेऽपि रूपान्तरेणाभावत्वाभ्युपगमात् । तदाहुः—

"भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ।" इति ।

कयाचित्तु—व्यपेक्षया = केनापि रूपेण भावान्तरमभाव एव । एतन्मते दोषमाह — *अत्र वदन्तीति । *अनापत्तिरिति — विच्छेदस्य ब्रह्मरूपतया तस्य च नित्यत्वादिति भावः । सिद्धान्तमाह — *वस्तुतस्त्विति — प्रवाहरूपेण, ब्रह्मात्मकतया च यन्नित्यत्वमुक्तं तदसङ्गतमिति सूचयन्नाह — *असत्य एवेति — अत्रेदमाकूतम् — यद्यपि विच्छेदो नाम = प्रतिबन्धः । तथाच स्वाकारातिरिक्तस्य प्रतिबन्धकाङ्गीकारेऽद्वैतहानिः प्राप्नोति, तथाऽपि तस्यैव प्रतिबन्धकत्वात्तात्त्विकप्रतिबन्धकत्वाभाव एव । अविद्या—अनादिभावरूपत्वे सति ज्ञाननिवर्त्या । न चेदं लक्षणम्, सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकज्ञानेष्वव्याप्तमिति वाच्यम्, रूप्योपादानाज्ञानस्याप्यनादिचैतन्याश्रितत्वेनानादित्वात् । एवमेव = असत्य एव । असत्यस्यापि व्यावहारिकसत्यत्वं दर्शयति —*तत्तद्भोगेति । तथा = प्रपञ्चरूपतया । *विवर्त इति — विवर्तो नाम—उपादानविषमसत्ताककार्यापत्तिः, चैतन्यापेक्षया प्रातिभासिकं रजतं विवर्त इत्युच्यते । चैतन्यरूपेणोपादानेन विषमम् = सत्यत्वेन सादृश्याभाववत् सत्तास्वरूपं यस्यैतादृशं जगदुत्पद्यमानं विवर्तः । परिणामो नाम- उपादानसमसत्ताककार्यापत्तिः, प्रातिभासिकं रजतञ्चाविद्याऽपेक्षया परिणामः, भ्रमस्थले नहि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकसामग्री प्रातिभासिकरजतोत्पादिका, किन्तु विलक्षणैव, तथाहि—काचादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगात् 'इदमाकारा' 'चाकचिक्याकारा' च काचिदन्तःकरणवृत्तिरुदेति। तस्याञ्चेदमंशावच्छिन्नं चैतन्यं प्रतिबिम्बते। तेन वृत्तिचैतन्यं प्रमातृचैतन्याभिन्नं भवति, ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचिक्यादिसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण परिणमते। तथाच—उपादानेनाविद्यया समम् = मिथ्यात्वेन तुल्यं सत्तास्वरूपं यस्य तादृशं कार्यं परिणामः, इत्युच्यते। एवञ्च = तस्यासत्यत्वे च। तन्नाश्यता = ज्ञाननाश्यता। ॐयथा स्वप्ने इति — अयं भावः — स्वप्नावस्थागतः प्रपञ्चः जाग्रद्दशया बाध्यमानत्वादसत्य इति सर्वसम्मतम्, तेनैव दृष्टान्तेन जागरायां यो भावभेदस्तस्य तुरीयदशायामननुवृत्तत्वादसत्यत्वम्, सर्वास्ववस्थास्वनुगतं संविन्मात्रं सत्यम्। 'चितेरावरको मोह एव निद्रा' इत्युच्यते। तस्याश्चाविद्यावृत्तिरूपत्वान्मिथ्यात्वम्। एवं जाग्रत्स्वप्नावस्थागतमूर्तक्रियाविवर्तरूपमसदेवेति। ॐपदार्थरूपत्वमिति—अविद्यावृत्तिभेदादिति भावः। तथात्वम् = अनेकरूपत्वम्। ॐतुरीयेति—जाग्रत्-स्वप्न-सुषुप्तिभिन्नत्वं तुरीयत्वम्। अननुवृत्तेः = अप्रतीतेः। संविदश्च = ब्रह्मणश्च। तदेव = ब्रह्मैव। ॐनिरुपाधिकमिति—ब्रह्मेति शेषः। मायाया अपि दुग्धस्य दधिरूपेणेव न प्रपञ्चरूपः परिणामः, किन्तु स्वर्णस्य कुण्डलरूपेणेव। एतादृश एव परिणामो विवृतशब्देनाप्युच्यते। अत एव प्रलयेऽविद्यारूपेण सर्वावस्थानम्। यदि दुग्धस्य दधिवत्परिणामो भवेत्तदा पुनः प्रपञ्चस्य मायारूपेणावस्थानं न स्यात्। तस्या यत्संस्काररूपेणावस्थानं तदेव ब्रह्मणि लयशब्देन व्यवह्रियत इति तत्त्वम्। ॐसर्वव्यवहाराविषय इति—"यद्वाचाऽनभ्युदितम्" इत्यादिश्रुतिप्रामाण्याद् व्यवहारविषयत्वस्यैव लाभात्। नन्वेवम् "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृह० उप० ३।९।२६) इति श्रुतिविरोध इति चेत्, न, "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" (तैत्ति० उप० २।४।१) इति श्रुत्या तस्य वाङ्मनसाऽतीतत्वेऽपि उपनिषज्जन्यान्तःकरणवृत्त्या स्वात्मानमप्यविषयीकुर्वत्या प्रतिबन्धकाज्ञाननिवृत्तौ स्वयं स्फुरणादौपनिषदत्वमिति विरोधाभावात्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—आकृतिस्तु यत्र सम्भवति तत्रैव । गौतमीये—"जात्याकृतिव्यक्तयः पदार्थः" (न्या० द० अध्या० २ आह्नि० २ सू० ६७) इति सूत्रे 'व्यक्तिपदेन' च संख्याऽऽदिविशिष्टा व्यक्तिः । "पिष्टकमय्यो गावः" इत्यादावाकृतिरेव । वस्तुतस्तत्रापि जातिः । प्राण्याश्रितत्वेनाभिव्यक्ता तु पुण्यपापसाधनम् । तदुक्तं हरिणा—

"चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते ।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः ॥" इति ।
(वाक्यप० कां० ३ समुद्दे० १ कारि० ४५)

चित्रादीत्यादिना—प्रतिमाः । 'प्राण्याश्रिताः' इति प्राणिपदं कृतदेवताऽऽवाहनप्रतिमोपलक्षणम् । विसर्जने तु कृते ता न पुण्यपापसाधनम् ।

"ब्राह्मणत्वादयो भावाः सर्वत्रैव च ते स्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इति च स्मृतिः ॥" इति च ।
( वाक्यप० कां० ३ समुद्दे० १ कारि० ४४ )

यत्रैवोपदेशादिनाऽभिव्यक्तास्तत्रैव स्वकार्यसाधकाः, प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादिति भावः । "सरूप"–(पा०सू०१।२।६४)सूत्रे भाष्ये ध्वनितं सर्वमेतत् । स्वर्गापूर्वदेवताशब्दादौ नाकृतिर्बोध्या, दर्शनाभ्याससहकारेणैव तद्बोधात् । नव्यनैयायिकग्रन्थे—प्रकृतिप्रत्ययार्थविचारस्तु व्याकरणवासनावासितान्तःकरणतया तत्रैव वास्तवत्वभ्रमेणेति बोध्यम् ।

(रत्न०)—गौतमीये आकृतेः पदार्थत्वं सम्भवाभिप्रायेण, न तु सार्वत्रिकमित्याह —*आकृतिस्त्विति — 'यत्राकृतिरेव नियमतः पदैः प्रत्याय्यते, तत्रैवाकृतिः पदवाच्या,' इति गौतमाशय इति भावः । ननु 'घटत्वम्' इत्यादौ जातिरपि व्यक्तिः, येन केनापि रूपेण प्रतीतिविषयस्यैव व्यक्तिपदार्थत्वादत आह — *व्यक्तिपदेनेति । *संख्याऽऽदिविशिष्टेति — समवायेनेति भावः, तेन सम्बन्धान्तरेण घटत्वे संख्याप्रतीतावपि न क्षतिः । आदिना — कारकस्य सङ्ग्रहः । तत्रापि साक्षाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैशिष्ट्यं बोध्यम् । कुत्राकृतिमात्रं प्रतीयत इत्याह —*पिष्टकमय्य इति । सिद्धान्तमाह —*वस्तुत इति । जातिः = जातिरपि । अपिना — आकृतेः सङ्ग्रहः । नन्वेवं सति तन्नाशे प्रायश्चित्तापत्तिरत आह —*प्राण्या-श्रितेति — तदाश्रितत्वेनाश्रयोत्पत्त्यनन्तरं तत्रावयवसंस्थानाभिव्यङ्ग्या स्वरूपसतीत्यर्थः । न तु ज्ञानमेव प्रायश्चित्तसाधनम्, अज्ञानेनापि नाशे प्रायश्चित्तश्रवणात् । प्रतिनियतव्यक्त्यभिव्यक्ता जातिरेव पुण्यपाप-साधिकेति पूर्वमुक्तम्, एवं च चित्राभिव्यक्ताऽपि तत्साधिका स्यादत आह —*प्राण्याश्रिता इति — आलेख्यलिखितेऽपि ब्राह्मणे सादृश्यात्तदा-कारानुकारप्रत्ययोदयात्तत्रापि जातिप्रकाशः । परन्तु तदुपघातेऽधर्मो न भवति । एवं चित्रस्थब्राह्मणपूजायां धर्मोऽपि न जायत इति सूचितम् । केश्चिदिति वचनादत्रारुचिः सूचिता । मुख्यसादृश्यात्प्रतिकृतिषु प्रत्यया-नुगमोत्पत्तिर्न तु तत्र जातिसमवाय इति तु युक्तम् । *कृतदेवतेति — तत्र हि प्रतिष्ठाविधिना प्रतिमायां देवतावत्त्वबुद्धिर्जायते । शास्त्रनिर्दि-ष्टदूषणग्रस्तत्वे तु तत्रापि क्वचित्तदभिमानाभावः । नन्वेवं शुक्तौ रजत-बुद्धेरिव प्रतिमायां देवबुद्धेस्तदभाववति तत्प्रकारताकत्वेन भ्रमत्वापत्ति-रिति चेत्, न, अन्योन्यस्मिन्नन्योन्यबुद्धेरध्यासे एव भ्रमत्वात् । प्रकृते प्रतिमायां देवबुद्धिसत्त्वेऽपि देवतायां प्रतिमाबुद्धेरभावात् । प्रतिमायामपि विधिबलाद् देवत्वस्य समवेतत्वेन तदभाववति तत्प्रकारकज्ञानत्वाभावाच्च । आवाहनम् = अभिव्यक्त्यनुसन्धानम् । विसर्जनम् = प्रतिमाऽऽद्यवच्छे-देनाभिव्यक्त्यननुसन्धानम् । नन्वेवं शालग्रामाद्यसंग्रहः, तत्रावाहनाद्य-विधानेऽपि देवत्वकार्यबोधनादत आह —*ब्राह्मणत्वादय इति — 'भवन्ति सर्वत्र ये ते भावाः = ब्राह्मणत्वक्षत्रियत्वादयः सामान्यविशेषाः । ते प्राणिषु पिण्डेषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः । तथाऽपि च "ब्राह्मण-मालभेत" इत्यादौ न साङ्कर्यप्रसङ्गः, यस्मात्सर्वगतत्वेऽपि प्रति-नियताभिव्यञ्जकव्यङ्ग्या इति प्रतीतस्य क्रियाऽङ्गत्वाद्यत्रैवाभिव्य-क्तिमासादयन्ति उपदेशादिना व्यञ्जकेन तत्रैव स्वकार्यसम्पादकाः, इत्यविच्छिन्नागमपारम्पर्येण स्मर्यते । यथा सर्वगतत्वं पारम्पर्यागतम्, तथा प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपीत्यर्थः' इति हेलाराजः । एवञ्च घटत्वा-दिजातयः प्रलये परमाण्वादिष्ववस्थिताः । स्मृतिरित्यनेन — जातिवादिवा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जप्यायनमते स्मरणं सूचितम् । ॐउपदेशादिनेति—शास्त्रीयेणेति शेषः, अन्यथाऽतिप्रसङ्गात् । एतेन शालग्रामादावपि देवकार्य्यसिद्धिः । ॐप्रतिनियतेति—तच्च ब्राह्मणत्वं विशुद्धमातापितृयोनिजत्वव्यङ्ग्यम् । ॐ"सरूप"सूत्रे भाष्य इति—"आकृतिर्युगपत्सर्वत्र भवेदिति । अविनाशोऽनाश्रितत्वात्" इत्याद्यनेकवचनैः सूचितमिति भावः । ननु गवादिशब्दोच्चारणे आकारविशेषस्यापि प्रतीतेस्त्वाकृतेरपि शब्दार्थत्वं स्यात्, न चेष्टापत्तिः, स्वर्गादिशब्दादपि तत्प्रतीत्यापत्तेः, तत्र च तत्प्रतीतेरनुभवविरुद्धत्वादत आह—ॐस्वर्गापूर्वेति—यदि हि आकृतिरपि शब्दार्थः स्यात्तदा स्वर्गादिशब्देऽपि प्रतीयेत, न च तथा, तस्मान्नाकृतिः सर्वत्र पदार्थः । ननु कथमाकारविशेषप्रतीतिस्तत्राह—ॐदर्शनाभ्यासेति—सास्नादिमत्स्वेव गोशब्दप्रयोगं पश्यतां तद्दर्शनाभ्यासदार्ढ्याद् आकारविशेषसम्प्रत्ययो नान्तरीयको न शाब्द इत्यर्थः । प्रासङ्गिकं निरूप्य प्रकृतमाह—ॐनव्यनैयायिकेति । ॐभ्रमेणेति—वस्तुतस्तु पदवाक्यस्फोटानामेवाखण्डार्थवाचकत्वमिति भावः ।

मू०—'अनन्ता वर्णा उत्पादविनाशशालिनः, तत्समूहश्च पदं बोधकम्' इति पक्षे तु पदानामानन्त्याच्छक्तिग्रहासम्भवेनानुगताकारप्रतीत्या सिद्धायास्तत्तत्पदगतघटपदत्वादिजातेर्वाचकत्वम्, अर्थगतजातेः शक्यत्ववत् । यथा च भ्रमणत्वादिजातिश्चरमक्रियाप्रत्यक्षव्यङ्ग्या, एवमेषाऽपि चरमवर्णप्रत्यक्षव्यङ्ग्या । क्रियासमुदाये बौद्धे भ्रमणत्ववत्, एषाऽपि तादृशे वर्णसमुदाये व्यासज्यवृत्तिः । तदुक्तम्—

"अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।"

(वाक्यप० कां १ कारि० ९४)

जातिस्फोटनिष्कर्षः ।

यद्वा, शक्यताऽवच्छेदके शक्तेरिव शक्तताऽवच्छेदकेऽपि तस्याः सत्त्वमिति तस्याः स्फोटत्वव्यवहारः ।

इति जातिस्फोटनिष्कर्षः ।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri.

( रत्न० )—एवं सिद्धान्तभूतं वाक्यव्यक्तिस्फोटं निरूप्य प्राचोक्तं जातिस्फोटमेकदेशिमतेनाह — *अनन्ता वर्णा इति—एतन्मते वर्णानामनित्यत्वादव्यभिचाराच्च तद्गतजातेरेव वाचकत्वम्, इति सैव स्फोटपदवाच्या, तदाश्रय एव ध्वनय उच्यन्ते । *अनुगतेति — 'इदं घटपदम्' 'इदं घटपदम्' इत्येकाकारबुद्ध्या सिद्धाया घटपदत्वादिजातेरित्यर्थः । दृष्टान्तमाह — *अर्थगतेति — तथा च नास्त्यसम्भव इति भावः । ननु तद्व्यञ्जकत्वस्य प्रतिवर्णं सत्त्वे वर्णस्फोटपक्षोक्तदोषाः 'सरो रसः' इत्यादौ भेदबोधानापत्तिश्चात आह—*यथा चेति । *चरमेति — विलक्षणप्रयत्नजनितेन व्यापारविशेषेणाभिव्यक्ता ब्राह्मणत्वादिजातिः प्रत्येकपरिसमाप्ताऽपि न गृह्यते, किन्त्वन्त्यक्रियाव्यक्तिव्यङ्ग्यैव गृह्यते, तथा पूर्वपूर्ववर्णानुभवसहकृतचरमवर्णप्रत्यक्षव्यङ्ग्यैव सा ( पदजातिः ) गृह्यत इति भावः । *बौद्धे इति—नश्वराणां व्यापाराणां समूहासम्भवेन तत्समूहरूपक्रियाया अपि प्रत्यक्षासम्भवाद् बौद्धे समुदाये श्रमणत्वादिजातिर्यथा व्यज्यते, तथा वर्णानामाशुविनाशित्वाद् बौद्धे वर्णसमुदायरूपे पदे पदत्वजातिर्व्यज्यत इति भावः । व्यासज्यवृत्तिः = समुदायवृत्तिः । तेन नैकवर्णोच्चारणेऽर्थाभिव्यक्तिः । उभयत्र हरिसम्मतिमाह—*अनेकव्यक्त्यभिव्यङ्ग्येति—अनेकवर्णरूपव्यक्तिभिरभिव्यक्ता जातिः स्फोटः, सैव वाचिकेति भावः । स्फुटत्यर्थोऽस्मादिति स्फोटः = वाचकः । ज्ञातस्यैव स्फोटस्य बोधकत्वमिति स्फोटस्य सदातनत्वे सर्वदाऽर्थबोधापत्तिरिति दोषोऽपि निरस्तः । इदञ्चाकृत्यधिकरणन्यायमाश्रित्योक्तम् । न्यायादिमतेनाह — *यद्वेति — शक्यताऽवच्छेदके यथा निरूपकतासम्बन्धेन शक्तिस्तथा शक्तताऽवच्छेदके आनुपूर्वीरूपे वाचकत्वशक्तिस्तस्या एव स्फोटत्व( वाचकत्व )व्यवहार इति भावः ।

आविद्यकजातिरूपोपाधिवशात् स्फोटात्मकब्रह्मण एव जातिव्यक्तिरूपत्वम् ।

मू०—परे तु यथा—अद्वैतिनामात्मभेद औपाधिको मायाकृतः चेतनस्यैकत्वेऽप्यस्त्येव, तत्रानुगमार्थं जातिकल्पना च दृश्यते, तथैकस्यैव तत्तत्कालतत्तद्वर्णानुरागरूपोपाधिभेदेनानन्त्यात्तत्पक्षेऽपि अनुगतशक्तिग्रहाय जातिरावश्यकी । परं तेषां तत्तदुपा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यवच्छिन्नः स्फोटो व्यक्तिपदभाक् । तत्तदुपाध्युपलक्षितश्च जातिपदभाक् । पूर्वमते तु जातिः पदार्थान्तरम् ।

यत्तु—सर्वत्र व्यक्तिरनित्या तत्तद्व्यक्त्युपहितं ब्रह्मैव जातिरिति, तन्न, आविद्यकानन्तव्यक्तिकल्पनाऽपेक्षया जात्यादेरेव तत्त्वकल्पने लाघवात् । अत एव †"अग्नेरग्नित्वमपागात्" ( छान्दो० उप० ६।४।१ ) इत्यादिश्रुतौ धर्मस्यैव नाश उक्तः । अत एव "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिके आविद्यकः पदार्थो जातिर्यावद्व्यवहारं नित्या, प्रवाहनित्या वेति द्वेधैवाकृतेर्नित्यत्वमुक्तम् । तच्चोपपादितमित्याहुः ।

इति वाच्यवाचकशक्तीनां निर्णयः ।

( रत्न० )—वस्तुतोऽस्याप्यसिद्धान्ततया सिद्धान्तमतेनाह—*परन्त्विति । *औपाधिक इति— अस्यैव विवरणम्— *मायाकृत इति । *अनुगमार्थमिति—अनुवृत्तबुद्ध्युपपत्तये इत्यर्थः । जातिकल्पना = घटत्वादिजातिकल्पना । *आनन्त्यादिति—उपाधिकृतस्फोटानामानन्त्यादित्यर्थः । निरुपाधिकस्तु स्फोट एक एवेति भावः । *अनुगतशक्तीति—वाचकत्वशक्तिज्ञानायेत्यर्थः । परम् = केवलम् । तेषाम् = उपाधिभेदेन भेदवादिनाम् । *तत्तदुपाधीति—जात्यादिरूपोपाधीत्यर्थः । व्यक्तिपदभाक् = स्फोट एव पदव्यक्तिः । घटत्वाद्युपाध्युपलक्षितश्च जातिपदभाक् = जातिस्फोटः । यथैकमेव चैतन्यं अन्तःकरणावच्छिन्नं सत् 'जीवः' इत्युच्यते । अन्तःकरणोपहितं सत् 'साक्षी' इत्युच्यते । तथा—एक एव स्फोटो घटत्वादिजात्यवच्छिन्नः सन् 'पदस्फोटः' इत्युच्यते । तदुपहितः सन् 'जातिस्फोटः' इत्युच्यत इति भावः । विशेषणत्वे तदवच्छिन्नत्वव्यवहारः । विशेषणञ्च—'कार्यान्वयित्वे सति वर्तमानत्वे सति व्यावर्तकम्' । तस्योपाधित्वे तदुपहितत्वमुच्यते । उपाधिश्च—कार्यानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकम् । यथा—'रूपविशिष्टो घटोऽनित्यः' इत्यत्र रूपं विशेषणम्, कार्यान्वयित्वात् । 'कर्णशष्कु-

† छान्दोग्ये तु "अपागादग्नेरग्नित्वम्" इति पाठः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यवच्छिन्नं नभः श्रोत्रम्' इत्यत्र कर्णशष्कुल्युपाधिः, कार्यानन्वयित्वात् । तदुक्तम्—

"तथैकमपि चैतन्यं बहुधा प्रविभज्यते ।
यथाऽग्नेस्तथा विस्फुलिङ्गा वारिराशेरिवोदकम् ॥" इति ।

ननु चिन्मात्रस्य ज्ञानं न स्वाभाविकं किन्त्वौपाधिकम्, तत्र स्वस्यैवोपाधित्वे आत्माश्रय इति चेत्, न, भेदस्य स्वभेदकत्ववत् स्वस्यैव स्वोपाधित्वात् । चेतनस्यैकत्वेऽप्यात्मभेदोऽस्त्येव । *पूर्वमते त्विति—अनुवृत्तिबुद्धिप्रयोजकतया स्फोटातिरिक्तजातिस्वीकर्तृनये त्वित्यर्थः । मतान्तरं खण्डयति—*यत्त्विति—एतन्मते अनित्यो व्यक्तिरूपः पदार्थोऽन्यस्तदुपहितं ब्रह्मैव जातिरूपः पदार्थो भिन्न इति, तत्खण्डयति—*तन्नेति । *आविद्यकेति —अविद्याकल्पितधर्मविशेषरूपव्यक्तिकल्पनयेत्यर्थः । *लाघवादिति—अविद्याकल्पितामेकां जातिमुपाधिमाश्रित्य व्यवहारोपपत्तावनन्तव्यक्तिकल्पने मानाभाव इति भावः । अयम्भावः—एको जातिरूपपदार्थ एवाविद्यकः कल्पनीयः, तथाच जातिरूपपदार्थस्य विशेषणत्वे ब्रह्मण एव व्यक्तिरूपेण भानम्, तस्योपाधित्वे ब्रह्मण एव जातिरूपेण भानमिति कल्पने एव लाघवम्, नहि आविद्यकव्यक्तिरूपपदार्थकल्पन इति । अत एव = आविद्यकजातिरूपपदार्थस्यैव सत्त्वादेव । *यावद्व्यवहारमिति —सृष्टिमारभ्य प्रलयपर्यन्तस्थायित्वेन नित्या, प्रवाहरूपेण नित्या वेत्याकृतेरेव विचारः कृतः न तु व्यक्तेः, अतिरिक्तव्यक्तिसत्त्वे तु प्रवाहरूपेण तस्या अपि नित्यत्वं सम्भवतीति तदनुक्त्या न्यूनता स्यादिति भावः । *तच्चेति —आकृतेर्नित्यत्वञ्चेत्यर्थः । इत्याविद्यकजातिमात्रपदार्थकल्पनेनैव सर्वं समीहितं सिद्ध्यति ।

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महामहाद्युपाध्यायं शब्दारण्ये विहारिणम् ।
मृगेन्द्रं तं गुरुं नौमि श्रीदामोदरशास्त्रिणम् ॥१॥
शेखरादिमहाग्रन्था भान्ति भानीव यद्धृदि ।
सोऽस्तु मे सततं स्वान्ते हरिनारायणो गुरुः ॥२॥

प्रान्ते शुभे जयपुरे धनधान्ययुक्तो
ग्रामोऽभिरामसदनो विदितः पिलानीः ।
सम्राड्वितीर्णपदवीं महतीं दधाना
राजेति तत्र विरला बलदेवदासः ॥-॥

काश्यां गिरीन्द्रतनया निकटे च तेन
संस्थापिता सुभगसंस्कृतपाठशाला ।
अध्यापकोत्तमपदं समधिष्ठितोऽस्यां
नाम्ना सभापतिरिति प्रथितो जनेषु ॥४॥

श्रीमद्भार्गवतीर्थरत्नवलियाप्रान्ते महीमण्डने ।
ग्रामोऽस्तिच्छपरोत्तरो य उदयी तस्मिन्द्विजन्मान्वये ॥
योऽभूच्छ्रीपलटात् सभापतिरिति सख्यां जनन्यां सुतः ।
तेनेयं रचिता बुधां हृदि गता रत्नप्रभा भासताम् ॥ ५ ॥

रसवस्वङ्कभू (१९८६) वर्षे वैक्रमे श्रावणे सिते ।
अहेस्तिथावगात्स्फोटं यावद्रत्नप्रभेतिताम् ॥ ६ ॥
शब्दशक्त्यात्मकौ विश्वपितरौ करुणार्णवौ ।
रत्नप्रभाऽर्पणेनोमामहेशौ प्रीततामिताम् ॥ ७ ॥

शङ्करः शङ्करोतु ।

इति श्रीसरयूपारीणसभापतिशर्मोपाध्यायविरचितायां
वैयाकरणसिद्धान्तलघुमञ्जूषायां रत्नप्रभानाम्नि
व्याख्यायां वाच्यवाचकशक्तीनां निर्णयः ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# स्फोटमीमांसा

कैश्चिच्छ्रुतैरपि पदैः शाब्दधी नोंपजायते, गृहीतशक्तिकैश्च तैराकर्णितैः शाब्दज्ञानमुत्पद्यते, इत्यन्वयव्यतिरेकाभ्यां शाब्दबोधं प्रति शक्तिज्ञानस्य कारणत्वमवधार्य्यते । अत्रेदं चिन्त्यते—शक्त्याश्रयः क इति ?- न तावद्ध्रस्वादीनां वकारादयो वर्णाः, तेषां प्रत्युच्चारणमन्यत्वेनानन्त्यादशक्यशक्तिग्रहत्वात् । न च सकल'वसु'पदे आनुपूर्वीसाम्याच्छक्तिग्रहः, एकस्या आनुपूर्व्या उच्चरितप्रध्वंसिवर्णानां वक्तुमशक्यत्वात् । जातिवैशिष्ट्यमादायैकानुपूर्व्युपपादनस्यापि, तत्तत्कालघटिततयाऽव्यवहितोत्तरत्वाननुगमेन दुर्वचत्वात् । नच तादृशाव्यवहितोत्तरत्वेनानुगमः, तादृशत्वस्य दुर्ज्ञेयत्वात् । व्यवधानरहितत्वे सति 'व'ज्ञानध्वंसविशिष्ट'सु'ज्ञानविषयसुत्वरूपानुपूर्व्या अपि ज्ञानव्यक्तिभेदेनानन्त्यात् । न च तत्तत्पदवृत्तयो जातिविशेषा एव शक्तताऽवच्छेदिका इति तदैक्येन शक्तिग्रहसम्भवः, तत्तत्पदवृत्त्यनन्त्यजातिकल्पने गौरवात्, पदस्य वक्तुमशक्यतया तत्र जातेराश्रयत्वासम्भवाच्च । अगृहीतशक्तिकस्य वाचकत्वे, अतिप्रसङ्गात् । अपिचैते प्रत्येकमर्थमभिदधीरन्, मिलिता वा ? । नाद्यः, एकवर्णोच्चारणानन्तरमर्थप्रतीतेरदर्शनात्, वर्णान्तरोच्चारणवैयर्थ्यप्रसङ्गाच्च । नान्त्यः, प्रतिक्षणप्रध्वंसिनां तेषां साहित्यासम्भवात् । न च वर्णानां स्वरूपसाहित्यासम्भवेऽपि फलकरणत्वान्यथाऽनुपपत्त्या यागजन्यादृष्टमिव अर्थधीहेतुत्वान्यथानुपपत्त्या कल्प्यते, इति साहित्यसम्भव इति वाच्यम्, किमयं यागजन्यादृष्टमिवापूर्वः, उत, स्मृतिकारणत्वेन क्लृप्त एव ?, इति विकल्पासहत्वात् । एवमप्यर्थधीप्रसवावसेयः संस्कारः किमज्ञातः सहकारी आहोस्वित् ज्ञातः ? । नाद्यः, नहि शब्दः स्वरूपतोऽज्ञतो वाऽविदितोऽविदितशक्तिकोऽर्थधीहेतुरिन्द्रियवत्, अश्रुतस्य, श्रुतस्य वाऽगृहीतशक्तिकस्याप्रत्यायकत्वदर्शनात् ।

तस्माद्विदितो विदितसकलज्ञापनाङ्गः शब्दो धूम इव प्रत्यायकोऽभ्युपेयः । तथाचापूर्वपदवाच्यसंस्कारस्य प्रत्यायनाङ्गत्वं सिद्धम् । स



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चार्थप्रत्यायनात्प्रागवगत एव-प्रतीतिप्रयोजकः। न च तदानीं तस्यावगमोपायोऽस्ति, अर्थप्रतीतिरेव तदवगमिका, तदवगमाच्चार्थप्रतीतिरित्यन्योन्याश्रयात्। भावनाऽऽख्यसंस्कारस्तु स्मृतिजननसामर्थ्यक एव। अदृष्टचरार्थप्रत्यायनसामर्थ्यकल्पने तु शशशृङ्गस्यापि कल्पनाऽऽपत्तिः। नहि वह्निस्थदहनशक्तिरेव प्रकाशसाधिका, दहनशक्तिशक्तिर्वाऽननुभवात्। किञ्च, व्युत्क्रमेणोच्चरितशब्देभ्यः 'रस' 'सर' 'जरा' 'राज' इत्यादिभ्य एकैव स्मृतिबीजभूता वासनेत्येकार्थप्रत्ययप्रसङ्गः। तस्मान्न कथञ्चिदपि वर्णाः प्रत्ययहेतवः, नापि तदतिरिक्तः स्फोटात्मा, अनुभवाविषयत्वेन तदसत्त्वात्। अर्थधीरूपकार्यान्यथाऽनुपपत्त्या तत्कल्पने परस्पराश्रयत्वप्रसङ्गात्। स्वरूपसतस्तस्य प्रत्यायकत्वे सदाऽर्थप्रत्ययापत्तेः, निरपेक्षस्य हेतोः सदातनत्वादिति चेत्—

अत्रोच्यते—स्फोट एव शक्त्याश्रयः, न च वर्णातिरिक्तस्य तस्यानुभवविषयत्वाभावः, 'गौः' इत्येकं पदम् 'गामानय शुक्लाम्' इति एकं वाक्यमिति नानावर्णातिरिक्तैकपदवाक्यावगतेः सार्वजनीनत्वात्। न चायमसति बाधके एकपदवाक्यानुभवः शक्यो मिथ्येति वक्तुम्। नाप्यौपाधिकः, उपाधिः खल्वेकधीग्राह्यता वा स्यात्, एकार्थधीहेतुता वा। न तावदेकधीगोचराणां धवखदिरपलाशानामेकनिर्भासः प्रत्ययः समस्ति। तथा सति धवखदिरपलाशा इति जातु न स्यात्। नाप्येकार्थधीहेतुता, तद्धेतुत्वस्य वर्णेषु व्यासेधात्। तद्धेतुत्वेन तु साहित्यकल्पनेऽन्योन्याश्रयप्रसङ्गः, साहित्यात्तद्धेतुत्वं तद्धेतुत्वाच्च साहित्यमिति। किञ्चैवं 'तज्जातीयं पदम्' इति व्यवहारापत्तिः, 'तदेवेदं पदम्' इति व्यवहारासिद्धिश्च। अपि चोपाधिना 'एकं पदम्' 'एकं वाक्यम्' इति बुद्ध्युपपादने 'एकः पटः' इत्यादिबुद्धेरप्युपाधिनैवोपपत्ताववयवादतिरिक्तस्यावयविनोऽसिद्ध्यापत्तिश्च, तस्मादयमबाधितोऽनुपाधिश्च पदवाक्यगोचर एकनिर्भासो वर्णातिरिक्तमेकं शक्त्याश्रयं कञ्चनावलम्बते स एव स्फोट इति। तत्र स्फोटत्वञ्च—स्फुटति=व्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्याऽर्थप्रकाशकत्वम्, प्रकाशश्च — ज्ञानम्। तथाच — अर्थनिष्ठविषयताप्रयाजकशक्तिमत्त्वरूपं स्फोटत्वं पर्य्यवस्यति। स च स्फोटः—प्रतिनियतव्यञ्जकाभिव्यक्त एवार्थं प्रत्याययति। तस्य च निरुपाधिकस्य ब्रह्मण इव ज्ञानाविषयत्वमेवेति वर्णपदादिरूपव्यञ्जकरूपरुषितस्यैव ज्ञानविषयता, अर्थविषयकबोध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जनकता चेति वर्णपदादिभ्यः पार्थक्येनोपलब्धिविषयत्वाभावेऽपि न क्षतिः। ब्रह्मात्मकस्य तस्यैकत्वेऽपि व्यञ्जकवर्णाद्यात्मकध्वनीनामानन्त्यादानन्त्यम्। ननु स्फोटेषु ध्वनिरूपप्रतिबिम्बनासम्भवः, प्रयोजकाभावादिति चेत्, न, स्थिरस्यान्तःकरणसंस्कारस्यैव प्रतिबिम्बप्रयोजकस्य सत्त्वात्। न च तत्तत्कालिकतत्तद्वैखरीरूपव्यञ्जकभेदेन स्फोटस्य नानात्वात्तदनुगमाय स्फोटवादिनामपि तत्र जातिकल्पनेति लाघवाभाव इति वाच्यम्, सहस्र-दीपाभिव्यक्तपटस्येव, अनेकजपाकुसुमाभिव्यक्तस्फटिकस्येव च स्वतो नानात्वाभावात्। उपाधिभिन्नव्यञ्जकाभावान्न तद्रहितस्य प्रत्यक्षम्। ननु वर्णानां व्यञ्जकत्वे 'रसः' 'सरः' इत्यादौ तुल्यानामेव व्यञ्जकानां सत्त्वेन पर्य्यायापत्तिरिति चेत्, न, संस्कारस्यापि सहकारित्वेन येन क्रमेणान्तः-करणे वर्णसंस्कारस्तेनैव क्रमेण व्यञ्जकरूपरूषितत्वस्वीकारात्। ननु कालस्यैक्येन क्रमानुपपत्तिरिति चेत्, न, प्रतिबिम्बे उत्तरत्वग्रहस्य चित्त-रूपदेशकृतत्वेन पौर्वापर्य्यसम्भवाद्, एकदेशस्थघटपटकुड्यादिवत्। नन्वेवं क्रमिकसंस्कारसत्त्वे सर्वदाऽर्थबोधापत्तिरिति चेत्, न, अर्थाकारावृत्तौ सत्यां तत्प्रतिबिम्बनाशात्। नन्वेवं घटकलशपर्यायाभिव्यक्तस्यैकस्यैव स्फोटस्य सत्त्वे, एकपर्यायावच्छेदेन गृहीतशक्तिकस्य पुंसोऽपरपर्यायाभि-व्यक्तस्फोटादप्यर्थबोधापत्तिरिति चेत्, न, व्यञ्जकरूपरूषिते एव स्फोटे शक्तिग्रहनियमात्। तथाच तत्र शक्तिज्ञानरूपकारणाभावादेव शाब्द-बोधाभाव इति भावः।

एतस्य चान्तरस्यैव बोधकत्वेऽपि वैखरीसंस्कृतान्तः करणग्राह्यत्वान्न श्रोत्रग्राह्यवैखरीं विनोपलब्धिः। स्फोटस्य प्रत्येकवर्णव्यङ्ग्यत्वेऽपि नैक-वर्णेन द्राक् स्फुटाभिव्यक्तिः, किन्तु यथाऽनेकवारदर्शनेन रत्नपरीक्षकाणां रत्नतत्त्वज्ञानं जायते, तद्वद् द्वित्रपञ्चषदर्शनजनितसंस्कारपरिपाकामात्या-न्तःकरणलब्धजन्मनि चरमे प्रत्यये विशदं चकास्ति स्फोटतत्त्वम्। तत एव च बोध इति नोत्तरेषां नापि प्राचां ध्वनीनामानर्थक्यम्। न च पद-प्रत्ययवत्प्रत्येकमव्यक्तामर्थधियमाधास्यन्ति प्राञ्चो वर्णाः, चरमस्तु तत्स-चिवः स्फुटतरामिति युक्तम्, व्यक्ताऽव्यक्तावभासितायाः प्रत्यक्षज्ञाननि-यमात्, स्फोटज्ञानस्य च प्रत्यक्षत्वात्। अर्थधियस्त्वप्रत्यक्षाया मानान्तरज-न्मनो व्यक्त एवोपजनः, न वा स्यात्, न पुनरस्फुट इति न समः समाधिः।

तस्मान्नित्यो ब्रह्मस्वरूपः स्फोट एव वाचको न वर्णा इति सिद्धम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ननु वर्णानां क्षणिकत्वे, स्फोटस्य नित्यत्वे च पौर्वापर्य्यानुपपत्त्या बहुशास्त्रवैयर्थ्यापत्तिरिति चेत्, न, "बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्त्वन्नीतिः शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्य्ये" इति भाष्येणैव समाधानात्। ध्वनिगतोदात्तत्वादिधर्माणां भानादुदात्तादिव्यवहारस्तत्र।

तस्य च स्फोटस्योपाधिभेदादष्टौ भेदाः — तत्र वर्णपदवाक्यरूपरुषितस्य भानाद् वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटश्चेति त्रयः, तत्रापि जातिव्यक्तिभेदेन – वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोटः, इति त्रयः। पदवाक्ययोः सखण्डाखण्डत्वभेदात् सखण्डपदस्फोटः, सखण्डवाक्यस्फोटश्चेति द्वौ। तथाच संकलनयाऽष्टौ सिद्धा इति शाब्दिकाः।

अत्र मीमांसकादयः — 'वर्णा एव शब्दः' इति भगवानुपवर्षः। एवं हि वर्णातिरिक्तः स्फोटोऽभ्युपेयेत, यदि वर्णानां वाचकत्वं न सम्भवेत्, स चानुभवपद्धतिमध्यासीत। वर्णानामवाचकत्वे कारणद्वयं भवदभिमतम् — क्षणिकत्वेनाशक्यशक्तिग्रहत्वम्, व्यस्तसमस्तप्रकारद्वयाभावश्च। नाद्यः — वर्णानां क्षणिकत्वे मानाभावात्। ननु वर्णानामन्यत्वमुच्चारणभेदेन सर्वजनप्रसिद्धम्, इति चेत्, न, प्रत्यभिज्ञायमानत्वात्। न च सादृश्यात् 'सोऽयं गकारः' इति प्रत्यभिज्ञोपपत्तिः, बलवत्तरबाधकोपनिपातं विना सादृश्यनिबन्धनत्वे प्रमाणाभावात्। न चेदं प्रत्यभिज्ञानं गत्वादिजातिविषयम्, न गकारादिव्यक्तिविषयम्, तासां प्रतिनरं भेदोपलम्भात्। अत एव शब्दभेदोपलम्भाद्वक्तृभेद उन्नीयते, 'सोमशर्माऽधीते न विष्णुशर्मा' — इति — युक्तम्, यतो बहुषु गकारमुच्चारयत्सु निपुणमनुभवः परीक्ष्यताम्। यथा — कालाक्षीं च स्वस्तिमतीञ्चेक्षमाणस्य व्यक्तिभेदप्रथायां सत्यामेव तदनुगमकं सामान्यं प्रथते, तथा किं गकारादिषु भेदेन प्रथमानेष्वेव गत्वमेकं तदनुगतं चकास्ति ?; किं वा यथा गोत्वमजानत एकं भिन्नदेशपरिमाणसंस्थानव्यक्त्युपधानभेदाद् भिन्नदेशमिवाल्पमिव महदिव दीर्घमिव वामनमिव तथा व्यक्तिमजानत एकाऽपि व्यञ्जकभेदात्तद्धर्मानुपातिनीव प्रथते, इति भवन्त एव विदाङ्कुर्वन्तु। तत्र व्यक्तिभेदमङ्गीकृत्यापि यो गत्वस्यैकस्य परोपधानभेदकल्पनाप्रयासः स वरं गव्यक्तावेवास्तु, किमन्तर्गडुना गत्वेनाभ्युपेतेन। यथाऽऽहुः —

"तेन यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते।
व्यक्तिलभ्यन्तु नादेभ्य इति गत्वादिधीर्वृथा॥"

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न च स्वरितमत्यादिवत् गव्यक्तिभेदप्रत्ययः स्फुटः प्रत्युच्चारणमस्ति, तथा सति 'दश गकारान् उदचारयदेषः' इति हि प्रत्ययः स्यात्, न स्यात्'दश-कृत्व उदचारयद् गकारम्' इति। यद् युगपद् विरुद्धधर्मसंसर्गवत्तन्नाना न चोदात्तादयो व्यञ्जकधर्मा न वर्णधर्मा इति साम्प्रतम्, व्यञ्जका ह्यस्य वायवः, तेषामश्रावणत्वे कथं तद्धर्माः श्रावणाः स्युः ?।

इदं तावदत्र वक्तव्यम्—नहि गुणगोचरमिन्द्रियं गुणिनमपि गोचरयति, मा भूवन् घ्राणादीनां गोचराः पृथिव्यादयः। एवं वायुगोचरं श्रोत्रं मा भूत्, तद्गुणांस्तु गोचरयिष्यत्युदात्तादीन्। ते च शब्दासंसर्गाग्रहात् शब्दधर्मत्वे-नाध्यवसीयन्ते, प्रमाणावधृतैकत्वस्य शब्दस्यापर्य्यायेण विरुद्धधर्मासम्भवा-त्। तस्मादुपाधिना मुखस्येव, वर्णस्यैकस्य ध्वनिकृतो विरुद्धधर्मावभासः। वर्णेभ्यश्चार्थप्रतीतेः सम्भवात् स्फोटकल्पना व्यर्था। नन्वनेकत्वाद् वर्णा-नाम् 'एक पदम्'' एकं वाक्यम्' इत्येकबुद्धिविषयता नोपपद्यत इति चेत्, न, 'वनम्'' सेना' 'शतम्' इतिवत्प्रतीतिसम्भवात्। न च वर्णसमुदायस्य पदत्वे 'राजा' 'जारा' 'पिकः' 'कपिः' इत्यादावभेदापत्तिः, क्रमानुरोधिन्यः पिपी-लिका इव वर्णाः पङ्क्तिबुद्धिमारोहन्तीति स्वीकारात्। क्रमेण प्रत्यवभा-समाना वर्णा अर्थं प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना, इति वर्णा एव वाचकाः। स्फोटवादिनस्तु वर्णाः स्फोटं व्यञ्जयन्ति, स्फोटोऽर्थं व्यनक्ति, इति गरीयसी कल्पना स्यात्।

अत्रेदं तत्त्वम्—वर्णानां नित्यत्वम्, तेषु ध्वनिगतधर्मावभासे नानात्वप्रती-तिश्चाभ्युपेत्य स्फोटवादिनां मतं खण्डितमद्वैतिमीमांसकादिभिः। अत्र ब्रूमः —अद्वैतिमते वर्णानां नित्यत्वं तु स्वसिद्धान्तभङ्गभिया सापेक्षमेव स्वीकार्य्य-मिति तेषामपि अनित्यत्वमेव, सृष्टिप्रलयमध्ये विनाशित्वाभावरूपमेव तत्। तथाच सृष्टीनामानन्त्येनानन्तवर्णतद्ध्वंसप्रागभावादिकल्पनाया गले पतित-त्वाल्लाघवं शशशृङ्गायमाणमेव। किञ्च, गकारादिषु गत्वादिजातेरभावेन गकारादिज्ञानस्य निर्विकल्पकात्मकत्वेन प्रत्यक्षत्वानापत्तिः। ध्वनिगतग-त्वादिभानस्वीकारे तु, तदभाववति तत्प्रकारकज्ञानत्वेन भ्रमत्वापत्तिर्दुर्वारा। किञ्च, गत्वादिजातिमस्वीकृत्य व्यक्तावेव स्वभेदकत्वस्वीकर्तुस्तव गकारतो घकारादिभेदस्य स्वतः सिद्धतया स्फोटखण्डनाय प्रवृत्तेन त्वया वर्णै-कत्वरूपमूलधनमपि अपहारितम्। तस्माद् ध्वनिभेदा एव वर्णाः, न तु ध्वन्यतिरिक्ता नित्याः। क्वचिद् भाष्ये 'वर्णा नित्याः' इत्युक्तिस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्फोटपरा। वर्णानामनित्यत्वे च तत्र वाचकत्वस्य दुरुपपादतया तदतिरिक्तस्फोटकल्पना तवापि स्वीकार्यैव।

वैयाकरणनये तु—स्फोटस्य ब्रह्मरूपतया तत्रैव ध्वनिगतधर्माणामध्यस्तत्वाद् ब्रह्मणि प्रपञ्चाध्यासे भिन्नभिन्नरूपेण तत्प्रतीतिरिव वर्णभेदप्रतीतिर्नानुपपन्ना। न च त्वन्मतेऽपि स्फोटस्य ब्रह्मरूपत्वेन निर्धर्मकतया तत्र गत्वादिप्रकारकप्रतीतेर्भ्रमत्वं दुर्वारमेवेति वाच्यम्, तुरीयदशायां भ्रमत्वेऽपि तव ब्रह्मण एव प्रपञ्चरूपेण प्रतीतिवद् व्यावहारिकदशायां बाधाभावेन भ्रमत्वस्य वक्तुमशक्यत्वात्। एवञ्च-मीमांसकादीनां स्फोटवादखण्डनं शाब्दिकनयानवगमावजृम्भणमात्रम्। यद्यपि 'स चायं स्फोट आन्तरप्रणवरूप एव, "ओंकार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः,

"समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते॥"

इत्यादि स्मृतेश्च स एव प्रणवरूपः स्फोटः मध्यमानादांशरूपरूषितो वैखरीरूपेण परश्रवणगोचरः सन्नन्तःकरणग्राह्यो वाचक इत्युच्यते, इत्युपलभ्यते, तथाऽपि नित्यस्यैकस्य वर्णस्य ध्वनिधर्मेण नानारूपतया भासमानस्य वाचकत्ववादिभिः सह प्रणवरूपात्मकस्यैकस्य स्फोटस्य ध्वनिरूपेण व्यङ्ग्यस्य नानारूपतया भासमानस्य वाचकत्ववादिनामैक्यमेव, इति शब्दमात्रे विरोधमवलम्ब्य स्फोटखण्डनमसङ्गतमेव। ध्वनिर्द्विविधः—व्यक्तः, अव्यक्तश्च। तत्रोभयध्वनिना स्फोटोऽभिव्यज्यते, परन्तु वर्णात्मकध्वनिनाऽभिव्यक्तः स्फोटोऽस्माकं वाचकः, नेतरः। भवन्मतेऽपि ध्वनिरूपेणैव नित्यस्य वाचकत्वमिति को विशेषः स्फोटवादामर्षशालिनाम्।

यत्तु—मञ्जूषाकृता सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिज्ञानगम्य एव, तेषां योगबलेनोभयरूपपराप्रत्यक्षात्। युक्तञ्चैतदेकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभयरूपतया उभयोरपि तत्कार्य्ययोरुभयरूपत्वात्।

"क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत्परा॥"

इत्युक्तेः। नित्यत्वं तु यावत्सृष्टिस्थितया, व्यवहारनित्यतया चेत्युक्तम्। तत्परावागभिप्रायेणेति सर्वं समञ्जसमिति दिक्। इति शुभम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—'वाक्यसमयग्राहिका च' आकाङ्क्षा, सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवंरूपा पुरुषनिष्ठैव । तथाऽपि तस्या आकाङ्क्षाविषयेऽर्थे आरोपः । एतदेव 'अभिधानापर्यवसानमित्युच्यते, 'अयमर्थोऽर्थान्तरमाकाङ्क्षते (साकाङ्क्षः)' इति व्यवहारात् । पदे तु नारोपः, मानाभावात्, अर्थबोधोत्तरमेव जिज्ञासोदयाच्च । 'पदं साकाङ्क्षम्' इति तु साकाङ्क्षार्थबोधकमित्यर्थकम् ।

आकाङ्क्षाया अर्थवृत्तित्वसमर्थनम् ।

तदुक्तं समर्थसूत्रे (पा० सू० २।१।१) भाष्ये—"परस्परव्यपेक्षां सामर्थ्यमेके । का पुनः शब्दयोर्व्यपेक्षा ? न ब्रूमः शब्दयोरिति, किं तर्हि ? अर्थयोः । इह 'राज्ञः पुरुषः' इत्युक्ते 'राजा पुरुषमपेक्षते' 'ममायम्' इति, पुरुषो (अपि) राजानमपेक्षते 'अहमस्य' इति ।" ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषये तादृशान्वयबोधाजनकत्वेऽपि 'आकाङ्क्षा' इति व्यवहारः ।

एतज्ज्ञानस्य बोधहेतुत्वादेकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः। कार्यसहवर्तित्वेनैव तस्य हेतुत्वान्न सर्वत्र बोधद्वयम् । अन्यथा प्रथमबोधहेतोस्तज्ज्ञानस्य द्वितीयबोधात्पूर्वमपि सत्त्वेन तद्दुर्वारं स्यात् ।

(रत्न०)—वाचकवाच्यादिनिरूपणानन्तरं शाब्दबोधकारणीभूताकाङ्क्षानिरूपणमारभते—*वाक्येति—वाक्यस्य यः समयः=सङ्केतस्तद्विषयकबोधजनिकेत्यर्थः । नन्वाकाङ्क्षा—'यत्किञ्चिद्विषयकेच्छाऽपरपर्य्याया' तस्याः कथमुक्तसङ्केतग्राहकत्वमत आह—*सा चेति । *एकेति—यथा घटादिपदार्थज्ञानानन्तरं तदर्थनिरूपिततात्पर्य्यविषयीभूतसम्बन्धेन सम्बन्धरूपयोग्यतावतोऽर्थस्य यज्ज्ञानं तादृशज्ञानविषयिणी या इच्छा ज्ञानविषयविषयिणीति यावत्, साऽऽकाङ्क्षेत्यर्थः । ननु यत्र 'घटमानय' इत्यादौ द्वयोरपि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदार्थयोर्ज्ञानं जातं तत्रोक्तरूपाया आकाङ्क्षाया अभावाद् बोधो न स्यादिति चेत्, न, 'एकपदार्थज्ञानानन्तरम्' इत्यस्यैकपदार्थमात्रज्ञानानन्तरमित्यर्थात्। अस्ति च तत्राप्येकपदार्थमात्रज्ञाने सेति न काऽपि क्षतिरिति भावः। *पुरुषनिष्ठेति—अत्र 'यद्यपि' इति शेषः, अग्रे 'तथाऽपि' इत्यस्य दर्शनात्। एतेन पदादिनिष्ठत्वनिरासः, आकाङ्क्षाया इच्छारूपत्वादात्मनिष्ठत्वस्यैवौचित्यादिति भावः। तथाचोक्तम्—

"बुद्ध्यादिषट्कं संख्याऽऽदिपञ्चकं भावना तथा।
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश॥"

(मुक्ता० प्रत्य० खं० का० ३२) इति।

न्यायमते एतत्, वेदान्तिमते तु अन्तःकरणधर्मत्वं तस्याः। नन्वात्मधर्मत्वे 'अयमर्थोऽर्थान्तरमाकाङ्क्षते' इति व्यवहारानुपपत्तिरत आह—*अर्थे आरोप इति—समवायसम्बन्धेनार्थे आरोप इत्यर्थः। विषयतासम्बन्धश्चारोपप्रयोजकः। नन्वाकाङ्क्षाया विषयतासम्बन्धेनार्थे सत्त्वादारोपानुपयोग इति चेत्, न, विषयतासम्बन्धे आधारताया अनियामकत्वस्य पूर्वम् (शक्तिनिरूपणे) उक्तत्वात्।

*एतदेवेति—अर्थे आरोपितमाकाङ्क्षारूपमेवेत्यर्थः। *†अभिधानेति—अभिधानम् = उपस्थितिः। अपर्य्यवसानम् = अन्वयबोधजनकत्वेनेच्छाऽभावाभावः, इच्छेति यावत्, अभावाभावस्य प्रतियोगिरूपत्वात्। एतेनाकाङ्क्षाया अभावरूपत्वशङ्का निरस्ता।

---

† अभिधानेति—"अभिधानपदं करणव्युत्पत्त्या शब्दोच्चारणमभिधत्ते। तस्यापर्य्यवसानम्=फलानुत्पादः। तथाच-तदुच्चारणजन्यतादृशशाब्दबुद्धौ तदुच्चारणजन्यतादृशशाब्दधीप्रागभाव आकाङ्क्षेति फलितम्। तच्च पूर्वोक्तरूपेण दुष्टम्। नचाभिधानपदं भावव्युत्पत्त्या शाब्दबोधपरं तस्यापर्य्यवसानमभावः। तथाच तादृशशाब्दबोधे तादृशशाब्दबोधाभाव आकाङ्क्षेति फलतीति वाच्यम्, 'घटः कर्मत्वम्'इत्यदावतिव्याप्तेः। अतोऽभिधानापर्य्यवसानशब्दस्य पारिभाषिकार्थमाह—यत्पदनिष्ठयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधे अभिधानापर्य्यवसानमिति फलितार्थः। प्रयुक्तत्वञ्च—'कारणाभावात्कार्य्याभावः' इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। तत्प्रतियोगिजन्यप्रतियोगिकत्वं वा तत्प्रयुक्तत्वम्। भवति चाव्यवहितपूर्ववर्तितारूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केचित्तु—अभिधानापर्य्यवसानमित्यस्य बोधजनकत्वस्यासमाप्तिरित्यर्थ इत्याहुः । ※व्यवहारादिति—अयम् 'अर्थे आरोपः' इत्यत्र हेतुत्वेनान्वेति । एतदेवेत्यत्र एवस्य व्यावर्त्त्यमाह—※पदे त्विति । ※मानाभावादिति—ननु 'इदं पदं साकाङ्क्षम्' इति व्यवहार एव मानम् इत्यरुचेराह—※अर्थेति—'अस्यान्वयी कः' इति जिज्ञासायाः पदार्थोपस्थित्यनन्तरमेव दर्शनादित्यर्थः । ※साकाङ्क्षार्थेति—तथा च साकाङ्क्षपदस्य साकाङ्क्षार्थबोधके लक्षणेति भावः । शब्दधर्मत्वाङ्गीकारे भाष्यविरोधोऽपीत्याह—※समर्थसूत्र इति(पा०सू०२।१।१) । एकार्थीभावस्यापि व्यपेक्षापूर्वकत्वात्प्रथममस्य पक्षान्तरमाह—※परस्परव्यपेक्षामिति—एकार्थीभावस्यापि राजपुरुषयोः परस्परं विना बोधाजनकत्वमूलकाकाङ्क्षारूपव्यपेक्षासत्त्वे एव कल्पनम् । ननु शब्दयोरनात्मत्वाद् व्यपेक्षायाश्चेच्छारूपत्वात् शब्दयोस्तदसम्भवोऽत आह—※अर्थयोरिति—पुरुषगताकाङ्क्षाया अर्थे आरोप इति भावः । अर्थं प्रति शब्दस्य गुणभूतत्वादर्थबोधोत्तरमेव जिज्ञासोदयाच्च न तत्रारोपः । भाष्यविरोधादेव यत्पदस्य यत्पदाभावप्रयुक्तशाब्दबोधाजनकत्वं तत्पदे स्वाव्यवहितपूर्ववृत्तित्व-स्वाव्यवहितोत्तरवृत्तित्वान्यतरसम्बन्धेन तत्पदवत्त्वमाकाङ्क्षा, तज्ज्ञानञ्च—'शाब्दबोधे कारणम्'इति वदन्तो नैयायिकादयः प्रत्याख्याताः । वस्तुतस्तु अव्यवहितत्वसम्बन्धेन तत्पदवत्त्वरूपाकाङ्क्षाया आसत्तावन्तर्भावेण प्रकृतिप्रत्यययोरव्यवहितोत्तरत्वमेवाकाङ्क्षा । † मौनिश्लोके

---

दस्य व्यतिरेकप्रयुक्तो 'घटवत्कर्मत्वम्' इति भेदान्वयबुद्ध्यभाव इति तादृशान्वयबोधे घटपदस्यानुस्वारपदवत्त्वमाकाङ्क्षा । एवं विनिगमनाविरहादव्यवहितोत्तरवर्तितारूपसमभिव्याहारसम्बन्धेन अनुस्वारपदनिष्ठस्य घटपदस्य व्यतिरेकप्रयुक्तोऽपि 'घटवत्कर्मत्वम्' इति भेदान्वयबुद्ध्यभाव इत्यनुस्वारपदस्य घटपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा। नन्वेवं 'जलं घटः' इत्यत्र तादृशबोधापत्तिः, यादृशसमभिव्याहारसम्बन्धेन यत्पदनिष्ठस्य यत्पदस्य व्यतिरेकप्रयुक्तो यादृशान्वयबुद्ध्यभावस्तादृशसमभिव्याहारसम्बन्धेन तत्पदस्य तत्पदवत्त्वमाकाङ्क्षा" इति पदधर्मत्वमादाय तत्त्वचिन्तामणौ विस्तरः ।

† येन केनचित् पुरुषेण क्रमव्युत्क्रमोच्चारितानामेव तत्तत् पदानां मौनिनाऽर्थक्रमेण लेखादिद्वाराऽनुसन्धीयमानानां मौनिश्लोकत्वम् । तत्र मौनिनोऽनुसन्धानक्रमेणानुसन्धीयमानपद्येन बोधो न स्यात्, मौनिनाऽनुच्चारितत्वेन पदाभावे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽव्याप्तिवारणाय पदार्थधर्मत्वस्यैव तस्या आवश्यकत्वात्। ॐईदृशजिज्ञासेति—ईदृशाकाङ्क्षेत्यर्थः। नन्वाकाङ्क्षायाः शाब्दबोधहेतुतया पदे एवारोप उचितोऽत आह—ॐएकपदार्थेति—'घटम्' इत्येतावन्मात्रेण घटपदार्थे ज्ञाते अपरपदार्थस्य = 'आनय' पदार्थस्य यो व्यतिरेकः = तद्विषयकज्ञानाभावस्तत्प्रयुक्तस्य अन्वयबोधाजनकत्वस्य = शाब्दबोधजनकत्वाभावस्य घटपदार्थे विद्यमानस्य ज्ञानमाकाङ्क्षोत्थापकमित्यत आकाङ्क्षाजनकीभूतज्ञानविषये घटपदार्थनिष्ठान्वयबोधजनकत्वाभावरूपेऽपि आकाङ्क्षाव्यवहार इति भावः। तद्विषये = उक्तज्ञानविषये। नन्वाकाङ्क्षा-योग्यतयोर्भेदाभाव इति चेत्, न, योग्यताया वस्तुस्थितिपर्य्यन्तं स्थायितया जातेऽपि बोधे तत्सत्त्वादाकाङ्क्षायाश्चासत्त्वात्। ॐएतज्ज्ञानस्येति—एकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तान्वयबोधाजनकत्वमूलकाकाङ्क्षाज्ञानस्येत्यर्थः। ननु जातेऽपि शाब्दबोधे पुनः पुनः शाब्दबोधः स्यादत आह—ॐतदजनकत्वेति—उक्तान्वयबोधाजनकत्वेत्यर्थः। अत एव "अजनितान्वयबोधजनकत्वम्" आकाङ्क्षा इत्याहुः परे। नन्वाकाङ्क्षाज्ञानस्य शाब्दबोधकारणत्वेऽप्रामाण्यनिश्चयाभावस्तत्र विशेषणं देयम्, तदपेक्षया आकाङ्क्षाज्ञानाभावस्य प्रतिबन्धकत्वस्य क्लृप्तलया अप्रामाण्यज्ञानाभावविशिष्टाकाङ्क्षाऽभावनिश्चयाभावस्य हेतुत्वे लाघवमिति चेत्, न, आकाङ्क्षाज्ञानस्य हेतुत्वे 'तदभाववति तत्प्रकारकम्' इत्येकविधाऽप्रामाण्यग्रहाभावनिवेशेन लाघवात्। आकाङ्क्षाज्ञानाभावनिश्चयस्य प्रतिबन्धकत्वे तु 'तदभाववति तदभावप्रकारकम्' 'तद्वति तदभावप्रकारकम्' इति द्विविधा प्रामाण्यग्रहाभावनिवेशेन, प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्यभावे प्रतियोगितासम्बन्धेन तत्प्रकारकम्' इत्यप्रामाण्यग्रहाभावनिवेशेन च गौरवाद्बाधनिश्चयस्येव तदभावव्याप्य-तदभावावच्छेदकनिश्चययोः प्रतिबन्धकत्वेनातिगौरवाच्च। एवमाकाङ्क्षाज्ञानस्य शाब्दबोधाजनकत्वे शाब्दसामग्रीकाले आकाङ्क्षाज्ञानाभावविशि-

---

नाकाङ्क्षाया अभावात्। आकाङ्क्षाया अर्थनिष्ठत्वे तु पदज्ञानजन्योपस्थितिविषयीभूतार्थस्य सत्त्वेन तत्राकाङ्क्षायाः सुवचत्वम्। न च पदाभावे तज्ज्ञानस्याप्यसम्भवेन तज्जन्योपस्थितिविषयीभूतार्थस्याप्यभावेन तत्रापि कथमाकाङ्क्षायाः सम्भव इति वाच्यम्, लेखरूपसङ्केतज्ञानप्रयोज्यपदज्ञानस्य सत्त्वेन ततोऽर्थोपस्थितिसम्भवात्। इति दिक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टात्मत्वमानसवारणाय तत्र शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यपि गौरवं ज्ञेयम् । आकाङ्क्षाज्ञानस्य शाब्दबोधजनकत्वे तु तत्र आकाङ्क्षाज्ञानाभावरूपविषयाभावादेव न तादृशं मानसमिति न तत्र शाब्दसामग्र्याः प्रतिबन्धकत्वं कल्पनीयमित्यपि लाघवं बोध्यम् इति दिक् । नन्वेकबोधानन्तरमपि चिकीर्षितद्वितीयबोधात्प्रागपि आकाङ्क्षाज्ञानरूपकारणपूर्ववृत्तित्वाद्बोधद्वयं स्यादत आह—*कार्य्यसहभावेनेति—कार्य्याधिकरणक्षणवृत्तित्वेनेत्यर्थः । तथा च द्वितीयबोधकाले आकाङ्क्षाज्ञानाभावान्न बोधद्वयम् । अव्यवहितपूर्ववृत्तित्वनिवेशे तु चिन्त्यमिदम् । बोधात्पूर्वं बोधजनकत्वाभावज्ञानस्य सत्त्वेऽपि बोधोत्तरं बोधाजनकत्वज्ञानरूपकारणाभावान्न पुनर्बोधान्तरमिति भावः । तज्ज्ञानस्य = बोधाजनकत्वज्ञानस्य ।

मू०—अन्वयबोधश्च—तदाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः । एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधो न स्यादित्यपास्तम्, खण्डबोधस्य क्रियातद्विशेषण-कारकतद्विशेषणैतदन्यतरमात्रविषयकत्वात् । अत एव "सुरतक्रीडापिकीनां रवः" "कङ्कणक्वाणः प्रेम तनोतु वो नववयो लास्याय वेणुस्वनः" इत्यादौ समाप्तपुनरात्तस्य दोषतोक्ताऽऽलङ्कारिकैः । क्रियाकारकभावेनान्वयबोधकसकलपदोक्त्यनन्तरं तद्घटकयत्किञ्चिदन्वयिविशेषणोपादानं हि समाप्तपुनरात्त(त्व)म् ।

महावाक्यार्थबोधे नैवाकाङ्क्षानिवृत्तिः ।

( रत्न० )—नन्वाकाङ्क्षापदार्थघटकीभूते 'एकपदार्थज्ञाने' इत्यत्र 'एकपदार्थमात्रज्ञाने' इत्यस्य निविष्टत्वेन पदार्थद्वयादिविषयकावान्तरवाक्यार्थबोधानन्तरं महावाक्यार्थबोधो न स्यात्, तदानीमाकाङ्क्षाज्ञानाभावादत आह—*अन्वयबोध इति । *तदाकाङ्क्षित इति—बोधविषयत्वेन तात्पर्य्यविषयीभूतसम्बन्धनिरूपकैकपदार्थाकाङ्क्षितसकलक्रियाकारकादिविषयकबोधोऽन्वयबोधशब्देन विवक्षित इत्यर्थः । तेन खण्डवाक्यार्थबोधेऽपि महावाक्यजन्यबोधविषयीभूतसकलक्रियाकारकादिविषयकबोधस्याजातत्वादाकाङ्क्षाऽस्त्येवेति भावः । अत एव तात्पर्य्यविषयीभूतान्वयबोधजनकत्वाभाव आकाङ्क्षेति केचित् । एतेन =

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तान्वयबोधस्य विवक्षितत्वेन । ＊खण्डबोधस्येति—क्वचित् क्रिया-तद्विशेषणयोः क्वचित्कारक-तद्विशेषणयोरेव प्रथममन्वय इति भावः । ＊अन्यतरेति—तेन तद्बोधस्य सकलक्रियाकारकादित्रिषयकत्वन्नास्तीति भावः । अत एव = खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधे उक्तरीत्या दोषाभावादेव, क्रिया-तद्विशेषण-कारकतद्विशेषणैतत्सकलविषयकबोध-विषयार्थस्य निराकाङ्क्षत्वादेव वा । ＊सुरतक्रीडेति—

"क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवः
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरी ध्वनिः ।
तन्व्याः कञ्चुलिकाऽपसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयो लास्याय वेणुस्वनः ॥"

इति (काव्यप्रका० । उल्ला० । कारि० ७)

स्वगृहं प्रति प्रस्थितान् पथिकान् प्रति कस्यचित्कवेरुक्तिरियम् । तन्व्याः = कृशाङ्ग्याः कञ्चुलिका = चोलिका तस्या अपसारणे भवद्भिः क्रियमाणे सति यो भुजयोराक्षेपः = धूननं तेन स्खलन्ति यानि कङ्कणानि तेषां क्वाणः = शब्दो वः = युष्माकं प्रेम तनोतु । कीदृशः क्वाण इत्यपेक्षायां क्रेङ्कार इत्यादीनि पञ्च रूपकालङ्कारेणोक्तानि । स्मरकार्मुकस्य = मदनधनुषः । क्रेङ्कारः = विजयकालिकज्याकर्षणजन्यः शब्दः । तथा सुरतक्रीडा एव पिक्यः = कोकिलाः तासां रवः = कूजितम् । तथा रतिः = सुरतमेव प्रीतिरेव वा विलासादिरूपफलोत्पत्तिस्थानत्वात् मञ्जरी । तत्सम्बन्धिनो ये मधुलिहः = भ्रमरास्तेषां झङ्काररूपः । तथा लीलाकटाक्षादि-विक्षेप एव चकोरी तस्या ध्वनिरूपः । तथा नववयसः = तारुण्यस्य, नव-वयसाम् = तरुणानां वा, लास्याय = नृत्याय, वेणुस्वनः = वंशीध्वनिरूपः । अत्र मालारूपकालङ्कारः । ＊समाप्तपुनरात्तस्येति—समाप्तं सत्पुनरुपात्तम् । एवञ्च-समाप्तञ्च तत्पुनरात्तञ्चेति विशेषणोभयपदः कर्मधारयः । समाप्तम् = जनितविवक्षितान्वयबोधजनकं सत्, तदन्वयिशब्दोपादानेन पुन-रात्तम् = पुनरनुसन्धानविषयीभूतम् । वाक्ये समाप्ते पुनस्तदन्वयि-शब्दोपादानं यत्रेति भावः । उक्तपद्ये एतादृशः क्वाणो वः प्रेम तनोतु इत्यनेन वाक्यसमाप्तावपि पुनस्तत्क्वाणस्य 'नववयो लास्याय वेणुस्वनः' इति विशेषणाभिधानेन समाप्तपुनरात्तं दोषः । अत्र निराकाङ्क्षत्वस्यैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दोषबीजत्वेनावान्तरवाक्यार्थबोधेनैव निराकाङ्क्षत्वे सर्वत्र तत्सत्त्वेन एतादृशस्थले एव तद्दोषप्रदर्शनमसङ्गतं स्यादिति भावः । वाक्यस्य पुनरुपादानं स्वघटकद्वारा इत्याह—*तद्घटकेति—समाप्तवाक्यघटकं यत्किञ्चिदर्थस्वरूपं तदन्वयियद्विशेषणं तदुपादानं हि तदिति भावः । समाप्तवाक्यस्य पुनरनुसन्धानञ्च स्वघटकद्वारा बोध्यम् ।

**मू०—यद्यपि सति तात्पर्ये आवृत्त्या बोधद्वयमिष्टमेव, तथाऽपि सैवात्र दूषकताबीजम् । एतन्मूलिकैव 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति व्युत्पत्तिः ।**

**किञ्च—उक्तस्यान्वयबोधाजनकत्वज्ञानस्य वक्ष्यमाणसमभिव्याहारकारणताज्ञानमूलकत्वात्साऽप्याकाङ्क्षा । अतः 'स स समभिव्याहारस्तादृशतादृशान्वयबोधजनकः' इति ज्ञानं कारणम्, तदज्ञानतामबोधाच्च । अत एव यस्य यादृशसमभिव्याहारे यादृशान्वयबोधकत्वग्रहस्तस्य (ततः) तादृशान्वयबोध इत्यनुभवसिद्धम् । 'स स समभिव्याहारस्तत्तदन्वयबोधजनकः' इत्ययमेव वाक्यविषये ऐश्वरः समयः, तत्परिपालिका च मीमांसा । अत एव 'घटः कर्मत्वम् आनयनं कृतिः' इत्यतो विपरीतव्युत्पन्नस्य बोधः, सद्व्युत्पन्नस्य चाबोध उपपद्यते । सद्व्युत्पन्नत्वञ्च—व्याकरणशास्त्रोक्तप्रकृतिप्रत्ययविभाग-तत्तदर्थविभाग-तत्तदन्वयबोधविषयकज्ञानवत्त्वम् ।**

समभिव्याहारनिष्ठकारणता-ऽप्याकाङ्क्षा ।

(रत्न०)—ननु 'राज्ञः' इत्यस्य पुत्र-पुरुषयोरुभयत्राप्यन्वयतात्पर्येणोच्चरिते 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यताम्' इति वाक्ये पुत्रेणान्वयबोधे वृत्ते पुरुषेणान्वयबोधो न स्यादन्वयबोधाजनकत्वस्याभावादत आह—*आवृत्त्येति—एवञ्च-द्वितीयवाक्ये बोधजनकत्वाभावोऽस्त्येवेति भावः । सैव = आवृत्तिरेव, अत्र = पुनर्बोधे । *तथाच आवृत्तिनिराकाङ्क्षत्वैतदन्यतरद्दूषकताबीजं बोध्यम् । एतेनालङ्कारिकोक्तमनित्यदोषत्वं समाप्तपुनरात्तस्यापास्तम् । ननु 'सकृदुच्चरितः' इति न्यायविरो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धात्कथं तत्रावृत्तेरेव दोषबीजत्वमत आह—*एतदिति—आवृत्तिमूलिकैवेत्यर्थः । एवशब्देन स्वातन्त्र्येण प्रतिबन्धकत्वं व्यवच्छिद्यते ।

"स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
स्रस्तं कर्णशिरीषरोधिवदने घर्माम्भसां जालकं-
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥"
इति शाकुन्तले (प्र० अं० श्लो० २६) ।

"अयमुदयति मुद्रा भञ्जनः पद्मिनीना—
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्द—
न्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥"

इति साहित्यदर्पणे च पूर्ववाक्यार्थोपपादकत्वेनाकाङ्क्षाया अनिवृत्तत्वात् समाप्तपुनरात्तत्वाभावः ।

यत्पदं यदर्थेन सह तात्पर्यविषयीभूतयादृशार्थान्वयबोधकं तत्पदे तत्पदस्य पूर्वोत्तरवर्तित्वादिरूपसमभिव्याहार आकाङ्क्षा, तज्ज्ञानञ्च—शाब्दबोधे कारणमिति यदाहुः, तन्न, सद्व्युत्पन्नासद्व्युत्पन्नविभागविलयापत्तेः । यदि तादृशबोधे यत्समभिव्याहारः कारणं तादृशबोधे तत्कारणत्वज्ञानमपि कारणमिति नोक्तदोष इत्युच्यते तदाऽऽवश्यकत्वात्तस्यैवाकाङ्क्षात्वं युक्तम् । केचित्तु-तत्तत्समभिव्याहारे तत्तद्बोधाजनकत्वनिश्चयः प्रतिबन्धक इत्याहुः, तन्न, 'घटमानय' इत्यादौ घटपदा-म्पदादौ प्रत्येकं गृहीतशक्तिकस्य तादृशानुपूर्वीज्ञानवतोऽकारणत्वनिश्चयाभाववतो विपरीतव्युत्पन्नस्य ततो बोधापत्तेः, प्रतिबन्धकत्वे गौरवाच्चेत्येतत्सर्वं मनसि निधायाह—किञ्चेत्यादिना ज्ञानवत्त्वमित्यन्तेन ग्रन्थेन । उक्तस्य = तदाकाङ्क्षितसकलक्रिया-कारकादिविषयकस्य । *समभिव्याहारेति—'एतत्पदमेतत्पदेन सहान्वयं बोधयतु' इत्याकारकेत्यर्थः । *ज्ञानमूलकत्वादिति—'उक्तान्वयबोधाजनकत्वज्ञाने शाब्दबोधप्रयोजकतत्तत्समभिव्याहारनिष्ठकारणताज्ञानं कारणम्' इत्येवं कार्यकारणभावादिति भावः । तेन 'घटः कर्मत्वम् आनयनं कृतिः' इत्यादितो न बोधः, 'घटनिष्ठकर्मतानिरूपकमानयनम्' इति बोधं प्रति घटपदोत्तराम्पदत्वरूपसमभिव्याहारज्ञानस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारणत्वात्। सापि = तत्तत्समभिव्याहारनिष्ठबोधकारणताऽपि। अपिना—अन्वयबोधाजनकत्वस्य सङ्ग्रहः। अतः = अन्वयव्याप्तेः—'यत्र यत्र समभिव्याहारनिष्ठकारणताज्ञानं तत्र तत्र अन्वयबोधाजनकत्वज्ञानम्' इत्येवंरूपायाः। व्यतिरेकमाह – ॐतदजानतामिति – समभिव्याहाररूपकारणमजानतामित्यर्थः। ॐअबोधाच्चेति — चेन 'अतः' इति पूर्वोक्तहेतोः सङ्ग्रहः। अत एव = समभिव्याहारस्य कारणत्वादेव। तत्परिपालिका = वाक्यसमयपरिपालिका, मीमांसकैः संसर्गनिरूपितशक्ते वाक्ये एव स्वीकारात्। अत एव = समभिव्याहारस्य हेतुत्वादेव। ॐविपरीतव्युत्पन्नस्येति—'घटनिष्ठकर्मतानिरूपकमानयनम्' इत्येतदर्थनिरूपितबोधजनकत्वाभाववति 'घटः कर्मत्वम् आनयनं कृतिः' इति वाक्ये तादृशार्थनिरूपितबोधजनकत्वज्ञानवतो भ्रान्तस्येत्यर्थः। सद्व्युत्पन्नस्य = घटादिप्रकृत्युत्तरामादिप्रत्ययसमभिव्याहारनिष्ठकारणत्वज्ञानवतः। ॐव्याकरणशास्त्रोक्तेति—अस्य प्रकृतिप्रत्ययविभागे, तत्तदर्थविभागे = प्रकृतिप्रत्ययार्थविभागे, तत्तदन्वयबोधे चान्वयः। तथाच व्याकरणोक्तत्रितयविषयकज्ञानवत्त्वमेव सद्व्युत्पन्नत्वम्।

**मू०—अन्वयानुभवश्च—स्वरूपसन् तत्तत्समभिव्याहारजन्यान्वयबोधान्तरे प्रतिबन्धकः, तन्मूलकमन्वयबोधाजनकत्वज्ञानमपि वा हेतुरिति तन्मूलिकैव 'सकृदुच्चरितः' इति व्युत्पत्तिः। तादृशबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञाने सत्यपि तत्तत्समभिव्याहारे तत्तज्जनकत्वज्ञानाभावे बोधादर्शनान्न तात्पर्येणास्या अन्यथासिद्धिः. 'सत्यप्यस्य तात्पर्येऽबोधकम्' इति व्यवहाराच्च।**

तात्पर्य्येणाकाङ्क्षाया अन्यथासिद्धिनिरासः।

**तत्रायं व्युत्पन्नस्य क्रियाकारकादिपदघटितः सामान्यत एवेत्युक्तम्, व्युत्पन्नस्याश्रुतवाक्यादपि बोधदर्शनात्, प्रतिवाक्यं तथाग्रहस्यासम्भवाच्च।**

(रत्न०)—ॐस्वरूपसन्निति—दाहं प्रति वन्हिरिव स्वरूपतः सत्येवोक्ताकाङ्क्षाहेतुर्न तु तज्ज्ञानमपेक्ष्यते, तावतैव बोधान्तरवारणसम्भवात्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वन्वयबोधाजनकत्वरूपाकाङ्क्षायाः प्रागभावरूपत्वात् 'अहो विमलं जलं नद्याः कच्छे महिषाश्चरन्ति' इत्यत्र नदीजलविषयकबोधे जातेऽपि भविष्यत्कालिकनदीकच्छान्वयप्रागभावस्य सत्त्वात्पुनर्नदीकच्छान्वयबोधापत्तिः। तात्पर्याभावान्न तदापत्तिरिति तु न युक्तम्, 'आकाङ्क्षायास्तत्राभावान्न बोधः' इति प्रवादविरोधादित्याह—*अन्वयबोधान्तरे प्रतिबन्धक इति। ननु 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इत्यादौ तात्पर्यभ्रमात्पुरुषान्वयस्यापि दर्शनात् प्रतिबन्धकत्वासम्भव इत्यत आह—*तन्मूलकमिति—समभिव्याहारमूलकमित्यर्थः। *ज्ञानमिति—'अयमेति' इत्यत्र तात्पर्य्यभ्रमेण पुरुषेऽन्वये तदनन्तरं पुत्रान्वये तात्पर्य्यग्रहेऽप्यन्वयानापत्तिरतस्तात्पर्य्यविषयान्वयाजनकत्वमेव विवक्षितमिति भावः। तथाच—तात्पर्यविषयपुत्रान्वयाजनकत्वस्य सत्त्वान्नोक्तापत्तिरिति भावः। तन्मूलिकैव = उक्तान्वयबोधाजनकत्वज्ञानमूलिकैव। ननु तात्पर्याभावादेवान्वयबोधाभावे आकाङ्क्षायाः कारणत्ववैफल्यमत आह—*तादृशेति—'इदं वाक्यमेतदर्थबोधनेच्छया उच्चरितम्' इति तात्पर्य्यसत्त्वेऽपि तादृशसमभिव्याहारे बोधजनकत्वाभावज्ञानदशायां बोधाभावदर्शनान्न तात्पर्येणाकाङ्क्षाया अन्यथासिद्धिरिति भावः। अस्य = वक्तुः। तत्र = उक्ताकाङ्क्षायाः कारणत्वस्वीकारे। अयम् = समभिव्याहाररूपाकाङ्क्षाकार्यकारणभावः। व्युत्पन्नस्य = शास्त्रोक्तव्युत्पत्तिविशिष्टस्य। सामान्यतः = सामान्यार्थबोधकक्रियाकारकपदनिवेशेन। *उक्तमिति—वाक्यशक्तिनिरूपणे इति शेषः। *अश्रुतवाक्यादिति—पूर्वमप्रत्यक्षीकृतात्कविरचिताभिनववाक्यादित्यर्थः। तथाच साङ्ख्यतत्त्वकौमुद्यां वाचस्पतिमिश्राः—"न च वाक्यं वाक्यार्थं बोधयत्सम्बन्धग्रहणमपेक्षते, अभिनवकविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वात्" इत्युक्तिरपि सामान्यतः कार्यकारणसम्भवाभिप्रायेण। वस्तुतस्तदसम्भव एवेत्याह—*प्रतिवाक्यमिति—वाक्यानामानन्त्यादिति भावः।

अर्थाकाङ्क्षयोः सम्बन्धनिरूपणम्।

**मू०—'पदभेदेन व्युत्पत्तिभेदः' इत्यस्य च नामपदद्वय-नामाख्याता-ख्यातनिपात-निपातनामादिभेदेन तत्तत्पदसमुदाये व्युत्पत्तिभेद इत्येवार्थः। स चाग्रे तत्र तत्र वक्ष्यते।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्थापकताविषयताऽन्यतरसम्बन्धेन, उभयसम्बधेन वा जिज्ञासाविशिष्टः 'साकाङ्क्षः' इत्युच्यते । तत्रान्त्यम्—'पचति तण्डुलं देवदत्तः' इति, क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्, तद्विषयत्वाच्च । आद्यम्—'पश्य मृगो धावति' इति । अत्र पश्यार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वम्, धावनं तु तद्विषय एव । ईदृशस्थले क्रियाकारकसम्बन्धो वाक्यशक्य एव । अत एव "विभाषा साकाङ्क्षे" (पा० सू० ३।२।११४) इति सूत्रभाष्ये '†अस्त्यस्मिन्नाकाङ्क्षेत्यतः (इति च) साकाङ्क्षम्' इति उक्तम् । 'अस्मिन्' इति विषयसप्तमीत्यलम् ।

(रत्न०)—ननु सामान्यत एव शाब्दबोधकारणीभूतसमभिव्याहाराङ्गीकारे 'पदभेदेन व्युत्पत्तिभेदः' इति प्रवादविरोधोऽत आह—❀पदभेदेनेति । ❀नामपदेति—नामनी = नामप्रकृतिकसुबन्ते च ते पदे नामपदे तयोर्द्वयं नामपदद्वयम्, तच्च नामाख्याते च आख्यातनिपातौ च निपातनाम्नी चेति समाहारद्वन्द्वः तदादि यस्य स चासौ भेदस्तेन । 'राजपुरुषः' 'देवदत्तो ग्रामं गच्छति' 'साक्षात्करोति' 'सुजनः' क्रमेणैतान्युदाहरणानि । स च = एतादृशार्थश्च । ननु 'अयमर्थः साकाङ्क्षः' इति व्यवहारे न समवायेनाकाङ्क्षावैशिष्ट्यम्, तथा सत्यात्मनोऽन्यत्र तथाव्यवहारानुपपत्तेरत आह—❀उत्थापकतेति । तत्र हेतुं सूचयन्नाह—❀कारकेति । अन्त्यम् = उभयसम्बन्धेन । क्रियाकारकयोः = पाककर्मणोः । तदुत्थापकत्वात् = आकाङ्क्षोत्थापकत्वात् । तद्विषयत्वात् = आकाङ्क्षाविषयत्वात् । आद्यम् = अन्यतरसम्बन्धेन । अत्र = उक्तवाक्ये । ❀पश्यार्थस्येति—निष्ठत्वं षष्ठ्यर्थः । ❀कारकधावनेति—कारकश्च तद्धावन-

---

† "भवेत् पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात्, परं तु कथम् ? साकाङ्क्षम् । परमपि साकाङ्क्षम्, कथम् ? अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम्" इति भाष्यम् ।

अत्र कैयटः—"अस्त्यस्मिन्निति—सहशब्दो विद्यमानार्थवृत्तिः, तेन विद्यमानाकाङ्क्षः साकाङ्क्षोऽर्थ उच्यते । लक्ष्यलक्षणयोश्च परस्परापेक्षत्वाद्द्वयोरपि साकाङ्क्षत्वमित्यर्थः" इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिति कर्मधारयः । धावनाभिन्नकारकविषयकाकाङ्क्षोत्थापकत्वं दर्शननिष्ठमिति लभ्यते । तथाच दर्शने आकाङ्क्षावैशिष्ट्यमुत्थापकत्वसम्बन्धेनैव । ※तद्विषय एवेति—धावने विषयतासम्बन्धेनैवाकाङ्क्षेत्यर्थः । ननु विशेष्यविशेषणभावनिरूपितशक्तेरेव वाक्यनिष्ठत्वस्य सिद्धान्तितत्वेन, क्रियाकारकभावनिरूपितशक्तेर्विभक्तिमात्रनिष्ठतया च 'पश्य मृगो धावति' इत्यत्र विभक्तेरभावात् क्रियाकारकभावसम्बन्धस्य प्रतीतिर्न स्यादत आह— ※ईदृशस्थल इति । ※वाक्यशक्य एवेतिं—एवेन विभक्तिशक्यत्वव्यवच्छेदः, तत्र विभक्तेरसम्भवादिति भावः । ननु उत्थापकतासम्बन्धेनाकाङ्क्षाविशिष्टस्यैव साकाङ्क्षत्वं सर्वानुभवसिद्धं न तु विषयतया, इति कथं धावनस्य तेन सम्बन्धेन साकाङ्क्षत्वमत आह—※ अत एवेति--विषयतासम्बन्धेनापि साकाङ्क्षत्वादेवेत्यर्थः । चेन पूर्वोक्तसम्बन्धान्तरसंग्रहः । नच प्रतिशाब्दबोधमाकाङ्क्षाया भिन्नरूपत्वात् कार्यकारणभावाननुगमः, आकाङ्क्षत्वेनानुगमस्य सत्त्वात् । ※विषयसप्तमीति—एतेन विषयतासम्बन्धेन साकाङ्क्षत्वं प्रदर्शितम् । वस्तुतस्तु विषयतासम्बन्धेनार्थस्य साकाङ्क्षत्वे "तस्या आकाङ्क्षाविषयेऽर्थे आरोपः" इति पूर्वोक्तमूलग्रन्थविरोधः, विषयतासम्बन्धेनाकाङ्क्षायास्तत्र सत्त्वादारोपानुपयोगात् । 'साकाङ्क्षः' इत्यस्य 'आकाङ्क्षासम्बन्धी' इत्यर्थेऽप्यारोपासङ्गतिः, तत्त्वस्य तत्र स्वत एव सत्त्वात्, इति मतान्तरपरतया कथञ्चिदयं ग्रन्थो नेय इत्युपाध्यायाः । समभिव्याहाररूपसम्बन्धस्य कारणत्वञ्च वाक्यार्थेन सम्बन्धं विना अनुपपन्नमित्येतत्कार्यकारणभावबलादेव वाक्यशक्तिसिद्धिः, अन्यथा पदशक्तेरप्यसिद्धिप्रसङ्गस्तदाह—※अलमिति ।

इत्याकाङ्क्षानिरूपणम् ।

※ इति शम् ※

—※—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—यत्तु—अर्थनिष्ठयोग्यताऽपि शाब्दबोधे कारणम् । सा च तात्पर्य्यविषयीभूतसंसर्गवृत्तिधर्म्मे संसर्गताऽवच्छेदकताख्ये सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगिताऽवच्छेदकत्वाभावः । तेन विशिष्टाभावादिकमादाय न दोषः। तज्ज्ञानं कारणम्, संसर्गज्ञानं तु तात्पर्य्यविषयतया, आकाङ्क्षाज्ञानविषयतया वा सुलभम् ।

योग्यतानिरूपणपूर्वकमयोग्यतानिश्चयस्य शाब्दबोधप्रतिबन्धकत्वखण्डनम् ।

यद्वा—प्रतियोगिताऽवच्छेदकत्वरूपायोग्यतानिश्चयो बोधप्रतिबन्धकः, इति, तन्न, शाब्दप्रयोज्ये बोधे बाधज्ञानस्याप्रतिबन्धकत्वात्, तदभावज्ञानस्याकारणत्वाच्च । सत्यपि बाधनिश्चये—

"अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया"

"एष बन्ध्यासुतो याति" इत्यादितो बोधदर्शनात् ।

किञ्चैवम् 'वन्हिना सिञ्चति' इत्यतो बोधाभावे तद्वाक्यप्रयोक्तुः 'अद्रवेण वन्हिना कथम् ? सेकं ब्रवीषि' इत्युपहासः श्रोतृभिः क्रियमाणोऽसङ्गतः स्यात् । एतदर्थकद्रविडभाषाश्रवणोत्तरं पाश्चात्यस्येव मूकता तस्य स्यात् ।

किञ्चैवं सति वादे प्रतिवादिशब्दस्याबोधकत्वे तत्खण्डनकथोच्छेदः । नचैतादृशेषु नान्वयबोधः, किन्तु पदार्थबोधमात्रमिति वाच्यम्, सर्वत्रैवमेवापत्तेः ।

( रत्न० )—प्राचीनाः—'आसत्तिर्योग्यताऽऽकाङ्क्षा तात्पर्य्यज्ञानमिष्यते कारणम्' इत्यादिना शाब्दबोधं प्रति आसत्त्यादीनां कारणत्वमावश्यकम्, तत्र 'वन्हिना सिञ्चति' इति वाक्याद् बोधवारणाय योग्यताज्ञानस्य हेतुत्वं वाच्यम् । तथाच—तात्पर्य्यविषयीभूतसंबन्धेन सम्बन्धनिरूपकपदार्थानामेकतरस्मिन्नपरपदार्थसद्भावरूपयोग्यताया उक्तवाक्यार्थेऽसत्त्वान्न शाब्दबोधः । नन्वीदृशयोग्यताज्ञानं शाब्दबोधात्प्राङ् न सम्भवति, वाक्यार्थसंसर्गस्यापूर्वत्वादिति, चेत्, न, पदार्थोपस्थितौ सत्यां क्वचित् 'संशयात्मकस्य क्वचिन् निश्चयात्मकस्य योग्यताज्ञानस्य शाब्दबोधात् प्रागपि सम्भवात्' इत्याहुः तत् खण्डयति—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

*यत्त्विति । *अर्थनिष्ठेति—एतेन पदनिष्ठत्वं निरस्तम् । *तात्पर्य्येति—यथा 'जलेन सिञ्चति' इत्यत्र सेकस्य स्वनिरूपितकरणतासम्बन्धेन जले, जलस्य च स्वनिष्ठकरणतानिरूपकत्वसम्बन्धेन सेकेऽन्वये, जले सेकनिरूपितकरणत्वं नास्तीत्यभावाभावात् सेककरणत्वरूपसंसर्गवृत्तिसेककरणत्वत्वरूपसंसर्गताऽवच्छेदके धर्म्मे जलरूपसंबन्धिनिष्ठोक्तात्यन्ताभावीयप्रतियोगिताऽवच्छेदकत्वं नास्तीति उक्तप्रतियोगिताऽवच्छेदकत्वाभावरूपयोग्यतायाः सत्त्वात् शाब्दबोधः, तथा 'वन्हिना सिञ्चति' इत्यत्र वन्हिरूपसम्बन्धिनि सेककरणत्वं नास्तीत्यभावस्य सत्त्वात्सेककरणत्वत्वस्य प्रतियोगिताऽवच्छेदकतया उक्तावच्छेदकत्वाभावरूपयोग्यताया अभावान्न शाब्दबोधः, स्ववृत्तिप्रमेयत्वादिरूपसंसर्गस्य सत्त्वादाह—*तात्पर्य्यविषयभूतेति ।

नन्वेवमन्योन्याभावस्थलेऽव्याप्तिः, तदभावाग्रहप्रतिबन्धकाग्रहविषयत्वरूपायाः प्रतियोगितायाः अत्र विवक्षणेनादोषात् , तत्र च प्रतियोगिताऽवच्छेदकसंबन्धेन प्रतियोगिप्रकारकज्ञानस्याभावज्ञानविरोधितयोक्तप्रतियोगितायाः सत्त्वात् । ननु तात्पर्य्यविषयीभूतसम्बन्धे सम्बन्धनिष्ठात्यन्ताभावीयप्रतियोगित्वाभाव एव योग्यताऽस्तु, तावतैव 'वह्निना सिञ्चति' इत्यत्रादोषात् किं संसर्गताऽवच्छेदके ? उक्तप्रतियोगिताऽवच्छेदकत्वाभावनिवेशेनेत्याशङ्कायामाह—*तेनेति—संसर्गताऽवच्छेदके प्रतियोगित्वाऽवच्छेदकत्वाभावनिवेशेनेत्यर्थः । तथाच—'जलेन सिञ्चति' इत्यादौ सेके जलकरणकत्वघटोभयाभावसत्त्वेनाभावप्रतियोगितायाः संसर्गे सत्त्वेऽपि संसर्गताऽवच्छेदके जलकरणकत्वत्वेऽभावीयप्रतियोगिताऽवच्छेदकतापर्य्याप्त्यधिकरणत्वाभावान्न दोषः । ज्ञायमानयोग्यता कारणम्, न तु स्वरूपसतीत्याह—*तज्ज्ञानमिति—योग्यताज्ञानमित्यर्थः । ननु संसर्गस्य वृत्त्याऽनुपस्थितेः शाब्दे भानं न स्यादत आह—*संसर्गेति । *तात्पर्य्येति—तात्पर्य्यज्ञानविषयतयेत्यर्थः । *आकाङ्क्षेति—तार्किकमतेनेदम् । नव्यनैयायिकमतमाह—*यद्वेति—योग्यताज्ञानं शाब्दबोधे न कारणम् । न च 'वह्निना सिञ्चति' इत्यनेन शाब्दबोधः, सेके वह्निकरणकत्वाभावरूपबाधनिश्चयस्य प्रतिबन्धकत्वात् । नच प्रतिबन्धकत्वकल्पने गौरवम्, योग्यत्वाभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यविशिष्टबुद्धिमात्रं प्रति प्रतिबन्धक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वस्य क्लृप्तत्वात्। तथाचायोग्यतानिश्चयाभावस्याक्लृप्तप्रतिबन्धकत्वं न कल्प्यत इति भावः। अभावाभावस्य प्रतियोगिरूपत्वादाह—*प्रतियोगितेति। वस्तुतस्तु—बाधनिश्चयस्य प्रतिबन्धकत्वकल्पने गौरवम्। तथाहि—योग्यताज्ञानस्य कारणत्वे 'भूतलं घटवत्' इत्यादिशाब्दबोधे भूतलविशेष्यकघटप्रकारकज्ञानं कारणम्, तत्राप्रामाण्यज्ञानानास्कन्दितस्यैव कारणत्वात्, अप्रामाण्यज्ञानम्—'घटाभाववति घटप्रकारकम्' इत्येकविधमेव। भूतलविशेष्यकघटाभावप्रकारकनिश्चयधर्मिकाप्रामाण्यज्ञानन्तु 'घटाभाववति घटप्रकारकम्' 'घटवति घटाभावप्रकारकम्' 'प्रतियोगितया घटाभाववत्यभावे प्रतियोगितया घटप्रकारकम्' इति त्रिविधाप्रामाण्यज्ञानानास्कन्दितत्वनिवेशापेक्षया एकविधाप्रामाण्यज्ञानानास्कन्दितत्वनिवेशे लाघवमिति दिक्।

*प्रतिबन्धक इति—अयम्भावः—बाधस्य संसर्गज्ञानाभावरूपतया तदभावस्य विशिष्टबुद्धिं प्रति कारणतायाः क्लृप्तत्वात् योग्यताभावनिश्चयानन्तरं न शाब्दबोधः। अत एव बाधनिश्चयानन्तरं योग्यताभ्रमेणैव बोधः। योग्यताभ्रमश्चाहार्य्यारोपोऽपि बोध्यः। योग्यत्वाभावनिश्चयस्य प्रतिबन्धकत्वं खण्डयति—*शब्दप्रयोज्य इति। *बाधज्ञानस्येति—संशयोत्तरं विशेषदर्शने तद्वत्ताबुद्धिदर्शनाद्बाधनिश्चयस्येत्यर्थः। यत्तु—बाधज्ञानस्य संशयनिश्चयसाधारण्यानुरोधेन ज्ञानत्वेनैव प्रतिबन्धकत्वम् विशेषदर्शनन्तूत्तेजकम्, इति, तन्न, योग्यतासंशयानन्तरं शाब्दबोधदर्शनेन निश्चयत्वेनैव तस्य प्रतिबन्धकत्वात्।

यत्तु—बाधज्ञानसत्त्वेऽपि आहार्य्यप्रत्यक्षज्ञानोदयेन प्रत्यक्षान्यज्ञानत्वमेव प्रतिबन्ध्यतावच्छेदकं वाच्यम्, तस्य चार्थापत्तावपि सत्त्वेन तस्याश्चाप्रतिबन्ध्यतया प्रतिबन्ध्यताऽवच्छेदकत्वासम्भवादनुमितित्वादेरेव प्रतिबन्ध्यताऽवच्छेदकत्वमिति शाब्दज्ञाने तस्याक्लृप्तत्वादक्लृप्तकल्पनाऽपेक्षया योग्यताज्ञानस्य स्वातन्त्र्येण कारणत्वं स्वीकार्य्यमिति, तन्निराचष्टे—*अप्रतिबन्धकत्वादिति—इच्छाया उत्तेजकत्वानुरोधेन बाधज्ञानसत्त्वेऽपि प्रत्यक्षधियो दर्शनात् प्रत्यक्षज्ञानत्वस्यैव प्रतिबन्ध्यताऽवच्छेदकत्वात्। उपनीतभानसाधारणप्रतिबन्ध्यतायाः शाब्देऽभावाद्बाधकालेऽपि आहार्य्यशाब्दबोधोऽक्षत एवेति भावः। वस्तुतस्तु बाधकालेऽपि काम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लादिदोषदूषितस्य 'पीतः शङ्खः' इति बोधवदुपस्थितिवच्च शाब्दबोधा दुरुद्धर एवेत्याह—*अस्य क्षोणिपतेरिति—

"अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः संख्यया।
प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः† किलाकीर्त्तयः॥
गीयन्ते स्वरमष्टमं कलयता जातेन बन्ध्योदरा-
न्मूकानां प्रवरेण† कूर्मरमणी दुग्धोदधे रोधसि॥"

महीपतिमण्डलीककवेरिदं पद्यम्।

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः॥"

प्रकाशवर्षकवेरिदम्।

आद्ये अस्य राज्ञः कीर्त्तयः परार्द्धपरया संख्यया लक्षीकृताः, अत्र परार्द्धाधिकसंख्याया अभावेऽपि बोधः। अत्रैवान्येषामप्यर्थानां बाधेऽपि बोधविषयता। *एवमिति—योग्यतायाः कारणत्वे बाधज्ञानस्य प्रतिबन्धकत्व इत्यर्थः। *असङ्गत इति—बोधाभावेनोपहासासम्भवादिति भावः। *एतदर्थकतेति—अद्रववह्निकरणकसेकार्थकतेत्यर्थः। पाश्चात्यस्य = आङ्गलादेः। *मूकतेति—द्रविडभाषया बोधाभावेन पाश्चात्यैर्यथा मौनीभूयते, तथा तस्य अयोग्यार्थकवाक्यश्रोतुर्मूकता स्यादिति भावः। *वाद इति—"प्रमाण-तर्क-साधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्ष-प्रतिपक्ष-परिग्रहो-वादः" (न्याय० द० अ० १ पा० २ सू० १) इति न्यायसूत्रोक्तेरेकाधिकरणस्थयोः 'अस्त्यात्मा' 'नास्ति आत्मा' इत्येवं विरुद्धयोः पक्षप्रतिपक्षयोः परिग्रहः = अभ्युपगमव्यवस्था वादस्तत्रेत्यर्थः। *उच्छेद इति—योग्यतारहितार्थकस्य बोधाजनकतयाऽबुद्धस्य खण्डयितुमशक्यत्वादित्यर्थः। *एतादृशेष्विति—'वह्निना सिञ्चति' एवंविधेषु। नान्वयबोधः = न शाब्दबोधः। पदार्थबोधमात्रम् = पदार्थोपस्थितिमात्रम्। सर्वत्र = योग्यतारहिते, योग्यतासहिते च। *आपत्तेरिति—बोधाभावे वह्निकरणकोपहासवाक्यस्यासङ्गत्यापत्तेश्चत्यपि बोध्यम्।

† 'बधिरश्राव्याः' इति पाठान्तम्। † 'प्रकरेणेति' पाठान्तरम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—नच प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वानुरोधेन शाब्दविशिष्टज्ञानसिद्धिरिति वाच्यम्, दुःख-द्वेषे-च्छा-सुखादावपि तुल्यरीत्या तद्धेतुत्वेन सत्यपि बाधनिश्चये मिथ्याऽभिशाप-गालिदानरूपकादिकाव्यजदुःख ( द्वेषेच्छा ) सुखाद्यनुरोधेन तत्रापि तदावश्यकत्वात्, अन्यथाव्युत्पन्नानाम् 'मुखत्वम्, आश्रयः, चन्द्रत्वम्, आश्रयः' इत्यतोऽपि 'मुखं चन्द्रः' इत्यादित इव चमत्कारापत्तिः,विभक्त्यर्थस्यैवान्वयतया तद्बोधो नेत्यस्यात्यन्तमसङ्गतत्वाच्च। दैववशसंपन्नात्कलहादिसदृशशब्दात्तु न दुःखम्, तादृशवक्तृतात्पर्याभावज्ञानात् । 'नेदं रजतम्' इति भ्रमवतस्ततो निवृत्तावाप्तेन 'इदं रजतमेव' इति प्रयुक्ते बाधज्ञानकाल एव ततो बोधात्, प्रवृत्तिदर्शनाच्च । एतेनासंसर्गाग्रहमात्रेण तत्सिद्धिरित्यपास्तम्।

(रत्न०)——*प्रवृत्तिमिति—अन्वयव्यतिरेकाभ्यां यत्किञ्चिद्विषयकप्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतया 'घटमानय' इति वाक्यं श्रुत्वा घटानयने प्रवृत्तिमतः पुरुषस्य प्रवृत्तिदर्शनात्तत्र प्रवृत्त्यन्यथाऽनुपपत्त्या शाब्दान्वयः कल्प्यते, 'वह्निना सिञ्च' इत्येवंविधवाक्यश्रोतुः प्रवृत्त्यदर्शनान्नेदृशेषु शाब्दविशिष्टज्ञानसिद्धिरित्याह—*शाब्दविशिष्टेति — शाब्दं यद्विशिष्टज्ञानं तत्सिद्धिरित्यर्थः । उक्तरीत्या दुःखादिविषयकप्रवृत्तिं प्रत्यपि विशिष्टज्ञानस्य हेतुतया बाधनिश्चयस्य सत्त्वेऽपि मिथ्याऽभिशापादिविषयकबोधजनकवाक्यैः दुःखादिदर्शनाद्योग्यताविरहितार्थबोधकवाक्यस्थलेऽपि शाब्दविशिष्टज्ञानस्यावश्यकत्वादित्याह —*मिथ्येति —मिथ्या = असत्यभूतेनार्थेन । अभिशापः = अपवादः— 'अनेन कश्चिच्चौर्य्यं कृतम्' इति । गालिदानम् = 'व्यभिचारिणीपुत्रोऽयम्' इति सतीपुत्रेऽपि कथनम् । रूपकम् = उपमानोपमेययोरभेदेन निर्देशः, यथा—'मुखं चन्द्रः' इति । एवंविधवाक्यश्रोतॄणां दुःखादिदर्शनाद्विशिष्टज्ञानस्यावश्यकत्वमिति भावः ।

एतेन बाधस्य संसर्गाग्रहरूपतया तदभावस्य विशिष्टबुद्धिमात्रे कारणताया आवश्यकत्वेन योग्यत्वाभावनिश्चयानन्तरं शाब्दबोधो न स्यादित्यपास्तम्, उक्तरीत्या तत्रापि तस्यानुभवसिद्धत्वात् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यथाव्युत्पन्नानाम् = अयोग्यार्थकवाक्येनोपस्थितिमात्राङ्गीकर्तॄणाम् । ननु मुखत्वम्, आश्रयः, चन्द्रत्वम्, आश्रयः, इत्यादिषु संबन्धबोधकविभक्तीनामभावात् 'मुखं चन्द्रः' इत्यत्रेव चमत्कारो न स्यादत आह —*विभक्त्यर्थेति । *असङ्गतत्वादिति — 'नीलो घटः' इत्यादितो बोधानापत्तेरिति भावः । नन्वयोग्यार्थकस्यापि बोधकत्वे पण्डितेऽपि दैववशसम्पन्नात् 'त्वं मूर्खोऽसि' इत्यादिवाक्याद् दुःखाभावानुपपत्तिरत आह—*दैववशेति । *कलहादीति—कलहादिबोधकसदृशेत्यर्थः । *तात्पर्य्याभावादिति—दुःखजनकत्वप्रकारकवाक्यविशेष्यकं यत् 'मदुच्चरितं वाक्यं दुःखजनकं भवतु' इति तात्पर्य्यं तदभावज्ञानादित्यर्थः । बाधज्ञानकालेऽपि प्रवृत्तिप्रयोजकबोधदर्शनेन बाधस्य प्रतिबन्धकत्वं न सम्भवतीत्याह —*नेदं रजतमिति । एतेन = संसर्गाग्रहकालेऽपि बोधपूर्वकप्रवृत्तिप्रदर्शनेन । तत्सिद्धिः = प्रवृत्तिसिद्धिः । *अपास्तमिति— रजतत्वप्रकारकप्रवृत्तौ रजतत्वप्रकारकबुद्धेः कारणतायाः सिद्धतया रङ्गादिविषयकरजतभ्रमानन्तरं प्रवृत्तावपि रजतत्वासंसर्गाग्रह एव हेतुरस्त्वित्यपास्तमिति भावः, रजतत्वासंसर्गाग्रहकालेऽपि प्रवृत्तेः ।

यत्तु—प्रत्यक्षस्थले असंसर्गाग्रहसामान्याभावस्य हेतुतायाः क्लृप्ततया अयोग्यतानिश्चयाभावस्यासंसर्गाग्रहत्वेनैव कारणत्वमस्त्विति, तन्न, प्रत्यक्षसंसर्गाग्रहस्यैव तत्र प्रतिबन्धकतया असंसर्गाग्रहस्य पृथग्हेतुताया असिद्धेः । अत एव वक्ष्यति—'अभावरूपस्यासंसर्गाग्रहस्य' इति ।

**मू०—किञ्च—असंसर्गाग्रहो नाम=संसर्गाभावग्रहाभावः, तथा सति बाधज्ञानाभावेन विशिष्टबुद्धेरापत्त्या ( न्यायनये ) एवं वक्तुमनौचित्यात् । किञ्च (गुरुमतेऽपि न) येन दोषेण विद्यमानस्यासंसर्गस्याग्रहस्तेनाविद्यमानसंसर्गग्रहस्यैव वक्तुं शक्यत्वात् ।**

असंसर्गाग्रहस्य प्रवृत्तिप्रयोजकत्वनिरासः ।

**किञ्च विशिष्टज्ञानस्य कारणत्वे संभवति अभावरूपस्यासंसर्गाग्रहस्य तत्कारणत्वकल्पने गौरवम् ।**

**यत्र तु काव्यादौ विभावादीनां सहृदयतासहकृतव्यञ्जनया सम्बन्धिविशेषीयत्वेनाप्रतीतौ प्रतीतिरूपा=साधारण्येन प्रतीतिः,**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र विशिष्टज्ञानस्यानुभवविरुद्धतया स्वीयत्वासंसर्गाग्रहमात्रेण स्वीयत्वसंसर्गग्रहप्रयोजनं स्वनिष्ठस्थाय्यभिव्यक्तिरित्यन्यत् । न च ( एवम् ) 'वन्हिना सिञ्च' इत्यादितः प्रवृत्तिरपि स्यात्, बाधज्ञानेन जायमानज्ञानेऽप्रामाण्यशङ्कया जननात्, तच्छून्यज्ञानस्यैव प्रवृत्त्युपयोगित्वेनाक्षतेः, बौद्धस्यैव सर्वत्र बोधविषयत्वेन बाधस्यैवाभावाच्च ।

तदुक्तम्—'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति ।

(रत्न०)—'इदं रजतम्' इति भ्रान्तस्य बाधकालेऽपि असंसर्गाग्रहमात्रेण प्रवृत्तिरिति नैयायिकोक्तं न युक्तम्, असंसर्गाग्रहस्य बाधज्ञानाभावरूपतया तदानीं बाधज्ञानाभावादित्याह—*किञ्चेति । *बाधज्ञानाभावेनेति—विषयाबाधो योग्यता, सा च यत्संसर्गो यत्र पदार्थे येन सम्बन्धेन गृह्यते तेन सम्बन्धेन तत्र तद्वत्त्वम् । तज्ज्ञानञ्च संशयनिश्चयसाधारणं भवत्येव, अन्यथा यस्य न गेहे घटसंसर्गज्ञानं किन्त्वज्ञानमात्रं तस्य 'गेहे घटोऽस्ति' इति वाक्याद् बोधानापत्तिरिति भावः । *एवं वक्तुमिति—बाधज्ञानसत्त्वेऽपि असंसर्गाग्रहमात्रेण प्रवृत्तिरित्येवं वक्तुमित्यर्थः । प्रभाकरमते हि दोषवशादविद्यमानस्यापि रजतत्वेन इदमर्थसंसर्गाभावस्य ज्ञानाभावेनैव तत्र प्रवृत्तिरिति न युक्तमित्याह—*गुरुमतेऽपीति । *दोषेणेति—चक्षूरोगरूपदोषेणेत्यर्थः । *विशिष्टज्ञानस्येति—प्रवृत्तिं प्रतीति शेषः । तथाच विशिष्टबुद्धिरेव स्यादिति पदार्थोपस्थितिमात्रोक्तिरसङ्गतेति भावः । तत्कारणत्वकल्पने = प्रवृत्तिकारणकल्पने । *गौरवमिति—अक्लृप्तकल्पनादिति भावः । अत एव प्रवृत्तिं प्रति अनिष्टसाधनत्वाभावादीनां न हेतुत्वम् ।

ननु बाधसत्त्वेऽप्यन्वयबोधस्वीकारे यत्र पदार्थोपस्थित्यनन्तरं योग्यताविषयकसंशयात्मकं मानसादिज्ञानम्, ततोऽयोग्यतानिश्चयस्तत्राप्यन्वयबोधः स्यादिति चेत्, सत्यम्, बाधनिश्चयकाले तदापत्तिः, तदुत्तरं वा ? नाद्या, विरोधिनिश्चयसामग्र्याः प्रतिबन्धकत्वस्य सर्वसम्मतत्वात् । न द्वितीया, तदानीमन्वयबोधजनिकाया उपस्थितेरेव नाशात् ।

ननु बाधसत्त्वेऽपि विशिष्टज्ञानस्वीकारे नाट्यकाव्यजन्यबोधस्थले

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्बन्धिविशेषराहित्येन विभावादीनां प्रतीतिरुक्ता। तथाहि—

"रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥"
"कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥"
"विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तै र्विभावाद्यैः स्थायीभावो रसः स्मृतः॥"
(काव्यप्र० उल्ला० ४ कारि० ३०–२७–२८)

अयम्भावः—पूर्वोक्ता रत्यादयः = रतिः = अनुकूलेऽर्थे मनस उत्कटावेशः, तदादयः = स्थायिभावाः वासनारूपेण सामाजिकेषु स्थितास्तान् विभावयन्ति = आस्वादयोग्यतां नयन्तीति विभावाः = ललनाऽऽदीनि आलम्बनकारणानि, उद्दीपनकारणानि उद्यानादीनि च। तानेव रत्यादीन् अनुभावयन्ति = अनुभवविषयीकुर्वन्तीत्यनुभावाः = कटाक्षभुजाक्षेपप्रभृतयः। विशेषेणाभितः काये चारयन्ति = पुनः पुनरभिव्यञ्जयन्तीति व्यभिचारिणः = निर्वेदादयः, निर्वेदः = अवमाननं तदादयः। काव्यादिना बोधकाले रामादीनां दर्शनीयचरितानामभावात्, काव्यादिनिबद्धतया, नाट्यनैपुण्येन च कृत्रिमैरेव = अविद्यमानैरेव विभावादिभिर्नर्तके सीतादिविषयिणी अनुरागरूपा रामरतिरविद्यमानाऽपि तस्मिन् स्थितेव प्रतीयमाना सहृदयानाम् = काव्यादिवासनापरिपक्वबुद्धीनां हृदये चमत्कारमर्पयन्ती, विभावादिवशादेव रामादिसम्बन्धराहित्येन रसस्य समूहालम्बनरूपतया विभावादिभिः सहैवाभिव्यज्यमाना सामाजिकानां हृदये रसपदवीमधिरोहति, यथा—असत्यपि सर्पे सर्पतया अवलोकिताद् दाम्नो भीरुदेतीति। सा न सङ्गच्छेत, बाधसत्त्वेऽपि विशिष्टज्ञानस्वीकर्तु र्नये रामादिसम्बन्धिराहित्येन रत्यादीनां प्रतीत्यसम्भवादित्याशङ्कायामाह—*यत्र त्विति। *सहृदयतेति—काव्यार्थवासनापरिपक्वबुद्धितेत्यर्थः। रसानभिज्ञानां तार्किकादीनां रतेरनुदयादिति भावः। *व्यञ्जनयेति—व्यञ्जनावृत्त्येत्यर्थः। *सम्बन्धीति—अयं भावः—लोके कानिचिद्वस्तूनि स्वस्यैव, कानिचित् शत्रोरेव, कानिचित् उदासीनस्य तत्र यदि स्वकीयत्वेन बोद्धुर्विभावादयः प्रतीयेरन्, तर्हि इतरसामाजिक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्निधौ स्वरतिप्रकाशोऽनुचित इति ह्रीरेव स्यात्, न रसास्वादः । शत्रु-सम्बन्धित्वेन प्रतीतौ द्वेषाविर्भाव एव । उदासीनसम्बन्धप्रतीतावपि रसा-स्वादोऽनुभवविरुद्ध एव । तस्मात् सम्बन्धविशेषस्वीकारनिर्णयः, तत्परि-हारनिर्णयश्च नास्तीति 'कामिनी इयम्' इयन्मात्रप्रतीतिर्जायते, अत उक्त-म्—सम्बन्धिविशेषीयत्वेनाप्रतीताविति । ❀साधारण्येनेति — सम्बन्ध-विशेषज्ञानराहित्येनेत्यर्थः । 'प्रतीतिरूपा' इत्यस्यैवार्थः—साधारण्येन प्रती-तिरिति । तत्र = विभावादिस्थले । ❀अनुभवेति—सम्बन्धविशेषप्रतीतौ उक्तरीत्या सामाजिकानां रसास्वादानापत्तिरिति भावः । ❀स्वीयत्वेति—स्वीयत्वरूपो यः संसर्गस्तदभावविषयकज्ञानाभावमात्रेणेत्यर्थः । तेन स्वीय-संसर्गग्रहोऽपि सम्भवतीत्याह—❀स्वीयत्वसंसर्गेति । साधारण्येन विभा-वादीनां ज्ञानात् स्वनिष्ठरत्यादेरभिव्यक्तिरपि फलतीत्याह—❀स्वनिष्ठेति — सामाजिकनिष्ठस्थायिनो रत्यादेरभिव्यक्तिरित्यर्थः । ननु अयोग्येनापि 'वन्हिना सिञ्च' इत्यादिना विशिष्टबुद्धौ प्रवृत्त्यापत्तिरत आह—❀न चेति । ❀तच्छून्येति—अप्रामाण्यज्ञानानास्कन्दितेत्यर्थः । इदमपि शाब्दज्ञानस्य बाह्यवस्तुविषयकत्वमभ्युपेत्य, वस्तुतस्तदेव न इत्याह—❀बौद्धस्यैवेति—बुद्धिस्थस्यैवेत्यर्थः । तथाच शाब्दान्यत्वं बाधप्रतिबन्धकताऽवच्छेदकमिति भावः ❀अभावादिति—विरुद्धज्ञानसत्त्वेन तन्निवृत्तेरिति भावः ।

बाधज्ञानस्य प्रतिबन्धकत्वं निरस्याप्रामाण्यग्राहकत्वसमर्थनम् ।

मू०-वस्तुतो बाधज्ञानं न क्वापि ज्ञाने प्रतिबन्धकम्, तत्का-लेऽपि हि सत्यां सामग्र्यां जायत एव ज्ञानम् । तत्र स्वस्वसामग्रीव-शाद् द्वयोरपि ज्ञानयोर्जातयोर्यत्र ज्ञाने सदोष-सामग्रीजन्यत्वग्रहस्तत्राप्रामाण्यग्रह इत्येव मर्यादा ज्यायसी, यथा 'गेहे घटोऽस्ति' 'गेहे घटो नास्ति' इति परस्परविरुद्धे द्वाभ्यां प्रयुक्ते ।

किञ्चाशुसंचारादलातचक्रं प्रत्यक्षेण दृश्यते, अनेकदिक्कस्य रूपसहचारिणः स्पर्शस्य युगपदग्रहणाद्धेतोरनुमानाद् गम्यते नैत-दस्तीति । अनन्यथासिद्धानुमानाच्च तदभावज्ञाने तेन पूर्वज्ञानस्य भ्रमत्वं कल्प्यत इति 'लटः शतृ' ( पा० सू० ३ । २ । १२४ ) इति सूत्रे भाष्यकैयटयोरुक्तम् । एवञ्च बाधज्ञानकालेऽप्यनुमितिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वीकृता । अत्र 'दृश्यते' 'गम्यते' इति वर्त्तमाननिर्देशाभ्यामुभयो-रेककालिकता सूचिता । अनेकदिक्स्पर्शस्य युगपद्ग्रहणरूपहेतो-र्भ्रम इत्येव तस्मिन्नसम्भवाच्च । प्रत्यक्षस्य प्रबलत्वे त्वनुमितौ भ्रम-त्वकल्पनम् । एवञ्च बाधस्य हेत्वाभासत्वमप्युपपन्नम्, अनुमितौ तेनाप्रामाण्यग्रहस्य जननात् ( एवमन्यत्राप्यूह्यम् ) ।

(रत्न०)—शङ्खे सत्यपि पीतत्वाभावनिश्चये 'शङ्खः पीतः' इति बोधोदयाद् बाधज्ञानस्य प्रतिबन्धकत्वं न सम्भवति इत्याह—*वस्तुत इति—किञ्च—योग्यताज्ञानस्य संशयनिश्चयसाधारणज्ञानत्वेनैव कारण-तया यस्य गेहे घटसंशयस्तस्य 'गेहे घटः' इति वाक्याद् बोधानापत्तिः । *न क्वापीति—अयं भावः—यत्र तद्वत्ताभानप्रयोजकसामग्री, तदभाव-वत्ताभानप्रयोजकसामग्री च तत्र संशयात्मकमेव ज्ञानं जायते । यत्र चैककोटिभासिकैव सामग्री तत्र कोट्यन्तरभानप्रयोजकसामग्र्यभावात् कोट्यन्तरभानं नोत्पद्यते । अथोपनायकज्ञानात् = ग्राह्यवत्ताज्ञानात् पूर्वं बाधाभावस्य सत्त्वात् 'भूतलं घटवत्' इति लौकिकप्रत्यक्षकालेऽपि 'भूतलं घटाभाववत्' इत्याकारकोपनीतभानसामग्र्यस्त्येवेति, चेन्न, एक-कोटिकभानं प्रति अपरकोटिकलौकिकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वात् । न च तस्याः प्रतिबन्धकत्वे मानाभावः, बाधसत्त्वेऽपि लौकिकस-न्निकर्षजन्यसंशयनिरासाय तादृशप्रतिबन्धकत्वस्यावश्यकत्वात् । तत्काले-ऽपि = बाधकालेऽपि । स्वस्वसामग्रीवशात् = घट–तदभावभासक-सामग्रीवशात् । *द्वयोरिति—'घटवद् भूतलम्' 'घटाभाववद् भूतलम्' इति ज्ञानयोरित्यर्थः । *ज्यायसीति—प्रतिबन्ध्यप्रतिबन्धकभावाकल्पनेन लाघवादिति भावः । *गेहे घट इति—संशयात्मकयोग्यताज्ञानस्य सत्त्वाद् उभयप्रकारकमपि ज्ञानं जायत एवेति भावः ।

यत्तु—तत्र संशय एव, न बोधः, ततो विशेषदर्शनान्निश्चय इति, तन्न, बोधं विना संशयासम्भवात् । किन्तु विशेषदर्शने सत्यन्यतरस्मिन्नप्रा-माण्यज्ञानमेव जायते ।

*विरुद्ध इति—विरुद्धार्थक इत्यर्थः । *प्रयुक्त इति—'वाक्ये' इति शेषः । यद्वा प्रथमाऽन्तमेतत् । अस्य 'यत्र स्तः' 'तत्र'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति शेषः । सदोषसामग्रीजन्यज्ञानस्याप्रामाण्ये भाष्यं प्रमाणयति—*किञ्चेति । *आशुसंचारादिति—शीघ्रतया परितः संचाराच्चक्रभ्रान्तिरुत्पद्यत इत्यर्थः । *अलात इति—उभयोरग्रभागयोरग्निविशिष्टो दण्डोऽलातमित्युच्यते । अलातं चक्रमिवेत्यलातचक्रम् । *रूपसहचारिण इति—शुक्लभास्वररूपव्यापकस्येत्यर्थः । तेन तमसो रूपवत्त्वेऽपि न क्षतिः, तत्र तादृशरूपाभावात् । अनेकदिक्कस्पर्शस्य युगपद्ग्रहणाभावादनुमानेन प्रत्यक्षं बाधत इति भावः। *स्पर्शस्येति—यत्तु–'उद्भूतस्पर्शस्येत्यर्थः। एतेन दीपप्रभास्थले युगपदनेकदिग्वृत्तिरूपग्रहणसत्त्वाद् युगपदनेकदिग्वृत्तिस्पर्शस्य चाग्रहणेऽपि न क्षतिः' इति, तच्चिन्त्यम्, यथाश्रुतेऽपि दोषाप्रतीतेः, व्यापकत्वहानेश्च । *अनुमानादिति—अनुमानप्रयोगश्च–अलातचक्रम्, युगपत् सर्वदिग्वृत्तिरूपज्ञानीयविषयत्वाभाववत्, युगपत्सर्वदिग्वृत्तिस्पर्शज्ञानीयविषयत्वाभावात् । *अनन्यथेति—सद्धेतुसिद्धेरित्यर्थः । एतेन तादृशप्रत्यक्षस्य दोषप्रयोज्यत्वं सूचितम् । *पूर्वज्ञानस्येति—सर्वदिग्वृत्तिरूपज्ञानस्येत्यर्थः । *भाष्यकैयटयोरिति—"भवति वै प्रत्यक्षादप्यनुमानबलीयस्त्वम्, तद्यथा—अलातचक्रं प्रत्यक्षं दृश्यते, अनुमानाच्च गम्यते नैतदस्तीति" इति भाष्यम् ।०अत्र कैयटः—"*तद्यथेति—आशुसंचाराच्चक्रभ्रान्तिरुत्पद्यते, रूपसहचारिणस्तु स्पर्शस्यानेकदिक्कस्य युगपदग्रहणादनन्यथासिद्धानुमानेन प्रत्यक्षाभासो बाध्यते । तदुक्तं हरिणा—

स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य सन्ततः ।
न तथाऽलातचक्रस्य विच्छिन्नं स्पृश्यते (दृश्यते) हि तत् ॥
इति" ॥ (वाक्यप० कां० २ कारि० २९३ । ) इति ।

गौतमोऽपि—"अलातचक्रदर्शनवत् तदुपलब्धिराशु संचारात् ।" (न्यायद०अ०३–आह्नि०२)अयं भावः–'अयं छात्रोऽधीते' 'व्रजति' 'कमण्डलुं धारयति' 'पन्थानं पश्यति' 'शृणोत्यारण्यजान् शब्दान्' इति क्रियाणां क्रमाप्रतीतेः युगपदासां दर्शनान्मनसो बहुत्वं प्राप्नोतीत्याशङ्क्य खण्डयति–*अलातेति—अलातचक्रं युगपत्सर्वदिग्वृत्त्यपि शीघ्रतया भ्रमणात् युगपत्=एककालावच्छेदेन सर्वदिग्वृत्तित्वेनोपलभ्यते तत्र क्रमस्य सत्त्वेऽप्याशुसंचारात् क्रमो न गृह्यते, तथा मनस आशुसंचारादेव क्रियाणाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेकासां यौगपद्योपलब्धिर्भवति, वस्तुतस्तु न क्रियाणां यौगपद्यम्, येन मनसो बहुत्वं सिध्येदिति दिक्। *एवञ्चेति—बाधज्ञानस्य क्वापि ज्ञाने प्रतिबन्धकत्वाभावे चेत्यर्थः। अत्र = भाष्ये। उभयोः = प्रत्यक्षानुमानयोः। *भ्रम इति—प्रत्यक्षज्ञानमिति शेषः। तस्मिन् = अलातचक्रे भ्रमति सति। *प्रबलत्वे इति—दोषाजन्यत्वेनेति भावः। एवम् = एकज्ञानेनापरज्ञाने भ्रमत्वकल्पने। बाधस्य = पक्षे साध्याभावात्मकस्य। *हेत्वाभासत्वमिति—असन्दिग्धाप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयिताऽनुमिति-तत्करणान्यतरनिष्ठप्रतिबन्ध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्तिस्तत्त्वरूपमित्यर्थः। 'ह्रदो वह्न्यभाववान्' इति निश्चयेन 'ह्रदो वह्निमान्' इत्यनुमितेर्भ्रमत्वकल्पनादिति भावः।

ननु ह्रदे वस्तुतो धूमस्याभावात् 'ह्रदो वह्न्यभाववान् धूमात्' इत्यत्र पक्षे व्याप्यहेतुमत्ताज्ञानरूपपरामर्शप्रतिबन्धिका पक्षे व्याप्यत्वाभिमतस्याभावरूपा स्वरूपासिद्धिरेव दोषोऽस्तु, न बाधरूप इति, चेन्न, 'वह्निव्याप्यधूमवान्' इति भ्रमात्मकपरामर्शसत्त्वे स्वरूपासिद्धेरभावेन बाधस्य दूषकतायाः 'धूमवान् ह्रदः' इत्यत्र आवश्यकत्वात्।

ननु वह्निव्याप्यधूमवतो ज्ञानकाले 'ह्रदो वह्न्यभाववान्' इति बाधज्ञानं न स्यात् इति, चेन्न, शब्दजन्यतद्वत्ताबुद्ध्यनन्तरं लौकिकसन्निकर्षजन्यतदभाववत्ताबुद्धेरानुभविकत्वाल्लौकिकसन्निकर्षाजन्यज्ञानस्यैव प्रतिबन्ध्यत्वात्। एवञ्च बाधस्थले आनुमानिकवह्निव्याप्यवत्तासत्त्वेऽपि इन्द्रियसन्निकर्षजन्यवह्न्यभाववत्ताज्ञानोदये बाधकाभावः। *अनुमिताविति—'वह्निमान् ह्रदः' इत्याद्यनुमितावित्यर्थः। तेन = बाधज्ञानेन। अप्रामाण्यग्रहस्य = 'ह्रदो वह्निमान्' इत्याकारकं ज्ञानमप्रमेत्येवंरूपस्य। *अन्यत्रेति—इदं बहुत्र न दृश्यते।

**मू०—वस्तुतः साध्यबाधो न हेत्वाभासः, सर्वसाधारणबाधबुद्धिप्रतिबन्धकतयैव निर्वाहेण तस्य विशिष्य हेत्वाभासेषु ग्रहणानौचित्यात्। किन्तु हेतुबाधज्ञा(भा)नस्यैव तत्त्वमुचितम्। उक्तञ्च—न्यायभाष्यवार्त्तिककाराभ्यां तथैव।**

**किञ्च 'इदं रजतम्' इति भ्रमोत्तरं जायमानस्य 'नेदं रजतम्'**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति बाधज्ञानस्य रजतज्ञाननिष्ठाप्रामाण्यज्ञानं प्रति कारणताऽवश्यं वाच्या । एवं स्फटिके रक्तत्वाभावज्ञानस्य सोपाधिकतद्रक्तत्वज्ञाने तत्कारणताऽवश्यं वाच्या । एवञ्च सर्वत्र तथैवास्तु किं द्वयकल्पनेन ?, यत्र तु लोकप्रसिद्ध्याऽर्थस्य बाधितत्वज्ञानं तत्र तेनैव जायमानज्ञानेऽप्रामाण्यग्रहः, यथा 'वह्निना सिञ्चति' इत्यादौ ।

(रत्न०)—साध्यबाधस्य हेत्वाभासत्वं खण्डयति—*वस्तुत इति । साध्यबाधः = 'वह्न्यभाववान् ह्रदः' इत्यादिरूपः । *हेत्वाभास इति—हेतोराभासो हेत्वाभासः हेतुदोष इत्यर्थः । ननु वह्न्यभाववद्ह्रद्रूपबाधस्य धूमरूपहेत्ववृत्तित्वात्कथं हेतुदोषत्वमिति चेत्, सत्यम्, 'वह्न्यभाववान् ह्रदो धूमश्च' इति समूहालम्बनात्मकज्ञानमादाय स्वविषयकज्ञानविषयत्वसम्बन्धेन विशिष्टह्रदरूपबाधस्य धूमे सत्त्वात् । *सर्वसाधारणेति—प्रत्यक्षादिस्थलेऽपि तदभाववत्तानिश्चयस्य सामान्यतस्तद्वत्ताज्ञानं प्रति प्रतिबन्धकत्वस्य क्लृप्ततया तेनैव निर्वाहे अनुमितित्वावच्छिन्नं प्रति स्वातन्त्र्येण बाधज्ञानस्य प्रतिबन्धकत्वकल्पनया हेत्वाभासत्वाश्रयणं निष्फलमिति भावः । तस्य = बाधस्य । विशिष्य = अनुमितिमात्रं प्रति ।

यत्तु—संशयनिश्चयसाधारणं पक्षे साध्यसंसर्गज्ञानमनुमितौ कारणम्, इति अनुमितिकारणीभूतसाध्यसंसर्गज्ञानप्रतिबन्धकतया बाधस्य हेत्वाभासत्वमिति, तन्न, साध्यसंशयं विनाऽपि सिद्धिसत्त्वे सिषाधयिषया अनुमितिदर्शनात् । *हेतुबाधेति—'वह्निमान् ह्रदः' इत्याकारकानुमितिं प्रति 'धूमाभाववान् ह्रदः' इति हेत्वभावज्ञानस्येत्यर्थः । अस्य ग्राह्याभावविधया प्रतिबन्धकत्वासम्भवात् परामर्शविघटकत्वेन प्रतिबन्धकत्वम् । * न्यायभाष्येति—भाष्यवार्तिकयोरेतादृशविचारानुपलब्धेश्चिन्त्यमिदम् । नैयायिकादेरपि मदुक्तप्रकारं विना न गतिरित्याह—*किञ्चेति । *रजतज्ञानेति—'इदं रजतम्' इति ज्ञाननिष्ठं यत् 'इदं ज्ञानमप्रमा' इत्याकारकम् अप्रामाण्यज्ञानं तत्प्रतीत्यर्थः । ज्ञाने ज्ञाननिष्ठत्वञ्च विषयतया । यद्वा—उक्तज्ञाननिष्ठं यदप्रामाण्यं तद्विषयकज्ञानं प्रतीत्यर्थः । *अवश्यमिति—क्रमेणोभयोर्ज्ञानयोर्दर्शनात्प्रतिबन्ध्यप्रतिबन्धकभावासम्भवाद् अप्रामाण्यज्ञानस्य च सम्भवादिति भावः । एवम् = पूर्ववत् । * सोपाधिकेति—जपाकुसुमरूपोपाधि-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केत्यर्थः । तद्रक्तत्वज्ञाने = स्फटिकरक्तत्वज्ञाने । ॐतत्कारणतेति—रक्तत्वज्ञाननिष्ठाप्रामाण्यज्ञानकारणतेत्यर्थः। ॐएवञ्चेति—उक्तस्थलेऽप्रामाण्यज्ञानकारणताया आवश्यकत्वे चेत्यर्थः। सर्वत्र = अयोग्यताऽऽदिज्ञानस्थलेऽपि । तथैव = अप्रामाण्यज्ञानकारणतैव । ॐद्वयेति—कचित् प्रतिबन्धकत्वस्य, कचिदप्रामाण्यज्ञानजनकत्वस्य च कल्पने गौरवमिति भावः । ननु 'वह्निना सिञ्चति' इत्यत्र ज्ञानद्वयाभावादप्रामाण्यज्ञानासम्भवोऽत आह—ॐयत्र त्विति। लोकप्रसिद्ध्या = अधिकजनवेद्यतया। अर्थस्य = वह्निनिष्ठसेककरणत्वस्य। बाधितत्वज्ञानम् = अभावप्रतियोगितया ज्ञानम्। तेनैव = लोकप्रसिद्धिजन्यबाधज्ञानेनैव। जायमानज्ञाने = वह्निनिष्ठसेककरणत्वज्ञाने।

**मू०—न च गालिदानादिस्थले बाधज्ञानेन तत्राप्रामाण्यग्रहे दुःखाद्यनुपपत्तिरिति वाच्यम्, ततो दुःखाभावेऽपि व्यञ्जनया जायमानेन तद्दुष्टत्वादिज्ञानेन तदुपपत्तेः। व्यञ्जनाजन्यज्ञाने तु न बाधज्ञानेनाप्रामाण्यज्ञानमिति स्पष्टं काव्यप्रकाशादौ ।**

**यद्वा तत्र तम उद्रेकेण प्राथमिकबोधेऽपि नाप्रामाण्यग्रहः। एवञ्च योग्यताज्ञानं प्रवृत्त्याद्युपयोगियोग्यतासंदेहादि (ना) प्रसक्ताप्रामाण्यज्ञानाभावविशिष्टबोधजनकम्, विशेषणीभूताभावप्रतियोगिप्रतिबन्धकतयेति बोध्यम्। लक्षणामूलमपि शक्यार्थबोधे विषयबाधज्ञानजन्यमप्रामाण्यज्ञानमेवेत्यलम् ।**

(रत्न०)—बाधज्ञानेनाप्रामाण्यज्ञानजनने दोषमाशङ्क्य निरस्यति—ॐन चेति—गालिवाक्यबोध्यार्थस्य वस्तुतस्तत्राभावेन बाधज्ञानस्य तत्र सत्त्वादिति भावः। तत्र = गालिदानवाक्यजन्यज्ञाने। ॐदुःखानुपपत्तिरिति—गालिवाक्यबोध्यार्थस्य वस्तुतस्तत्राभावादसतश्च दुःखानुत्पादकत्वादिति भावः । ततः = गालिवाक्यतः । तद्दुष्टत्वज्ञानेन = गालिदानोद्देश्यव्यक्तिदुष्टत्वज्ञानेन। तदुपपत्तेः = दुःखोपपत्तेः। ॐकाव्यप्रकाशादाविति—

"सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।
विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥"

(काव्यप्र० उल्ला०२ कारि० ११)

यत्र वाक्ये विषयी = गवादिः, विषयः = वाहीकादिश्च सामानाधि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करण्येन उक्तौ स्तः, यथा—'गौर्वाहीकः' सा सारोपा लक्षणा । अन्यस्मिन् = विषये वाहीकादौ । विषयिणा = गवादिना । अन्तः कृते = विषयवाचकगवादिपदेनानुक्ते यथा—'गौरयम्' अत्र साध्यवसाना लक्षणा । "अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः, सर्वथैवाभेदावगमश्च प्रयोजनम्" इत्युक्तं प्रकाशकृता । अत्रोद्द्योतकारः—'लक्षणास्थले शक्यताऽवच्छेदकारोपेण शक्यताऽवच्छेदकप्रकारकतीरादिबोधः । नचारोपितगङ्गात्वेन बोधे तज्ज्ञानस्य भ्रमत्वाद् गङ्गागतशैत्यपावनत्वादिप्रतीतिरूपं प्रयोजनं न सिध्येदिति वाच्यम्, मध्ये व्यञ्जनया मुख्यगङ्गापदार्थाभेदस्य प्रतीतेः । व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रहः" इति ।

ननूक्तस्थले व्यञ्जनाजन्यदुष्टत्वज्ञानस्य दुःखोत्पादकत्वकल्पने गौरवमित्यरुचेराह—*यद्वेति । तत्र = गालिदानस्थले । *तम इति—दैववशादुपस्थिततमोगुणवर्धकसामग्र्या तमसः सत्त्वरजसोरभिभवपूर्वकाविर्भावेणेत्यर्थः । प्राथमिकबोधे = गालिवाक्यजन्यबोधे । नैयायिकमते शाब्दे योग्यताज्ञानं कारणम्, 'अयोग्यतानिश्चयः प्रतिबन्धकः' इत्युक्तम्, तत्र प्रतिबन्धकत्वं निरस्य योग्यताज्ञानस्य कारणत्वं कथञ्चित्समर्थयते—*एवमिति—बाधनिश्चयस्य सर्वथा प्रतिबन्धकत्वाभावे इत्यर्थः । *योग्यताज्ञानमिति—अस्य 'बोधजनकम्' इत्यत्रान्वयः । *प्रवृत्त्यादीति—अस्याभावविशिष्टबोधेऽन्वयः, आदिना—दुःखादेः संग्रहः । *सन्देहादीति—आदिना—अयोग्यतानिश्चयः संगृह्यते । अस्य च प्रसक्तपदार्थैकदेशे प्रसक्तौ प्रयोज्यतयाऽन्वयः । तथाच—योग्यतासन्देहादिप्रयोज्या या प्रसक्तिस्तद्विशिष्टं यदप्रमाण्यज्ञानम्—'जलं सेकनिरूपितकरणत्ववत्', इति ज्ञानमप्रमा तदभावविशिष्टो यो बोधः—'जलं सेकनिरूपितकरणत्ववत्' इदं ज्ञानं प्रमा इत्याकारकः, तथाच प्रवृत्त्याद्युपयोगी यः योग्यतासन्देहादिप्रसक्ताप्रामाण्यज्ञानाभावविशिष्टो बोधस्तज्जनकं योग्यताज्ञानमिति स्पष्टोऽर्थः । *विशेषणीभूतेति—उक्तबोधे विशेषणीभूतो योऽप्रामाण्यज्ञानाभावस्तत्प्रतियोगि यदप्रामाण्यज्ञानम्—'जलं सेकनिरूपितकरणत्ववत्' इदं ज्ञानमप्रमा इत्याकारकं तत्प्रतिबन्धकतयैव योग्यताज्ञानस्य शाब्दबोधजनकत्वव्यवहार इति भावः । एवञ्च योग्यताज्ञानस्य अप्रामाण्यज्ञानप्रतिबन्धकत्वमूलक एव शाब्दबोधकारणत्वव्यवहारः प्राचामिति बोध्यम् । नन्वेवं बाधनिश्चयस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिबन्धकत्वाभावे 'गङ्गायां घोषः' इत्यादौ लक्षणाऽनुपपत्तिः, तत्प्रतिबन्धकतयैव बोधाभावप्रसक्त्या लक्षणास्वीकारादिति, चेत्, तत्राह—*लक्षणामूलमिति । *शक्यार्थेति— गङ्गाऽऽदिनिष्ठं यद् घोषादिनिरूपिताधिकरणत्वादिकं तद्विषयकबोधे इत्यर्थः । *विषयबाधेति—विषयस्य = घोषादिनिरूपिताधिकरणत्वादे र्यो बाधः—'घोषादिनिरूपिताधिकरणत्वाभाववान् प्रवाहः' इत्याकारकस्तद्विषयकं यज्ज्ञानं तज्जन्यं यदप्रामाण्यज्ञानम्—'प्रवाहो घोषनिरूपिताधिकरणत्ववान्' इदं ज्ञानमप्रमा, इत्याकारकं तदेव लक्षणामूलमिति भावः । एवञ्च सर्वं समञ्जसमित्याह—*अलमिति—एतेन लक्षणानिरूपणेऽप्युक्तमिति सूचितम् ।

**मू०—परे तु—'अन्वयप्रयोजक (रूप) समभिव्याहृतकार्यशक्तिमत्त्वं योग्यता । सा च शाब्दबोधे भासते । अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्यैव जलाहरणशक्तिमत्त्वेन सच्छिद्रेतरत्वप्रकारको बोधः । अत एव प्रतिनिधेः श्रौतत्वोपपत्तिः । यथा 'खादिरे बध्नाति' इत्यादावस्वातन्त्र्यफलकसंयोगविशेषरूपबन्धनसमर्थखादिरालाभेऽन्यः प्रतिनिधिरुपादीयते, अतस्तत्र तादृशबन्धनसामर्थ्यवत्त्वेन खादिरबोधोऽवश्यमभ्युपेयः । एवञ्च खादिरबाधेऽपि तत्सामर्थ्यत्यागे मानाभावात्तदुपपत्तिः । अन्यथा खादिरस्यासामर्थ्ये बन्धनलोप एव स्यात् ।**

शक्तिविशेषरूपा योग्यता तस्याश्च शाब्दे भानद्वारा-प्रतिनिधेः श्रौतत्वोपपादनम् ।

( रत्न० )—प्रभाकरसम्मतहर्य्यादिसिद्धान्तमाह—*परे त्विति । योग्यतास्वरूपमाह — *अन्वयप्रयोजकेति—अन्वयस्य = शाब्दबोधस्य प्रयोजिका या समभिव्याहृतपदबोध्यकार्य्यनिरूपिताशक्तिस्तद्वत्त्वम् = तादृशीशक्तिर्योग्यतेत्यर्थः । घटादौ जलाहरणशक्तिरेव योग्यतेति भावः । यथा—घटादिप्रत्यक्षं प्रति रूपादेर्विषयविधया कारणत्वं तथा योग्यताऽपि विषयविधया कारणमित्याह—*सा चेति—यथा घटादीनां शाब्दबोधविषयत्वं तथा योग्यताया अपीति भावः । अत एव योग्यतायाः शाब्दविषयत्वादेव । *सच्छिद्रेति—सच्छिद्रेण घटादिना जलानयनासंभवात्, योग्यतायाश्च शाब्दविषयत्वात्सच्छिद्रेतरत्वरूपयोग्यताप्रकारक एव बोध

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति भावः । अत एव = शक्तिरूपयोग्यतायाः शाब्दविषयत्वादेव । *श्रौतत्वेति—'व्रीहिभिर्यजेत' इत्यादिश्रुतिजन्यशाब्दबोधविषयत्वोपपत्तिरित्यर्थः । तत्र श्रुतौ "केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम्" इति हर्य्युक्तरीत्या व्रीहित्वसहचरितशक्तेरेव श्रुत्या यागसाधनतया बोधितत्वेन नीवारादीनामपि तादृशशक्तिमत्तया यागसाधनत्वे तेषामपि श्रौतत्वमिति भावः । शक्तिश्चादृष्टसाधनत्वरूपैव, साऽपि योग्यतैवेति तत्त्वम् । *खादिर इति—यागे पशोः स्वातन्त्र्येण यत्र कुत्रचिद् गमनं मा भूदिति कुत्रचित् शङ्कौ बन्धनं प्राप्तम्, तत्र खादिरश्रुतिर्नियमार्था—'खादिरशङ्कावेव बन्धनं कर्तव्यं नान्यत्र' इति तत्र खादिरालाभे नित्यकर्मणः, प्रारब्धकाम्यस्य च कर्मणो लोपो मा भूदिति अन्यः प्रतिनिधिरुपादीयते । तथाच खादिरत्वसहचरितशक्तिमतो बन्धनसाधनत्वं श्रुत्या बोध्यत इति खादिरत्वांशस्य बाधेऽपि प्रतिनिधेः श्रौतत्वोपपत्तिरिति भावः । अन्यथा = प्रतिनिधेरनुपादाने । *असामर्थ्ये इति—जीर्णतया बन्धनशक्तेरभावे इत्यर्थः । ननु बन्धनस्यैव तत्र बाधोऽस्त्विति, चेन्न, तस्य प्रधानतया बाधायोगात् । खादिरत्वस्य च गुणतया बाधेऽपि क्षत्यभावात् । न च 'स्रुचः समार्ष्टि' इत्यत्र द्वितीयाश्रुत्या स्रुचां प्राधान्यमिति सिद्धान्तविरोधः, द्रव्यसंस्कारककर्मण एव गुणतया स्रुचां प्राधान्याबाधात् । एवञ्च दृष्टोपकारजनकत्वाभावात्संमार्जनस्याप्राधान्यमिति नादरणीयम् ।

मू०—सर्वत्र प्रवृत्तिनिमित्तं स्वाश्रयनिष्ठसमभिव्याहृतकार्यशक्तेरप्युपलक्षणम्, इति तस्या अपि प्रवृत्तिनिमित्तसामानाधिकरण्येन बोधे भानम् । एवञ्चोपलक्षकजात्यवच्छिन्नस्याशक्ततया त्यागेऽपि उपलक्ष्यशक्तित्यागस्यानौचित्यादन्यगता सा गृह्यते, सादृश्येन तत्रापि तत्त्वबुद्धेः । किञ्च-घटत्वेन सच्छिद्रेतरव्यक्तिविशेषस्यैवभानमित्यङ्गीकारे लक्षणाऽऽपत्तिः । 'सामान्यरूपेण विशेषबोधेऽपि लक्षणा' इत्यर्थस्य 'त्वामस्मि वच्मि' इत्युदाहरणे काव्यप्रकाशकृता स्पष्टमुक्तत्वात् । तदुक्तं हरिणा—

"केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम् ।
खादिरादिष्वशक्तेषु जातिः प्रतिनिधीयते ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्वातन्त्र्यफलो बन्धः प्रमाणादौ च शिष्यते ।
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ॥"

( वाक्यप० कां० ३ कारि० ३-४ )

इति केषाञ्चित्=जातिशक्तिवादिनाम् । प्रमाणम्=हिंसा, शुद्धव्यक्तिशक्तिवादेऽपि वस्तुगत्या जातिशक्तिविशिष्टा केवला व्यक्तिः शक्येति न दोष इति बोध्यमित्याहुः ।

( रत्न० )—सर्वत्र = 'खादिरे बध्नाति' इत्यादौ । ❀स्वाश्रयेति—स्वम् = प्रवृत्तिनिमित्तम्, तदाश्रयनिष्ठा समभिव्याहृतकार्यनिरूपिता या शक्तिस्तस्या अप्युपलक्षणमित्यर्थः । तस्याः = शक्तेः । एवम् = प्रवृत्तिनिमित्तस्य शक्तेरप्युपलक्षणत्वे । उपलक्षकजात्यवच्छिन्नस्य = खादिरत्वादिजात्यवच्छिन्नस्य । ❀अशक्ततयेति—जीर्णत्वादिदोषेणेति भावः । ❀उपलक्ष्येति—कार्यसाधनत्वशक्तेस्त्यागोऽनुचित इति भावः । ❀अन्यगतेति—खादिरसदृशबार्बुरादिगतेत्यर्थः । सादृश्येन = वर्णादिकृतसादृश्येन । तत्त्वबुद्धेः = खादिरत्वादिबुद्धेः । ननु 'घटेन जलमाहर' इत्यादौ सामान्यरूपेण विशेषभानेनैव निर्वाहे शक्तिरूपयोग्यतायाः शाब्दे भानं निष्फलम्, 'खादिरे बध्नाति' इत्यादौ प्रतिनिधेः श्रौतत्वोपपत्तिरपि अपूर्वसाधनत्वरूपशक्तिविशिष्टे लक्षणया स्यादत आह—❀किञ्चेति । ❀लक्षणाऽऽपत्तिरिति—शक्त्यैव निर्वाहे लक्षणाश्रयणमयुक्तमिति भावः । ❀विशेषबोध इति—व्यक्तिविशेषबोध इत्यर्थः । ❀उक्तत्वादिति—

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥"

( काव्यप्र० उल्ला० ४ कारि० २४ )

अस्या अर्थः—यत्र ध्वनौ = उत्तमकाव्ये । वाच्यम् = शक्त्या बोध्यम् । अर्थस्वरूपम् अविवक्षितम् = अप्रयुक्तम्, अन्वयायोग्यं वा । तत्र वाच्यं यदि अर्थान्तरे = वाच्यलक्ष्यसाधारणेऽर्थे संक्रमितम् = परिणमितम् । अत्यन्तं तिरस्कृतम् = त्यक्तं वा भवेत् तदा स अविवक्षितवाच्यो ध्वनिः । अयं भावः—काव्यं द्विविधम् = लक्षणामूलकम्, अभिधामूलकञ्च, तत्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्यम्—अविवक्षितवाच्यम्, द्वितीयम्—अविवक्षितान्यपरवाच्यम्। तत्राविवक्षितवाच्ये वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे संक्रमितम्, यथा—

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥"

अत्र वचनादि उपदेशादिरूपतया परिणमति" इति प्रकाशः। अत्रोपदेशादेरपि वचनादिरूपतया वचनत्वादिरूपसामान्यधर्मेण विशेषोक्तिरेवेति भावः। ननु जातिशक्तिवादिनये जातौ बन्धनाद्यन्वयासम्भवाद् व्यक्तेराक्षेपेणोपपत्तावपि प्रतिनिधेर्ग्रहणमयुक्तमित्याशङ्कायामाह—*केषाञ्चित्साहचर्य्येणेति—साहचर्य्येण = एकस्मिन् खादिरादिरूपेऽर्थे समवायादिना सामानाधिकरण्येन। जातिः = खादिरत्वादिः। 'खादिरे बध्नाति' इत्यादौ खादिरत्वादिजातिः स्वाधिकरणवृत्ति र्या बन्धनयोग्यतारूपा शक्तिस्तस्या उपलक्षणम्, अन्यथा खादिरस्यालाभे, जीर्णत्वादिना बन्धनायोग्यत्वे वा कर्मलोप एव स्यादिति भावस्तदाह—*खादिरादिष्वशक्तेष्विति। जातिः = बदरत्वादिः। प्रतिनिधीयते = प्रतिनिधिः क्रियते। गुणीभूतखादिरत्वस्य बाधेऽपि प्रधानीभूतबन्धनक्रियाऽनुकूलशक्तेर्न बाधः, काकादिपदे दध्युपघातकादेरिव तत्र जातेः शक्त्युपलक्षणत्वात्। न चैवं श्रुतिविहितगवादेरप्यलाभे महिषादेरपि प्रतिनिधित्वप्रसङ्गः, चोदितप्रतिनिधिविषये एव उपलक्षणस्येष्टत्वात्। यत्तु—कुसुमाञ्जलौ प्रथमस्तवके—

"संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः"।

इत्युक्त्वा 'यथा हि देवताविशेषोद्देशेन हुताशने हविराहुतयः समन्त्राः प्रयुक्ताः पुरुषमभिसंस्कुर्वते, तथा व्रीह्याद्युद्देशेन प्रयुज्यमानः प्रोक्षणादिः पुरुषमेव संस्कुरुते, इत्युक्तम्। तथाच पुरुषगतादृष्टम्प्रति प्रोक्षितव्रीहेः कारणत्वम्, इति तदभिमतं प्रतीयते, तन्न, व्रीहित्वजातेः शक्त्यनुपलक्षणत्वे प्रतिनिधिग्रहणानापत्तेः। ननु जातिशक्तिनयेऽपि प्रतिनिधे र्ग्रहणे मानाभावोऽत आह—*अस्वातन्त्र्येति। प्रमाणादौ = हिंसादौ, मीञ्—हिंसायामित्युक्तेः। पशोर्बन्धः अस्वातन्त्र्यफलः तत्फलञ्च—शक्तिविशिष्टे एव खादिरादौ स्यान्नासमर्थे इति खादिरत्वादिजात्यभिधानेऽपि शक्तेरुपलक्षणत्वं स्वीकार्य्यमिति भावः। अयं भावः—जातेः शक्त्युपलक्षणत्वाभावेऽपि प्रातिपदिकार्थभूताया जातेर्गुणत्वात्प्रधानबन्धनक्रियाऽननुकूलत्वात्प्रतिनिधिरेव जाति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तिवादिना उपादेयः, तथात्वे हिंसा-त्यागादेरुपपत्तिः । अन्यथा यागादेरसिद्धिरिति । *शुद्धव्यक्तीति—जातिरहितव्यक्तीत्यर्थः । हरिणा—जातिः, जातिविशिष्टा व्यक्तिः, केवला व्यक्तिः शक्या इति मतत्रये निर्वाहे प्रदर्शितेऽपि तुर्य्यमतमनुसृत्य निर्वाहाप्रदर्शनान्न्यूनतां परिहर्तुमाह—*जातिशक्तिविशिष्टेति —जात्य-दृष्टसाधनत्वशक्त्युभयविशिष्टेत्यर्थः । इति योग्यता ।

**मू०—आसत्तिरपि मन्दस्याविलम्बेन शाब्दबोधे कारणम् । सा चान्वयप्रतियोगिपदार्थानाम्, तद्बोधकपदानां चाव्यवधानेन† प्राथमिकोपस्थितिरूपा, काव्ये, अन्यत्र च सर्वान् प्रति प्रायेण तादृशबुद्धेरेव वक्तुरुद्देश्यत्वात् । अनासन्नस्थले योजनावाक्यान्मन्दस्य बोधेऽपि विलम्बोऽस्त्येव ।**

**न च 'अस्मात्पदादयमर्थो बुद्धः' इत्यनुभवो विरुध्येतेति वाच्यम्, योजनावाक्यसम्पादनद्वारा (रेण) त (अ) स्यापि बोधे उपयोगेनादोषात् । अमन्दस्य तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षाज्ञानवतो बोधो विलम्बेनैव भवति, इति न तद्बोधे तस्याः कारणत्वम् । ध्वनितं चेदम् 'न पदान्त' इति सूत्रे ( पा० सू० १।१।५८ ) भाष्ये ।**

**वस्तुतो योजनावाक्यकल्पना व्यर्था, तत्कल्पकाकाङ्क्षादिना अर्थयोजनाकल्पनस्यैवोचितत्वात्† । परन्तु मन्दस्य सा विलम्बेन, अमन्दस्य तु सा शीघ्रमित्येवोचितम् ।**

(रत्न०)—प्राचीनाभिमतासत्तेः कारणतामनुसृत्याह—*आसत्तिरपीति । *मन्दस्येति—एतेनासत्तेः शाब्दबोधे कारणत्वाभावः सूचितः । *अविलम्बेनेति—एतेन मन्दस्यापि विलम्बेन बोधे कारणत्वाभाव एव, अमन्दस्य बोधे तु नैवासत्तिः कारणमिति भावः । सा च = आसत्तिश्च †। *अन्वयप्रतियोगीति—अन्वयः = सम्बन्धस्तस्य प्रतियोगिनोऽनुयोगिनश्च ये पदार्थाः, प्रतियोगिपदस्यानुयोगिनोऽप्युपलक्षकत्वात् । तेषामर्थानां

† अव्यवधानेनेति क्वचित्पाठः । † औचित्यादिति पाठान्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्बोधकपदानाञ्च कालाधिक्येन, प्रकृतानुपयोगिपदार्थोपस्थित्या च यद्व्यवधानं तदभावजन्या या प्राथमिकोपस्थितिस्तद्रूपाऽऽसत्ति † रित्यर्थः। उपस्थितौ प्राथमिकत्वञ्च—योजनावाक्यप्रयोज्योपस्थित्यपेक्षया पूर्वकालिकत्वेन । तत्र 'अन्वयप्रतियोगिपदार्थानामव्यवधानेन प्राथमिकोपस्थितिरासत्तिः' इति पक्षे स्वरूपसत्या एवासत्तेः कारणत्वम्। अन्वयप्रतियोगिपदार्थबोधकपदानामव्यवधानेन प्राथमिकोपस्थितिरासत्तिरिति पक्षे तु 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादौ गिरिपदाग्निमत्पदयोरव्यवधानभ्रमेण 'अग्निमदभिन्नो गिरिः' इति शाब्दबोधोदयात्स्वरूपसत्याश्चासत्तेरभावाज्ज्ञातैव सा कारणमिति बोध्यम् । तत्र कालकृतव्यवधानाभावनिवेशेन इदानी-

---

† स्वाव्यवहितत्वसंबन्धेन तत्तत्पदार्थोपस्थितिविशिष्टा तत्तत्पदार्थोपस्थितिरासत्तिः। नचैवमनासन्नासन्नविभाग एव व्याहतः, समूहालम्बनपदार्थोपस्थितेरेव सर्वत्र शाब्दबोधोपयोगितया 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यादावपि शाब्दानुभवाव्यवहितपूर्ववर्तिसमूहालम्बनरूपपदार्थोपस्थितिमादायाव्यवधानेनोपस्थितिसत्त्वात्, उपस्थितेरेकत्वेन व्यवधानासम्भवादिति वाच्यम्, भेदगर्भव्यवधानस्य पूर्वोत्तरसाधारणस्यात्र प्रवेशात् । तच्च ध्वंसाधिकरणभिन्नत्वे सति यः स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणक्षणः तदवच्छेदेन स्वसमवायिदेशोत्पत्तिकत्वे सति स्वभिन्नत्वम् । इत्थञ्च प्रथमं या प्रत्येकपदेभ्यः प्रत्येकपदार्थानां क्रमिकस्मृतिः सैवासत्तिः। अत एव आसत्तिज्ञानं हेतुः, प्रत्येकपदजन्यप्रत्येकपदार्थोपस्थितीनामाशुविनाशिनीनां युगपच्छाब्दबोधात् पूर्वमसंभवेन स्वरूपसद्धेतुत्वासम्भवात्। नचैवं 'दण्डी कुण्डली वासस्वी देवदत्तः' इत्यादावेकविशेष्यकनानाविशेषणकान्वयबोधस्थले आसत्त्यभावप्रसङ्गः, प्रकृतान्वयबोधाननुगुणो यः स्वध्वंसाधिकरणक्षणः तद्भिन्नत्वस्याव्यवधानपदार्थघटकीभूतसत्यन्तदलार्थत्वात् । विशेषणान्तरोपस्थितिक्षणश्च न प्रकृतान्वयबुद्ध्यननुगुणः । अननुगुणत्वञ्च फलबलकल्प्यम् ।

नच यत्र पदोपस्थितिर्व्यवधानेन, पदार्थोपस्थितिश्चाव्यवधानेन तत्राप्यासत्त्यापत्तिरिति वाच्यम्, तत्तत्पदोपस्थित्यव्यवहिततत्तत्पदोपस्थितिजन्यायास्तत्तत्पदार्थोपस्थितेरव्यवधानेन तत्तत्पदार्थोपस्थितिः तत्तत्पदद्वयजन्ये तत्तत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षणीयत्वात् । एवञ्च यत्र एकपदजन्यपदार्थोपस्थितिरपरपदार्थोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः, पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितिस्तत्रैवासत्तिरिति, तदसत्, एकलडुपस्थाप्यकृतिवर्त्तमानत्वयोरन्वयबोधस्थलेऽव्याप्तेरित्यन्यत्र विस्तरः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मुच्चरितस्य 'देवदत्तः' इति पदस्य प्रहरादिव्यवधानेनोच्चरितेन 'गच्छति' इति पदेन न शाब्दबोधः। प्रकृतानुपयोगिपदार्थोपस्थितिकृतव्यवधानाभावनिवेशेन च 'देवदत्तो ग्रामं गच्छति' इत्यादौ ग्रामपदार्थोपस्थित्या व्यवधानेऽपि देवदत्तपद-गच्छतिपदार्थयोरासत्तिरव्याहतैवेति शाब्दबोधोपपत्तिः। 'गिरिर्भुक्तमग्निमान् देवदत्तेन' इत्यत्र तु 'गिरिरग्निमान्' 'भुक्तं देवदत्तेन' इति वाक्यार्थबोधद्वयं प्रकृतम्, तत्र 'भुक्तम्' इति पदार्थोपस्थितिव्यवधानेन आद्यः, 'अग्निमान्' इति पदार्थोपस्थितिव्यवधानेन द्वितीयश्च न शाब्दबोधः। अस्याश्चोपस्थितिरूपाया आसत्तेर्ज्ञानरूपतया आत्मधर्मत्वेऽपि 'स्वजन्यशाब्दबोधजनकत्व' सम्बन्धेन पदेऽपि सत्त्वात्पदधर्मत्वं बोध्यम्।

ननु 'नीलो वस्त्रं घटः पीतम्' इत्यादिस्थले यत्रासत्तिभ्रमस्तत्र भ्रमात्मक एव शाब्दबोधः स्यात्, नचेष्टापत्तिः, नीलस्य घटे सत्त्वेन भ्रमत्वस्य वक्तुमशक्यत्वात्। नचासत्तिभ्रमेऽपि प्रमाऽऽत्मक एव शाब्दबोधः, 'आसत्तिभ्रमाच्छाब्दभ्रमः' इति प्राचीनगाथाविरोधादिति, चेत्, न, आसत्तिभ्रमस्य शाब्दबोधभ्रमाप्रयोजकतया प्राचीनगाथाया निर्युक्तिकत्वात्।

केचित्तु-पदानामव्यवधानेनोपस्थितिरूपाया आसत्तेर्मौनिश्लोकेऽभावात् पदार्थानामव्यवधानेनोपस्थितिरेवासत्तिरित्याहुः। अन्ये तु मौनिश्लोकेऽपि आनुमानिकपदज्ञानस्यावश्यकत्वान्न क्षतिः। अन्यथा पदज्ञानरूपकारणाभावेन मौनिश्लोकादौ शाब्दबोधस्यैवानुपपत्तिरिति वदन्ति।

ननु 'छत्री कुण्डली वासस्वी देवदत्तः' इत्यादौ उत्तरपदार्थस्मरणेन पूर्वपदस्मरणस्य नाशादव्यवधानेन तत्तत्पदस्मरणानुपपत्तिरिति, चेत्, न, प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्य तावत्पदविषयकस्मरणस्योत्पत्तेरनुभवसिद्धत्वात्। नानासंनिकर्षैरेकप्रत्यक्षवत्, नानासंस्कारैरेकस्मरणोत्पत्तेरपि सम्भवात्। तत्र पक्षद्वयम्—तावत्पदार्थानां स्मरणादेकदैव 'खले कपोत'न्यायेन = 'विशेष्ये विशेषणम्' इति न्यायेन क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो जायते इत्येकः, तथाचोक्तम्—

"वृद्धा युवानः शिशवः कपोता खले यथाऽमी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥" इति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वितीयश्च—"यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते ॥"

अस्यार्थः—स्वम् = घटादिपदं तस्यार्थो घटादिस्तेनाकाङ्क्षितम् = 'किं घटीयम्' इति जिज्ञासाविषयीभूतम्, योग्यताज्ञानाधीनं कर्मत्वादिसन्निधानं घटरूपार्थविषयकसमूहालम्बनस्मृतिविषयकत्वं प्रतिपद्यते । तेन कर्मत्वादिनाऽन्वितो यः स्वार्थः स घटादिपदैरेवावगम्यते = तज्जन्यशाब्दबोधविषयो भवति । तदनन्तरं महावाक्यार्थबोधो जायते इति । एवञ्चैतन्मते खण्डवाक्यार्थबोधोत्तरमेव महावाक्यार्थबोध इति भावः । ॐप्राथमिकेति—एवञ्च प्राथमिकबोधाभावेनैवानासन्नत्वप्रवाद इति भावः । शाब्दबोधेऽविलम्बेनेत्यस्य निवेशे वक्तुरुद्देश्यत्वरूपं बीजमाह—ॐकाव्य इति । क्वचित्तदभावादाह—ॐ प्रायेणेति । तादृशबुद्धेः = प्राथमिकबुद्धेः । प्रायेणेत्यस्य फलमाह—ॐअनासन्नेति । नन्वनासन्नस्थले योजनावाक्यादविलम्बेन बोधो न स्यादत आह—ॐविलम्बोऽस्त्येवेति । योजनावाक्याद् बोधे विरोधं परिहरति—ॐ न चेति । ॐअस्मादिति—एतत्पदजन्यबोधीयविषयतावानयमर्थ इत्यर्थः । तस्यापि = पदस्यापि । बोधे = वाक्यार्थबोधे । ॐउपयोगेनेति—योजनावाक्यद्वारा बोधकत्वात् 'अस्मात् पदात्' इत्यत्र प्रयोज्यत्वं पञ्चम्यर्थ इति भावः ॐअदोषादिति—अनुभवविरोधरूपदोषाभावादित्यर्थः । ॐआकाङ्क्षेति—एतेन योग्यताज्ञानस्य कारणत्वाभावः सूचितः । तद्बोधे = अमन्दबोधे । तस्याः = आसत्तेः । ॐभाष्य इति—'स्वर-दीर्घ-यलोपविधिषु लोपरूपोऽजादेश एव न स्थानिवत्' इति वक्तव्यम्, चिकीर्षकः, प्रतिदीव्नः, ब्राह्मणकण्डूतिः, एषु स्थानिवद्भावाभावात् स्वरादयो भवन्ति, पञ्चारत्न्यः, किर्योः, वाय्वोः, एषु स्थानिवद्भावात्स्वर-दीर्घ-य-लोपादयो न भवन्ति, इत्युक्त्वा "तत् तर्हि वक्तव्यम, न वक्तव्यम्, इह हि लोपोऽपि प्रकृतः, आदेशोऽपि, विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते, केवलं तत्राभिसम्बन्धमात्रं कर्तव्यम्—स्वर-दीर्घ-यलोपविधिषु लोपाजादेशो न स्थानिवदिति । आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुम् । न चैतान्यानुपूर्व्येण सन्निविष्टानि । अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति, तद्यथा—'अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धावन्तमद्राक्षीः' इति। तस्य यथेष्टमभिसम्बन्धः 'उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" इत्युक्तम्। अयं भावः—स्वर-दीर्घ-यलोपानामानुपूर्व्येण = पदान्तरेणाव्यवधानरूपासत्त्या सूत्रे पाठाभावेऽपि अनुवृत्तानां लोपादीनां द्विर्वचने लोपादेशस्यासम्भवात्, सवर्णादिविधौ तु तस्यैव सम्भवान्न तेषां लोपो विशेषणम्, पदान्ते तु यद्यपि सम्भवव्यभिचारौ स्तः, तथाऽपि 'पदान्त'इति योगविभागात्तद्विधौ लोपो न विशेषणम्, इति पारिशेष्यात् स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति विज्ञायते। तदुक्तं कैयटेन—"स्मृतिशास्त्रत्वाच्चास्य एतावन्तोऽर्थाः सन्निहिता इत्येतावत्प्रतीयते। ग्रहणवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यमुपप्लवते, इति सिद्धमिष्टमिति। ❀अनड्वाहमिति—पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमभिसम्बन्धः" इति। अत्रोद्द्योतः—"ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह—❀ग्रहणकवाक्यादिति—आर्थक्रमो नाम—'राजपुरप्रवेश'न्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रमः। एवञ्च कल्पितासन्नवाक्याद् बोधविषये तात्पर्य्यं नियामकमिति भावः" इति। अनड्वाहमिति वाक्ये 'उदहारि, भगिनि' इति सम्बोधनम्, तत्र 'उदकं हरति' इत्यर्थे "कर्मण्यण्" इत्यणि ङीपि रूपम्। साचीनम् = तिर्यग्गच्छन्तम्। पूर्वं योजनावाक्यादनासन्नस्थले बोध उपपादितः, स च अभ्युपेत्यवादेन = सदसद्विवेकपूर्वकं स्वीकारवादेन इत्याह—❀वस्तुत इति। ❀आकाङ्क्षाऽऽदिनेति—आदिना तात्पर्य्यसंग्रहः। ❀अर्थयोजनेति—न तु अर्थयोजकवाक्यकल्पनेति भावः। सा = अर्थयोजना। इत्यासत्तिः।

मू०—यत्तु—तत्र तत्र वाक्ये 'घटमानय' इत्यादौ घटकर्मकानयनबोधेच्छयोच्चारितत्वाभावज्ञाने, अन्यबोधनेच्छयोच्चारितत्वज्ञाने वा तथाबोधानुदयेन तयोः प्रतिबन्धकत्वकल्पने गौरवेण लाघवात्तथाबोधे 'इदं वाक्यमेतदर्थप्रतीतीच्छया वक्त्रोच्चारितम्' इत्याकार (क) स्तात्पर्यग्रहो हेतुः। नानाऽर्थपदस्थले पदविषयोऽपि स तथा। तद्ग्राहकञ्च—प्रकरणादिकम्। अत एव प्रकरणादिज्ञानाभावे

शाब्दबोधे तात्पर्य्यज्ञानस्य कारणत्वखण्डनम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'इदम् (पदम्) एतदर्थकम्' 'एतदर्थकं वा' इति सन्दिह्यते। मौनि-लिखितवाक्यस्थलेऽपि तस्य सूक्ष्ममुच्चारणमस्त्येवेति, तन्न, शुकादिवाक्याद्देवताप्रसादेन, पूर्वजन्मसंस्कारेण वा मूर्ख-बालककृतोत्तमकाव्याद्वक्तृतात्पर्यव्यतिरेकनिश्चयेऽपि बोधोदयेन तस्य बोधे हेतुत्वासंभवात् । तद्व्यतिरेकनिश्चयश्च, वक्तुस्ततस्तदर्थाबोधात् ।

नन्वैश्वरं तत्र तात्पर्यम्, अत एव वेदवाक्यतो बोध इति, चेन्न, तस्य फलैकोन्नेयत्वेन प्राग्दुर्ज्ञेयत्वात् । लाघवादिन्यायगृहीततत्तदर्थबोधकत्वज्ञानस्य वेदजन्यबोधे, तद्गतप्रामाण्यनिश्चये वा हेतुत्वान्मीमांसोपयोगः ।

किञ्च 'अस्मादर्थद्वयविषयको बोधो जायते, तात्पर्यं तु क्वेति न जानीमः' इति सर्वजनानुभवविरोधान्न तस्य हेतुत्वम्, अत एव 'पय आनय' इत्युक्तेऽप्रकरणज्ञस्य 'दुग्धं जलं वाऽऽनेयम्' इति प्रश्नः सङ्गच्छते । स्पष्टश्चेदं सर्वं संख्यासंज्ञासूत्रे (पा० सू० १।१।२३) भाष्ये। तत्र पदार्थोपस्थितिरेवेत्याद्युक्तरीत्या खण्डनीयम्।

(रत्न०)—शाब्दबोधमात्रं प्रति तात्पर्यज्ञानस्य नैयायिकाद्युक्तं कारणत्वं खण्डयति—*यत्त्विति । *वाक्य इति—तत्स्वरूपमाह—'घटमानय' इति । * इत्यादाविति—विषयसप्तमीयम् । * अन्यबोधेच्छयेति—सति घटे लक्षणया जलादिबोधनेच्छयोच्चारितत्वज्ञाने इत्यर्थः । * तथाबोधेति—घटकर्मकानयनबोधानुदयादित्यर्थः । *तयोरिति—पूर्वोक्तज्ञानयोरित्यर्थः । तथाबोधे = घटकर्मकानयनबोधे । *तात्पर्यग्रह इति—घटकर्मकानयनप्रतीतीच्छारूपं वक्तुस्तात्पर्यम्—'तादृशेच्छयोच्चारितमिदं वाक्यम्' इत्याकारकं यत् श्रोतुस्तात्पर्यविषयकज्ञानम्, तच्छाब्दबोधे कारणं वाच्यमित्यर्थः । अन्यथा अनेकविषयकबोधजनकत्वेन गृहीतवाक्याद् बोधनियमो नोपपद्यत इति भावः । पदान्तरसमभिव्याहारे लक्षणया एकार्थकेऽपि नानाविषयकबोधसम्भवात् तत्र तात्पर्यज्ञानस्य कारणत्वमुपपाद्य नानाऽर्थकपदविषयेऽपि तस्य कारणत्वमाह—*नानाऽर्थेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सः = तात्पर्यग्रहः। तथा = कारणम्। तद्ग्राहकम् = तात्पर्यग्राहकम्।
❀प्रकरणादिकमिति—

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥"

इति पूर्वोक्तं बोध्यम्। अत एव=प्रकरणादिज्ञानस्य तात्पर्यग्राहकत्वादेव। ❀इदं पदमिति—सैन्धवादिपदमित्यर्थः। यत्तु—मौनिश्लोकजन्यबोधस्थले पदादेरनुच्चारितत्वादुक्ततात्पर्यानुपपत्त्या तादृशप्रतीतीच्छया वक्त्राऽनुसंहितं वेत्याकारकमपि तात्पर्य्यज्ञानं कारणमुक्तं तत् खण्डयन्नाह—❀मौनीति। तस्य = मौनिनः। ❀सूक्ष्ममिति—जपस्थले इवेति भावः। 'कारणाभावे कार्य्याभावः' इति व्यतिरेकव्याप्तेर्व्यभिचारमाह—❀शुकादीति—अस्य बोधोदयेनेत्यत्रान्वयः। शुकादिवाक्यस्थले शिक्षकतात्पर्य्यस्यैव सत्त्वादाह—❀देवतेति—प्रयोज्यत्वं तृतीयाऽर्थः। देवताप्रसादप्रयोज्यमूर्खकृतोत्तमकाव्यात्, पूर्वजन्मसंस्कारप्रयोज्यबालककृतोत्तमकाव्याच्चेत्यर्थः। तात्पर्यव्यतिरेकनिश्चयेऽपि = तात्पर्य्याभावनिश्चयेऽपि। तस्य = तात्पर्य्यस्य। तद्व्यतिरेकनिश्चयश्च = तात्पर्य्याभावनिश्चयश्च। वक्तुः = शुकादेः। ततः = तदुच्चरितवाक्यात्। तत्र = शुकादिवाक्यस्थले। अत एव = ऐश्वरतात्पर्य्यस्य ग्रहणादेव। तात्पर्य्यज्ञाने वक्तृपदमीश्वरोपलक्षणमिति भावः। अध्यापकतात्पर्यं नियामकमिति तु वक्तुमशक्यम्, मूर्खशिक्षके तदसम्भवात्। ❀वेदवाक्यत इति—ईश्वरोच्चरितत्वमतेनेदम्। तस्य = तात्पर्य्यस्य। फलैकोन्नेयत्वेन = शाब्दबोधरूपफलमात्रानुमेयत्वेन। ❀दुर्ज्ञेयत्वादिति—ईश्वरतात्पर्य्यस्य शाब्दबोधात्प्राग् ग्रहीतुमशक्यत्वादित्यर्थः। मीमांसकादीनामीश्वराभावेन तत्तात्पर्य्याभावात्, बोधासम्भवाच्च। ननु तात्पर्य्यस्य हेतुत्वाभावे तद्ग्राहकप्रकरणादिनिर्णायकमीमांसोच्छेदोऽत आह—❀लाघवादिति—'निषादस्थपतिं याजयेत्' इत्यादौ लाघवमूलककर्मधारयादिना अर्थनिर्णयवदिति भावः। आदिना गौरवसंग्रहः। ❀बोधकत्वज्ञानस्येति—तात्पर्य्यज्ञानरूपस्येत्यर्थः। अस्य हेतुत्वादित्यत्रान्वयः। ❀वेदजन्येति—प्राचां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मतेनेदम्, तात्पर्य्यज्ञानस्य नव्यानां बोधाजनकत्वात्। *तद्गतेति—वेदवाक्यगतेत्यर्थः। ननु विज्ञवक्तृकवाक्यजन्यबोधे तात्पर्य्यज्ञानस्य कारणत्वमस्तु, इति शुकवाक्यादिजन्यबोधे व्यभिचाराभावान्न दोषः, तस्य विज्ञवक्तृकत्वाभावात्। वेदजन्यबोधेऽपि प्रकरणाद्यवगततत्तदर्थबोधकत्वज्ञानेनैव सिद्धेश्चेति, चेन्न, वक्तुर्विज्ञत्वस्य निर्णेतुमशक्यत्वात्। तात्पर्य्यज्ञानस्य हेतुत्वे दोषान्तरमाह—*किञ्चेति। *अर्थद्वयेति—नानाऽर्थकत्वादिति भावः। *विरोधादिति—तात्पर्य्यज्ञानरूपकारणाभावेऽपि बोधदर्शनादिति भावः। तस्य = तात्पर्य्यज्ञानस्य। अत एव = तात्पर्य्यज्ञानस्याहेतुत्वादेव। *अप्रकरणज्ञस्येति—प्रकरणादिना तात्पर्य्यनिर्णये प्रकरणादेरेव हेतुत्वमस्त्विति भावः। प्रकरणादीनां क्लृप्तनियतपूर्ववर्तिताकत्वेनानन्यथासिद्धत्वमात्रकल्पने लाघवात्। *भाष्य इति—संख्यासंज्ञाविधायके "बहुगण" इति सूत्रे लोके प्रसिद्धानां पञ्चादीनां संख्यासंज्ञार्थं संख्याग्रहणं कर्तव्यम्, संख्याया अपि पञ्चादेः संख्यासंज्ञा यथा स्यादित्युक्त्वा "नार्थः संख्याग्रहणेन, ननु चोक्तम्, इतरथा हि असंप्रत्ययोऽकृत्रिमत्वात्, यथा लोके इति, नैष दोषः, अर्थात्प्रकरणाद्वा लोके 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति' अर्थो वाऽस्यैवं संज्ञकेन भवति, प्रकृतं वा तत्र भवति, इदमेवं संज्ञकेन कर्तव्यमिति। आतश्चार्थात्प्रकरणाद्वा—अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु 'गोपालकमानय' 'कटजकमानय' इति उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति" इति। अत्र 'उभयगतिस्तस्य भवति' इत्यनेन तात्पर्यज्ञानाभावेऽपि शाब्दबोधप्रदर्शनात् तात्पर्य्यज्ञानस्याकारणत्वं सूचितम्। ननु 'उभयगतिः' इत्यनेन तादृशस्थले पदार्थोपस्थितिरेव न शाब्दबोधोऽत आह—*तत्रेति। *उक्तरीत्येति—योग्यताज्ञानस्य हेतुत्वखण्डनावसरे उक्तरीत्येत्यर्थः। पदार्थोपस्थितिमात्रस्वीकारे 'पय आनय' इतिवत् 'पयः कर्मत्वम् आनयनम् प्रेरणा' इति पदसमुदायस्थलेऽपि उक्तवाक्यस्थल इव पदार्थोपस्थितेस्तुल्यत्वात् शाब्दबोधापत्तिः। किञ्च—सर्वत्रैवमेवापत्तौ शाब्दबोधोच्छेदापत्तिः। एतेन तादृशस्थले मानस एव बोध इति, उपस्थितपदार्थानां संसर्गाभावाज्ञानमात्रेण प्रश्नादेरुपपत्तिरिति च परास्तम्, संसर्गज्ञानविशिष्टशब्दजन्यमानसबोधस्यैव शाब्दबुद्धित्वात्, 'शाब्दयामि' इत्यनुव्यवसायदर्शनाच्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मू०—तात्पर्य्यनिर्णयोपयोगस्तु तज्ज्ञाने प्रामाण्यनिश्चयद्वारा प्रवृत्तौ, क्वचिदनेकपदार्थस्यान्वययोग्यत्वे कस्याध्याहार इत्यत्र चेति बोध्यम्। न चाश्वतात्पर्यकत्वेन निर्णीतात् 'गेहे सैन्धवमस्ति' इति वाक्यात् 'गेहे लवणमस्ति न वा' इति संशयोच्छेदापत्तिरिति वाच्यम्, एकतरविषयकज्ञाने प्रामाण्यनिश्चये तदितरविषयकज्ञाने अप्रामाण्यबुद्ध्युदयेन तदनुच्छेदात्। तत्परत्वाभावज्ञान-तदन्यपरत्वज्ञानयोरपि तद्बोधेऽप्रामाण्यग्रहजनकतैव।

तात्पर्य्यस्य शाब्दज्ञाने प्रामाण्यप्रयोजकत्वनिरूपणम्।

तथा तत्तद्वाक्यार्थे प्रामाण्यग्रहे तत्तद्वाक्ये आप्तोक्तत्वज्ञानं हेतुः। आप्तत्वञ्च—भ्रम-प्रमाद-विप्रलिप्साशून्यत्वम्। तज्ज्ञानञ्च—अयम्, प्रकृतविषये ईदृशाप्तत्ववान्, आप्तत्व (धर्म) विरोधिधर्मानधिकरणत्वात्, इत्यनुमानेन। तत्र भ्रमः = वाक्यार्थभ्रमः। प्रमादः = अन्यार्थकशब्दभ्रमः। विप्रलिप्सा = प्रतारणा = प्रतीतविपरीतप्रतिपिपादयिषा। वेदस्याकर्तृकत्वे तु अनाप्तोक्तत्वाभावज्ञानं हेतुः। तच्चाप्तोक्तत्वज्ञानात्, अनुक्तत्वनिर्णयाद्वेत्यन्यत्।

(रत्न०)—*तात्पर्य्येति—प्रकरणाद्यनुगृहीततात्पर्य्यनिर्णयोपयोग इत्यर्थः। तज्ज्ञाने = शाब्दबोधे। *प्रवृत्ताविति—विषयत्वं सप्तम्यर्थः। अस्य 'उपयोगः' इति पूर्वेणान्वयः। *कस्येति—यथा 'द्वारम्' इत्युक्तौ 'पिधेहि' 'विवृणु' इत्येतद्द्वयोरप्यध्याहारे प्रसक्ते विवृते द्वारे 'द्वारम्' इत्युक्तौ 'पिधेहि' इत्यस्यैवाध्याहारः, विवरणस्य सिद्धत्वात्। *इत्यत्र चेति—अस्यापि 'उपयोगः' इति पूर्वेणान्वयः। प्रामाण्यनिश्चयं प्रति तात्पर्य्यज्ञानस्य हेतुत्वे आपतितं दोषमुद्धरति—*न चेति—अयम्भावः—तात्पर्य्यज्ञानस्य बोधहेतुत्वपक्षे 'गेहे सैन्धवमस्ति' इति वाक्येनाश्वविषयकतात्पर्य्यग्राहकसामग्रीसत्त्वेऽश्वविषयकबोधरूपप्रतिबन्धकवशादश्वविषयकसंदेहाभावेऽपि लवणविषयकनिश्चयरूपप्रतिबन्धकाभावाल्लवणविषयकसंदेहो जायते। तात्पर्य्यज्ञानस्य बोधं प्रति कारणत्वाभावे तु उक्तवाक्यात् पदार्थोपस्थित्यादिकारणसत्त्वादुभयविषयकबोधे जाते उभयविषयकसंदेहस्योक्तबोधरूपप्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बन्धकसत्त्वादुच्छेदापत्तिरिति । लवणविषयकसंदेहमुपपादयति—*एकत-रेति—तात्पर्य्यवशादश्वविषयकबोधे प्रामाण्यनिश्चये इत्यर्थः । *तदि-तरेति—अश्वेतरलवणविषयकज्ञाने इत्यर्थः । *तदनुच्छेदादिति—लवण-विषयकनिश्चयात्मकज्ञानरूपप्रतिबन्धकाभावेन संशयोच्छेदादित्यर्थः ।

यत्तु—तद्विषयकतात्पर्य्याभावज्ञान-तदन्यविषयकतात्पर्य्यज्ञानयोः सत्त्वे तद्विषयकबोधादर्शनात्तद्विषयकबोधं प्रति उक्तज्ञानयोः प्रतिबन्धकत्वमिति तत् खण्डयति—*तत्परत्वाभावेति—'एव' शब्देन प्रतिबन्धकत्वनिरासः । एवञ्च क्वचिदप्रामाण्यग्राहकत्वम, क्वचित् प्रतिबन्धकत्वमिति वैरूप्यं मन्म-तेऽपि नास्तीति भावः । विशेषान्तरमाह—*तथेति—तत्तद्वाक्यार्थविषयकं यज्ज्ञानं तज्ज्ञानगतं यत्प्रामाण्यम् = बाधितत्वाभावस्तद्विषयकज्ञानं प्रति तत्तद्वाक्यार्थविशेष्यकमाप्तोक्तत्वप्रकारकम्—'इदं वाक्यमाप्तोक्तम्' इति ज्ञानं हेतुरित्यर्थः । तज्ज्ञानम् = आप्तत्वज्ञानम् । 'अयम्'इति पक्षनिर्देशः । *ईदृशेति—भ्रमप्रमादेत्यादिपूर्वोक्तरूपेत्यर्थः । *आप्तत्वेति—विरोधिधर्मा-नधिकरणत्वादित्येव हेतुः । शेषं विरोधस्य सापेक्षत्वादुक्तम् । *विरोधि-धर्मेति — भ्रमप्रमादविप्रलिप्साविशिष्टत्वरूपविरोधिधर्मानधिकरणत्वादि-त्यर्थः । अन्वयव्यतिरेकीदम्, इति दृष्टान्तस्य सुज्ञेयत्वात्तदनुक्तिः । आप्त-त्वलक्षणे पौनरुक्त्यमाशङ्क्य तत्तत्पदार्थमाह—*तत्रेति—आप्तत्वलक्षण-घटकपदार्थानां मध्य इत्यर्थः । *अन्यार्थकेति—यथा दरिद्रार्थके 'अस्व'-शब्दे उच्चारितेऽश्वार्थकाश्वशब्दभ्रमः । अन्यार्थत्वेति क्वचित्पाठः । प्रतारणा-पदार्थमाह—*प्रतीतेति—प्रतीतः = ज्ञानविषयीभूतो योऽर्थस्तस्माद्वि-परीतः = विरुद्धज्ञानविषयीभूतो योऽर्थस्तद्विषयकप्रतिपादनेच्छेत्यर्थः ।

ननु वेदस्येश्वरकर्तृकत्वे तदीयवाक्यार्थग्रहाणामीश्वररूपाप्तोक्तवाक्य-त्वज्ञानेन प्रामाण्यग्रहेऽपि अकर्तृकत्वे उक्ताप्तोक्तत्वज्ञानाभावेन प्रामाण्यग्रहा-भावे प्रवृत्त्यसिद्धिरत आह—*वेदस्येति —अत्र मीमांसकाः—अविच्छि-न्नगुरुशिष्यपरम्परया अध्ययनेन एकरूपो वेदोऽनादिरपौरुषेयः । एवञ्च यथोच्चारणपूर्वकत्वादुच्चारणं वेदे परतन्त्रम्, तथा तात्पर्य्यमपि तात्पर्य्य-पूर्वकमेवेति परतन्त्रम्, न तु कस्यापि प्रथमं तात्पर्य्यम्, अनादित्वात्, पूर्वपूर्वज्ञानेच्छयोच्चारणमुपजीव्याग्रिमाग्रिमस्य तदिच्छयोच्चारणात् । तदिच्छया तदुच्चारणमेव हि तत्परत्वं लोकवेदसाधारणम् । सा चेच्छा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वतन्त्रा, परतन्त्रा वेति न कश्चिद्विशेषः । † वेदत्वञ्च—शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् । ईश्वरप्रमाया अजन्यत्वात्, वेदार्थस्यानुमानादिविषयत्वेऽप्यनुमानादेर्वेदोपजीवकत्वात्, स्मृतीनाम्, भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदार्थं प्रतीत्य तत्प्रणयनान्न दोषः । पौरुषेयत्वञ्च— सजातीयोच्चारणानपेक्षोच्चारितजातीयत्वम् । आद्यभारतेऽपि तज्जातीयत्वान्न व्यभिचार इति दिक् । वैयासकिनये तु—"धाता यथापूर्वमकल्पयत्" इत्यादिश्रुत्यादिप्रामाण्यात् पूर्वपूर्वसर्गानुसारेण तादृशानुपूर्वीविरचनमेव । *अनाप्तेति—वेदवाक्ये आप्तभिन्नोक्तत्वाभावज्ञानसत्त्वात्तदर्थे प्रामाण्यग्रहाक्षतिः । तच्च = पूर्वोक्तज्ञानञ्च । *आप्तोक्तत्वेति—ईश्वरकर्तृकत्वे इदम्, अकर्तृकत्वे आह—*अनुक्तत्वेति ।

मू०—वस्तुतः सर्वः शब्दः प्रमाणमेव । अनाप्तोक्तत्वज्ञानन्तु तज्जन्यज्ञाने अप्रामाण्यग्राहकम्, इत्यग्रे निरूपयिष्यामः । अत्र श्रौतं तावत्पदार्थज्ञानानाम्, आकाङ्क्षाऽऽदिज्ञानानां च नष्टत्वेऽपि तेषां समूहालम्बनस्मरणात्, तत्संस्काराद्वाऽन्वयबोधः । अयमेव 'खले कपोत'न्यायेन बोधः ।

यदा तु क्रमेणैवोद्बोधकसमवधानात्तत्तत्खण्डवाक्यार्थबोधो-

---

† शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तं च यत्प्रमाणं तज्जन्यप्रमितिविषयको यस्तदन्यत्वे सति शब्दजन्यवाक्यार्थज्ञानेनाजन्यो यः प्रमाणशब्दः तत्त्वमित्यर्थः । अत्र व्यासादिचाक्षुषादिप्रत्यक्षजन्ये दृष्टार्थकभारतादौ अतिव्याप्तिवारणाय सत्यन्तम् । अदृष्टजनकाध्ययनविषयत्वे सति इत्यपि देयम्—तेन 'गेहे घटोऽस्ति' इत्यादिप्रत्यक्षजन्ये 'गेहे घटोऽस्ति' इति वाक्ये नातिव्याप्तिः । परैर्दृष्टार्थकवेदस्य वेदत्वं नाङ्गीक्रियते इति तत्र नाव्याप्तिः । वेदत्वाभावेऽपि शूद्रादीनामध्ययननिषेधो वाचनिकः, 'छत्रिणो यान्ति' इतिवत्तद्घटितस्यापि वेदत्वञ्च इति न क्षतिः । शब्दोपजीव्यतिरिक्तत्वमात्रस्य प्रमाणविशेषणत्वेऽप्यसम्भवः । शब्दोपजीव्यतिरिक्तेन प्रमाणेन वेदाद्यात्मकशब्देन वेदार्थस्य प्रमापणात् शब्दातिरिक्तत्वमपि प्रमाणविशेषणम् । शब्दपदञ्च शब्दज्ञानपरं तेनोभयातिरिक्तशब्दज्ञानेन प्रमापणान्नासम्भवतादवस्थ्यमित्यन्यत्र विस्तरः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्तरं पूर्वपूर्वस्मरणात्, तत्संस्काराद्वा महावाक्यार्थबोधस्तदा 'राजपुरप्रवेश'न्यायेन बोध इत्यन्यत्र विस्तरः । इत्याकाङ्क्षाऽऽदिविचारः ।

(रत्न०)—स्वसिद्धान्तमाह—*वस्तुत इति । सर्वः = आप्तोक्तोऽनाप्तोक्तश्च । प्रमाणमेव = प्रमाऽऽत्मकज्ञानकरणमेव । तज्जन्यज्ञाने = शब्दजन्यज्ञाने । *आदीति–योग्यताऽऽदीनां संग्रहः । ज्ञानानाम् = उपस्थितीनाम् । अवान्तरवाक्यार्थबोधकाले पदार्थोपस्थितेर्नष्टत्वान्महावाक्यार्थबोधो न स्यादित्याह—*समूहेति । आशुतरविनाशिनीनां क्रमिकाणां पदजन्यपदार्थोपस्थितीनामपि मेलनासम्भवात् सर्वत्र शाब्दबोधे समूहालम्बनात्मिकैव पदजन्यपदार्थोपस्थितिः कारणम्, एवञ्च सर्वत्र शाब्दबोधे युगपदेव सकलपदार्थानाम् 'विशेष्ये विशेषणम्' इति न्यायेनैव शाब्दबोधः. न तु 'विशिष्टस्य वैशिष्ट्यम्' इति न्यायेन, तज्जनकविशेषणताऽवच्छेदकप्रकारकज्ञानस्य पूर्वमभावात्, इति दर्शयति—*खले कपोतेति—तदुक्तम्—

"वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति ।
तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ।।" इति ।

अत्र वृद्ध-युव-शिशुभिः चिरतर-चिर-सन्निहितपदार्थानां साम्यं बोध्यम् । अपरे तु तथैव पदार्थस्मृत्या खण्डवाक्यार्थबोधानन्तरं महावाक्यार्थबोधः, 'विशिष्टस्य वैशिष्ट्यम्' इतिरीत्या शब्दजन्यबोधे मानाभावात्, विशेषणविशेष्यादिसन्निकर्षेणैव तत्सिद्धेरित्याहुः । *राजपुरप्रवेशेति—विश्रृङ्खलतया राजपुरप्रवेशे राजपुरुषैस्ताडनाऽऽदिकं क्रियेत इति भिया श्रेणीभूततया यथा तत्पुरप्रवेशः, एवं सुश्रृङ्खलतया यत्र कार्य्यकरणस्य विवक्षा तत्रास्य प्रवृत्तिरिति कश्चित् । वस्तुतस्तु यथा राजपुरप्रवेशाभिलाषिपुरुषाः स्वस्वकार्यसाधकाकाङ्क्षितराजपुरुषैः सह संयुज्य राजपुरं प्रविशन्ति, तथा निरूप्यनिरूपकभावापन्नखण्डवाक्यार्थविषयकज्ञानानां राजपुरसदृशमहावाक्यार्थबोधे उपयोग इत्युपाध्यायाः ।

इति श्रीसभापतिशर्मोपाध्यायकृत'रत्नप्रभा'यामाकाङ्क्षाऽऽदिनिरुपणम् । इति शम् ।

---

... भवन वेद वेदाङ्ग विद्या...
ग्रन्थालय
... 602
दिनांक ........
CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

